२.५

# चम्पूरामायणम्

श्रीभोजराजसार्वभौमविरचितम्

लक्ष्मणसूरिविरचितं युद्धकाण्डम्

रामचन्द्रबुधेन्द्रविरचितया व्याख्यया समेतम्



चौखम्भा संस्कृत संस्थान

पोस्ट बाक्स नं० १३९

वाराणसी

|| श्रीः ||

काशी संस्कृत ग्रन्थमाला

२२२



# चम्पूरामायणम्

श्रीभोजराजसार्वभौमविरचितम्

लक्ष्मणसूरिविरचितं युद्धकाण्डम्

रामचन्द्रबुधेन्द्रविरचितया व्याख्यया समेतम्

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा

वासुदेवशर्मणा

संस्कृतम्




चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० १३९

वाराणसी ( भारत )

प्रकाशक

**चौखम्भा संस्कृत संस्थान**

पो० आ० चौखम्भा, पो० बाक्स नं० १३९

जड़ाव भवन, के ३७/११६, गोपाल मन्दिर लेन

वाराणसी-२२१००१ ( भारत )

दूरभाष : ६५८८९ तार : सोनोत्सव, वाराणसी

अन्य प्राप्तिस्थान

**चौखम्भा विश्वभारती**

पो० बा० नं० ६५

चौक ( चित्रा सिनेमा के सामने )

वाराणसी-२२१००१

फोन : ६५४४४

मूल्यम् रु० ४०-००

मुम्बयीस्थनिर्णयसागरयन्त्रालयप्रकाशनम् १९१७

पुनर्मुद्रणम् १९८२

मुद्रक—श्रीगोकुल मुद्रणालय, वाराणसी

THE

KASHI SANSKRIT SERIES

222

*****

THE

# CAMPŪ-RĀMĀYAṆA

OF

KING BHOJA ( 1–5 Kāṇḍas )

AND

LAKṢMAṆA SŪRI ( 6th Kāṇḍa )

*WITH THE COMMENTARY OF*

**RĀMACANDRA BUDHENDRA**

*EDITED BY*

**WĀSUDEV LAKSMAṆ ŚĀSTRĪ PAṆSĪKAR**

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publishers and Distributors of Oriental Cultural Literature*

P. O. Chaukhambha, Post Box No. 139

VARANASI ( INDIA )

*Publishers*
**CHAUKHAMBHA SANSKRIT SANSTHAN**
P. O. Chaukhambha, Post Box No. 139
Jadau Bhawan, K 37/116, Gopal Mandir Lane
VARANASI-221001 (INDIA)

Price : Rs. 40-00

Nirnaya Sagar Press, Bombay 1917
Reprinted 1982

*Also can be had of*
**CHAUKHAMBHA VISVABHARATI**
Post Box No. 65
Chowk ( Opposite Chitra Cinems )
VARANASI-221001
Phone : 65444

श्रीः ।

श्रीभोजराजविरचितं

# चम्पूरामायणम् ।

रामचन्द्रबुधेन्द्रविरचितसाहित्यमञ्जूषाख्याख्यासमेतम् ।



## बालकाण्डम् ।

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥
शिवानन्दाश्रयगुरोश्चरणस्मरणं मम ।
उत्साहशक्तिजं तेजस्तनोतु मुखपङ्कजे ॥
विघ्नेश विधिमार्तण्डचन्द्रेन्द्रोपेन्द्रवन्दित ।
नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते ॥
सीताकल्पलतान्वितं दशरथाम्भोराशिजं सोदरो-
दारस्कन्धमभीष्टदं सुमनसां श्रेणीभिरामोदितम् ।
नित्यं स्वाश्रितनन्दनं किसलयश्रीपद्मशाखोज्ज्वलं
श्रीरामामरभूरुहं हृदि सदा सेवेऽर्थसंसिद्धये ॥
सुधाकरसुधाकराच्छरदभास्वराभास्वरा-
श्चितक्रमविपश्चिकाक्कणनसादरा सादरा ।
विरिञ्चिनवमोहनागमविशारदा शारदा ।
मदीयरसनाङ्गणे नटतु सर्वदा सर्वदा ॥
यत्पादाम्भोजरेणुं विबुधकविवराः प्राप्य सिद्धाञ्जनं वा
प्रज्ञादृष्टेः प्रमीलां पटुतरतमसा प्राप्तवत्या निजायाः ।
आसाद्योन्मेषमारान्निधिमिव कवितां प्रापुरथ्यद्गुणार्थां
निष्प्रत्यूहं मुदास्मान्स सुरवरनुतः पातु हेरम्बदेवः ॥
श्रीमांस्त्रैलिङ्गदेशे स जयति विबुधश्रेणिकोटीरकोटी-
कोटीमाणिक्यभूतागणितगुणगणोऽखण्डपाण्डित्यशौण्डः ।
धीरः शाण्डिल्यगोत्रः सकलकविकुलाह्लादिसूक्तिप्रवीणो
वीणोदाहार्यविद्याविवरणनिपुणो रामचन्द्रो बुधेन्द्रः ॥

नित्यं संभ्रमजृम्भिता नटति यज्जिह्वाङ्गणे भारती
जायन्ते कविपुंगवास्तनुभृतो यद्वृत्तनिर्वर्णनात् ।
भोजक्षोणिभुजा पुरा विरचितश्चम्पूप्रबन्धोऽधुना
व्याख्यां तस्य करोमि मञ्जुलतरां साहित्यमञ्जूषिकाम् ॥

व्याकुर्वन्ति निबद्धगौरवभयान्नैव स्फुटं युक्तिभि-
र्ये तेऽप्येतृजनप्रतारणपराः का नैपुणी वा तत ।
वैखर्या वचसां कवीशहृदयं प्रख्यापयन्नन्वय-
द्वारैवाहमिहाखिलं प्रविवृणोम्युक्तिव्रजोज्जृम्भितम ॥

अद्य खलु तत्रभवान्विचित्रसरसकविताकल्पलतामञ्जर्यामोदिताशेषविबुधसमाजोऽनवद्यनिखिलविद्याभिज्ञः सर्वज्ञसार्वभौमो भोजनामा महाराजा समस्तसद्गुणमणिगणाभिरामस्य तारकब्रह्मरूपिणस्तत्रभवतः श्रीरामस्य चरितानुवर्णनं निःश्रेयसनिदानं निजान्तरङ्गे निर्वर्ण्य 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इत्याद्यलंकारवचनप्रामाण्यात्, काव्यस्यानेकश्रेयःसाधनतां 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च पश्यन्, सकलकल्याणपरायणं श्रीरामायणं चम्पूप्रबन्धात्मना चिकीर्षुः, चिकीर्षितानन्तरायपरिसमाप्तिप्रचयगमनलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याचार्यदण्डिवाक्यादाशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च तत्रादौ लक्ष्मीशब्दपूर्वकमाशिषं प्रयुङ्क्ते—

**लक्ष्मीं तनोतु नितरामितरानपेक्ष-**
**मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।**
**हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं**
**विघ्नाद्रिभेदशतधारधुरंधरं नः ॥ १ ॥**

**लक्ष्मीमिति** । आदौ लक्ष्मीशब्दप्रयोगाद्वर्णगणादिशुद्धेरभ्युच्छ्रयः । तदुक्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति । निगमा वेदास्त एव शाखिनो वृक्षाः । 'वृक्षो महीरुहः शाखी' इत्यमरः । व्रीह्यादित्वादिनिः तेषां शिखा उपनिषदः । ता एव शिखा अग्राणीति श्लिष्टरूपकम् । मौल्यश्च प्रतीयन्ते । तासां प्रवालं नवपल्लवम् । वेदान्तवेद्यमित्यर्थः । 'शिखा ज्वालाकेकिमौल्योः शिखा शाखाग्रमौलिपु' इति वैजयन्ती । 'प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे' इति शब्दार्णवे । अम्बुनि रोहतीत्यम्बुरुहं पद्मं तस्य यो डम्बरः सौभाग्यातिशयसंरम्भस्तस्य चौर्येऽपहरणे । ब्राह्मणादित्वात्ष्यञ् । निघ्नमायत्तम् । अम्बुरुहसौभाग्यापहारीत्यर्थः । 'अधीनो निघ्न आयत्तः' इत्यमरः । अतएव सादृश्यपर्यवसानादुपमा । डम्बरेत्यत्र दम्यन्ते भीरवोऽनेनेति डम्बरः । 'दमु उपशमे' । औणादिकत्वाद्वरप्रत्ययः, पृषोदरादित्वाद्वर्णव्यत्ययश्च । सुबोधिनीकारस्तु—'डम्ब विक्षेपे' इति वान्तो

१. 'सुतराम्' इति पाठः.

धातुरस्तीत्याह। तन्मते डम्बं विक्षेपं रातीति डम्बरः। 'आडम्बरोऽस्त्री संरम्भः' इत्यमरशेषश्च। विहन्यत एभिरिति विघ्नाः प्रत्यूहाः। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। 'घञर्थे कविधानम्' इति कप्रत्ययः। त एवाद्रयः पर्वतास्तेषां भेदे विदारणे शतधारधुरंधरं वज्रायुधसमानसारम्। अशेषविघ्नविनाशकमित्यर्थः। धूरेव धुरा। 'आपं चैव हलन्तानाम्' इति वचनादाप्। तां धारयतीति धुरंधरम्। 'संज्ञायां भृतॄवृजि–' इत्यादिनाण्प्रत्ययः। 'खित्यनव्ययस्य' इति ह्रस्वः। 'अरुर्द्विषत्–' इत्यादिना मुमागमः। हेरम्बस्येदं हैरम्बं वैनायकम्। 'तस्येदम्' इत्यण्। अङ्घ्रिद्वयं चरणयुग्मम्। इतरेषु न विद्यतेऽपेक्षा यस्मिन्कर्मणि तद्यथा भवति तथेतरानपेक्षम्। भजनीयान्तरनिरपेक्षमित्यर्थः। इदं क्रियाविशेषणम्। यदाङ्घ्रिद्वयविशेषणं तदा सहकार्यन्तरमनपेक्ष्य स्वातन्त्र्येणैव सकलसेवकजनाभीप्सितदानसमर्थमित्यर्थः। नितरामतिशयेन। 'किमेत्तिङव्यय–' इत्यादिना आम्प्रत्ययः। नोऽस्माकं लक्ष्मीमशेषाभिलषितार्थसंपत्तिं तनोतु करोतु। संपादयत्वित्यर्थः। तनोतेः 'आशिषि लिङ्लोटौ' इत्याशीरर्थे लोट्। 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिति कथ्यते' इति शाश्वतः। अत्राशीरलंकारः–'आशीर्नामाभिलषितवस्तुनः शासनं मतम्' इति लक्षणात्। अयं चोक्तोपमारूपकविशेषाभ्यां तिलतण्डुलवत्परस्परनैरपेक्ष्यात्संसृज्यते। तथा नितरामितरेत्यादिव्यञ्जनयुग्मानां तकाररेफखकारादीनां केवलानां चासकृदावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः। तदुक्तं विद्यानाथेन–'एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत्। आवृत्तिर्यत्र संदर्भे वृत्त्यनुप्रास इष्यते॥' इति। अयमेवालंकारः प्रायशो भोजराजोक्तिष्वनुसंधेयः। विशेषं तु वक्ष्यामः। आदौ द्युदेवताकस्य अन्त्यलघोस्तगणस्य प्रयोगाच्छुभलाभः सूच्यते। तदुक्तम्–'तो द्यौरन्त्यलघुः शुभः' इति। लकारस्य भूत्वाद्बीजप्रचयगमनसिद्धिः। प्रायेणात्र द्राक्षापाकः–'द्राक्षापाकः स कथितो बहिरन्तः स्फुरद्रसः' इति लक्षणात्। एतदादिश्लोकपञ्चकं वसन्ततिलकावृत्तम्–'उक्ता वसन्ततिलका तभजा जगौ गः' इति केदारलक्षणात्॥

इदानीं तावत् 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते' इत्यादिभगवद्भाष्यकारवचनं प्रमाणयन्, शिष्टाचारपरिप्राप्तं विशिष्टदेवताब्राह्मणनमस्काररूपं मङ्गलं निबध्नाति—

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चे-
त्तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।
तेषां प्रकाशनदशा च महीसुरैश्चे-
त्तानन्तरेण निपतेत्क नु मत्प्रणामः॥ २॥

**उच्चैरिति।** जगति। जगत्स्वित्यर्थः। उच्चैरुन्नता गतिर्गन्तव्यदेशः। स्वर्गाद्युन्नतस्थानमित्यर्थः। 'देशे प्राप्ये गतिः' इति वैजयन्ती। धर्मतो ज्योतिष्टोमादिधर्मात्। पञ्चम्यास्तसिः। सिध्यति चेन्निष्पन्ना भवति यदि। सिध्यतीति पदं सर्वत्र संबध्यते। तस्य धर्मस्य प्रमा यथार्थानुभवश्च। स्वर्गादिफलसाधनत्वज्ञानमिति यावत्। प्रमाकरणं प्रमाणमित्यत्र 'यथार्थानुभवः प्रमा' इति प्रमाशब्दार्थस्य तार्किकैरुपवर्णितत्वात्। कृतकेतरैरकृत्रिमैर्वचनैः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवेदवाक्यैः सिध्यति

चेत् । ननु 'अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदः' इत्यादिवाक्याद्वेदानामुत्पत्तिश्रवणात्कथमकृतकत्वमिति चेत् 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी विद्या यतः सर्वः प्रवर्तितः ॥' इति श्रुतेरकृत्रिमत्वावगमात् । 'ऋचः सामानि जज्ञिरे' इत्यादिषु हिरण्यगर्भे वेदाविर्भाव एव जनेरर्थः । एतत् 'शास्त्रयोनित्वात्' इति वेदान्तसूत्रव्याख्यानावसरे तत्रभवद्भिर्भाष्यकृद्भिः सम्यग्विवेचितं तत्रैवानुसंधेयमित्यलमत्र शास्त्रविचारेण । तेषामकृत्रिमवचनानां प्रकाशनदशा पाठतोऽर्थतश्च स्फुटीकरणप्रकारश्च । महीसुरैः । ब्राह्मणैरित्यर्थः । 'आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः' इत्यमरः । तानन्तरेण तान्महीसुरान्विना । 'अन्तरान्तरेण युक्ते' इति द्वितीया । मत्प्रणामो मत्कृतनमस्कारः क नु कुत्र वा निपतेत्प्रवर्तेत ।.उक्तक्रमेण परमश्रेयोहेतूनां वेदविदां ब्राह्मणानामेव नमस्कार्यत्वात्तेषामेवायं नमस्कारो विधीयत इत्यर्थः । तथाच श्रुतिः—'तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यात्' इति । ततो ब्राह्मणा एव नमस्कार्या इष्टदेवताश्च । तदुक्तं भगवता श्रीकृष्णेन महाभारते—'देवाधीनं जगत्सर्वं मन्त्राधीनं तु दैवतम् । ते मन्त्रा ब्राह्मणाधीना ब्राह्मणो मम दैवतम् ॥' इति । अत्रोत्तरोत्तरस्य पूर्वंपूर्वं प्रति विशेषणत्वादेकावल्यलंकारः । तदुक्तमेकावल्याम्—'यत्र विशेषणभावः पूर्वंपूर्वं प्रति क्रमेणैव । भजति परंपरमेषालंकृतिरेकावली कथिता ॥' इति ॥

इदानीं स्वचिकीर्षितनिबन्धस्य स्वरूपनिरूपणद्वारा सहृदयानां प्ररोचनामुत्पादयन्, तद्रचनायां निजरसनायाः प्रवृत्तिमाशास्ते—

गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥ ३ ॥

**गद्येति** । गद्यान्यपादबद्धानि । तदुक्तम्–'अपादः पदसंघातो गद्यं पद्यं चतुष्पदम्' इति । गद्यानामनुबन्धेनानुषङ्गेण यो रस आस्वादस्तेन मिश्रिता मिलिता पद्यसूक्तिः पद्यानां सम्यग्रचना । 'आस्वादो ब्रह्मणि रसे' इति शब्दार्णवे । वाद्यकलया वीणावेणुमृदङ्गादिवाद्यशिल्पेन । 'कला शिल्पे विवृद्धौ' इति वैजयन्ती । कलिता मिश्रिता गीतिर्गानविद्येव हृद्या मनोज्ञा हि । सहृदयहृदयाह्लादिनी खल्वित्यर्थः । तस्माद्गद्यपद्यमिश्रितप्रबन्धस्य सर्वानन्दकरत्वाद्धेतोः । कवयन्ते रसोल्लसितशब्दार्थसंघटनपटुया गिरा वर्णयन्तीति कवयस्तन्मार्गजुषां तद्वर्त्मानुवर्तिनाम् । कवितारसाभिज्ञानामित्यर्थः । सुखाय हृदयानुरञ्जनार्थं ममेयं मदीया । 'वृद्धाच्छः' इति छप्रत्ययः । रसना जिह्वा । चम्पूप्रबन्धरचनां 'गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते' इत्युक्तलक्षणं काव्यं चम्पूप्रबन्धस्तस्य रचनां निर्माणं दधातु । विशिष्टप्रबन्धरचनायां मदीया रसना प्रवर्ततामित्यर्थः । चमत्कारितया गद्यपद्यात्मकं काव्यं करोमीति तात्पर्यम् ।

१. 'अनुबद्ध' इति पाठः. २. 'विदां' इति पाठः.

अत्र पूर्ववाक्य उपमानोपमेयसाधारणधर्मसादृश्यप्रतिपादकानां चतुर्णां प्रयोगाच्छ्रौतः पूर्ण उपमालंकारः—'स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः । साद्गौपम्येन वर्ण्यस्य वाच्यं चेदेकगोपमा ॥' इति लक्षणात् । स च शब्देनानुप्रासेन च संसृज्यते ॥

ननु वाल्मीकिरचितेनैव श्रीरामायणेन सकलजनसंतृप्तेर्जायमानत्वात्तव पुनः कोऽयं नूतनप्रबन्धनिर्माणप्रयास इत्याशङ्क्य सोपपत्तिकं तत्प्रणयने स्वस्याधिकारं तावद्दर्शयति—

**वाल्मीकिगीतरघुपुंगवकीर्तिलेशै-**
**स्तृप्तिं करोमि कथमप्यधुना बुधानाम् ।**
**गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः**
**किं तर्पणं न विदधाति नरः पितॄणाम् ॥ ४ ॥**

**वाल्मीकीति ।** वल्मीकस्यापत्यं वाल्मीकिः । तदुक्तं ब्रह्मवैवर्ते—'अथाब्रवीन्महातेजा ब्रह्मा लोकपितामहः । वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ ॥' इति । 'अत इञ् इतीञ्' । तेन गीता उपवर्णिता ये रघुपुंगवकीर्तिलेशाः । पुमान्गौरिव पुंगवो वृषभश्रेष्ठः । 'श्रेष्ठोक्षाणौ तु पुंगवौ' इति वैजयन्ती । 'गोरतद्धितलुकि' इति समासान्तष्टच् । रघुपुंगवस्य रघुश्रेष्ठस्य कीर्तेर्दानक्षात्रादिगुणसमुद्भवायाः समाख्याया लेशा लवास्तैः । ब्रह्मलोकप्रसिद्धस्य शतकोटिविस्तृतस्य श्रीरामचरितस्य चतुर्विंशतिसहस्रसंख्यापरिमितग्रन्थेन श्रीरामायणेन कियत एव वर्णितत्वात्कीर्तिलेशैरित्युक्तमित्यवगन्तव्यम् । अधुनेदानीं कथमपि महता यत्नेन । चम्पूप्रबन्धनिर्माणरूपेणेत्यर्थः । 'ज्ञातहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादि तथाप्यन्तं यत्ने गौरववाढयोः ॥' इत्युत्पलमालायाम् । बुधानां तज्ज्ञानाम् । 'ज्ञातृचान्द्रिसुरा बुधाः' इति क्षीरस्वामी । तृप्तिं संतुष्टिं करोमि । अत्र दृष्टान्तमाह—भुवि भूलोके भगीरथेन राज्ञा यत्नलब्धैः प्रयत्नेनानीतैः । अश्वमेधीयाश्वान्वेषणसमये कपिलानलदग्धानां सगरात्मजानां स्वर्लोकप्रापणाय दुश्चरतपश्चर्यादिबहुतरप्रयत्नेन वियन्मार्गाद्भुवं प्रापितैरित्यर्थः । भगीरथप्रयत्न उत्तरत्र वक्ष्यते । गङ्गाजलैर्मन्दाकिनीसलिलैर्नरः पितॄणां तर्पणं निवापाञ्जलिदानेन संतृप्तिं न विदधाति न करोति किम् । करोत्येवेत्यर्थः । अतोऽहमप्येवं करोमीति भावः । अत्र वैधर्म्येण दृष्टान्तालंकारः—'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निगद्यते ॥' इति लक्षणात् ॥

इत्थं स्वस्य ग्रन्थकरणे योग्यतां प्रसाध्य संप्रति कथां प्रस्तौति—

**वाचं निशम्य भगवान्स[१] तु नारदस्य**
**प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।**
**माध्यंदिनाय नियमाय महर्षिसेव्यां**
**पुण्यामवाप तमसां तमसां निहन्त्रीम् ॥ ५ ॥**

---

१. 'जनः' इति पाठः. २. 'अथ' इति पाठः.

**वाचमिति** । प्रवचसां प्रगल्भवचसां कवीनां व्यासादिकवीनां प्रथम आद्यः । सकलकविकुलगुरुरित्यर्थः । स प्रसिद्धः । अत्र न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते' इति । तुशब्द उत्कर्षार्थः । अव्ययानामनेकार्थत्वात् । भगवान् । 'उत्पत्तिं निधनं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इत्युक्तलक्षणः । प्रचेतसोऽपत्यं प्राचेतसो वाल्मीकिः । 'तस्यापत्यम्' इत्यण् । 'प्राचेतसस्त्वादिकविः स्यान्मैत्रावरुणिश्च सः । वाल्मीकिश्च' इति विश्वः । रमन्ते शरीरेन्द्रियविषयोपनीतया विवेदनयेति नरा जीवास्तेषां संबन्धि नारमज्ञानं द्यति खण्डयति श्रीनारायणदिव्यनामसंकीर्तनेनेति नारदः । तदुक्तं नारदीये—'गायन्नारायणकथां सर्वलोकभयापहाम् । नारदो नाशयन्नेति नृणामज्ञानजं तमः ॥' इति । अथवा 'नरतीति नरः प्रोक्तः परमात्मा सनातनः' इति नारदीयवचनान्नरः परमात्मा तस्य संबन्धि नारं परमात्मविषयकज्ञानं तद्ददात्युपदिशति परमकारुणिकतया मुमुक्षुभ्य इति नारदः । तेनास्य श्रद्धेयवचनत्वमुक्तमित्यवधेयम् । तस्य नारदस्य ब्रह्मनियोगेन समागतस्य देवर्षिप्रवरस्य वाचं निशम्य । 'को न्वस्मिन्सांप्रतं लोके' इत्यादिनिजप्रश्नानुरूपोत्तरतया 'मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः' इत्यादिसंक्षिप्तबालरामायणोक्तां श्रीरामगुणवर्णनरूपां वाचं श्रुत्वा । 'गुरुमुखाच्छ्रोतव्यम्' इति न्यायेन सकललोकगुरोर्नारदस्य मुखाच्छ्रवणविधेर्विहितत्वादिति भावः । 'निशाम्यतीति श्रवणे तथा निशमयत्यपि' इति भट्टमल्लः । ततो निशाम्यतेरिदं रूपम् । अन्यथा निशमय्येति स्यात् । अत एवाह वामनः—'निशम्यनिशमय्यशब्दौ प्रकृतिभेदात्' इति । ननु 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः' इति भागवतप्रसिद्धं हि नारदस्य ब्रह्मपुत्रत्वम् । तथाच—'वाल्मीकिरभवद्ब्रह्मा वाणी वाक्तस्य रूपिणी । चकार रामचरितं पावनं चरितव्रतः ॥' इति स्कान्दे पार्वतीं प्रति परमेश्वरेणोक्तत्वाद्ब्रह्मलोकप्रसिद्धं शतकोटिप्रविस्तृतं रामचरितं भूलोकवर्तिचातुर्वर्ण्यतापत्रयविमोचनार्थं संक्षिप्य रचयितुमुद्युक्तस्य परमकारुणिकस्य ब्रह्मण एव भूमौ स्वांशेन वाल्मीकिरूपेणावतीर्णत्वादस्य प्रष्टृत्वं नारदस्योपदेष्टृत्वं च कथमुपपद्यत इति चेत्, सत्यम् । मानुषलोके रूपान्तरेणावतीर्णस्य तस्य संप्रदायप्रवर्तनार्थमित्थमुपयुक्तत्वान्नानुपपत्तिरित्यलमतिप्रपञ्चेन । मध्ये भवो माध्यंदिनः । 'मध्यशब्दस्य मध्यंदिनादेशो भवार्थप्रत्ययश्च स्यात्' इति न्यासकारः । 'मध्याह्नवाचि मध्यंदिनशब्द एवोत्सादिषु पठितः' इत्यन्ये । तथाच—'उत्सादिभ्योऽञ्' । माध्यंदिनाय नियमाय । माध्याह्निकक्रियां कर्तुमित्यर्थः । महर्षिभिर्ऋषिप्रवरैः सेव्यां स्नानसंध्यावन्दनाद्यनुष्ठानार्थमाश्रयितुं योग्याम् । महर्षिलक्षणं तु—'तपःशौचपरा दान्ताः सत्यवाचो बहुश्रुताः । वेदवेदाङ्गतत्त्वज्ञा ऋषयः परिकीर्तिताः ॥' इति । कुतः । पुण्यां पावनीम् । अतएव तमसामज्ञानानां निहन्त्रीं विनाशिनीम् । स्वसेवातत्पराणामशेषपापनिवर्तनेन ज्ञानप्रदात्रीमित्यर्थः । तमसां तमसानदीमवाप । लक्षणया तत्तीरं प्रापेत्यर्थः । अत्र तमसां तमसामिति व्यञ्जनत्रितयस्यावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः । लक्षणं तूक्तम् ॥

**तत्र कंचन क्रौञ्चमिथुनादेकं पञ्चशरविद्धमपि व्याधेनानुविद्धं निध्यायतो बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निससार सरस्वती ॥**

**तत्रेति** । तत्र तमसातीरे । पञ्च शरा यस्य तेन पञ्चशरेण स्मरेण विद्धं प्रहृतम् । काममोहितमिति यावत् । 'कामः पञ्चशरः स्मरः' इत्यमरः । पञ्चभिः शरैर्विद्धमिति गम्यते । 'अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥' इत्यमरः । तथाभूतमपि व्याधेन लुब्धकेन । निषादेनेति यावत् । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः । अनु पश्चाद्विद्धं संप्रहृतम् । परमशोच्यतरमित्यर्थः । 'व्यध संप्रहारे' इति धातोः कर्मणि क्तः । क्रौञ्चमिथुनात्क्रौञ्ची च क्रौञ्चश्च क्रौञ्चौ बकविशेषौ । 'क्रुङ् क्रौञ्चोऽथ बकः कह्वः' इत्यमरः । 'पुमान्स्त्रिया' इत्येकशेषः । तयोर्मिथुनाद्द्वन्द्वात् । तन्मिथुनादित्यर्थः । निर्धारणे पञ्चमी । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । कंचनैकं पुमांसं निध्यायतः पश्यतः । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । अतएव बद्धानुकम्पस्योत्पन्नकरुणस्य । मैत्री मुदिता करुणा उपेक्षा चेति चतसृणां महच्चित्तवृत्तित्वेन विद्धवेदनदर्शनस्य करुणोत्पादकत्वादिति भावः । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । भगवतो वाल्मीकेः । पदद्वयं व्याख्यातम् । वदनमरविन्दमिवेत्युपमितसमासः । न तु वदनमेवारविन्दमिति रूपकसमासः । तथा सत्यरविन्दस्य प्राधान्येन तस्मात्सरस्वतीनिःसरणायोगात् । छन्दोमय्यनुष्टुप्छन्दोनिबद्धा । 'द्वात्रिंशदक्षरानुष्टुप्' इति छान्दसाः । छन्दःशब्दात्ताद्रूप्ये मयट् । 'ठिड्ढाणञ्–' इत्यादिना ङीप् । काचिदपूर्वैवं वक्ष्यमाणप्रकारा सरस्वती वाङ्निःससार निजप्रयत्नं विनैव निर्जगाम । 'गीर्वाग्वाणी सरस्वती' इत्यमरः । 'सृ गतौ' इति धातोर्लिट् ॥

तामेव सरस्वतीमाह—

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ६ ॥**

**मा निषादेति** । हे निषाद, त्वं शाश्वतीः समा अनन्तसंवत्सरान् । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः । अत्यन्तसंयोगे द्वितीया । प्रतिष्ठां स्थितिं मा गमो मा प्राप्नुहि । क्षिप्रमेव म्रियस्वेत्यर्थः । गमेर्लुङि पुषादित्वाच्च्लेरङादेशः । 'न माङ्योगे' इत्यडागमप्रतिषेधे वक्तव्येऽप्यार्षत्वात्तदभावप्रतिषेधः । यद्यस्मात्क्रौञ्चमिथुनादेकं काममोहितं क्रीडातत्परमवधीर्हतवानसि । हन्तेर्लुङि हनो वधादेशः । अयं शापत्वेन प्रवृत्तः श्लोकः । वाल्मीकेर्महर्षेरीश्वरानुग्रहेण कृत्स्नकाव्यार्थसंग्रहो निःसृतः । संग्रहश्चायम्—मानिषाद मा लक्ष्मीर्निषीदति तिष्ठत्यस्मिन्निति मानिषाद लक्ष्मीनिवास श्रीराम, त्वं शाश्वतीः समाश्चिरकालं प्रतिष्ठामगमः । अखण्डितैश्वर्यानन्दसंपन्नो विजयी भवेत्यर्थः । यद्यतः कारणात्क्रौञ्चमिथुनात् 'क्रुञ्च गतिकौटिल्याल्पीभावयोः' इति धातोः क्रुञ्चा राक्षसी कैकसी तस्या अपत्यं क्रौञ्चो राक्षसो रावणः ।

---

१. 'पञ्चशरानुविद्धम्' इति पाठः.

'तस्यापत्यम्' इत्यण् । तस्य पत्नी कौञ्ची मन्दोदरी । अत्रापि पूर्ववदेकशेषः । तयोर्मिथुनादेकं काममोहितं लोकविद्विष्टकर्माणं रावणमवधीः । एतेन महर्षिणा वाल्मीकिना संप्रदायप्रवर्तकेन लक्ष्मीपतिरूपश्रीरामस्मरणरूपं मङ्गलं काव्यादाववश्यं कर्तव्याशीर्वचनं कृतमित्यवगन्तव्यम् । इत्येवं सरस्वती निःससारेति पूर्वेण संवन्धः । श्लोकाख्यमेतदानुष्टुभं वृत्तम्—'पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरुषट्कं च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥' इति वचनात् । 'मानिषाद प्रतिष्ठां त्वमगमः' इत्यत्र 'प्रतिष्ठां तु अम गमः' इति च्छेदः । न विद्यते मा यस्येति विग्रहः । तस्य संबुद्धिर्हे अम निर्भाग्य इति नारायणीये ॥

**तदनु समयोचितकृत्यं निर्वर्त्य स्वाश्रमं प्रति गतवति भगवति वाल्मीकौ**

**तदन्विति** । तदनु 'मानिषाद' इत्यादिच्छन्दोनिवद्धवाङ्निःसरणानन्तरम् । भगवति पूज्ये वाल्मीकौ । समयोचितं मध्याह्नकालोचितम् । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । कृत्यं स्नानसंध्यावन्दनादि कर्म निर्वर्त्य कृत्वा स्वाश्रमं स्वनिकेतनं पर्णशालां प्रति गतवति प्रविष्टे सति ।

ततः किं प्रवृत्तमित्यत आह—

**वाणीविलासमपरत्र कृतोपलम्भ-**
**मम्भोजभूरसहमान इवाविरासीत् ।**
**आभाति यत्कृतिरनेकविधप्रपञ्च-**
**व्याजेन्द्रजालविधिसाधकपिञ्छिकेव[2] ॥ ७ ॥**

**वाणीति** । अम्भोजं नारायणनाभिकमलं तत्र भवतीत्यम्भोजभूर्ब्रह्मा । तदुक्तं भागवते—'यन्नाभिजातादरविन्दकोशाद्ब्रह्माविरासीद्यत एष लोकः' इति । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । अपरत्र पुरुषान्तरे वाल्मीकौ कृतोपलम्भं विहितानुषङ्गम् । तत्रोपलभ्यमानमित्यर्थः । वाण्याः 'मा निषाद' इत्यादिवाचः । सरस्वतीदेव्याश्चेति गम्यते । विलासं लीलामसहमानोऽमृष्यमाण इवाविरासीत्प्रादुरभूत् । निजपरिग्रहस्य पुरुषान्तरासक्तिं को वा सहेतेति भावः । वस्तुतस्तु परमकारुणिकतया महर्षेर्वाल्मीकेर्व्याधविद्धकौञ्चदर्शनानन्तरजनितशोकापनोदनार्थं निजाज्ञया प्रथमतो नारदोक्तमेवार्थं पुनः स्वयमप्युपदेष्टुं तत्समक्षं प्रत्यक्षोऽभूदिति तात्पर्यम् । युक्तं चैतदित्याह—आभातीति । यत्कृतिर्यस्याम्भोजभुवः कृतिः क्रियाशक्तिः कर्त्री । अनेकविधो देवतिर्यङ्मनुष्यादिभेदेन बहुप्रकारो यः प्रपञ्चः सर्गः स इति व्याजोऽपदेशो यस्य स तथोक्तो य इन्द्रजालविधिः । 'अदेशकालपारोक्ष्यं परोक्षस्यैव वस्तुनः । यत्रौषधादिभिः सोऽयमैन्द्रजालविधिः स्मृतः ॥' इत्युक्तलक्षणः । तस्य साधकपिञ्छिकेव निष्पादकपिञ्छविशेष इवाभाति प्रकाशते । अतएव तदुक्तं कौञ्चहननं तद्दर्शनेन महर्षेरपि शोकोत्पादनं तदपनोदनार्थं स्वस्याविर्भावश्चेति भावः । पिञ्छिकेत्यत्र पिञ्छैव पिञ्छिका । स्वार्थे कप्रत्ययः । कात्पूर्वस्येकारादेशः । यद्यपि 'पिञ्छबर्हे नपुंसके' इत्यमरः, तथाप्यावन्तोऽयं पिञ्छा-

१. 'स्वाश्रममुपगतवति सति' इति पाठः. २. 'पिञ्छिकेव' इति पाठः.

शब्दो निघण्ट्वन्तरेषु मृग्यः। अथवा महाकविप्रयोगदर्शनात्समाधेयम्। यथोक्तं कृष्णकर्णामृतस्तवे मङ्गले—'नवशिखिपिञ्छालाञ्छितम्'। तथा ज्ञानवासिष्ठे शाम्बरिकोपाख्याने—'इत्युक्त्वा पिञ्छिका तेन भ्रामिता प्रसभं सभा। नानाविरचनाबीजं मायेव परमात्मना॥' इति। निरङ्कुशाः खलु कवयः सार्वपथीना इत्यलमतिप्रसङ्गेन। अत्र पूर्ववाक्ये वाण्योर्वाच्यप्रतीयमानयोः श्लेषभित्तिकाध्यवसाया मूलातिशयोक्तिर्निर्व्यूढा। असहमान इति जातिस्वरूपोत्प्रेक्षा। उत्तरवाक्ये तु प्रपञ्चे व्याजशब्देन तत्त्वमपह्नुत्यैन्द्रजालत्वारोपणादपह्नवालंकारः। 'व्याजादिशब्दैरसत्यत्वप्रतिपादनमपह्नुतिः' इति सर्वस्वसूत्रम्। तदुज्जीविता चेयं पिञ्छिकेत्युपमा। साचोक्तोत्प्रेक्षया परस्परनैरपेक्ष्यात्संसृज्यते। वसन्ततिलकावृत्तम्। लक्षणं तूक्तम्॥

**ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात्।**

**तत इति**। ततः प्रादुर्भावानन्तरम्। परमहर्षेण। पितामहोऽयमेवंभूते मयि दययाविरभूदहो कृतार्थतेति परमानन्दभरितेनेत्यर्थः। महर्षिणा 'ऊर्ध्वरेतास्तपस्युग्रो नियताशी च संयमी। शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः॥' इत्युक्तलक्षणलक्षितेन ऋषिप्रवरेण वाल्मीकिना। विधिवद्विध्यर्हम्। यथाशास्त्रमित्यर्थः। अभ्यर्चितोऽर्घ्यपाद्यासनादिभिः पूजितः। परमे स्थाने तिष्ठतीति परमेष्ठी ब्रह्मा कर्ता। 'परमे स्थः कित्' इति कित्। इनिप्रत्यय औणादिकः। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। 'स्थास्थिन्स्थृणाम्' इति वक्तव्यात्षत्वम्। मध्यमलोके भूर्लोकेऽपि। लोकत्रयपंक्षेऽप्यस्य मध्यत्वादिति भावः। अपिशब्दो लोकान्तरप्रख्यातिं द्योतयति। स्ववृत्तं निजचरित्रं प्रकाशयितुं प्रख्यापयितुम्। किलेत्यलीके। वस्तुतस्तु मच्छन्दादेवेति भावः। भवन्तं त्वामेव। अन्यव्यवच्छेदार्थमेवकारः। तवैव योग्यत्वादिति भावः। एवकारोऽयं भारत्या वा संबध्यते। उपतिष्ठमानयानुवर्तमानयानया भवन्मुखान्निर्गतया भारत्या 'मा निषाद–' इत्यादिसरस्वत्या। ईदृशैरेव श्लोकैरित्यर्थः। रामचरितं श्रीरामचरित्रम्। श्रुतमनतिक्रम्य यथाश्रुतम्। नारदमुखतः श्रुतक्रमानतिक्रमणेनैवेत्यर्थः। 'यथासादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमाः' इति शब्दार्णवे। व्याक्रियतां व्याख्यायतामित्येवं व्याहृत्योक्त्वोपदिश्य। 'व्याहार उक्तिर्लपितम्' इत्यमरः। अन्तरधाददृश्योऽभूत्। अत्रेदं श्रीरामायणबालकाण्डवचनम्—'मच्छन्दादेव ते ब्रह्मन्प्रवृत्तेयं सरस्वती। रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम॥' इत्यारभ्य 'इत्युक्त्वा भगवान्ब्रह्मा तत्रैवान्तरधीयत' इत्यन्तम्॥

**अथ सरसिजयोनेराज्ञया रामवृत्तं**
**करबदरसमानं प्रेक्ष्य दृष्ट्या प्रसीच्या।**
**शुभमतनुत काव्यं स्वादु रामायणाख्यं**
**मधुमयफणितीनां मार्गदर्शी महर्षिः॥ ८॥**

**अथेति**। अथ ब्रह्मतिरोधानानन्तरम्। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'

१. 'उपदिष्टमानया' इति पाठः. २. 'भणितीनां' इति पाठः.
२ च. रा.

इत्यमरः । मधुमय्योऽमृतस्राविण्यस्तासां फणितीनां रसालंकारोल्लसितशब्दार्थसंघटनाविशेषाणाम् । मधुमयेत्यत्र 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः । मार्गं पद्धतिं दर्शयतीति ताच्छील्येन कवीनामपि मार्गदर्शी । सकलकविकुलगुरुरित्यर्थः । दृशेर्ण्यन्तात्ताच्छील्ये णिनिः । महांश्चासौ ऋषिश्च महर्षिः । 'तपोनिर्धूतपाप्मानो याथातथ्याभिधायिनः । वेदवेदाङ्गतत्त्वज्ञा ऋषयः परिकीर्तिताः ॥' इत्युक्तलक्षण ऋषिश्रेष्ठो वाल्मीकिः सरसिजं योनिः कारणं यस्य तस्य ब्रह्मण आज्ञया श्रीरामचरितं व्याक्रियतामित्येवंरूपनियोगेन हेतुना । रामवृत्तं श्रीरामचरितं प्रतीच्या दृष्ट्या योगदृष्ट्या । बदर्याः फलं बदरम् । 'फले लुक्' । करे हस्ते यद्बदरं तेन समानं तत्तुल्यमित्यार्थी उपमा, क्रियाविशेषणं वा । निःशेषमित्यर्थः । प्रेक्ष्य दृष्ट्वा । शुभं वक्तॄणां श्रोतॄणां च कल्याणकरम् । स्वादु पाठतो गानतश्च मधुरम् । 'त्रिष्विष्टमधुरौ स्वादू' इत्यमरः । रामस्यायनं स्थानं वर्णकत्वेनेत्यन्वर्थसंज्ञा रामायणमित्याख्या यस्य तत्तथोक्तम् । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । उत्तरायणवत् । काव्यं प्रवन्धमतनुताकरोत् । कवयते वर्णयतीति कविस्तस्य कर्म काव्यम् । ब्राह्मणादित्वात्ष्यञ् । तस्य पङ्कजादिवद्रूढत्वाद्रसोल्लसितशब्दार्थसंघटनात्मकमेव, नतु कर्ममात्रम् । तत्काव्यं रचितवान् । तथा च श्रीरामायणे—'ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः । पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥' इत्यारभ्य 'रघुवंशस्य चरितं चकार भगवानृषिः' इत्यन्तम् । मालिनीवृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥

तदनन्तरवृत्तान्तमाह—

**एनं प्रवन्धं प्रयोक्तुं कः[1] समर्थ इति चिन्तामुपगतवति सति भगवति वाल्मीकौ ।**

**एनमिति ।** भगवति वाल्मीकावेनं प्रवन्धं श्रीरामायणाख्यमेतत्काव्यं प्रयोक्तुमध्यापयितुं पठितुं वा कः पुमान्समर्थोऽधिकारीत्येवंरूपां चिन्तां पर्यालोचनमुपगतवति सति ।

ततः किं जातमित्यत आह—

**उपागतौ मिलितपरस्परोपमौ**
**बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।**
**विचक्षणौ विविधनरेन्द्रलक्षणौ**
**कुशीलवौ कुशलवनामधारिणौ ॥ ९ ॥**

**उपागताविति ।** मिलिता संगता परस्परोपमान्योन्यसादृश्यं ययोस्तौ । यमलत्वात्परस्परतुल्यरूपावित्यर्थः । बहुश्रुतौ वेदवेदाङ्गादिसकलविद्याविशारदौ । 'शास्त्रश्रवणयोः श्रुतम्' इति विश्वः । श्रुतिमधुरेण श्रवणानन्दकरेण स्वरेण श्रुत्यारब्धानुरणनलक्षणेनान्वितौ । श्राव्यकण्ठस्वरसंपन्नावित्यर्थः । स्वरलक्षणमुक्तं संगीतरत्नाकरे—'श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः । रसाद्रञ्जयति श्रोतृचित्तं स स्वर

१. 'लोके कः' इति पाठः.

उच्यते ॥' इति। विचक्षात इति विचक्षणौ विद्वांसौ। 'कर्तरि ल्युट्' इति न्यासकारः। 'असनयोः प्रतिषेधो वक्तव्यः' इति चक्षिङः ख्याञादेशाभावः। विविधानि बहुप्रकाराणि नरेन्द्रलक्षणान्याजानुबाहुत्वादिराजचिह्नानि ययोस्तौ। महाराजकुमारत्वान्महाभाग्यसूचकराजलक्षणलक्षिताविल्यर्थः। कुशो लवश्चेति नाम धारयत इति कुशलवनामधारिणौ। कुशैर्लवैश्च गर्भक्लेदमार्जनात्कुशलवावित्यन्वर्थसंज्ञावित्यर्थः। उक्तं च कालिदासेन—'स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया। कविः कुशलवावेव चकार किल नामतः ॥' कुशीलवौ गायकौ। पृषोदरादित्वात्साधुः। उपागतौ। चिन्तासमकालमेव विशिष्टगुणसंपन्नौ मैथिलेयौ कुशलवौ समीपं प्राप्ताविल्यर्थः। 'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्' इति भावः। अत्रोदात्तता नाम गुणः। तदुक्तं विद्यानाथेन—'श्लाघ्यैर्विशेषणैर्योगो यत्र सा स्यादुदात्तता' इति। रुचिरावृत्तम्—'चतुर्ग्रहैरिह रुचिरा जभस्जगा' इति लक्षणात् ॥

**एतौ मुनिः परिगृह्य स्वां कृतिमपाठयत्।**

**एताविति**। मुनिर्मननशीलो वाल्मीकिः। मुनिलक्षणं तु—'निर्वृतः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः। ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥' इति। एतौ कुशलवौ परिगृह्य शिष्यत्वेन परिगृह्य स्वां स्वकीयाम्। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः। कृतिं श्रीरामायणाख्यं प्रबन्धमपाठयदध्यापयामास। पठेर्ण्यन्ताल्लङ्। 'गतिबुद्धि—' इत्यादिनाणि कर्तुः कर्मत्वम् ॥

**तौ पुनरितस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः परिवृतो निजचरितं गातुमन्वयुङ्क्त।**

**ताविति**। इतस्ततः। तत्र तत्र प्रदेश इत्यर्थः। गायमानौ गानेनैव श्रीरामायणं पठन्तौ तौ कुशीलवौ कर्म। पुनःशब्दो वाक्यालंकारे। दृष्ट्वा। रामः प्रहृष्टमना रूपगानसंपत्तिभ्यां संतुष्टान्तःकरणः सन्, स्वभवनं निजमन्दिरमानीय भृत्यैः प्रापय्य भ्रातृभिर्लक्ष्मणादिभिः परिवृतः परिवेष्टितो निजचरितं स्वचरित्रं गातुं गानेन परिकर्तुमन्वयुङ्क्तापृच्छत्। प्रबन्धमेनं पठतमिति नियोजितवानित्यर्थः। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥

**ततश्च।**

**तत इति**। ततोऽनुयोगानन्तरम्। चशब्दो वक्ष्यमाणक्रियायां संबध्यते ॥

**छन्दोमयीनां निलयस्य वाचामन्ते वसन्तौ मुनिपुंगवस्य।**
**एतौ कुमारौ रघुवीरवृत्तं यथाक्रमं गातुमुपाक्रमेताम् ॥ १० ॥**

**छन्दोमयीनामिति**। छन्दोमयीनामनुष्टुबादिछन्दोनिबद्धानां वाचाम्। निलयस्य। पद्यप्रपञ्चनिर्माणचातुर्यैकनिकेतनस्येत्यर्थः। 'छन्दः पद्ये च वेदे च' इति विश्वः। छन्दःशब्दान्मयटि ङीप्। मुनिपुंगवस्य मुनिश्रेष्ठस्य वाल्मीकेः। अन्ते वसन्तावन्तेवासिनौ शिष्यौ। एतेनानयोरखण्डितवचनत्वं सूच्यते। 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः। एतौ कुमारौ मैथिलेयौ कुशलवौ रघुवीरवृत्तं श्रीरामचरितं

१. 'स्वकृतिम्' इति पाठः. २. 'सह' इति पाठः. ३. 'मुनिसत्तमस्य' इति पाठः.

यथाक्रमम् । उपदेशानुसारेणैवेत्यर्थः । गातुं गानेन पठितुमुपाक्रमेतामुपक्रान्तवन्तौ । चशब्दोऽयमनुयोगं समुच्चिनोति । एतेन प्रश्नानन्तरमेवाविलम्बेन प्रारब्धगानयोरनयोः श्रीरामस्य चान्योन्यं दैववशात्स्वयमेवोत्पन्ना प्रीतिरिति सूच्यते । इन्द्रोपेन्द्रामिश्रणादुपजातिर्वृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।' इति केदारेणोक्तत्वात् ॥

उपक्रमप्रकारमेवाह—

**अस्ति प्रशस्ता जनलोचनानामानन्दसंदायिषु कोसलेषु ।**
**आज्ञासमुत्सारितदानवानां राज्ञामयोध्येति पुरी रघूणाम् ॥ ११ ॥**

**अस्तीति** । जनलोचनानामानन्दसंदायिषु । समस्तवस्तुसमृद्धतया सकलजननयनानन्दकरेष्वित्यर्थः । कोसलेषूत्तरकोसलेषु जनपदेषु । बहुवचनान्तैव देशविशेषस्य संज्ञा । प्रशस्ता प्रख्याता । आज्ञयैव समुत्सारिता निरस्ता दानवा येषां तेषाम् । चण्डशासनानामित्यर्थः । रघूणां रघुवंशोद्भवानां राज्ञां प्रजानुरञ्जकानां नृपाणाम् । रघुशब्देन यदुशब्दवत्तदपत्ये लक्षणा । जनपदशब्दानामतद्राजत्वाद्बहुषु लुगसंभवाद्रघुराजसंबन्धिनीत्यर्थः । योद्धुमशक्या अयोध्येत्यन्वर्थसंज्ञा पुरी राजधान्यस्ति । इन्द्रवज्रावृत्तम् । लक्षणं तूक्तम् । 'संधायिषु' इत्यपि पाठः[1] । उदात्तालंकारः ॥

**तामावसद्दशरथः सुरवन्दितेन**
**संक्रन्दनेन विहितासनसंविभागः ।**
**वृन्दारकारिविजये सुरलोकलब्ध-**
**मन्दारमाल्यमधुवासितवासभूमिः ॥ १२ ॥**

**तामिति** । सुरवन्दितेन सुरसेव्येन संक्रन्दनेनेन्द्रेण । 'संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः' इत्यमरः । विहित आसनसंविभागो दत्तार्धासनः । इन्द्रस्यापि माननीय इत्यर्थः । तथा वृन्दारकारीणां दानवानां विजये सति । दानवेषु विजितेषु सत्स्वित्यर्थः । सुरलोके स्वर्गे लब्धानि परितोषात्सुरैर्दीयमानतया प्राप्तानि मन्दाराणां माला एव माल्यानि पारिजातकुसुमस्रजस्तेषां मधुना पुष्परसेन वासिता सुरभिता वासभूमिर्निवासस्थानं यस्य स तथोक्तः । भूलोकेऽपि स्वर्गसुखानुभावक इत्यर्थः । 'मधु मद्ये पुष्परसे' इत्यमरः । दशरथो राजा तामयोध्यामावसदधिवसतिस्म । 'उपान्वध्याङ्वसः' इति कर्मत्वम् । तत्र वर्तमानो निजकार्यनिर्वाहकतया सुरैः पूज्यमानश्चिरकालं साम्राज्यश्रियमनुबभूवेत्यर्थः । अनुप्रासोऽलंकारः । वसन्ततिलकावृत्तम्[2] ॥

**अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः समं मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसंगतावग्रहनिग्रहशौण्डस्य विभण्डकसूनोरवश्यमृष्यशृङ्गस्य प्रसादात्प्रभवो भविता कुमाराणामिति सनत्कुमारोदीरितं पुरावृत्तमस्मै दशरथाय कथयामास ।**

१. 'सङ्ग' इति पाठः. २. 'उक्तम्' इति पाठः.

अथेति । अथानन्तरमस्मिन्दशरथेऽनपत्यतयाऽपुत्रतया दूयमानं परितप्यमानं मानसं यस्य तस्मिन् । 'नापुत्रस्य लोकोऽस्ति तत्सर्वे पशवो विदुः' इति, 'अपुत्रस्य गतिर्नास्ति' इति श्रुतिस्मृतिभ्याम् । 'दूङ् परितापे' इति धातोः कर्तरि शानच् । अतएव पुंनाम्नो नरकात्त्रायन्त इति पुत्रास्तदर्थं पुत्रलाभार्थमित्यर्थः । 'अर्थेन सह नित्यसमासो विशेष्यलिङ्गता च वक्तव्या' । अश्वमेधं क्रतुमश्वमेधयागं विधातुं कर्तुं मन्त्रिभिः समं सचिवैः साकं मन्त्रयमाणे विचारयमाणे सति । तदा सुमन्त्रः कुलक्रमागतो मन्त्रिप्रवरः कर्ता । अङ्गदेशेऽङ्गराष्ट्रे संगतः प्राप्तो योऽवग्रहो वृष्टिप्रतिबन्धः । 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यप्प्रत्ययः । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः । तस्य निग्रहे निवर्तने शौण्डस्य दक्षस्य । निग्रहानुग्रहसमर्थस्येत्यर्थः । 'सप्तमी शौण्डैः' इति समासः । विभण्डकसूनोर्विभण्डकाख्यमुनिपुत्रस्यर्ष्यशृङ्गस्य महर्षेः प्रसादादनुग्रहात् । 'प्रभावात्' इति पाठे सामर्थ्यात् । अवश्यं निश्चितं कुमाराणां पुत्राणां प्रभव उत्पत्तिर्भविता भविष्यति । अनद्यतने लुट् । दशरथ इति शेषः । इत्येवं सनत्कुमारेण परापरविदा ब्रह्ममानसपुत्रेणोदीरितं ब्रह्मसभायां कथितं पुरावृत्तं पूर्ववृत्तान्तमस्मै दशरथाय कथयामास । पूर्वमिक्ष्वाकुसारथ्येन ब्रह्मसभां गतस्तत्र भूलोकराजप्रस्तावतत्परैर्देवैः पृष्टेन सनत्कुमारेण त्रैकाल्यविदा कथितस्य दशरथवृत्तान्तस्य मनसि स्थितत्वात्तदानीमेतत्सर्वं निवेदयामासेत्यर्थः ॥

**सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं संबन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत ।**

स इति । स दशरथोऽपि सुमन्त्रस्य वचनात्तथ्यवाक्याद्धेतोः शान्तः शमं गत आधिः पुत्राभावजातमनोव्यथा यस्य स तथोक्तः सन् । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । शान्ता नामाङ्गदेशाधीश्वरस्य पुत्री रोमपादनाम्नस्तनया तया कुटुम्बिनं कुटुम्बवन्तम् । शान्ताजानिमित्यर्थः । अवग्रहनिवारणानन्तरं पारितोषिकतया निजपुत्रिकाया दत्तत्वादिति भावः । अतएव संबन्धिनं बन्धुम् । रोमपादस्य दशरथस्य च सौहार्दसंबन्धसोदरभावस्य विद्यमानत्वादिति भावः । मुनिं मननशीलमृष्यशृङ्गमानीय । स्वयमेवेति शेषः । वसिष्ठेन निजकुलगुरुणादिष्टमुपदिष्टमश्वमेधमध्वरं सरयूरोधसि सरय्वाख्यनदीतीरे । 'कूलं रोधश्च तीरं च' इत्यमरः । विधाय विधिबोधितक्रमेण कृत्वा तत्र सरयूरोधस्येव । न त्वश्वमेधे । 'न हि कर्मणि कर्मारम्भः' इति शास्त्रनिषेधात् । पुत्राणामियं पुत्रीया ताम् । पुत्रोत्पादनहेतुमित्यर्थः । 'वृद्धाच्छः' इति छप्रत्ययः । इष्टिं यागं पुत्रकामेष्टिं विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हति' इति वतिप्रत्ययः । कर्तुमारभतोपाक्रमत ॥

**तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसंप्लोषणमावेद्य**

१. 'धरण्यां' इति पाठः. २. 'गीर्वाणाः' इति पाठः. ३. 'शक्र' इति पाठः. ४. 'प्रतापानल' इति पाठः. ५. 'संशोषणम्' इति पाठः.

**तेन सह शरण्यमिति शार्ङ्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः ।**

**तदन्विति ।** तदन्वारम्भानन्तरं हविराहरणाय हविर्भागानाहर्तुं धरणौ कृतावतरणा भुवं प्रत्यागताः शतमखप्रमुखा इन्द्राद्याः सर्वे गीर्वाणगणा देवगणाश्चतुर्मुखाय ब्रह्मणे दशमुखस्य रावणस्य प्रतापः कोशदण्डजं तेजः। 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । स एव ग्रीष्मोष्मा ग्रीष्मर्तुजनितसंतापस्तेन यत्संप्लोषणं दाहः । 'प्लुष दाहे' इति धातोर्ल्युट् । तदावेद्य विज्ञाप्य तेन सह चतुर्मुखेन साकम् । शृङ्गस्य विकारः शार्ङ्गं धनुर्यस्य तं शार्ङ्गधन्वानं श्रीमहाविष्णुम् । 'धनुषश्च' इत्यनङादेशस्तद्धितसमासत्वात् । शरणं रक्षितारम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । इति मन्वाना अवबुध्यमानाः । शरणपदस्य कर्मत्वेऽपि निपातेनेतिशब्देनाभिहितत्वान्न द्वितीया । तिङाद्युपसंख्यानस्योपलक्षणत्वात् । यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति । नानाविधा बहुप्रकाराः प्रस्तुतास्तत्कालोचिताः स्तुतयः स्तोत्राणि येषां ते तथोक्ताः । यद्वा नानाविधं यथा तथा प्रस्तुता उपक्रान्ताः स्तुतयो येषां ते तथोक्ताः सन्तः । क्षीराम्बुराशिं क्षीरार्णवमासेदुः । श्रीमहाविष्णोः क्षीराब्धिशायित्वात्तत्तीरं प्रापुरित्यर्थः । अम्बुराशिशब्दस्य रूढ्यार्णवपरत्वान्नानार्थान्तरयोगापेक्षया रूढिर्बलीयसीति मीमांसकाः । एवमुत्तरत्रापि द्रष्टव्यम् । 'षद्लृ विशरणगत्यवसादनेषु' इति धातोर्लिट् ॥

अथ त्रिभिः कुलकेन श्रीमहाविष्णुं वर्णयति—

**संतापघ्नं सकलजगतां शार्ङ्गचापाभिरामं**
**लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।**
**वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यं**
**कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ॥ १३ ॥**

**संतापघ्नमिति ।** सकलजगतां समस्तलोकानां संतापं तापत्रयजनितं ग्रीष्मादिजनितं च संज्वरं हन्ति नाशयतीति संतापघ्नम् । 'हो हन्तेः—' इति कुत्वम् । शार्ङ्गमेव चापमिन्द्रधनुस्तेनाभिरामं मनोज्ञम् । लक्ष्मीरेव विद्युत्सौदामिनी तया लसितं लसन्तम् । कर्तरि क्तः । 'गतिबुद्धि—' इत्यादिसूत्रे चकाराद्वर्तमानार्थत्वात् । अतसी नाम क्षुमापरपर्यायो वृक्षविशेषः । 'अतसी स्यादुमा क्षुमा' इत्यमरः । तस्या गुच्छस्य पुष्पस्तबकस्य समाना छाया कान्तिर्यस्य तादृशः कायो देहो यस्य तमित्युपमा । 'छाया त्वनातपे कान्तौ' इति वैजयन्ती । 'समानस्य च्छन्दसि—' इत्यादिसूत्रे समानस्येति योगविभागात्समासः । छायादिषु समानशब्दस्य सभावः । मुनयो मननशीलास्त एव जनास्तेषां मनांस्येव चातकाः पक्षिविशेषास्तेषां शरणे रक्षणे साधु शरण्यम् । 'सर्वसहापतितमम्बु न चातकानाम्' इत्यादिना तेषां तदेकचरणत्वादिति भावः । 'तत्र साधुः' इति यत्प्रत्ययः । अपां समूह आपम् । 'तस्य समूहः' इत्यण् । कारुण्यं दयैवापं यस्य तम् । अथवा कारुण्यमेवापो यस्य तं कारुण्यापम् ।

१. 'कृतनानाविध' इति पाठः.

'ऋक्पूः–' इत्यादिना समासान्तः । विकुण्ठ एव वैकुण्ठो विष्णुः । स्वार्थेऽण्प्रत्ययः । स इत्याख्या यस्य तं कालमेघं नीलाम्बुदं त्रिदशपरिषद्ब्रह्मेन्द्रादिदेवसमाजो ददर्श । त्रिदशेत्यत्र तिस्रो दशा अवस्था बाल्ययौवनकौमाराणि जन्मसत्तावृद्धयो येषां ते । यद्वा त्रिदश परिमाणमेषामिति 'बहुव्रीहौ संख्येये डच्' । अत्रोपमारूपकयोरनुप्रासस्य च परस्परनैरपेक्ष्यात्संसृष्टिः । एतदादिश्लोकत्रयं मन्दाक्रान्तावृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तो गुरू चेत्' इति लक्षणात् ॥

**क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः**
**कालोन्मीलत्कुवलयदलैर्द्वैतमापादयन्तम् ।**
**आतन्वानं भुजगशयने कामपि क्षौमगौरे**
**निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥ १४ ॥**

**क्षीरेति** । पुनर्देहभासां निजशरीरकान्तीनां प्ररोहैरङ्कुरैः क्षीराम्भोधेः क्षीरसमुद्रस्य । 'रूढिर्योगमपहरति' इति न्यायेन योगाद्रूढेर्बलीयस्त्वादिति भावः । जठरमभितः । मध्यप्रदेशस्य समन्तादित्यर्थः । 'सलिलमभितः' इत्यपि पाठः । 'अभितः परितः–' इत्यादिना द्वितीया । काले चन्द्रोदयकाल उन्मीलन्ति विकसन्ति यानि कुवलयदलानि नीलोत्पलपत्राणि तैरद्वैतमभेदम् । तत्सादृश्यमित्यर्थः । आपादयन्तं संपादयन्तम् । कालग्रहणं दलानामम्लानत्वद्योतनार्थम् । निजदेहकान्तिच्छटाभिः क्षीरार्णवस्य नीलवर्णतां जनयन्तमित्यर्थः । एतेन श्रीमहाविष्णुदेहस्येन्द्रनीलसादृश्यं सूच्यते । तदुक्तम्—'क्षीरमध्ये क्षिपेन्नीलं क्षीरं चेन्नीलतां व्रजेत् । स इन्द्रनीलो विज्ञेयः सर्वसौख्यकरः शुभः ॥' इति रत्नशास्त्रवचनात् । अतएव क्षीरस्य स्वधवलिमपरित्यागेनान्यनीलिमस्वीकरणोक्तेस्तद्गुणालंकारः । 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात् । तथा क्षौमवद्दुकूलवद्गौरे सित इत्युपमा । 'गौरोऽरुणे सिते पीते' इति विश्वामरौ । भुजगशयने शेषपर्यङ्के निखिलजगतीनां सकललोकानां रक्षणे पालने जागरूकां जाग्रतीम् । सावधानामित्यर्थः । 'जागर्तेरूकः' इत्यूकप्रत्ययः । अतएव कामप्यनिर्वाच्याम् । लोकविलक्षणत्वादिति भावः । निद्रामुद्रां योगनिद्रावस्थामातन्वानमनुकुर्वाणम् । तनोतेः शानच् ॥

अथ नृसिंहावतारं वर्णयति—

**प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भं**
**स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।**
**बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे**
**दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥**

**प्रह्लादस्येति** । अमितमपारं प्रह्लादस्य हिरण्यकशिपुतनयस्य निजभक्ताग्रेसरस्य व्यसनं समुद्रपातनसर्पदंशनादि तत्पितृकृतविपदम् । 'व्यसनं विपदि भ्रंशे' इत्यमरः । तथा दैत्यवर्गस्य हिरण्यकशिपुमुखासुरनिकरस्य दम्भं मायाडम्बरं स्तम्भमयोमयस्तम्भं च रिपोर्वक्षःस्थलमप्युरःस्थलमपि । अपिशब्दः समुच्चये । यौगपद्येनैकवार-

१. 'क्षीराम्बोधेः' इति पाठः

मेव । नतु कालक्रमेणेत्यर्थः । भेत्तुं विदारयितुं पुरुषवपुषा नरशरीरेण मिश्रिते मिलिते अतएव विश्वदृष्टेऽत्याश्चर्यतया विश्वजनालोकिते दंष्ट्राणां दन्तविशेषाणां रोचिर्भिः कान्तिभिर्विशदानि शुभ्राणि भुवनानि कुक्षिस्थलोका यस्य तस्मिन्सिंहवेषे सिंहाकारे रंहसा वेगेन बद्धश्रद्धं विहितादरम् । नरसिंहरूपेणावतीर्णमित्यर्थः । ददर्शेति पूर्वेण संबन्धः । उक्तं च श्रीभागवते—'भक्तप्रतिज्ञापरिपालनाय सर्वात्मताव्याप्तिविवर्तनाय । दैत्येन्द्रवक्षोदलनाय विष्णुः स्तम्भान्नृसिंहाकृतिराविरासीत् ॥' अत्र क्रमिकस्य स्तम्भादिविदारणस्य यौगपद्यासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेदः ॥

नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-
नाभीपुटाय पुरुषाय नमः परस्मै ॥ १६ ॥

**नारायणायेति** । नारायणाय परमात्मने । तदुक्तम्—'नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवः' इति । यद्वा नरस्य संबन्धीनि नाराणि तत्त्वानि तान्ययनं स्थानं यस्य नारायणः । तदुक्तम्—'नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः । तस्य तान्ययनं पूर्वं तेन नारायणः स्मृतः ॥' इति । अथवा नारा आपोऽयनं यस्य तथा । 'अतएवार्णवे तस्मिन्यत्तदस्यायनं गताः । नारास्ताः सृष्टिकरणास्तेन नारायणः स्मृतः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । तस्य तास्त्वयनं पूर्वं तेन नारायणः स्मृतः ॥' इत्यादिना । नारा इत्यत्राजादित्वात्सिद्धं, आर्षो वा ङीपभावः । तस्मै नारायणाय । नलिनायतलोचनाय पुण्डरीकविशालाक्षाय । नाम्ना नाममात्रेणावशेषितमवशेषवत्कृतं महद्भूयिष्ठं बलिवैभवं वैरोचनी संपद्येन तस्मै । वामनावतारे बलिं पादेनाक्रम्य पाताले निक्षिप्तवत इत्यर्थः । नाना बहुप्रकारं चराचरं स्थावरजङ्गमात्मकं जगत् । 'चराचरं स्याज्जगति' इति विश्वः । तस्य विधायको निर्माता ब्रह्मा तस्य जन्मदेशो जन्मस्थानं नाभीपुटं नाभिपद्मकोशं यस्य तस्मै परस्मै पुरुषाय परमपुरुषाय नमः । 'नमःस्वस्ति–' इत्यादिना चतुर्थी । तथाच श्रीभागवते—'नतोऽस्म्यहं त्वाखिलहेतुभूतं नारायणं पूरुषमाद्यमव्ययम् । यन्नाभिजातादरविन्दकोशाद्ब्रह्माविरासीद्यत एष लोकः ॥' इत्युक्तत्वात् । वसन्ततिलकावृत्तम् ॥

इति प्रणम्योत्थितानेतान्स्तुतिरवमुखरितहरिन्मुखान्हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनैर्मरीचिसंतानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

**इतीति** । इत्युक्तप्रकारेण प्रणम्य साष्टाङ्गप्रणामं कृत्वोत्थितानुत्थानं प्राप्तान्स्तुतिरवैस्तारतरस्तोत्रध्वनिभिर्मुखरितानि प्रतिध्वनिवशान्मुखरीकृतानि हरितां दिशां मुखानि प्रदेशा एव मुखानि वदनानि येषां तान्हरिहयप्रमुखानिन्द्रादीन् । 'जम्भभेदी हरिहयः' इत्यमरः । एतान्पूर्वोक्तानखिलानमरानशेषसुरानरुणारुणमरुणप्रकारम् । अत्यन्तलोहितमित्यर्थः । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । कर्मधारयवद्भावा-

१. 'अमरगणानरुणतामरस' इति पाठः. २. 'मरीचिवीचिर्सचारैः' इति पाठः.

त्सुपो लुक्। तादृग्यत्तामरसं पद्मं तस्य विलासचोरैः। तत्तुल्यैरित्यर्थः। महाभाग्यलक्षणसंपन्नस्यास्य रक्तान्तनयनत्वादिति भावः। तदुक्तं सामुद्रिकशास्त्रे—'पाणिपादतले रक्ते नेत्रान्तौ च नखास्तथा। तालुजिह्वाधरोष्ठं च सप्तरक्तः सुखी भवेत्॥' इति। लोचनमरीचिसंतानैर्दृष्टिप्रभापरम्पराभिरानन्दयन्संतोषयन्। अरविन्दलोचनो विष्णुः। अरविन्दग्रहणं दृष्टीनां सुखनिमीलनत्वद्योतनार्थम्। स्फुटं व्यक्तमभाषतावोचत्॥

**अपि कुशलममर्त्याः स्वागतं सांप्रतं वः**
**शमितदनुजदम्भा किं नु दम्भोलिकेलिः।**
**अपि धिषणमनीषानिर्मिता नीतिमार्गा-**
**स्त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते॥ १७॥**

**अपीति।** हे अमर्त्या इन्द्रादिदेवाः, वो युष्माकं कुशलमपि क्षेमं किम्। 'कुशलं क्षेममस्त्रियाम्' इत्यमरः। अपिशब्दः प्रश्ने। तथा वः सांप्रतमिदानीं शोभनमागतं स्वागतं सुखागमनं किम्। कर्तरि क्तः। दम्भोलिकेलिर्वज्रायुधविलासः शमितो विदारितो दनुजानां दानवानां दम्भः कपटोपायो यया सा तथोक्ता किं नु। विध्वस्तदानवा किमित्यर्थः। तथा धिषणस्य बृहस्पतेर्मनीषया बुद्ध्या निर्मिता रचिताः। 'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः' इत्यमरः। नीतिमार्गा नीतिमार्गपद्धतयस्त्रिदशनगरस्यामरावत्या योगक्षेमकृत्ये संरक्षणकर्मणि क्षमन्तेऽपि समर्था भवन्ति किम्। पूर्ववदपिः प्रश्ने। 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः। अलब्धलाभो योगः, लब्धस्य परिपालनं क्षेममिति विवेकः। मालिनीवृत्तम्। 'कृत्यै' इत्यपि पाठः। निष्पादनायेत्यर्थः॥

**एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वतीमाकर्ण्य संपूर्णमनोरथानां सुमनसां संसत्पुंसे परस्मै विज्ञापयामास।**

**एवमिति।** एवमुक्तप्रकारेण कुशलानुयोगपुरःसरीं कुशलप्रश्नपूर्विकाम्। 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टच्प्रत्ययः। टित्वान्ङीप्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। अमृतासारेणामृतधारासंपातेन सरसां रुचिराम्। 'धारासंपात आसारः' इत्यमरः। भगवतः 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चापि षण्णां वर्गो भगो मतः॥' इत्युक्तलक्षणषड्गुणैश्वर्यसंपन्नस्य विष्णोः सरस्वतीं वाणीमाकर्ण्य श्रुत्वा संपूर्णमनोरथानां यदर्थं वयमागतास्तदेव भगवानपि पृष्टवान्। 'अपुष्पमालस्योः स्त्री देवबुधयोः पुमान्' (?) इति वैजयन्ती। 'सभासमितिसंसदः' इत्यमरः। परस्मै पुंसे परमपुरुषाय विष्णवे विज्ञापयामास विज्ञापितवती॥

किमिति विज्ञापयामासेत्यत आह—

**देव, कथमकुशलमाविर्भवेद्भवता कृतावलम्बानामस्माकम्।**

**देवेति।** हे देव द्योतमान स्वामिन्, भवता महात्मना कृतावलम्बानाम्। युष्मदधीनानामित्यर्थः। अस्माकमकुशलमशुभं कथमाविर्भवेदुत्पद्येत। नाविर्भवेदेवेत्यर्थः॥

तथापि किंचिद्विज्ञापनीयमस्तीत्याह—

**किंतु।**

**किंत्विति।** त्वां शरणं गत्वा पुरतोऽवस्थानमेवास्मत्कार्यसाधनम्। तथाप्यात्यैतिशयेन किंचिदुच्यत इति भावः॥

**अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या**
**लङ्केति नाम रजनीचरराजधानी।**
**माणिक्यमन्दिरभुवां महसां प्ररोहै-**
**स्तेजस्त्रयाय दिनदीपदशां दिशन्ती॥ १८॥**

**अस्तीति।** प्रशस्तविभवैः प्रख्यातवस्तुसंपद्भिरुपलक्षिता विबुधैरलङ्घ्या लङ्घितुमशक्या। देवानामप्यसाध्येत्यर्थः। माणिक्यमन्दिरभुवां मणिमयगृहप्रभवानाम्। 'तृतीयादिषु भाषितपुंस्कं-' इति पुंवद्भावादुवङादेशः। महसां तेजसाम्। 'तेजो धाम महो विभा' इत्यमरः। प्ररोहैरङ्कुरैस्तेजसां भानुशीतभानुकृशानुरूपाणां धाम्नां त्रयाय दिनेऽह्नि यो दीपस्तस्य दशामवस्थाम्। निस्तेजस्कतामित्यर्थः। 'दशा वर्तावस्थायाम्' इति विश्वः। दिशन्ती। इत्यसंबन्धेऽपि संबन्धरूपातिशयोक्तिः। लङ्केति नाम लङ्केति प्रसिद्धा। लङ्कानाम्ना प्रसिद्धेत्यर्थः। रजनीचराणां राक्षसानां राजधानी नगरी प्रधाननगर्यस्ति। राजानो धीयन्तेऽस्यामिति राजधानी। 'करणाधिकरणयोश्च' इत्यधिकरणार्थे ल्युट्। एतदादिश्लोकचतुष्टयं वसन्ततिलकावृत्तम्। प्रशस्तो विभवो येषां तैरिति विबुधविशेषणत्वे व्याख्यान्तरम्॥

**एनां पुराणनगरीं नगरीतिसालां**
**सालाभिरामभुजनिर्जितयक्षराजः।**
**हेलाभिभूतजगतां रजनीचराणां**
**राजा चिरादवति रावणनामधेयः॥ १९॥**

**एनामिति।** सालाः सर्जवृक्षास्तद्वदभिरामैरायतत्वादिगुणसंपन्नत्वात्तत्तुल्यैर्भुजैर्विंशतिसंख्याकनिजबाहुभिर्निर्जितो यक्षराजः कुबेरो येन स तथोक्तः। 'साले तु सर्जकार्श्याश्वकर्णिकाः' इत्यमरः। विश्रवसोऽपत्यं रावणः। 'तस्यापत्यम्' इत्यण्। 'विश्रवसो विश्रवणरवणौ' इति प्रकृते रवणादेशः। पौराणिकास्तु रावयतीति रावण इति व्युत्पादयन्ति। तदुक्तमुत्तररामायणे—'यस्माल्लोकत्रयं चैतद्रावितं भयमागतम्। तस्मात्त्वं रावणो नाम नाम्ना वीर भविष्यसि॥' इति। रौतेर्ण्यन्तात्कर्तरि ल्युट्। रावण इति नामधेयं यस्य स तथोक्तः। हेलया विलासेन, अवज्ञया वा अभिभूतानि तिरस्कृतानि जगन्ति यैस्तेषाम्। 'हेलावज्ञाविलासयोः' इति विश्वः। रजनीचराणां राजा चक्रवर्ती नगस्य पर्वतस्येव रीतिराकृतिर्यस्य स तथाभूतः सालः प्राकारो यस्यास्ताम्। गिरिदुर्गप्रायप्राकारावृतत्वादतिदुर्गमामित्यर्थः। 'प्राकारो वरणः सालः' इत्यमरः। एनां पूर्वोक्तां लङ्कानाम्ना प्रसिद्धां पुराणनगरीं पुरातनपुरीं चिराच्चिरकालमारभ्य। विभक्तिप्रतिरूपकमव्ययम्। अवति रक्षति। अनुप्रासः॥

अथ द्वाभ्यां तन्महिमानं वर्णयति—

यद्बाहुराहुरसनायितशस्त्रधारा
दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति[1] ।
यद्वैरिणां[2] रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

यदिति । यस्य रावणस्य बाहवो विंशतिसंख्याका भुजास्त एव राहवो विधुंतुदास्तेषां रसनायिता रसनावदाचरिताः शस्त्रधारा आयुधश्रेणयः । रसनायितेत्यत्र आचारक्यवन्तात्कर्तरि क्तः । दिक्पालानामिन्द्रादिदिगीश्वराणां कीर्तिमयो यशोरूपः । ताद्रूप्ये मयट् । यश्चन्द्रमाश्चन्द्रः । 'हिमांशुश्चन्द्रमाश्चन्द्रः' इत्यमरः । तं ग्रसन्ति गिलन्ति । रणकोविदोऽयं रावणो निजबाहुबलेन दिक्पालान्निर्जित्य तत्कीर्तिं लुम्पतीत्यर्थः । एकस्य चन्द्रस्यानेकराहुसंमर्दे किमवस्थान्तरं वक्तव्यमिति भावः । तथा यस्य वैरिणां शत्रूणां रणमुखे रणाग्रे । अमुमेनमिति हस्तनिर्देशः । अन्तकमन्तरेण यमं विना । 'अन्तरान्तरेण युक्ते' इति द्वितीया । कश्चित्कोऽपि देवः शरणप्रदायी रक्षणतत्परो नास्त्येव । अन्यव्यवच्छेदार्थमेवकारः । रणपरायणान्वैरिणो विजित्य यमक्षयं नयतीत्यर्थः । रसनायितेत्यत्रेवशब्दलोपाल्लुप्तोपमा । सा चोक्तरूपकेण संकीर्यते ॥

एतादृशसामर्थ्यं रावणस्य कुत आयातमित्यत आह—

अम्भोजसंभवममुं बहुभिस्तपोभि-
राराधयन्वरमवाप परैर्दुरापम् ।
तस्माद[3]शेषभुवनं निजशासनस्य
लक्षीकरोति रजनीचरचक्रवर्ती ॥ २१ ॥

अम्भोजेति । अपक्रान्तत्वादुत्तरत्र तच्छब्दस्य विद्यमानत्वाच्चात्र यच्छब्दोऽध्याहर्तव्यः । यो रजनीचरचक्रवर्ती राक्षससार्वभौमो रावणो बहुभिरनेकैस्तपोभिः पञ्चाग्निमध्यमेकपादावस्थानादिरूपोग्रतपश्चर्याभिः । अमुमिति पुरोवर्तिनिर्देशः । अम्भोजसंभवं ब्रह्माणमाराधयन्संभावयन्परैर्दुरापं दुर्लभम् ।अनन्यसाधारणमित्यर्थः। 'ईषद्दुःसुषु' । इत्यादिना खल्प्रत्ययः । वरं सुरासुरावध्यत्वरूपमवाप प्राप । पूर्वमिति शेषः । तस्मात्कारणादशेषभुवनम् । अशेषलोकानित्यर्थः । निजशासनस्य निजाज्ञाया लक्षीकरोति विषयीकरोति । चण्डशासनोऽयं निजशासनेनैवाशेषभुवनानि शास्तीत्यर्थः । अभूततद्भावे च्विः । 'अस्य च्वौ' इति दीर्घः ॥

ततः किमित्यत आह—

तेन वयं पराधीना इव भवामः ।

तेनेति । तेन रावणेन वयं पराधीनाः परतन्त्रास्तत्स्वामिका इव भवामः । इदानीमिति शेषः । वस्तुतस्तु भवत्परतन्त्रा एवेतीवशब्दार्थः । 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः ॥

---

१. 'ग्रसन्ते' इति पाठः. २. 'तद्वैरिणां' इति पाठः. ३. 'समस्त' इति पाठः.

पराधीनत्वमेव प्रतिपादयति—

**तथा हि। सोऽयं कदाचित्क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां संचरेत चेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान्सहस्रभानुरपि संकुचितभानुरेव तत्सानूनि नूनं संश्रयते।**

**तथाहीत्यादिना। सोऽयमिति।** सोऽयं रावणः कदाचित्कस्मिंश्चित्समये। अवरोधवध्व एव जनस्तेन सह सावरोधवधूजनः। अन्तःपुरस्त्रीजनसहचरः सन्नित्यर्थः। 'शुद्धान्तश्चावरोधश्च' इत्यमरः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। 'वोपसर्जनस्य' इति सहस्य सत्वम्। क्रीडाधराधरं क्रीडाशैलम्। दिवाविहारदेशमित्यर्थः। तदुक्तं भावप्रकाशे—'सरितः पुलिनं वेलाकान्ताराराममभूधराः। लतागृहाणि चित्राणि शय्या किसलयोचिता॥ दिवाविहारदेशाः स्युः' इति। आरुह्याधिष्ठाय। चरणाभ्यां यानं विहाय पादाभ्यां संचरेत चेद्विहरेत् यदि। आगश्चरणतलसंतापोत्पादकरूपोऽपराधः। 'आगोऽपराधो मन्तुश्च' इत्यमरः। आगमिष्यति समापतेत्। तथा सति दण्डनं कुर्यादिति भावः। इति। मत्वेति शेषः। 'इतिनैव गम्यमानार्थत्वादप्रयोगः प्रयोगे पौनरुक्त्यम्' इत्यालंकारिकाः। भयेनानाविष्कृतातपोऽप्रकटीकृतद्योतः। 'प्रकाशो द्योत आतपः' इत्यमरः। भगवान्पूज्यः। अथवा ऐश्वर्यादिषड्गुणसंपन्नः। मूर्तित्रयमयत्वादिति भावः। सहस्रं भानवो मरीचयो यस्य सहस्रभानुरपि सूर्यः संकुचितभानुरुपसंहृतमरीचिरेव सन्। 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इत्यमरः। तस्य क्रीडाधराधरस्य सानूनि प्रस्थान्। अधःप्रदेशानित्यर्थः। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। संश्रयते। साध्वसवशात्तत्र निलीय वसतीत्यर्थः। लोकत्रयप्रकाशकस्यापि भगवतः किरणमालिन ईदृग्व्यवस्थेति महत्कष्टमायातमिति भावः। नूनमिति निश्चये न तूत्प्रेक्षायाम्। अतएव सहस्रभानोः सानुसमाश्रयणासंबन्धेऽपि तत्संबन्धाभिधानादसंबन्धे संबन्धरूपातिशयोक्तिः। एवमुत्तरत्र गद्यत्रयेऽप्यतिशयोक्त्यनुप्रासावूह्यौ॥

एवं सूर्यावस्थामुक्त्वा संप्रति चन्द्रावस्थां निवेदयति—

**एष मृगाङ्कोऽपि मृगयायासपरिश्रान्तिविश्रान्त्यै ससंभ्रमं नमज्जनपरिवृते मज्जनगृहाभिमुखे दशमुखे तत्रत्यविचित्रतरशातकुम्भस्तम्भाग्रप्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनिजोपलमयकलशमुखाच्छाच्छामविच्छिन्नधारामम्बुधारां निजकराभिमर्शादापादयंस्तस्य प्रसादपिशुनानां शुनासीरचिरकाङ्क्षितानां विंशतिविधवीक्षणानां क्षणमात्रं पात्रं भवति।**

**एष इति।** एष मृगाङ्कश्चन्द्रोऽपि। सकललोकाह्लादस्योदयतया श्लाघ्योऽपीति भावः। मृगयाखेटः। 'आखेटो मृगया स्त्रियाम्' इत्यमरः। तत्र तया वा आयासः खेदस्तेन या परिश्रान्तिः खेदातिरेकानुभवः परिश्रमः। स्त्रियां क्तिन्। तस्या वि-

१. 'कदाचन' इति पाठः. २. 'अधिरुह्य' इति पाठः. ३. 'तत इतः संचरेत्' इति पाठः. ४. 'समाश्रयते' इति पाठः. ५ 'निर्जितशतमखे दशमुखे' इति पाठः. ६. 'अविच्छिन्नपातामम्बुधारां' इति पाठः. ७. 'विंशतिवीक्षणानां' इति पाठः.

श्रान्त्यै विश्रमार्थम्। तदपनोदनार्थमित्यर्थः। 'श्रमः खेदोऽध्वरत्यादेर्जातः स्वेदादिभूमिकृत्' इति लक्षणात्। ससंभ्रमं ससाध्वसं सत्वरं यथा भवति तथा नमद्भिर्नमस्कुर्वाणैर्जनैः परिवृते परिवेष्टिते दशमुखे रावणे मज्जनगृहाभिमुखे स्नानगृहमण्डपोन्मुखे सति। तत्र मज्जनगृहे भवास्तत्रत्याः। अव्ययात्त्यप्। विचित्रतरा अत्यन्ताश्चर्यकराश्च ये शातकुम्भस्तम्भा हिरण्मयगृहाधारदारुविशेषाः। 'हिरण्यं हेम हाटकम्। तपनीयं शातकुम्भम्' इत्यमरः। तेषामग्रेषूपरिप्रदेशेषु प्रत्यग्रं नूतनं यथा तथा। अत्र प्रत्यग्रग्रहणमविलम्बेन निष्पन्दद्योतनार्थम्। प्रत्युप्तः कीलितो यः स्फटिकशिलाशालभञ्जिकापुञ्जश्चन्द्रकान्तमणिप्रतिमाश्रेणिस्तस्य करतलेषु, कलिताः संघटिता निजोपलमयाश्चन्द्रमणिविकाराश्च ये कलशाः कुम्भास्तेषां मुखात्। मुखाकारविवरेभ्य इत्यर्थः। 'उपलः प्रस्तरे मणौ' इति विश्वः। विकारार्थे मयट्। अच्छाच्छामच्छप्रकाराम्। अतिनिर्मलामित्यर्थः। 'प्रकारे गुणवचनस्य' इति द्विर्भावः। कर्मधारयवद्भावात्सुपो लुक्। अविच्छिन्नधारामखण्डितसंपातम्। 'धारासंपात आसारः' इत्यमरः। अम्बुधारां सलिलधारां निजकराभिमर्शोत्थकिरणसंपर्कोदापादयन्नुत्पादयन्। तस्य रावणस्य प्रसादपिशुनानामनुग्रहसूचकानाम्। 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः' इत्यमरः। 'शुः पूजायाम्' इति गणव्याख्यानेऽतएव शुः पूजायामिति श्वशुर इति। शोभना नासीरा अग्रेसरा यस्य तेन शुनासीरेण पुरंदरेण चिरकाङ्क्षितानां चिरकालमारभ्याभिलषितानाम्। ननु प्राप्तानामित्यर्थः। एतेनात्यन्तदुर्लभत्वं सूच्यते। 'वृद्धश्रवाः शुनासीरः' इत्यमरः। विंशतिविधवीक्षणानां विंशतिसंख्याककरुणाकटाक्षवीक्षणानाम्। ननु कियतामेवेति भावः। तथापि क्षणमात्रमल्पकालमेव पात्रं योग्यो भवति। 'मात्रं कार्त्स्न्येऽवधारणे'। 'योग्यभाजनयोः पात्रम्' इति चामरः। शुनासीरचिरकाङ्क्षितानामित्यनेन पाकशासनस्य कारागृहप्रवेशेन दुःखं ब्रह्मवाक्येन मोचनं च सूचितं भवति॥

अथ मारुतावस्थां विज्ञापयति—

**तेन पुलस्त्यनन्दनेन संक्रन्दननन्दनात्स्वमन्दिरोद्यानमानीतस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य बन्दीकृतसुरसुन्दरीनयनेन्दीवरद्वन्द्वाच्च करारविन्दकलितकनककलशाच्च मन्दोष्णं स्यन्दमानैरम्बुभिर्जम्बालितालवालस्य पचेलिमानामपि कुसुमानां पतनभयमाशङ्कमानाः पवमानाः परिस्पन्दितुमपि प्रभवो न भवन्ति।**

तेनेति। पुलस्त्यनन्दनेन विश्रवसः पुत्रेण तेन रावणेन संक्रन्दननन्दनादिन्द्रोद्यानात्। उद्धृत्येति शेषः। स्वमन्दिरोद्यानं निजगृहाराममानीतस्य प्रापितस्य। निजाशोकवनिकायां प्रत्यारोपितस्येत्यर्थः। तथा बन्दीकृता उपग्रहीकृताः। कारागृहनिक्षिप्ता इत्यर्थः। 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः। तासां सुरसुन्दरीणां देवतास्त्रीणां नयनेन्दीवरद्वन्द्वान्नेत्रोत्पलयुगुलाच्च। करारविन्देषु तासामेव हस्तपद्मेषु कलितो

१ 'नन्दनवनात्' इति पाठः. २ 'द्वन्द्वात्तत्करारविन्दकनक' इति पाठः. ३ 'स्पन्दमानैः' इति पाठः. ४ 'संततं परिस्पन्दितुं' इति पाठः.

यः कनककलशो हिरण्मयवारिकुम्भस्तस्माच्च । उभयत्रापि जातावेकवचनम् । नयनारविन्दद्वन्द्वेभ्यः कनककलशेभ्यश्चेत्यर्थः । तासामारामतरुमूलसेकव्यापारे नियोजितत्वादिति भावः । मन्दोष्णमीषदुष्णं यथा तथा स्यन्दमानैः प्रस्रवद्भिरम्बुभिः । बाष्पोदकैः कलशोदकैश्चेत्यर्थः । कलशोदकानां शीतलत्वेऽपि शोकानलसंतप्तबाष्पोदकमिश्रणान्मन्दोष्णमित्युक्तमित्यवगन्तव्यम् । जम्बालवत्कृतानि जम्बालितानि । पङ्कीकृतानीत्यर्थः । 'तत्करोति–' इति ण्यन्तात्कर्मणि क्तः । तान्यालवालानि जलाधारमूलवलयानि यस्य तस्य । 'निषद्वरस्तु जम्बालः' इति, 'स्यादालवालमावालम्' इति चामरः । मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य पारिजातादिसुरतरुनिकरस्य संबन्धिनाम् । स्वयमेव पच्यन्त इति पचेलिमानि । पतनोन्मुखानीत्यर्थः । कर्मकर्तरि केलिमर्वाच्यः । तेषामपि कुसुमानां पतनभयमाशङ्कमाना अधःपातमुत्प्रेक्षमाणाः । तथा सति कुसुमानां पङ्कलेपमहापराधेन निगृह्णीयादिति भावः । पवमाना मरुतः परिस्पन्दितुं चलितुमपि । किमुत यथेच्छं विहर्तुमिति भावः । प्रभवः समर्था न भवन्ति ॥

अथाग्न्यवस्थां निवेदयति—

**एतेऽपि पावका रूढिशङ्कावहां[१] हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरोगाः[२] पौरोगवधुरं[३] दधते[४] ।**

**एत इति ।** गार्हपत्यः पुरोगोऽग्रेसरो येषां ते तथोक्ता एते परिदृश्यमानाः पावका गार्हपत्याहवनीयदक्षिणाग्न्यन्वाहार्यावसथ्यादिरूपा अग्नयोऽपि । रूढिरश्वकर्णादिवदवयवार्थाभावेन समुदायप्रसिद्धिः । तदुक्तमाचार्यैः—'असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते । तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥' इति तच्छङ्कावहां तद्गोचरबुद्धिजननीं हुतवहाख्यां हुतवहाभिधानं वहन्तः सन्तः । पूर्वं हुतं यजमानैर्हूयमानं हविर्वहन्तीति हुतवहा इति योगसिद्धेर्व्याख्यातामेवेदानीं लोकविद्विष्टकर्मणा रावणेनाध्वराणां विध्वंसितत्वाद्धविषामलाभेन तादृक्शङ्कावहां दधाना इत्यर्थः । तद्गृहे रावणमन्दिरे पौरोगवधुरं महानसाध्यक्षाधिकारं दधते धारयन्ति । 'समानौ रसवत्यां तु पाकस्थानमहानसे । पौरोगवस्तदध्यक्षः' इत्यमरः ॥

सर्वज्ञस्य भगवतः पुरस्तात्किमवस्थान्तरं विज्ञापनीयमिति गमयन्ति—

**किं बहुना ।**

**किं बहुनेत्यादिना ।** बहुभिः कालयापनकरैर्वाक्यैरलमित्यर्थः ॥

किंतु वक्तव्यांशमेव विज्ञापयाम इत्यत आह—

**स एष मानुषादवमानमागमिष्यतीत्यमन्वानस्तदितरैरवध्यत्वं[५] चतुराननवराल्लब्ध्वा समुद्धतः संप्रति संप्रहारसमाक्रान्तदिगन्तकुन्तावलदन्तकुन्तव्रणकिणस्यूतवक्षःस्थलः स्थलकमलिनीं वन-**

१ 'शङ्कां' इति पाठः. २ 'पुरःसराः' इति पाठः. ३ 'पौरोगवीं धुरं' इति पाठः. ४ 'दधति' इति पाठः. ५ 'मानुषादवमान॰' इति पाठः.

**वारइव रावणस्त्रिलोकीमभिभवन्भवदीयानित्यस्मान्न जातु किंचिदपि जानातीति ।**

**स इति** । स एष रावणः मानुषात् । मनुष्येभ्य इत्यर्थः । जातावेकवचनम् । अवमाननं अवज्ञा । परिभव इति यावत् । 'रीढावमाननावज्ञावहेलनम्' इत्यमरः । आगमिष्यति समापतेदित्येवममन्वानोऽनवबुध्यमानः । तेषां तृणप्रायत्वादिति भावः । तदितरैः सुरासुरादिभिरवध्यत्वमहिंस्यत्वं चतुराननवराल्लब्ध्वा प्राप्य । अतएव समुद्धतो दर्पोद्रिक्तः सन् संप्रतीदानीम् । संप्रह्रियतेऽनेनेति संप्रहारो युद्धम् । 'संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः' इति संग्रामपर्यायेष्वमरः । तत्र समाक्रान्ताः समवरुद्धा ये दिगन्तदन्तावला ऐरावतादिदिग्गजास्तेषां दन्ता रदना एव कुन्ताः प्रासास्तैर्यानि व्रणानि क्षतानि तैर्जाता ये किणाः शुष्कग्रन्थयः । 'तृतीया तत्कृत—' इत्यादिना समासः । तैः स्थपुटितं निम्नोन्नतं वक्षःस्थलमुरःस्थलं यस्य तथोक्तः सन् । अतएव वनवारणो वनगजः । वनग्रहणं निर्जलत्वद्योतनार्थम् । स्थलकमलिनीं स्थलप्ररूढपद्मिनीमिव । त्रयाणां लोकानां समाहारस्त्रिलोकी । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वम् । 'द्विगोः' इति ङीप् । 'द्विगुः—' इत्येकवचनम् । तां जगत्त्रयीमभिभवन्नाक्रमन् । पीडयन्नित्यर्थः । अस्मान्भवदीयांस्तावकीनान् । निग्रहानुग्रहसमर्थस्य भवतः संबन्धिन इत्यर्थः । जातु कदाचिदपि किंचिदीषदपि न जानाति । सकललोककण्टकेन दर्पान्धेन रावणेन त्वन्महिमैव न ज्ञायते । अस्माकं तु का कथेति भावः । इति विज्ञापयामासेति पूर्वेण संबन्धः ॥

ततः किमत आह—

**अथ भगवानाकर्ण्य गीर्वाणगणवाणीम् ।**

**अथेति** । अथ विज्ञापनानन्तरं भगवान्विष्णुः । भगवच्छब्दो व्याख्यातः । गीर्वाणगणस्येन्द्रादिसुरसङ्घस्य वाणीं वाचमाकर्ण्य श्रुत्वा ॥

किमकरोदित्यत आह—

**इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः ।**
**वाचमूचे सुधाधारां मधुरां मधुसूदनः ॥ २२ ॥**

**इन्द्रनीलेति** । मधुं सूदयतीति मधुसूदनो विष्णुः । कर्तरि ल्युट् । अत्र मधुग्रहणं मध्वादिमहादैत्यसंहर्तुरस्य कियान्रावणवध इति द्योतयितुमित्यवगन्तव्यम् । इन्द्रनीलाचल इन्द्रनीलपर्वतः । इन्द्रनीललक्षणमुक्तम् । तत्रोदञ्चत्युल्लसन्ती या चन्द्रिका कौमुदी तद्वद्धवलं शुभ्रं स्मितं यस्य । स्मितपूर्वाभिभाषित्वात्कृतमन्दहासः सन् । यद्वा दुर्मदान्धोऽयं राक्षसभावाद्दुष्टनिग्रहशिष्टपरिपालनदक्षं मां ज्ञातुं न शक्नोतीति सावहेलनमन्दहासः सन्नित्यर्थः । अत्र मधुसूदनस्येन्द्रनीलसदृशाङ्गत्वाद्धासस्य च शुभ्रत्वेन कविसमयसिद्धत्वादियमुपमा । सुधाधारामसृतस्यन्दिनीमत एव मधुरां माधुर्यगुणयुक्ताम् । 'मधुरं रसवद्वाचि स्वादुन्यपि मधुस्तति' । येन माद्यन्ति विबुधा

मधुनेव मधुव्रताः ॥' इति वचनात् । वाचमूच उक्तवान् । श्लोकाख्यमेतदानुष्टुभं वृत्तम् । लक्षणं तूक्तम् । इदमुत्तरत्रापि द्रष्टव्यम् ॥

वाचमेव विवृणोति—

**भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधुनैव विधातुं शक्यम् ।**

**भवतामिति** । हे देवा इत्यध्याहर्तव्यम् । भवतां युष्माकमपराधविधायिन उक्तरीत्या अपकर्तुस्तस्य पूर्वोक्तस्य यातुधानस्य राक्षसस्य रावणस्य । 'यातुधानः पुण्यजनः' इति राक्षसपर्यायेष्वमरः १ निधनं विनाशमधुनैवेदानीमेव विधातुं कर्तुं शक्यं युक्तम् ॥

तर्हीदानीमेव क्रियतामित्याशङ्क्य तत्रोपपत्तिमाह—

**किंतु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्रामंमित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात् ।**

**किंतु सरसिजेति** । किंतु सरसिजासनस्य ब्रह्मणः शासनं सुरासुरावध्यत्वरूपाज्ञावचनमपि । 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु' इति विश्वः । अमोघीकुर्वन् । ब्रह्मवरस्यान्यथाकरणानौचित्यादिति भावः । अभूततद्भावे च्विः । 'अस्य च्वौ' इति दीर्घः । तथोर्वीतले भूमण्डले । पुत्रानात्मन इच्छतीति पुत्रीयन् । 'सुप आत्मनः क्यच्' इति क्यच् । 'सुपो धातु—' इत्यादिना सुब्लुकि 'क्यचि च' इति दीर्घः । तस्य । पुत्रार्थिन इत्यर्थः । सुत्राममित्रस्येन्द्रसखस्य । दैत्यविनाशनाखण्डितवैभवाभ्यां तत्सुहृद इत्यर्थः । 'मित्रं सुहृदि मित्रोऽर्के' इति वैजयन्ती । दशरथस्य राज्ञो मनोरथं वाञ्छितमपि पूरयितुं सफलीकर्तुमादृतमानुषवेषो गृहीतमानवाकारः सन् । अहमेव तं रावणं हनिष्यामि विनाशयिष्यामि । मदन्यस्य यस्यकस्यचिद्धननेऽसामर्थ्यादिति भावः । इत्येवंप्रकारेण व्याहृत्योक्त्वान्तरधाददृश्योऽभूत् । 'व्याहार उक्तिर्लपितम्' इत्यमरः ॥

**ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशादेशात्प्रशमितचतुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागराच्चिरगात् ।**

**तत इति** । ततोऽन्तर्धानानन्तरं सा पूर्वोक्ता । न निमिषन्तीत्यनिमिषाः । पचाद्यच् । 'अनिमेषाणाम्' इति वा पाठे न विद्यन्ते निमेषाः पक्ष्मपाता येषां तेषाम् । परिषद्देवतासङ्घः । हृषीकाणां विषयेन्द्रियाणामीशो हृषीकेशः इन्द्रियस्वामी तस्य भगवत आदेशादहमेव तं हनिष्यामीत्याज्ञावचनादेवोन्मिषितहर्षा समुत्पन्नानन्दा सती चतुर्दशभुवनानि भूरादिचतुर्दशसंख्याकलोकान्निर्दशाननान्यरावणानि । तेष्वपि संचा-

---

१ 'विधायिनो यातुधानस्य तस्य' इति पाठः. २ 'वधिष्यामि' इति पाठः. ३ 'उक्त्वा' इति पाठः. ४ 'हर्षाणाम्' इति पाठः.

रसंभवादिति भावः। अतएव प्रशमिता प्रशान्ता दुर्दशा दुरवस्था येषां तानि तथोक्तानि बुद्ध्वा। सत्यप्रतिज्ञस्य भगवतोऽत्यन्तविश्वसनीयवचनत्वात्तथावगम्येत्यर्थः। दुग्धसागरात्क्षीराम्भोधेः सकाशान्निरगान्निर्जगाम॥

**ततस्तानमरान्प्राह स्म पितामहः।**

**तत इति।** ततो निर्गमनानन्तरं पितामहो ब्रह्मा तानमरानिन्द्रादीन्प्राह स्म ब्रूते स्म। उवाचेत्यर्थः। 'लट् स्मे' इति भूतार्थे लट्। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति णलादेशो ब्रुव आहादेशश्च॥

तदेव विवृणोति—

**भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः[1] प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति।**

**भवन्त इति।** हे देवा इत्यध्याहारः। भवन्तो यूयं तावदिदानीमवतरिष्यतो दाशरथिरूपेणोत्पत्स्यतो लक्ष्मीसहायस्य श्रीमहाविष्णोः साहाय्यार्थं सहायकर्म कर्तुम्। 'गुणवचन—' इत्यादिना ष्यञ्। अर्थेन सह नित्यसमासः असर्वलिङ्गता च वक्तव्या। अप्सरसः स्वर्वेश्याः। 'स्त्रियां बहुष्वप्सरसः स्वर्वेश्याः' इत्यमरः। तत्प्रभृतिषु तदाद्यासु युवतिषु गन्धर्वयक्षादिस्त्रीषु। 'यूनस्तिः' इति तिप्रत्ययः। वानराः मर्कटाः, अच्छभल्ला भल्लूकाः, गोपुच्छा गोलाङ्गूलाः, नीलमुखा दीर्घपुच्छाश्च मर्कटभेदास्तद्वेषभृतस्तद्भूमिकाधारिणः। 'मर्कटो वानरः कीशो वनौका अथ भल्लुके। ऋक्षाच्छभल्लभल्लूका' इति चामरः। प्रथितप्रभावा जगद्विख्यातप्रतापाः। प्रजायन्त इति प्रजाः संततीः। पुत्रानित्यर्थः। 'प्रजा स्यात्संततौ जने' इत्यमरः। 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः। प्रजनयेयुरुत्पादयेयुरिति। 'शेषे प्रथमः' इति प्रथमपुरुषः। भवच्छब्दस्य युष्मदस्मद्व्यतिरिक्तत्वेन शेषत्वादिति॥

**पुरैव[2] किल मम जृम्भारम्भे संभूतवाञ्जाम्बवानिति[3]।**

**पुरेति।** किंच पुरा पूर्वकाले। सृष्ट्यादावित्यर्थः। मम जृम्भारम्भे जृम्भणसमये। 'जृम्भः स्यात्त्रिषु जृम्भणम्' इत्यमरः। जाम्बवान्नाम भल्लूकाधिपतिः। संभूतवान्किल उत्पन्नः किल। सोऽयमिदानीं वर्तते। सहायकर्म करिष्यतीति भावः। इत्येवमाह स्मेति पूर्वेण संबन्धः॥

**ततस्ते गीर्वाणास्तथाकुर्वन्।**

**तत इति।** ततो ब्रह्मनिदेशवचनानन्तरं ते पूर्वोक्ता गीर्वाणा इन्द्रादिदेवास्तथाकुर्वन्। अप्सरःप्रभृतिषु युवतिषु पुत्राञ्जनयामासुरित्यर्थः॥

**अथ वैतानाद्वैश्वानरान्नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय पुत्रीयते दशरथाय[4] पायसममृतप्रायं प्रायच्छत्।**

---

१ 'वानरगोपुच्छभल्लूकवेषभृतः', 'वानरभल्लगोपुच्छवेषभृतः' इति पाठौ. २ 'पुरा खलु' इति पाठः. ३ 'संभूतः' इति पाठः. ४ 'दशरथाय पुत्रीयते' इति पाठः.

**अथेति ।** अथानन्तरं वितानं क्रतुः । पुत्रेष्टिरिति यावत् । तत्प्रयोजनमस्य वैतानिकः । 'क्रतुविस्तारयोरस्त्री वितानम्' इत्यमरः । 'प्रयोजनम्' इति ठक् । तस्माद्वैश्वानरादग्नेः सकाशात् । 'अग्निर्वैश्वानरो वह्निः' इत्यमरः । सहेमपात्रः । हिरण्मयपात्रपाणिरित्यर्थः । कश्चिददृष्टपूर्वः प्रजापतेः संबन्धी प्राजापत्यः । प्रजापतिना प्रेषित इति यावत् । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्ययः । परः पुरुषविशेषः । उत्थाय निर्गत्य । पुत्रीयते पुत्रानात्मन इच्छते । 'सुप आत्मनः क्यच्' । दशरथाय राज्ञे यजमानायामृतप्रायममृतकल्पं पयसा संस्कृतं पायसं परमान्नम् । 'परमान्नं तु पायसम्' इत्यमरः । 'संस्कृतं भक्षाः' इत्यण् । प्रायच्छत्पुत्रीयमेतदिति दत्तवान् । 'पाघ्राध्मा–' इत्यादिना दाणो यच्छादेशः ॥

पायसं तत्किमकरोदित्यत आह—

**ततः ।**

**कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धं**
**प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।**
**एते देव्यौ तरलमनसः पत्युरालोच्य भावं**
**स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ॥ २३ ॥**

**तत इति । कौसल्याया इति ।** ततः पायसप्रदानानन्तरं भूपतिर्दशरथः कोसलस्य राज्ञोऽपत्यं स्त्री कौसल्या । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ्प्रत्ययः । तस्यै कौसल्यायै अग्रमहिष्यै । 'यङश्चाप्' इति चाप् । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी । प्रथममाद्यं पायसस्यार्धं समविभागम् । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । अदिशद्दत्तवान् । केकयेन्द्रस्य केकयाधीश्वरस्य पुत्र्यै कैकेय्यै प्रणयेन प्रेम्णा मधुरं माधुर्यगुणयुक्तम् । तस्या अत्यन्तप्रेमास्पदत्वादिति भावः । अर्धमवशिष्टभागं प्रादाद्दत्तवान् । ततः किं तत्राह—एते देव्यौ कौसल्याकैकेय्यौ तरलमनसः सुमित्रायै पायसांशाप्रदानात्पर्याकुलचित्तस्य पत्युर्भर्तुर्दशरथस्य । 'पतिः समास एव' इति घिसंज्ञाऽभावः । 'ख्यत्यात्परस्य' इति ङस अकारस्योकारः । भावं कथं वा सुमित्रा लब्धपायसभागा भविष्यतीत्यभिप्रायमालोच्य । परबुद्धेरप्रत्यक्षत्वान्मुखचिह्नैरनुमीयेत्यर्थः । स्वयं स्वे । उभे इत्यर्थः । स्वार्धांशाभ्यां स्वयोः स्वकीययो राज्ञा दत्तयोरर्धयोरर्धांशाभ्यामर्धभागाभ्यां सुमित्रां पूर्णकामां सफलमनोरथामकुरुतां कृतवत्यौ । स्वार्धभागौ प्रत्येकं साम्येन द्वेधा विभज्यैकमेकं भागमात्मार्थे निक्षिप्यावशिष्टभागौ सुमित्रायै ददतुरित्यर्थः । अयं च विभागो न रामायणसंमतः । तत्र चरोरर्धं कौसल्यायै, अवशिष्टार्धार्धं सुमित्रायै, शिष्टार्धं कैकेय्यै, शिष्टं पुनः सुमित्रायै इत्यभिधानात् । किंतु पुराणान्तरसंवादो द्रष्टव्यः । उक्तं च नरसिंहसंहितायाम्—'ते पिण्डप्राशने काले सुमित्रायै महीपतिः । पिण्डाभ्यामल्पमल्पं तु स्वसपत्न्यै प्रयच्छतः ॥' इति । उक्तं च कालिदासेन—'अर्चिता तेन कौसल्या प्रिया केकयवंशजा । अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ते बहुज्ञस्य चित्तज्ञे पत्न्यौ

पत्युर्महीक्षितः। चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥' इति। एवमन्यत्रापि सतिविरोधे पुराणान्तरात्समाधातव्यम्। मन्दाक्रान्तावृत्तम् ॥

अनन्तरकृत्यमाह—

**अवभृथेऽवसिते सरयूतटादथ यथायथमुच्चलिते जने।**
**दशरथः परिपूर्णमनोरथः पुरमगात्पुरुहूतपुरोपमाम् ॥ २४ ॥**

**अवभृथ इति।** अवभृथे दीक्षान्तस्नानादिकृत्ये। 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः। अवसिते परिसमापिते सति। 'षोऽन्तकर्मणि' इति धातोः कर्मकर्तरि क्तः। अथानन्तरं जने यज्ञार्थमागते जनसमाजे सरयूतटाद्यथायथं यथास्वम्। स्वकीयदेशमनतिक्रम्येत्यर्थः। 'यथास्वं तु यथायथम्' इत्यव्ययेष्वमरः। 'यथास्वे यथायथम्' इति निपातनाद्विर्भावो नपुंसकत्वं च। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। उच्चलिते प्रस्थिते सति। स्वस्वनियतदेशान्प्रति गतवति सतीत्यर्थः। तथा दशरथो राजा परिपूर्णमनोरथः पुत्रप्राप्त्युपायलाभात्सफलाभिलाषः सन्। उपमीयत इत्युपमा। 'आतश्चोपसर्गे' इत्यङ्। पुरुहूतपुरमुपमोपमानं यस्यास्तां पुरुहूतपुरोपमामिन्द्रनगरीतुल्यां पुरमयोध्यामगात्प्रविवेश। पुरु भूयिष्ठं हूयते यज्ञेष्विति पुरुहूत इति विग्रहः। द्रुतविलम्बितवृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥

अथ तासां गर्भोत्पत्तिं प्रस्तौति—

**अपाटवात्केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य।**
**शनैः शनैः प्रोज्झितभूषणानि चकाशिरे दौहृदलक्षणानि ॥२५॥**

**अपाटवादिति।** मनोज्ञा गर्भाविर्भावात्पूर्वापेक्षयाप्यत्यन्तमनोहरा कान्तिर्लावण्यं यस्य तस्य। कृताभिषेका राजपत्न्यो महिष्यस्ता एव जनस्तस्य। कौसल्याकैकेयीसुमित्राणामित्यर्थः। 'कृताभिषेका महिषी' इत्यमरः। अल्पान्यङ्गान्यङ्गकानि तेषां हस्ताद्यवयवानाम्। अल्पार्थे कः। अल्पत्वमत्र कार्श्यं गर्भिणीनारीणां तत्संभवादिति भावः। केवलमत्यन्तमपाटवात्पटुत्वाभावाद्धेतोः प्रोज्झितानि परित्यक्तानि भूषणानि कङ्कणाद्याभरणानि येषु तानि। तेषां स्वस्थानस्थित्यसंभवाद्धारायमाणत्वाच्चेति भावः। दौहृदलक्षणानि शरीरसादमुखपाण्डिमकृष्णचूचुकत्वादीनि गर्भचिह्नानि शनैः शनैः। दिनक्रमेणेत्यर्थः। वीप्सायां द्विर्भावः। चकाशिरे। सुव्यक्तानि बभूवुरित्यर्थः। स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी। यथाह बाहटः—'मातृजन्यस्य हृदयं मातुश्च हृदयेन यत्। संबद्धं तेन गर्भिण्या नेष्टं श्रद्धावमाननम् ॥' इति। तत्संबन्धित्वाद्गर्भो दौहृदमित्युच्यते। सा च तद्योगाद्दौहृदिनी। तदुक्तं संग्रहे—'द्विहृदयां नारीं दौहृदिनीमाचक्षते' इति। उपेन्द्रवज्रावृत्तम् ॥

अथाग्रमहिष्याः कौसल्यायाः प्राधान्येन मध्यगौरवरूपं दौहृदलक्षणं वर्णयति—मन्दमन्दमित्यादिभिस्त्रिभिः कुलकेन—

**मन्दमन्दमपर्यद्वलित्रया गाधताविषयनाभिगह्वरा।**
**कोसलेन्द्रदुहितुः शनैरभून्मध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥**

---

१ 'प्रोषित' इति पाठः. २ 'दौर्हृद' इति पाठः. ३ 'अपयात्' इति पाठः. ४ 'वलित्रयी' इति पाठः.

**मन्दमन्दमिति** । मन्दमन्दं मन्दप्रकारम् । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । 'कर्मधारयवदुत्तरेषु' इति कर्मधारयवद्भावात्सुपो लोपः । अपयदपगच्छद्वलीनां मध्यरेखाणां त्रयं यस्याः सा तथोक्ता । 'वलिर्मध्यमरेखोर्मिजीर्णत्वग्गृहदारुषु' इति विश्वः । गाधताया उत्तानत्वस्य । 'गाढता' इत्यपि पाठः । विषयं गोचरं नाभिगह्वरं नाभिकुहरं यस्याः सा । 'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रसारिका' इत्यमरः । अत्र पूर्वंविद्यमानयोर्महाभाग्यलक्षणत्वेन सामुद्रिकशास्त्रोक्तयोर्वलित्रयनाभिगह्वरयोरिदानीं गर्भगौरवादपगमं इत्यवगन्तव्यम् । अतएव कोसलेन्द्रदुहितुः कौसल्यायाः संबन्धिनी मध्ययष्टिर्यष्टिकल्पमध्यमपि शनैः कालक्रमेण दृष्टिगोचरा चक्षुर्विषयाभूत् । अपिशब्दात्कैकेयीसुमित्रयोरपि मध्ययष्टिः समुच्चीयते । अङ्गकार्श्यादिगर्भलक्षणे वाहटः—'क्षामता गरिमा कुक्षौ मूर्च्छा च्छर्दिररोचकः । जृम्भावसेकस्खलनं रोमराज्याः प्रकाशनम् ॥' इति । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥

न्यग्रोधपत्रसमतां क्रमशः प्रयाता-
मङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीडितानां
गर्भच्छलेन वसता प्रथमेन पुंसा ॥ २७ ॥

**न्यग्रोधेति** । कृशानि कार्श्यावस्थामापन्नान्यङ्गान्यवयवा यस्यास्तस्याः कौसल्यायाः । 'अङ्गगात्रकण्ठेभ्यश्च' इति वक्तव्यान्ङीष् । उदरं कुक्षिः 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इत्यमरः । क्रमशो दिनक्रमेण प्रयातामपगतां न्यग्रोधपत्रसमतां वटपत्रसादृश्यम् । 'वटपत्रसमं स्त्रीणामुदरं पुत्रदायकम्' इति सामुद्रिके । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । दशमुखो रावण एव उरगः सर्पः । दशमुखवान्सर्पश्च प्रतीयते । तेन पीडितानां दुःखितानाम् । लोकानामिति शेषः । जीवातवे जीवनौषधार्थम् । रावणं निहत्य तत्पीडिताञ्जीवयितुमित्यर्थः । 'जीवातुर्जीवनौषधम्' इत्यमरः । गर्भच्छलेन कुक्षिस्थार्भकव्याजेन । 'गर्भोऽपवरकेऽन्तस्थाग्नौ कुक्षिस्थार्भके मतः' । 'छलं तु स्खलिते व्याजे' इति शब्दार्णवविश्वप्रकाशौ । वसता तिष्ठता प्रथमेन पुंसादिपुरुषेण विष्णुना हेतुना पुनर्भूयोऽप्यङ्गीचकार । पूर्वं महाभाग्यलक्षणतया विद्यमाने वटपत्रसाम्ये निर्भरगर्भभारवशादिदानीमपगतेऽपि वटपत्रशायिनः श्रीमहाविष्णोर्निवासत्वेन पुनस्तत्साम्यं बभारेत्यर्थः । 'ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः । 'ऊर्यादिच्विडाचश्च' इत्यङ्गीशब्दस्य गतिसंज्ञायां धातोः प्राक्प्रयोगः । विष्णोर्वटपत्रशायित्वमुक्तं श्रीमहाभागवते तृतीयस्कन्धे कपिलदेवहूतिसंवादे—'स त्वं धृतो मे जठरेऽस्य नाथ कथं नु यस्योदर एतदासीत् । विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः ॥' इति । अन्यत्र च—'अम्भोधिशायी वटपत्रशायी श्रीरङ्गशायी रमतां मनो मे' इति । अत्र दशमुखोरगेति रूपकं गर्भच्छलेनेत्यत्र छलशब्देन नायं गर्भः किंतु साक्षाद्वटपत्रशायीति गर्भस्यासत्यत्वप्रतिपादनाच्छ-

---

१ 'परमेण' इति पाठः

लादिशब्दैरसत्यत्वप्रतिपादनलक्षणोऽपह्नवभेदः । तदुज्जीविता चेयं पुनर्वटपत्रसाम्यभरणोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या । सा चोक्तरूपकेण संसृज्यते । वसन्ततिलकावृत्तम् ॥

अपिच ।

**मध्यं तनुत्वादविभाव्यमानमाकाशमासीदसितायताक्ष्याः ।**
**गर्भोदये विष्णुपदापदेशात्कार्श्यं विहायापि विहाय एव ॥ २८ ॥**

**[ अपि च ] मध्यमिति** । असिते आयते चाक्षिणी यस्याः सा उत्पलपत्रायताक्ष्याः कौसल्यायाः संबन्धि । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षचि 'षिद्गौरादिभ्यश्च' इति ङीष् । मध्यमवलग्नं [कर्तृ] । 'मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः । तनुत्वात्सूक्ष्मत्वाद्धेतोरविभाव्यमानमज्ञायमानम् । अपरिदृश्यमानं सदिति यावत् । आकाशमासीदाकाशकल्पमभूत् । पूर्वमिति शेषः । तथा कविसमयसिद्धत्वादिति भावः । गर्भोदये गर्भोत्पत्तौ सत्याम् । इदानीमिति शेषः । कार्श्यमाकाशभावनिमित्तं सौक्ष्म्यं विहाय त्यक्त्वापि विष्णोर्गर्भरूपेण विद्यमानस्य पदं विष्णुपदम् । आकाशं चेति प्रतीयते । तदपदेशात्तद्व्याजात्तद्व्यपदेशाद्वा विहाय आकाशमेवासीदिति संबन्धः । 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' इत्यमरः । अत्र पूर्वार्धे मध्याकाशयोर्भेदेऽपि तदेवासीदित्यभेदोक्तेर्भेदेऽभेदरूपातिशयोक्तिः । तया च तत्साम्यं गम्यत इत्यलंकारेणालंकारध्वनिः । उत्तरार्धे तु आकाशभवननिमित्तकार्श्यं विहायापि तदेवासीदिति विरोधः । स च विष्णुपदमिति श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितापदेशशब्दापेक्षापह्नवोज्जीवित इति संकरः ॥

अथ श्रीविष्णुराविरभूदित्याह—

**ततः ।**

**उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ**
**लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।**
**निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-**
**राविर्भूतमभूतपूर्वमपरं यत्किंचिदेकं महः ॥ २९ ॥**

**तत इति । उच्चस्थ इति** । ततो दौहदलक्षणप्रकाशानन्तरं ग्रहाणां सूर्यादीनां पञ्चके उच्चेषु स्थानेषु तिष्ठतीत्युच्चस्थे । 'सुपि स्थः' इति कः । सूर्याङ्गारकगुरुशुक्रशनिषु पञ्चसु ग्रहेषु मेषादिस्वतुङ्गस्थानसंगतेषु सत्स्वित्यर्थः । सुरगुरौ बृहस्पतौ सेन्दाविन्दुयुक्ते सति । पूषणि सूर्ये । 'विभाषा ङिश्योः' इति विकल्पादल्लोपाभावः । मेषं गते मेषराशिं प्रविष्टे सति । पुनर्वसुयुते पुनर्वसुनक्षत्रयुक्ते । नवानां पूरणी नवमी तस्याम् । तत्संज्ञिक इत्यर्थः । 'तस्य पूरणे डट्' । 'नान्तादसंख्यादेर्मट्' इति डटो मडागमः । टित्वान्ङीप् । तिथौ दिने । अत्र तिथिशब्दः पुंलिङ्गो ग्राह्यः । यथाह-

---

१ 'पूर्वविभवं यत्किंचित्', 'पूर्वमभवद्यत्किंचित्' इति पाठौ.

मरसिंहः—'तदाद्यास्तिथयो द्वयोः' इति । कर्कटके कर्कटकनाम्नि लग्ने राश्युदयकाले। 'राशीनामुदयो लग्नम्' इत्यमरः । निखिलाः समस्ताः। पलं मांसमश्नन्तीति पलाशा राक्षसास्त एव समिधः, किंशुकसमिधश्च । अरणिजन्यस्याग्नेर्नैयत्येन पलाशसमिद्दाहकत्वादिति भावः। निर्दग्धुं विनाशयितुं भस्मीकर्तुं च। मेध्यात्पवित्रात्। अथवा मेधः क्रतुस्तदर्हाद्यागयोग्यादित्यर्थः। अयोध्यैवारणिरग्निमन्थनदारुविशेषस्तस्मात्। 'मध्यात्' इति पाठेऽयोध्यारणेर्मध्यात्। मध्यदेशादित्यर्थः। 'पञ्चमी विभक्ते' इति पञ्चमी। 'यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः। अभूतपूर्वमविद्यमानत्वसदृशम्। सजातीयभेदरहितमित्यर्थः। न विद्यते परं यस्मात्तदपरमद्वितीयम्। विजातीयभेदरहितमित्यर्थः। एकं स्वगतभेदरहितमत एव यत्किंचित्त्रिविधभेदरहिततया निर्वाच्यं महस्तेजः। परं ज्योतिरिति यावत्। ब्रह्मेत्यर्थः। 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः। तदेव महोऽग्निरिति श्लिष्टरूपकम् । आविर्भूतं स्वयमेवाभिव्यक्तम्। अभूदिति शेषः । एतेनान्यवन्मातृसंबन्धराहित्यं सूच्यते। गर्भवासादिकमन्यत्सर्वं प्रातीतिकमेव न पारमार्थिकमिति भावः। उक्तगुणयुक्ते शुभदिने श्रीरामादिमूर्तिचतुष्टयरूपेणायोध्यायां परमात्मा श्रीविष्णुराविरभूदिति फलितार्थः। अत्र समस्तवस्तुवर्तिश्लेषसंकीर्णसावयवरूपकालंकारः । अत्रेदमनुसंधेयम्—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः॥' सूर्यादीनां सप्तानां ग्रहाणां मेषादयो राशयः श्लोकोक्ताः क्रमविशिष्टा उच्चस्थानानि। स्वस्वतुङ्गापेक्षया सप्तमस्थानानि नीचानि। अत्र उच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः। अत्रांशस्त्रिंशो भागः। यथाह नारदः—'त्रिंशद्भागात्मकं लग्नम्' इति । तेऽपि स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः। तदुक्तं राजमृगाङ्के—'स्वोच्चे पूर्णं स्वर्क्षगेऽर्धं सुहृद्भे पादं द्विड्भिर्वाशुभं खेचरेन्द्राः। नीचस्थायी वास्तगो वा न किंचित्पादान्न्यूनं स्वत्रिकोणे ददाति॥' तदित्थमाह कविः—उच्चस्थ इति। यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स देवतुल्यो भवतीति। तदुक्तं कृष्णीये—'सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः। एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः॥' इति। तदिदमाह—ग्रहपञ्चक इति। यद्यपि 'उच्चस्थे ग्रहपञ्चके' इत्यनेनैव सूर्यस्य स्वोच्चस्थानगतत्वोक्तेः पुनः 'मेषं गते पूषणि' इति पौनरुक्त्यदूषणं प्रसज्यते,तथापि गोबलीवर्दन्यायेन समाधेयमित्यलमतिप्रसङ्गेन।शार्दूलविक्रीडितं वृत्तम्—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्॥

एवं तावत्तारकब्रह्मणोऽनन्यत्वेनाविर्भावमुक्त्वा संप्रति लौकिकरीत्या प्रायिकमवतारमाह—

अपिच।

अथ रामाभिधानेन कवेः सुरभयन्गिरः[1]।
अलंचकार कारुण्याद्रघूणामन्वयं हरिः॥ ३०॥

---

१ 'गिरा' इति पाठः.

**अपिचेति** । अपिच । किंचेत्यर्थः ॥ **अथेति** । अथ महःप्रादुर्भावानन्तरम् । हरति भक्तजनदुरितानीति हरिर्विष्णुः । रमन्ते योगिनोऽत्रेति रामः । 'रमन्ते योगिनोऽनन्ते सदानन्दे चिदात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते ॥' इति श्रुतेः । 'करणाधिकरणयोश्च' इत्यधिकरणार्थे घञ् । स इत्यभिधानं तेन रामनाम्ना कवेर्वाल्मीकेर्गिरो वाचः । सुरभीर्मनोज्ञाः कुर्वन्सुरभयन् । सुरभीकरिष्यन्नित्यर्थः । 'सुगन्धौ च मनोज्ञे सुरभिर्वाच्यलिङ्गवत्' इति विश्वः । 'तत्करोति–' इति ण्यन्ताल्लटः शत्रादेशः । वर्तमानसामीप्ये वर्तमानप्रत्ययः । तदनन्तरमेव महाकविना वाल्मीकिना श्रीरामचरित्रस्य नियमेन वर्णयिष्यमाणत्वादिति भावः । कारुण्यात्करुणाहेतोः । 'कारुण्यं करुणा' इत्यमरः । करुणैव कारुण्यमिति विग्रहः । स्वार्थे ष्यञ् । रघूणामन्वयं रघुवंशमलंचकारालंकृतवान्भूषितवान् । प्रकाशितवानित्यर्थः । परमकारुणिकोऽयं हरिः श्रीरामरूपेणावतीर्य रघुवंशमनुजग्राहेत्यर्थः । ज्येष्ठः श्रीरामः कौसल्यायामजनीति फलितार्थः । परमकारुणिकाः किं न कुर्वन्तीति भावः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । एतदादिश्लोकचतुष्टयमानुष्टुभं वृत्तम् ॥

अथ भरतादिकुमारत्रयोदयमाह—

**तमेनमन्वजायन्त त्रयस्त्रेताग्नितेजसः[1] ।**
**अग्रजस्यानुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः[2] ॥ ३१ ॥**

**तमिति** । त्रेताग्नितेजस आहवनीयगार्हपत्यदक्षिणाग्नित्रयं त्रेताग्निस्तस्य तेज इव तेजो येषां ते तथोक्ताः । तेजस्विन इत्यर्थः । 'वर्चसः' इति पाठेऽप्ययमेवार्थः । उपमालंकारः । 'अग्नित्रयमिदं त्रेता' इत्यमरः । त्रेताशब्देनैवाग्निशब्दप्रतीतेः पुनरग्निशब्दः करिकलभकर्णावतंसवंशकरीरादिपदवदवगन्तव्यः । एक एवाग्निस्त्रीण्याहवनीयादिरूपाणि इतः प्राप्तस्त्रेता । तदुक्तम्—'एक एवावसथ्याग्निरग्न्याधेयेन कर्मणा । संस्कृतस्त्रीणि रूपाणि ततस्त्रेतेति शब्द्यते ॥' इति । आवसथ्याग्निरौपासनाग्निः । स्त्रीत्वं लोकात् । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति पृषोदरादित्वाद्वर्णव्यत्ययेन इकारस्थाने एकारे सति त्रेतेति रूपसिद्धिः । तथा तैस्तैः । वीप्सायां द्विर्भावः । लोकोत्तरैर्लोकोत्कृष्टैः । लोकेष्वसाधारणैरिति यावत् । गुणैर्विद्याविनयादिभिः शौर्योदार्यगाम्भीर्यादिभिर्वा अग्रजस्य । अग्रजं राममित्यर्थः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । अथवा संबन्धसामान्ये षष्ठी । भगवतो नारायणस्यानुकरोतीतिवत् । अनुकुर्वन्तोऽनुवर्तमानाः । तत्सदृशा इत्यर्थः । तदुक्तं दण्ड्याद्यैः— 'तदन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्य वानुकरोतीति शब्दाः सादृश्यवाचकाः ॥' त्रयः कुमारास्तमेनमनु । तस्यामुष्य श्रीरामस्य पश्चादित्यर्थः । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वाद्द्वितीया । अजायन्त जाताः ॥

**भरतस्तेषु कैकेय्यास्तनयो[3] विनयोज्ज्वलः ।**
**अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥ ३२ ॥**

---

१ 'तमेवम्' इति पाठः. २ 'अग्रजं तेऽनुकुर्वन्तः' इति पाठः. ३ कैकेय्यास्तु' इति पाठः.

भरत इति। तेषु त्रिषु कुमारेषु। केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी। 'तस्यापत्यम्' इत्यण्। 'केकयमित्रयुप्रलयानां यादेरियः' इति यशब्दस्येयादेशः। कैकेयीति तस्याः विनयेन प्रश्रयेण विशिष्टनीतिसंपत्त्या वा उज्ज्वलः। विनयभूषण इत्यर्थः। भरतो नाम तनयः। जात इति शेषः। तथा लक्ष्मणशत्रुघ्ननामानावन्यौ भरतापेक्षयां इतरौ कुमारौ सुमित्रायां कृतोदयौ समुत्पन्नौ॥

एते ववृधिरे वीरा ब्रह्मक्षेमाय दीक्षिताः।
लोकानन्दमुकुन्दस्य चत्वार इव बाहवः॥ ३३॥

एत इति। ब्रह्मक्षेमाय ब्राह्मणपरिपालनं कर्तुम्। 'ब्रह्मा विप्रः प्रजापतिः' इत्यमरः। दीक्षिताः संजातदीक्षाः। कृतसंकल्पा इत्यर्थः। 'तदस्य संजातं तारकादिभ्य इतच्'। तारकादिराकृतिगणः। चत्वार एते पूर्वोक्ता वीरा दानदयायुद्धेषु शूराः श्रीरामलक्ष्मणभरतशत्रुघ्ना लोकानन्दो लोकानां भुवनानामानन्दकरः कार्यकारणयोरभेदोपचारात्। स चासौ मुकुन्दश्च। कमनीयत्वान्मुकुन्द इति विग्रहः। तस्य चत्वारो बाहव उक्तविशेषणविशिष्टाश्चतुर्भुजा इव ववृधिरे वृद्धिं गताः। पूर्णोपमालंकारः॥

अथ राक्षसविनाशनाटकस्य पूर्वरङ्गभूतं विश्वामित्रागमनं तावदाह—

अथ कदाचिदपरिमेयमायाभयानकयुद्धसमुद्धतदैत्यबलावस्कन्दकांदिशीकवृन्दारकानीकपरिवार्यमाणरथः पङ्क्तिरथस्तपश्चर्याजातानामाश्चर्याणामायतनं त्रिशङ्कुयाजिनं भगवन्तं पद्यप्रबन्धमिव दर्शितसर्गभेदं प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं बुधमिव सोमसुतं कुशिकसुतमद्राक्षीत्॥

अथेति। अथानन्तरं कदाचित्कस्मिंश्चिद्दिने अपरिमेया अपरिमिता या मायाः शाम्बरीविद्याः। विचित्रकपटवृत्तय इति यावत्। 'स्यान्माया शम्बरीविद्या' इत्यमरः। ताभिर्भयानकानि भयंकराणि। 'घोरं भीमं भयानकम्' इत्यमरः। युद्धसमुद्धतानि युद्धोद्धतानि च यानि दैत्यबलानि दैत्यसेनास्तेषामवस्कन्दादाक्रमणात्कांदिशीकैर्भयद्रुतैर्वृन्दारकानीकैर्देवसैन्यैः परिवार्यमाणो निरीक्ष्य परिवेष्ट्यमाणो रथो यस्य तथोक्तः। देवानामपि शरण्य इत्यर्थः। अथवा परिपाल्यमानः संरक्ष्यमाणो रथो यस्य स तथोक्तः। एतदायत्तमस्मज्जीवनमिति मत्वा तैः परिरक्षितस्यन्दन इत्यर्थः। 'कांदिशीको भयद्रुतः', 'अनीकिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इति चामरः। पङ्क्तिरथो दशरथः। 'पङ्क्तिश्छन्दोऽपि दशमम्' इत्यमरः। तपश्चर्याजातानां वसिष्ठस्पर्धया ब्रह्मत्वसंपादनार्थं विरचितव्रतोपवासादितपोनुष्ठानाज्जनितानामाश्चर्याणामद्भुतानामायतनमास्पदम्। कारणमित्यर्थः। चर्येत्यत्र 'गदमदचर—'इत्यादिना यत्प्रत्यन्तर्भावितण्यर्थः। त्रिशङ्कुर्नाम राजा हरिश्चन्द्रपिता तं याजयति सदेहस्वर्गगमनार्थ-

१ 'प्रजाक्षेमाय' इति पाठः. २ 'लोकानन्दा मुकुन्दस्य' इति पाठः. ३ 'प्रतिपाल्यमानमहारथः' इति पाठः. ४ 'निःशङ्कं त्रिशङ्कुं' इति पाठः. ५ 'अद्राक्षीदप्राक्षीच्च' इति पाठः.

मिति त्रिशङ्कुयाजिनम् । यजतेर्ण्यन्तात्ताच्छील्ये णिनिः । पद्यप्रबन्धमिव श्लोकनिबद्धकाव्यमिव दर्शितः सर्गभेदः कथाविच्छेदरूपः सृष्ट्यन्तरं च येन तम् । प्राकृतव्याकरणमिव प्रकटितः प्रकाशितो वर्णव्यत्यासोऽक्षरव्यत्ययः क्षत्रियत्वपरित्यागेन ब्राह्मणवर्णस्वीकाररूपव्यत्यासश्च येन तम् । यथा 'आर्जित' इति संस्कृतपदस्य 'आर्जेर्विडप्प' इति कर्मणि विडप्पादेशे विडप्पन्तीति वर्णव्यत्यासाभिधायिनी प्राकृतव्याकरणरीतिः । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे' इत्यमरः । बुधमिव सौम्यमिव सोमसुतं चन्द्रसुतं सोमयाजिनं च । सोमं सुनोतीति सोमसुत् । क्विप् । भगवन्तं पूज्यं कुशिकसुतं विश्वामित्रमद्राक्षीद्ददर्श । दृशेर्लुङ् । 'इरितो वा' इति विकल्पादङभावपक्षे सिचि वृद्धिः । 'न दृशः' इति निषेधात्क्सादेशाभावः । संश्लेषसंकीर्णमुपमात्रयमन्योन्यनैरपेक्ष्यात्संसृष्टम् । त्रिशङ्कुयाजनकथामुत्तरत्र वक्ष्यति ॥

**तदनु यथाविधि[1]कृतसपर्येण मर्यादातीत[2]महिम्ना महितेन गाधेतरहृदयेन गाधिनन्दनेन सत्रपरित्राणार्थमित्थम[3]भ्यर्थितोऽभूत् ।**

**तदन्विति** ॥ तदनु दर्शनानन्तरम् । विधिमनतिक्रम्य यथाविधि यथाशास्त्रम् । 'अव्ययम्—' इत्यादिनाव्ययीभावसमासः । कृता दशरथेन विरचिता सपर्या अर्घ्यपाद्यादिरूपा पूजा यस्य तेन । 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः । मर्यादातीतमहिम्नापरिमेयमाहात्म्येन महितः पूजितस्तेन गाधेतरहृदयेन गम्भीरचेतसा गाधिनन्दनेन विश्वामित्रेण सत्रपरित्राणार्थं यज्ञसंरक्षणार्थम् । 'सत्रमाच्छादने यज्ञे' इत्यमरः । इत्थं वक्ष्यमाणप्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । अभ्यर्थितो याचितोऽभूत् । दशरथ इति शेषः । 'याच्ञायामभिमाने च प्रार्थना कथ्यते बुधैः' इति केशवः । 'अर्थमर्थयतेरर्थादाने याच्ञावरोधयोः' इति वचनाच्च ॥

प्रार्थनाप्रकारमाह—

**राजन्, भ[4]वतस्तनयेन विनयाभिरामेण रामेण शरासन[5]मित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति ।**

**राजन्निति** । हे राजन्निति संबोधनम् । यतो रञ्जनाद्राजा त्वमतोऽस्मद्धृदयरञ्जनमपि करिष्यसीति विज्ञापयितुमित्यवगन्तव्यम् । भवतस्तनयेन पुत्ररूपेणावतीर्णेनेत्यर्थः । विनयः प्रश्रयस्तेनाभिरामेण रमणीयेन । एतेन यथोक्तकारित्वं सूच्यते । शरासनमेव मित्रं सुहृद्यस्य तेन । धनुर्मात्रसहायेनेत्यर्थः । सौमित्रिमात्रं लक्ष्मण एव परिजनो भृत्यवर्गो यस्य तेन । अत्र मात्रशब्देन परिजनान्तरव्यवच्छेदकेनास्यासहायशूरत्वं सूच्यते । एवंभूतेन रामेण रक्षःसंहननार्थं श्रीरामरूपेणावतीर्णेन विष्णुना क्रियमाणा विधीयमाना क्रतुरक्षा यागपरिपालनं यस्य तथोक्तः सन् । अहमिति शेषः । रक्षोदुरितं सुबाहुमारीचादिराक्षसरूपविघ्नं तत्कृतविघ्नं वा । अथवा

१. 'प्रतिकृत', 'परिगृहीत' इति पाठौ. २. 'महिम्ना गाधेतर' इति पाठः. ३. 'अभ्यर्थितः पार्थिवोऽभूत्' इति पाठः. ४. 'तव कुमारेण' इति पाठः. ५. 'शरासनमात्रमित्रेण' इति पाठः.

३ च०

तद्विरचितयागदूषणलक्षणदुष्कृतम् । 'अंहो दुरितदुष्कृतम्' इत्यमरः । उत्तीर्य तीर्त्वा कृतावभृथोऽतिवर्तितदीक्षान्तो भवितुमभिलषामि वाञ्छामि इत्येवंप्रकारेण प्रार्थितोऽभूदिति पूर्वेण संबन्धः । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः ॥

**एतदाकर्ण्य कर्णपरुषं महर्षिभाषितमतिमात्रपुत्रवात्सल्यात्कौसल्याजानिः सशल्यान्तःकरणोऽभूत् ।**

**एतदिति ।** कर्णपरुषमेतत्पूर्वोक्तं महर्षेः । 'ऊर्ध्वरेतास्तपस्युग्रो नियताशी च संयमी । शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः ॥' इत्युक्तलक्षणर्षिश्रेष्ठस्य विश्वामित्रस्य भाषितं 'श्रीरामः प्रेषणीयः' इत्येवंरूपं वचनमाकर्ण्य श्रुत्वा । महर्षिग्रहणमनतिक्रमणीयवचनत्वद्योतनार्थम् । 'भाषितं वचनं वचः' इत्यमरः । अतिमात्रपुत्रवात्सल्यादतिवेलपुत्रस्नेहाद्धेतोः । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः । सशल्यान्तःकरणो विदीर्णहृदयोऽभूत् । तद्वचनस्य शस्त्रप्रायत्वादिति भावः । अत्र मुनिवचने शल्यत्वरूपणाद्रूपकालंकारः ॥

**ततस्तस्मिन्बहुप्रकारै[2]रवार्य[3]निश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत् ।**

**तत इति ।** ततस्तदनन्तरं तस्मिन्भगवति विश्वामित्रे बहुप्रकारैः । 'अहमेव गमिष्यामि योद्धुं तैः कूटयोधिभिः । रामस्यास्य न पश्यामि मुनेऽहं युद्धयोग्यताम् ॥ षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक । यत्नेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥' इत्याद्युक्तानेकोपायैरित्यर्थः । अवार्यो निवारयितुमशक्यो निश्चयः श्रीरामप्रेषणरूपो यस्य तस्मिन्सति तदा दशरथस्तपनकुलस्य सूर्यवंशस्य हितेन हितकारिणा । योगक्षेमानुसंधानतत्परेणेत्यर्थः । अतोऽस्य वचनमवश्यमङ्गीकरणीयमिति भावः । पुरोहितेन वसिष्ठेनैवं वक्ष्यमाणप्रकारेणाभिहितोऽनुशासितोऽभूत् ॥

तत्प्रकारमेवाह—

**पर्याप्तभाग्याय[4] भवानमुष्मै कुर्यात्सपर्यां कुशिकात्मजाय ।**
**निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ २४॥**

**पर्याप्तेति ।** हे राजन्नित्यध्याहारः । भवान् पर्याप्तं परिपूर्णं भाग्यं ब्रह्मवर्चसप्राप्तिरूपं भागधेयं यस्य तस्मै । एतेन दुःसाध्यब्रह्मवर्चससाधकस्य महात्मनो न किमप्यसाध्यमस्तीति सूच्यते । अतः पूज्यायेति भावः । अमुष्मै कुशिकात्मजाय सपर्यां श्रीरामप्रदानरूपां पूजां कुर्यात्करोतु । भवच्छब्दयोगे प्रथमपुरुष एव न मध्यमपुरुष इति भाष्ये स्थितत्वात् 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' । अतः वसुधां भुवं निर्गता यातुधाना यस्यास्तां निर्यातुधानामराक्षसाम् । 'यातुधानः पुण्यजनो नैरृतो यातुरक्षसी' इत्यमरः । एवं विधातुं कर्तुं लक्ष्मणेन सह रामो निर्यातु निर्गच्छतु । प्राप्तकाले लोट् । श्रीरामस्य राक्षससंहारार्थं निर्गन्तुं कालः प्राप्त इत्यर्थः । इन्द्रवज्रावृत्तम् । लाटानुप्रासः ॥

---

१. 'एवंविधमाकर्ण्य' इति पाठः. २. 'प्रकारैरपि' इति पाठः. ३. 'अपरिहार्य' इति पाठः. ४. 'पर्याप्तकामाय' इति पाठः.

**एवं वसिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।**

**एवमिति** । एवमुक्तरीत्या वसिष्ठेन प्रतिष्ठापिता पुनःसंस्थापिता धृतिर्धैर्यं यस्य स तथोक्तः । 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्वः । दशरथः सुतप्रदानेन श्रीरामसमर्पणेन कुशिकसुतमनोरथं विश्वामित्राभिलाषमेव पूरयामास सफलीचकार । न त्वप्रदानरूपं निजमनोरथमित्येवकारार्थः ॥

**योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।**
**नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥ ३५ ॥**

**योगेनेति** । यो रामः संसारात्पुत्रमित्रकलत्रबन्धुरूपादपेतं निवृत्तं चेतो येषां तेषां पुंसाम् । वीतरागाणां योगीश्वराणामित्यर्थः । योगेन लभ्यो ध्यानेन गम्यः । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[1] इति श्रुतेः । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । सोऽयं श्रीरामः पितुर्नियोगेन निदेशेन । नितरां योगेन चेति गम्यते । कौशिकमन्वगादनुजगाम । लोकानुग्रहदयालवः किं न विडम्बयन्तीति भावः । 'इणो गा लुङि' इति लुङि गादेशः । एतदादिश्लोकत्रयमानुष्टुभं छन्दः ॥

**तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।**
**सौमित्रिसहितं रामं नयन्नयमवोचत ॥ ३६ ॥**

**तत्रेति** । तत्र तस्मिन्समयेऽयं महामुनिर्मुनिश्रेष्ठः । विश्वस्य मित्रं विश्वामित्रः । 'मित्रे चर्षौ' इति विश्वशब्दस्य दीर्घश्छान्दसः । लोकेऽपि शिष्टप्रयोगात् । सत्रं परित्रातुं यज्ञं परिपालयितुं सौमित्रिसहितं लक्ष्मणानुगतं रामं नयन्प्रापयन्नवोचतोक्तवान् ॥

तदेवाह—

**बलेन तपसां लब्धे बलेत्यतिबलेति च ।**
**विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥**

**बलेनेति** । ककुदि वृषांसे तिष्ठतीति ककुत्स्थः । अत्रेत्थं पौराणिकी कथा—पुरा किल पुरंजनो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे देवसहायार्थं महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निशाचरकुलं निहत्य ककुत्स्थसंज्ञामलभतेति । तस्यापत्यं काकुत्स्थः । तस्य संबुद्धिर्हे काकुत्स्थ श्रीराम, तपसां बलेन तपःशक्त्या । तपसामिति बहुवचनं विद्ययोरसुलभताद्योतनार्थम् । लब्धे प्राप्ते बलेति अतिबलेति च नाम्ना प्रसिद्धे विद्ये मन्त्रौ मयि विद्येते वर्तेते । ते विद्ये ते तुभ्यं वितराम्युपदिशामीत्यवोचतेति संबन्धः । उपदिदेश चेति वाक्यशेषः । अत्र बलातिबले प्रक्रम्य ब्रह्मयामलेऽभिहितम्—'उत्साहबलयोर्वृद्धिः परशस्त्रसहिष्णुता । न बाधा क्षुत्पिपासाभ्यां यतः सा कथिता बला ॥ यतः परस्य स्खालित्यं दृढमनःकायकर्मणाम् । स्वोपाये च ह्यमोघत्वं भवेत्सातिबला मता ॥ इदं विद्याद्वयं ज्ञातमात्रं सिद्धिकरं नृणाम् । विष्णुरेतद्द्वयं

---

१. निदिध्यासितव्यः साक्षात्करणीयः.

स्मृत्वा जितवान्मधुकैटभौ ॥' इति । तथा रामायणश्लोकः—'क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबलां चैव पठतः पथि राघव ॥' इति ॥

अथ मुनी राममनोविकासार्थं कथाः कथयितुमुपचक्रम इत्याह—

**ततो गृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्थमकथयत् ।**

**तत इति ।** ततो गृहीते विद्ये बलातिबलाख्ये येन तस्य दाशरथेर्दशरथनन्दनस्य श्रीरामस्य । 'अत इञ्' इतीञ्प्रत्ययः । एकं कमपि प्रदेशं जनपदं प्रदर्श्य दर्शयित्वा भगवान् । इत्थमकथयत्कथयामास ॥

तदेव विवृणोति—

**अस्मिन्पुरा पुरभिदः परमेश्वरस्य**
**फालान्तरालनयनज्वलने मनोभूः ।**
**सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं**
**तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥**

**अस्मिन्निति ।** पुरा पूर्वकालेऽस्मिन्प्रदेशे मनोभूर्मन्मथः पुरभिदस्त्रिपुरान्तकस्य । अस्यान्यान्तकत्वं किमु वक्तव्यमिति भावः । परमेश्वरस्य त्र्यम्बकस्य फालान्तराले निढलतटे यन्नयनं तृतीयं नेत्रं तदेव ज्वलनोऽग्निः, तज्ज्वलनो वा, तत्र सद्योऽविलम्बेन शलभत्वं पतङ्गभावम् । 'समौ पतङ्गशलभौ' इत्यमरः । प्रपद्य प्राप्य । भस्मीभूयेत्यर्थः । अङ्गं शरीरममुञ्चत्त्यक्तवान् । 'शे मुचादीनाम्' इति नुमागमः । तस्मात्कारणादमुं जनपदं देशम् । अङ्ग इति संज्ञा नामधेयं यस्य तं तथोक्तं विदुर्जानन्ति । पुराविद इति शेषः । अङ्गमोचनमेवाङ्गशब्दप्रवृत्तिनिमित्तं कृत्वा तथा कथयन्तीत्यर्थः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः ॥

**तदनु मानससरःप्रसूतां सरयूमतिक्रम्य वृत्रवधप्रवृद्धवृद्धश्रवःपङ्कक्षालनलब्धमलयोर्मलदकरूशनाम्नोर्जनपदयोः सीम्नि कृतपदयोर्दाशरथ्योः पुनरप्येवमब्रवीत् ।**

**तदन्विति ।** तदनु तदनन्तरं मानससरःप्रसूतां मानसाख्यकासारादुत्पन्नां सरयूं नाम नदीमतिक्रम्य तीर्त्वा वृत्रवधेन वृत्रासुरहत्यया प्रवृद्धो वृद्धिं गतो यो वृद्धश्रवस इन्द्रस्य पङ्कः पाप्मा स एव पङ्कः कर्दम इति श्लिष्टरूपकम् । 'पङ्कोऽस्त्री कर्दमैनसोः' इति निघण्टुः । तस्य क्षालनेन लब्धमलयोः प्राप्तकिल्बिषयोः । संक्रान्तमालिन्ययोरिति यावत् । अतएव मलदकरूशनाम्नोर्मलदः करूशश्चेति नाम ययोस्तयोर्जनपदयोर्देशविशेषयोः सीम्नि पर्यन्तभुवि । दाशरथ्यो रामलक्ष्मणयोः कृतपदयोर्विन्यस्तपादयोः । प्रविष्टपादयोः सतोरित्यर्थः । पुनर्भूयोऽप्येवमब्रवीदुवाच । मालिन्ययोगान्मलदः, करूशः क्षुत् कार्श्यं वा तद्योगात्करूश इति संज्ञानिर्णयः ॥

---

१. 'परिगृहीत', 'प्रतिगृहीत' इति च पाठौ. २. 'एकं प्रदेशं' इति पाठः. ३. 'लब्धमलदकरूशकनाम्नोः' इति पाठः.

**यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।**
**सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयांबभूव ॥ ३९ ॥**

**यक्ष इति ।** सुकेतुर्नाम यक्षो देवयोनिविशेषः । 'विद्याधराप्सरोयक्षरक्षोगन्धर्वकिंनराः' इत्यमरः । द्रुहिणस्य तपसा समाराधितस्य ब्रह्मणः प्रसादादनुग्रहात् । 'धाताब्जयोनिर्द्रुहिणः' इत्यमरः । ताटकेत्याख्या नाम यस्यास्तां कामपि कांचित्सुतां पुत्रिकां लेभे प्राप । जनयामासेत्यर्थः । अथ सुन्दो नाम कश्चिद्यक्ष एनां ताटकां परिणीयोपयम्य । भार्यात्वेन परिगृह्येत्यर्थः । किलेति वार्तायाम् । 'वार्तासंभाव्ययोः किल' इत्यमरः । तस्यां भार्यायां ताटकायां मारीच इति नीचं क्षुद्रम् । मारीचनामानं कंचन तनयमित्यर्थः । जनयांबभूवोत्पादयामास ॥

तदनन्तरवृत्तान्तमाह—

**एकदा[1] सुन्दे निहते[2] मारीचः कुम्भसंभवमभिभूय[3] तस्य शापादवाप कौणपताम् । ताटकाप्यभूत्[4]पुरुषादिनी ।**

**एकदेति ।** एकदैकस्मिन्समये सुन्दे निहते सति । अगस्त्येनेति शेषः । मारीचः कुम्भसंभवमगस्त्यम् । 'अगस्त्यः कुम्भसंभवः' इत्यमरः । अभिभूय पितृवधजनितरोषात्तिरस्कृत्य तस्य कुम्भसंभवस्य शापात्कौणपतां राक्षसत्वमवाप प्राप्तवान् । 'राक्षसः कौणपः क्रव्यात्' इत्यमरः । तथा ताटकापि पुरुषादिनी नरमांसभोजिनी राक्षस्यभूत् । अत्रेदं रामायणवचनम्—'अगस्त्यः परमक्रुद्धस्ताटकामभिशप्तवान् । पुरुषादी महायक्षी विकृता विकृतानना । इदं रूपं विहाय त्वं दारुणं रूपमाप्नुहि ॥' इति ॥

ततः किमित्याशङ्क्यावश्यं त्वयेयं हन्तव्येत्याह—

**सेयमब्जासन[5]सिद्धसिन्धुरसहस्रप्राणात्मजेन सह जनपद[6]विपदं विदधाना व्यापादनीया त्वयेति ।**

**सेति ।** अब्जासनस्य तपःपरितोषितस्य ब्रह्मणो वरात्सिद्धो निष्पन्नः सिन्धुरा गजास्तेषां सहस्रस्य प्राणः पराक्रमो यस्याः सा । ब्रह्मवरप्राप्तमहाबलसंपन्नेत्यर्थः । 'सिन्धुरः सामजः कुम्भी' इति गजपर्यायेष्वमरः । अत एवात्मजेन सह जनपदविपदं निजाश्रमदेशोपप्लवं विदधाना कुर्वाणा सेयं ताटका त्वया व्यापादनीया हन्तव्या इत्येवमब्रवीदिति पूर्वेण संबन्धः ॥

**रामस्तमाकर्ण्य स्त्रीवधशङ्कामकरोत् ।**

**राम इति ।** रामस्तं विश्वामित्रोक्तं ताटकावृत्तान्तमाकर्ण्य श्रुत्वा स्त्रीवधस्य ताटकाहननस्य शङ्कां भयमकरोत्कृतवान् ॥

स्त्रीहत्यायाः शास्त्रनिषिद्धत्वात्ताटकावधसंशयं श्रीराममनसि विद्यमानं पूर्वदृष्टान्तकथनेन निरस्यति—किंचेत्यादिना ।

---

१. 'एकदा तु सुन्दे' इति पाठः. २. 'विनिहते' इति पाठः. ३. 'कुम्भसंभवमुनिमभिभूय' इति पाठः. ४. 'चाभूत्' इति 'अप्यासीत्' इति च पाठौ. ५. 'आजन्मसिद्ध' इति पाठः. ६. 'जनपदं' इति पाठः.

किंच । वैरोचनीं मन्थरां वसुंधरापराधधुरंधरां पुरंदरेण निहतां जनार्दनकृतमर्दनां च भार्गवजननीं प्रदर्श्य दाशरथेरमन्दां सुन्दवधूवधविचिकित्सामुत्सारयामास ।

किंचेति । वसूनि धारयतीति वसुंधरा भूमिः । 'संज्ञायां भृतॄवृजि–' इत्यादिना खच् । 'अरुर्द्विषद्–' इत्यादिना मुमागमः । तस्या अपराधे उपद्रवाचरणरूपे धुरंधरां समर्थाम् । तदुपद्रवाचरणतत्परामित्यर्थः । धुरेव धुरा तां धारयतीति धुरंधरेति विग्रहः । प्रक्रिया तु पूर्ववत् । अतएव पुरंदरेण पुरः शत्रुपुराणि दारयतीति पुरंदर इन्द्रः । 'पूःसर्वयोर्दारिसहोः' इति खच् । 'खचि ह्रस्वः' इत्युपधाह्रस्वः । 'वाचंयमपुरंदरौ च' इति निपातनान्मुमागमः । तेन निहतां व्यापादितां वैरोचनीम् । विरोचनो नाम राक्षसस्तस्यापत्यं स्त्री वैरोचनी तां विरोचनपुत्रीम् । 'तस्यापत्यम्' इत्यण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । विशेषणमेतत्कैकेयीदासीसंदेहनिवृत्त्यर्थम् । मन्थराम् । तथा जनार्दनेन विष्णुना कृतं विरचितं मर्दनं विदारणं यस्यास्ताम् । छिन्नशीर्षामित्यर्थः । भार्गवजननीं शुक्रमातरं भृगुपत्नीं च प्रदर्श्य दृष्टान्ततया निर्दिश्य दाशरथेः श्रीरामस्यामन्दामनल्पां सुन्दवधूवधविचिकित्सां ताटकावधगोचरसंशयमुत्सारयामास निरसितवान् । 'विचिकित्सा तु संशयः' इत्यमरः ॥

आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः ।
तमेवान्ववदत्तस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

आश्रुत इति । श्रुतवृत्तेन प्रख्यातचरित्रेण । अथवा श्रुतं विश्वामित्रमुखादाकर्णितं वृत्तं मन्थरावधादिपूर्ववृत्तान्तो येन तेन तथोक्तेन । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढवर्तुले' इत्यमरः । तेन श्रीरामेण सुन्दप्रियायास्ताटकाया वध आश्रुतोऽङ्गीकृतः । 'ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः । अथ तस्य श्रीरामस्य चापो धनुरपि शिञ्जारवो गुणध्वनिः स इति छलं कपटस्तस्मात्तं ताटकावधमेवान्ववददनुसृत्योक्तवान् । ताटकावधप्रतिज्ञासमनन्तरमेव ज्याटंकारं चकारेत्यर्थः । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । अत्र छलशब्देन नायं शिञ्जारवः किंत्वनुवाद इत्यारवस्यासत्यत्वप्रतिपादनादपह्नवभेदः । 'छलादिशब्देनासत्यत्वप्रतिपादनमपह्नवः' इति सर्वस्वसूत्रम् ॥

तदा ताटकाप्यभ्युज्जगामेत्याह—

तत्काले पिशिताशनाशपिशुना संध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्यय-
क्रीडत्किंकरसंघसंकटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

तत्काल इति । तत्काले शिञ्जारवसमये पिशितं मांसमश्नन्तीति पिशिताशा राक्षसास्तेषां नाशस्य पिशुना सूचका । श्रीरामवध्यानां राक्षसानां स्वयं प्रथमत्वादिति भावः । अन्यत्र पिशिताशनानामशनस्य भोजनस्य पिशुना । संध्याया असुर-

१. 'तर्दना' इति पाठः. २. 'उत्सादयामास' इति पाठः. ३. 'स्वकृत्यालयाय' इति पाठः.

भोजनकालत्वेन प्रसिद्धत्वादिति भावः। 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः' इत्यमरः। अत्र जतुकाष्ठवच्छब्दयोरेव श्लिष्टत्वाच्छब्दश्लेषः। रुधिरक्षोदेनासृक्पङ्केन। अन्यत्र रुधिरक्षोदवत्कुङ्कुमरज इव। अरुणा रक्तवर्णा। एकत्र हिंस्रतया बीभत्सितत्वात्, अन्यत्र स्वाभाव्याच्चेति भावः। 'रुधिरं कुङ्कुमासृजोः' इत्युभयत्रापि विश्वः। 'क्षोदो रजसि पेषणे' इति नानार्थरत्नमाला। दारुणा भयंकरी। एकत्र तथा भीषणाकारत्वात्, अन्यत्र पिशाचादिसंचाराच्चेति भावः। 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरः। तथा हनने हिंसाकर्मणि स्वाधीने स्वायत्ते सति मृत्योः पुरीं यमपुरीम्। संयमिनीमिति यावत्। स्वेषां यत्कृत्यं प्राणिपीडनव्यापारस्तस्यात्ययेन विपर्ययेण क्रीडद्भिर्यथेच्छं विहरद्भिः किंकरसंघैर्यमदूतनिवहैः संकटं संकुलम्। 'संप्रोदश्च कटच्' इति कटच्। महद्विपुलं शृङ्गाटकं चतुष्पथं यस्यास्तां तथोक्तां विदधती विदधाना। दधातेः शतरि 'उगितश्च' इति ङीप्। 'नाभ्यस्ताच्छतुः' इति नुमभावः। 'शृङ्गाटकचतुष्पथे' इत्यमरः। काचित्ताटका नाम राक्षसी तरसा बलेन रंहसा वा। 'तरसी बलरंहसी' इत्यमरः। संध्येव सायंसंध्येव मुनेर्विश्वामित्रस्याध्वानं मार्गं रुरोध निरुद्धवती। संध्यायामपि नैष्ठिकानां तादात्मिकनिष्ठानियमनेन निरोधकर्तृत्वसंभवादियमुपमा श्लेषसंकीर्णा। अन्यथाकरणे वा प्रत्यवायापत्तेरिति भावः। शार्दूलविक्रीडितं वृत्तम्॥

अथ दाशरथेः कर्णमविशत्ताटकागुणः।[1]
तथा[2] धनुर्गुणस्तूर्णं प्राविशत्तज्जिघांसया[3]॥ ४२॥

**अथेति**। अथानन्तरं ताटकाया गुणः शब्दः। सिंहनाद इति यावत्। दाशरथेः श्रीरामस्य कर्णं श्रोत्रमविशत्। 'कर्णशब्दग्रहौ श्रोत्रम्' इत्यमरः। यथा येन प्रकारेण तस्यास्ताटकाया जिघांसया हन्तुमिच्छया। हन्तेः सन्नन्तात्स्त्रियामप्रत्यये टाप्। धनुषश्चापस्य गुणो ज्या। मौर्वीति यावत्। तूर्णं क्षिप्रं दाशरथेः कर्णं प्राविशत् तथेति संबन्धः। ताटकानिर्ह्रादश्रवणसमकालमेव श्रीरामो मौर्वीमाकर्णमाचकर्षेत्यर्थः। अतएवासंबन्धे संबन्धरूपातिशयोक्तिः। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। एतदादिपद्यत्रयमानुष्टुभं छन्दः॥

ततो भाविनि संग्रामे बद्धश्रद्धस्य ताटका।
स्वप्राणान्[4]रामबाणस्य वीरपाण[5]मकल्पयत्॥ ४३॥

**तत इति**। ततस्ताटका भाविनि भविष्यति संग्रामे सुबाह्वादिराक्षससंहरणे बद्धश्रद्धस्य विहितादरस्य रामबाणस्य स्वप्राणान्स्वकीयप्राणवायून्वीरपाणमकल्पयत्कल्पितवती। वीरपाणं नाम युद्धोपक्रम उत्साहवर्धनार्थं वीरैः क्रियमाणं पानम्। श्रीरामामोघबाणविद्धा सती प्राणांस्तत्याजेत्यर्थः। 'वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे' इत्यमरः। 'वा भावकरणयोः' इति विकल्पाण्णत्वम्। वीराणां पानं वीरपाणमिति विग्रहः। नान्तोऽप्ययं शब्दो वर्तते। पूर्ववदतिशयोक्तिः॥

१. 'यथा' इति पाठः. २. 'यथा' इति पाठः. ३. 'अविशत्' इति पाठः. ४. 'स्वप्राणैः' इति पाठः. ५. 'वीरपानम्' इति पाठः.

मुनिर्भृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥ ४४ ॥

मुनिरिति । मुनिर्विश्वामित्रो जम्भनामानं राक्षसं शास्तीति जम्भशासन इन्द्रः । कर्तरि ल्युट् । तस्य शासनात् 'महात्मने श्रीरामायास्त्रकलापं देहि' इति नियोगाद्धेतोर्भृशाश्वो नाम कश्चिदृषिस्तस्योपज्ञायन्त इत्युपज्ञानि । 'आतश्चोपसर्गे' इति कर्मण्यण्प्रत्ययः । भृशाश्वोपज्ञानि । भृशाश्वेनादौ ज्ञातानीत्यर्थः । 'उपज्ञोपक्रमम्–' इत्यादिना नपुंसकत्वम् । 'उपज्ञोपक्रमान्ताश्च तदादित्वप्रकाशनम्' इत्यमरश्च । जृम्भकमादिर्येषां तानि जृम्भकादीन्यस्त्राणि अस्त्रमन्त्रानित्यर्थः । ताटकां मथ्नाति हन्तीति ताटकामाथिने श्रीरामाय ददावदात् । उपदिदेशेत्यर्थः । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी । तद्गुणसंविज्ञानो बहुव्रीहिः ॥

तत्र कंचन विरिञ्चिलोकप्रत्यादेशं प्रदेशं[2] प्रदर्शयन्नवोचत् ।

तत्रेति । तत्र वने विरिञ्चिलोकस्य ब्रह्मलोकस्य प्रत्यादेशम् । प्रत्यादिश्यत इति प्रत्यादेश इति विग्रहः । ब्रह्मलोककल्पमित्यर्थः । कंचन कमपि प्रदेशं विषयं प्रदर्शयन्निदर्शयन्नवोचतोक्तवान् । मुनिरिति शेषः ॥

तदेवाह—

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः
प्रशमितभवखेदैः सादरं सेव्यमाने[3] ।
बलिनियमनहेतोर्वामनः काननेऽस्मि-
न्बलिनियमपरः सन्ब्रह्मचारी चचार ॥ ४५ ॥

प्रतिदिनमिति । अवदातैः प्रसन्नैः । विषयवैराग्यसंपन्नतया निर्मलान्तःकरणैरित्यर्थः । अतएव ब्रह्मैव निष्ठा विश्रान्तिपदं येषां तैः । अथवा ब्रह्मणि निष्ठा नियमो येषां तैः । निदिध्यासनतत्परैरित्यर्थः । अतएव प्रशमिताः शान्तिं गमिता भवखेदाः सांसारिकक्लेशा येषां तैः । तापत्रयविनिर्मुक्तैरित्यर्थः । ब्रह्मभिर्ब्रह्मर्षिभिः । 'ब्रह्मनिष्ठैर्महद्भिः' इति पाठे महद्भिर्महानुभावैः । ऋषिभिरित्यर्थः । प्रतिदिनम् । निरन्तरमिति यावत् । 'अव्ययं विभक्ति–' इत्यादिनाव्ययीभावसमासः । सादरं सस्नेहं सेव्यमानेऽधिष्ठीयमाने [ अस्मिन्कानने ] पुण्यारण्ये वामनो ब्रह्मचारी उपेन्द्रतयावतीर्णो मायावटुर्विष्णुर्बलेर्वैरोचनेर्नियमनहेतोः । बलिबन्धनार्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । इष्टदेवतापूजोपहारा बलयः, शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः, तत्परस्तदासक्तः सन् । चचार । ब्रह्मचर्यनिष्ठापारतन्त्र्येण प्रावर्ततेत्यर्थः । 'बलिः पूजोपहारे च करे दैत्यान्तरेऽपि च' इति नानार्थरत्नमाला । एतदादिश्लोकत्रयं मालिनीवृत्तम् ॥

अपहतविबुधार्तेर्वामनस्याजमूर्ते-[4][5]
रखिलभुवनभिक्षोराश्रमानोकहानाम् ।

---

१. 'कृशाश्वो' इति पाठः. २. 'प्रदेशमेकं प्रदर्श्यावोचदुपचीयमानपरमहर्षो महर्षिः' इति पाठः. ३. 'सेव्यमानः' इति पाठः. ४. 'अपि च' इति पाठः. ५. 'वामनव्याजमूर्तेः' इति पाठः.

ततिरियमतिनीला व्याप्तदिग्व्योमसीमा
स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥ ४६ ॥

अपहृतेति । अपहृता निरस्ता विबुधानामिन्द्रादिवृन्दारकाणामर्तिः पीडा येन तस्य । 'अर्तिः पीडाधनुष्कोट्योः' इत्यमरः । न जायत इत्यजो विष्णुः । 'अन्येभ्योऽपि दृश्यते' इति डप्रत्ययः । तन्मूर्तेः । श्रीविष्ण्ववतारस्येत्यर्थः । अखिलभुवनभिक्षोः । पादत्रयपरिमितभूतलतया याञ्चापदेशेन त्रिभुवनभिक्षातत्परस्येत्यर्थः । 'सनाशंसभिक्ष उः' । वामनस्याश्रमे तपोवने येऽनोकहा वृक्षाः । अनसः शकटस्याकं गतिं घ्नन्तीत्यनोकहा इति विग्रहः । 'अनोकहः कुटः सालः' इति वृक्षपर्यायेष्वमरः । तेषामियं परिदृश्यमाना अतिनीलात्यन्तश्यामलाकारा तथा व्याप्ता आवृता दिग्व्योमसीमा दिशां व्योम्नश्च सीमाः पर्यन्तभुवो यया । आक्रान्तदिङ्नभोऽन्तरालत्वेनातिसमुन्नतेत्यर्थः । 'सीमसीमे स्त्रियामुभे' इत्यमरः । नान्तपाठेऽसीमन इति निषेधान्न स्त्रीत्वम् । इदं च विशेषणद्वयं विभक्तिविपरिणामेन वामनेऽपि योज्यम् । ततिः श्रेणिः । स्वयमपि लोकम् । त्रिभुवनमित्यर्थः । जातावेकवचनम् । परिमातुमियत्तावधारणेन परिच्छेत्तुमभ्युद्यता समुद्युक्तेव प्रतिभाति । पश्येति शेषः । 'संसर्गजाः पुण्यगुणा भवन्ति' इति न्यायेन त्रिभुवनपरिमातुस्तत्रभवतो वामनस्य सहवासवशात्तद्वत्स्वयमपि तथा कर्तुमुद्युक्तेव प्रतीयत इत्यर्थः । अत्रोन्नतगुणनिमित्ता अभ्युद्यतत्वजातिस्वरूपोत्प्रेक्षा व्यञ्जकसद्भावाद्वाच्या ॥

इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः
समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥ ४७ ॥

इतीति । इत्यनेन प्रकारेण विविधा बहुप्रकारा रसा आस्वादा यासां तास्तथोक्तास्ताभिः श्रुतीनां पन्थाः श्रुतिपथम् । 'ऋक्पूः—' इत्यादिना समासान्तः । तस्य मधुराभिः । श्रवणानन्दकरीभिरित्यर्थः । पावनीभिः पवित्राभिः कौशिकव्याहृताभिर्विश्वामित्रकथिताभिः कथाभिरुपाख्यानैर्हेतुभिः । 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्प्रत्ययः । गलितमपगतं गहनकृच्छ्रं काननसंचारजनितकष्टं यस्मिन्कर्मणि तद्यथा भवति तथा । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । गच्छतोर्दाशरथ्यो रामलक्ष्मणयोस्तादृशं तथाविधम् । अत्यधिकमित्यर्थः । 'त्यदादिषु दृशोऽनालोचने कञ्च' इति कञ्प्रत्ययः । 'आ सर्वनाम्नः' इत्यात्वम् । मार्गदैर्घ्यं मार्गायामः सद्यः समकुचदिव संकोचमगमदिवेत्युत्प्रेक्षा । विश्वामित्रकथितमधुरतरकथाश्रवणकौतूहलपारवश्याद्दवीयानपि मार्गो नेदीयानिव प्रत्यभादित्यर्थः ॥

ततः सिद्धाश्रमं प्रविश्य विश्वामित्रः सत्रमारभत ।

तत इति । ततस्तदनन्तरं विश्वामित्रः सिद्धाश्रमं निजतपोवनं प्रविश्य सत्रमारभत । क्रतुदीक्षितोऽभूदित्यर्थः ॥

तदनन्तरमन्तरिक्षान्तरालादापतन्तमन्तकानीकभयानकं[1] तं पलाशगणमवलोक्य पलायमानाः करगलितसमित्कुशाः[2] कुशिकनन्दनान्तेवासिनः ससंभ्रममभिलषिताहवाय राघवाय न्यवेदयन् ।

तदनन्तरमिति । तदनन्तरं सत्रप्रारम्भानन्तरमन्तरिक्षान्तरालान्नभोविवरादापतन्तमुपसर्पन्तमन्तकानीकभयानकं यमकिंकरसेनाभयंकरं तं प्रसिद्धं पलाशानां सुबाहुमारीचादिराक्षसानां गणं समूहमवलोक्य दृष्ट्वा पलायमानाः प्रद्रवमाणाः । अतएव करेभ्यो गलितं स्रस्तं समित्कुशं समिधः कुशा दर्भाश्च यज्ञीया येषां ते तथोक्ताः । 'अस्त्री कुशं कुथो दर्भः' इत्यमरः । 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावाद्बहुव्रीहिः । कुशिकसुतान्तेवासिनो विश्वामित्रशिष्याः । अन्ते समीपे वसन्तीत्यन्तेवासिनः । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । 'शयवासवासिष्वकालात्' इत्यलुक् । अभिलषिताहवाय । समरोत्सुकायेत्यर्थः । राघवाय । श्रीरामाय ससंभ्रमं सोद्वेगं न्यवेदयन्व्यजिज्ञपन् ॥

निवेदनप्रकारमेवाह—

हत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा<br>
कृत्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।<br>
सिक्त्वा क्ष्मामसृजा स्रजान्त्रकृतया बद्ध्वा कचान्खेचरा-<br>
न्दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८॥

हत्वेति । अद्रेः शिखराणि गिरिशृङ्गाणि हृत्वानीय तानि शिखराणि परितः क्षिप्त्वा समन्ताद्विकीर्य । तथा हसित्वाट्टहासं कृत्वा । क्रुधा क्रोधेन । 'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । हस्तविघट्टनं करतलास्फालनं कृत्वा । तत इतः स्थित्वा । समन्ताद्व्याप्येत्यर्थः । मुहुर्नटित्वा पुनः पुनरुत्साहनाट्यं कृत्वा । क्ष्मां मेदिनीमसृजा रक्तेन सिक्त्वाप्लाव्य । 'क्ष्मावनिर्मेदिनी मही', 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इति चामरः । तथान्त्रकृतया स्रजान्त्रनिर्मितया मालया कचाञ्शिरोरुहान्बद्ध्वा संग्रथ्य । तथाग्नेः सदृशा अग्निज्वालाकल्पया दृशा निजदृष्ट्या । खे चरन्तीति खेचरा अन्तरिक्षचारिणश्चारणादयः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तान्दग्ध्वा संताप्य निशिचरा राक्षसा दिवो रन्ध्रं नभोऽन्तरालं रुन्धन्त्यावृण्वन्ति । आच्छादयन्तीत्यर्थः । एवं न्यवेदयन्निति पूर्वेण संबन्धः । शार्दूलविक्रीडितं वृत्तम् ॥

ततः किं जातमित्यत आह—

तत्र ।

तत्रेति । तत्र तस्मिन्समये ॥

संक्रान्तवर्णान्तरगाधिसूनोः संपर्कपुण्यादिव रामभद्रः[3] ।<br>
क्षात्रक्रमात्पिप्पलदण्डयोग्यः पलाशदण्डाहतपाणिरासीत् ॥४९॥

---

१. 'भयानकं पलाश' इति पाठः. २. 'करतलगलितपलाशसमित्' इति पाठः.
३. 'रामचन्द्रः' इति पाठः.

**संक्रान्तेति** । 'क्षणु हिंसायाम्' इति धातोः संपदादित्वात्क्विप् । 'गम्यादीनाम्–' इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम् । क्षतो नाशात्रायत इति क्षत्रं क्षत्रवर्णम् । 'सुपि–' इति योगविभागात्कप्रत्ययः । तस्य संबन्धी क्षात्रस्तस्मात्क्रमात् । क्षत्रियकुलाचारक्रमादित्यर्थः । पिप्पलदण्डयोग्योऽश्वत्थदण्डधारणार्हः । उपनयनसमये तथा विधिविहितत्वादिति भावः । 'पिप्पलः कुञ्जराशनः । अश्वत्थे' इत्यमरः । रामभद्रः श्रीरामः । अन्यो वर्णो वर्णान्तरम् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । 'सुप्सुपा' इति समासः । संक्रान्तं तपोबलात्संप्राप्तं वर्णान्तरं ब्राह्मण्यं यस्य स तथोक्तस्तस्य गाधिसूनोर्गाधिराजनन्दनस्य विश्वामित्रस्य संपर्केण सहवासेन यत्पुण्यं सुकृतं तस्मादिवेति हेतूत्प्रेक्षा । पलाशदण्डे किंशुकदण्डधारण आद्दत आदरवान्पाणिर्यस्य स तथोक्तः । ब्राह्मणस्य पलाशदण्डधारणविधानात् । तस्य च 'संसर्गजा दोषगुणा भवन्ति' इति न्यायेन संभावितत्वाच्चेति भावः । तथा पलं मांसमश्नन्तीति पलाशा मारीचादिराक्षसास्तेषां दण्डे शिक्षण आद्दतपाणिर्व्यग्रहस्त आसीत् । विश्वामित्रशिष्यवाक्याकर्णनानन्तरमेव राक्षसशिक्षणव्यग्रहस्तोऽभूदित्यर्थः । आद्दतपाणिरित्यत्र यद्यपि पाणेरचेतनस्याद्दतत्वं चेतनधर्मो न युज्यते, तथापि तद्वता श्रीरामेण सहाभेदाध्यवसायादौपचारिक इत्यवगन्तव्यम् । ननु 'तेषां दण्डाः पालाशो ब्राह्मणस्य, औदुम्बरः क्षत्रियस्य, बैल्वो वैश्यस्य' इति गृह्यकारेण क्षत्रियस्यौदुम्बरदण्डविधानादत्र पिप्पलदण्डयोग्य इति वक्तुं कथमुचितमिति चेत्सत्यम् । 'पालाशबिल्वयोर्दण्डौ ब्राह्मणस्य, न्यग्रोधचलदलयोः क्षत्रियस्य, पीलूदुम्बरयोर्विशः' इत्यादि स्मृत्यनुसारात्पिप्पलदण्डयोग्यत्वकथनं न विरुध्यत इत्यलमतिप्रसङ्गेन । अत्र पिप्पलदण्डयोग्योऽपि पलाशदण्डाद्दतपाणिरिति सर्वतो विरोधस्य राक्षसशिक्षणपरतया परिहृतत्वाद्विरोधाभासालंकारः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति लक्षणात् । स चोक्तोत्प्रेक्षानुप्राणित इति संकरः । उपजातिवृत्तम् ॥

> **मारीचनीचमतिराहवमारचय्य**
> **क्षिप्तः क्षणेन रघुनायकसायकेन ।**
> **मध्येपयोनिधि भयेन निमग्नमूर्ति-**
> **र्वेषं पुपोष जलमानुषनिर्विशेषम् ॥ ५० ॥**

**मारीचेति** । मारीच इति नीचमतिरपसदबुद्धी राक्षसः । महात्मना जगदेकवीरेण श्रीरामेण सह योद्धुं न शक्यत इति सम्यग्बुद्ध्यभावान्नीचमतित्वमवगन्तव्यम् । आहूयन्ते शत्रवोऽस्मिन्नित्याहवो युद्धम् । 'आङि युद्धे' इति ह्वयतेराङ्पूर्वादप्प्रत्यये संप्रसारणम् । 'आहवः संगरे यागे' इति विश्वः । तमारचय्य कृत्वा । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । रघुनायकस्य सायकेन वायव्यास्त्रेण क्षणेन क्षणमात्रेण । विभक्तिप्रतिरूपकमव्ययमेतत् । क्षिप्तः प्रेरितः । शुष्कपर्णवदित्यर्थः । मध्येपयोनिधि पयोनिधेर्मध्ये । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावसमासः । तत्संनियोगादेकारान्तत्वं मध्यशब्दस्य । भयेन प्रकाशसंचारे पुनः प्रहरेदिति भीत्या निमग्नमूर्तिर्जलान्तर्हितशरीरः सन् जलमानुषाज्जलजनितमानुषवेषान्निर्विशेषमविशेषम् ।

तत्कल्पमित्यर्थः । वेषं भूमिकां पुपोष पोषितवान् । तद्वज्जलधिमध्ये निमज्ज्यातिष्ठदित्यर्थः । वसन्ततिलकावृत्तम् ॥

**सुबाहुराघवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।**
**मुनीनामनभिप्रेतः प्रेतनाथातिथिः कृतः ॥ ५१ ॥**

**सुबाहुरिति** । मुनीनामनभिप्रेतोऽसंमत आहवोन्मत्तो युद्धोन्मत्तः सुबाहुर्नामा राक्षसः काकुत्स्थपत्रिणा श्रीरामबाणेन । 'पत्रिणौ शरपक्षिणौ' इत्यमरः । काकुत्स्थशब्दो व्याख्यातः । कृत्तश्छिन्नः सन् । 'कृती -छेदने' इति धातोः कर्मणि क्तः । प्रेतनाथातिथिरन्तकबन्धुः कृतः । यमलोकं प्रापित इत्यर्थः । 'प्रेतनाथातिथीकृतः' इति च्व्यन्तपाठेऽप्ययमेवार्थः ॥

**वंशस्पृशा हृदयहारिफलान्वितेन**
**रामेरितेन सहसा सहसायकेन ।**
**स्नेहार्दितेन निरगादनुरागिणीव**
**प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥**

**वंशेति** । वंशस्पृशा वेणुसंभवेन सत्कुलप्रसूतेन च । 'वंशः पृष्ठास्थि देहोर्ध्वकाष्ठे वेणौ कुले गुणे' इति विश्वः । 'स्पृशोऽनुदके क्विन्' । हृदयहारिफलान्वितेन हृदयविदलनकारिबाणाग्रयुतेन मनोहरलाभसमृद्धेन च । 'हृदयं मानसोरसोः', 'फलं बाणाग्रलाभयोः' इत्युभयत्रापि विश्वप्रकाशामरौ । स्नेहार्दितेन तैलादिस्नेहद्रव्यपरिशोषितेन सौहार्दपरिपूर्णेन च । 'स्नेहोऽस्त्री द्रवहार्दयोः' इति वैजयन्ती । रामेरितेन श्रीरामप्रयुक्तेनाभिराम इत्युदीरितेन च । रामाभिरीरितेन रत्यर्थं प्रेरितेन । सुन्दरीणां स्वयमभिलषणीयेनेत्यर्थः । 'सुन्दरी रमणी रामा' इत्यमरः । सायकेन सह बाणेन साकम् । प्राणनायकेनेति च गम्यते । पिशिताशनानां हतशेषराक्षसानां प्राणावलिः पञ्चप्राणश्रेणिर्हृदयतो हृत्प्रदेशात् । पञ्चम्यास्तसिः । अनुरागिण्यनुरागवती युवतिरिव सहसा शीघ्रम् । 'स्वरादिपाठादव्ययत्वम्' इति शाकटायनः । निरगान्निर्जगाम । श्रीरामशरताडिता राक्षसास्तत्क्षणं प्राणांस्तत्यजुरित्यर्थः । 'इणो गा लुङि' इति लुङि गादेशः । अत्र प्राणावलिनिर्गमनसायकनिर्गमनयोः कार्यकारणयोरसहभाविनोः सहभावोक्तेः कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्त्युपजीविनी सहोक्तिरलंकारः । 'सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः । कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते ॥' इति लक्षणात् । सायकवन्निर्जगामेत्यौपम्यकल्पनया कारणगताशुभावप्रतीतेश्चमत्कारि रहस्यम् । तथा प्रस्तुतसायकविशेषणसाम्यादप्रस्तुतप्राणनायकप्रतीतेः समासोक्तिः । 'विशेषणानां तौल्येन यत्र प्रस्तुतवर्तिनाम् । अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥' इति लक्षणात् । इदं चालंकारद्वयमन्योन्यनैरपेक्ष्यात्संसृष्टं सद्रागिणीवेत्युपमासापेक्षितत्वात्तया संकीर्यत इति संक्षेपः । वसन्ततिलकावृत्तम् ॥

---

१. 'प्रेतनाथातिथीकृतः' इति पाठः. २. 'रघुनायकसायकेन' इति पाठः. ३. 'स्नेहान्वितेन' इति पाठः. ४. 'प्राणावली' इति पाठः.

अथ निशिचरमाथाद्वीतवैतानविघ्नो
मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं
यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५२ ॥

**अथेति** । अथानन्तरं मुनिर्विश्वामित्रः । मथ्यत इति माथो मथनम् । कर्मण्यण् । निशिचराणां राक्षसानां माथात्संहरणाद्धेतोर्वीतवैतानविघ्नो निरस्तयागीयान्तरायः सन् । विश्वहृद्यं विश्वजनमनोहरम् । लोकद्रोहिराक्षससंहरणपूर्वकत्वाल्लोकोपकारकत्वाच्च सकलसंमतमित्यर्थः । अवभृथकृत्यं दीक्षान्तस्नानादिकर्म । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । समाप्य कृत्वा । आजौ युद्धे । 'समित्याजिसमिद्युधः' इत्यमरः । जयलक्ष्म्या विजयश्रिया समेतं सहितं रामं श्रीरामभद्रं यजने जनकयज्ञे जनिता मूर्तिर्यस्यास्तया । तत्रावतीर्णयेत्यर्थः । अव्याजलक्ष्म्या सीतारूपिण्या निजया श्रीदेव्या योक्तुं संघटयितुममनुताबुध्यत । यागार्थं जनकेनाहूतो भगवान्विश्वामित्रस्तत्र धनुर्भङ्गपूर्वकं विष्णुमूर्तेः श्रीरामस्य सीतालक्ष्मीविवाहो भविष्यतीति मनसि निश्चित्य लक्ष्मणानुगतं श्रीरामं नेतुमैच्छदित्यर्थः । अत्रेदं पुराणवचनम्—'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषानपायिनी ॥' इति । मालिनीवृत्तम् ॥

तदनु मुनिः श्रीरामं प्रति निजवंशकथां कथयितुं प्रारभतेत्याह—

अथ मिथिलां प्रति प्रस्थितः कौशिकः[३] काकुत्स्थमित्थमकथयत् ।

**अथेति** । अथानन्तरं मिथिलां जनकनगरीं प्रस्थितः प्रवृत्तः कौशिको विश्वामित्रः काकुत्स्थं श्रीरामं प्रतीत्थं वक्ष्यमाणरीत्याकथयत् ॥

तदेव विवृणोति—

पुरा खलु कुशेशयासनजन्मा कुशाभिधानो[४] राजर्षिः कुशाम्ब-[५]प्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः[६] पुत्री बभूव ।

**पुरेति** । पुरा खलु पूर्वकाले । खलुशब्दः किलार्थको वाक्यालंकारे वा । कुशेशयासनात्कमलासनाद्ब्रह्मणो जन्म यस्येति व्यधिकरणबहुव्रीहिः । 'अवार्यो बहुव्रीहिर्जन्माद्युत्तरपदः' इति वामनः । 'शतपत्रं कुशेशयम्' इत्यमरः । कुशाभिधानः कुशनामा राजर्षी राजोत्तमः कौशाम्बीमहोदयो धर्मारण्यं गिरिव्रजश्चेत्याख्या यासां तासां पुरीणां पट्टणानां कर्तृभिरुद्देशक्रमेणैव निर्मातृभिः कुशाम्बः प्रमुख आद्यो येषां तैः कुशाम्बकुशनाभाधूर्तरजसवसुनामभिश्चतुर्भिः कुमारैः पुत्री पुत्रवान्बभूव । कुशाम्बादींश्चतुरः पुत्रान्महापौरुषशालिनो जनयामासेत्यर्थः । तत्र कुशाम्बेन निर्वृत्ता

---

१. 'घाताच्छान्त' इति पाठः. २. 'विश्वामित्रः' इति पाठः. ३. 'काकुत्स्थयोः' इति पाठः. ४. 'कुशिकाभिधानो' इति पाठः. ५. 'कुशनाभकुशाम्ब' इति पाठः. ६. 'कर्तृभिश्चतुर्भिः' इति पाठः.

कौशाम्बीत्यन्वर्थसंज्ञा । 'तेन निर्वृत्तम्' इत्यण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । अन्यत्पुरत्रयमैच्छिकनामाङ्कितमित्यवगन्तव्यम् ॥

तत्र स्वपितामहस्य कुशनाभस्य वृत्तान्तमाह—

**कुशनाभस्तु घृताच्यां[1] कन्याशतमजनयत् ।**

**कुशनाभ इति** । कुशनाभस्तु । अवधारणार्थकस्तुशब्दः । घृताच्यामप्सरसि कन्याशतं शतसंख्याकाः कन्यका अजनयदुत्पादयामास ॥

**कन्यास्ताः संनद्धयौवनाः कामयमानः पवमानः प्रत्याख्यानात्प्रत्यापन्नमन्युरासामवयवेष्वनार्जवमतनुत ।**

**कन्या इति** । संनद्धयौवनाः संपूर्णतारुण्याः कन्याः कन्यकाः कामयमानोऽभिलषमाणः । उद्यानविहारसमय इति भावः । पवमानो वायुः प्रत्याख्यानात् 'वयं पित्रधीनाः, तमभ्यर्थय' इति परिहाराद्धेतोः प्रत्यापन्नमन्युरुत्पन्नक्रोधः सन् । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । आसां कुशनाभकन्यकानामवयवेष्वनार्जवं कौटिल्यमतनुत । वक्रपाणिपादास्ताश्चकारेत्यर्थः । तथा श्रीरामायणे—'तासां तद्वचनं श्रुत्वा वायुः परमकोपनः । प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥' इति ॥

**अथ विदितवृत्तान्तेन कुशनाभेन[2] तेन क्षममेव प्रतिक्रियां मन्यमानेन[3] चूलिसूनवे सौमदेयाय[4] राज्ञे ब्रह्मदत्ताय दत्तास्ताः[5] प्रकृतिस्था बभूवुः ।**

**अथेति** । अथानन्तरं विदितो विज्ञापितो वृत्तान्तः कन्यकाङ्गवैकल्यापादनरूपो यस्य तेन । तथा क्षमां क्षान्तिमेव । नतु क्रोधमित्येवकारार्थः । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । प्रतिक्रियां मन्यमानेन । क्षमैवात्रोचिता नतु क्रोध इति तूष्णींभूतेनेत्यर्थः । तेन कुशनाभेन चूलिसूनवे चूलिनामकमुनिपुत्राय सौमदेयाय सोमदाख्यगन्धर्वाङ्गनासंभूताय । चूलिना सोमदायामुत्पादितायेत्यर्थः । 'स्त्रीभ्यो ढक्' इति ढक् । ब्रह्मदत्ताय ब्रह्मदत्तनाम्ने राज्ञे दत्ता भार्यात्वेन प्रतिपादिताः सत्यस्ताः कन्यकाः प्रकृतिस्थास्तत्प्रभावाद्यथापूर्वरूपा बभूवुः ॥

**पुनरपि कुशनाभस्तु पुत्रीयन्पितुः[6] प्रसादादगाधसत्त्वान्गाधिसंज्ञानस्मत्तातपादानुदपादयत्[7] ।**

**पुनरिति** । कुशनाभस्तु पुनर्भूयोऽपि पुत्रीयन्पुत्रमात्मन इच्छन् । आनृण्यार्थमिति भावः । 'सुप आत्मनः क्यच्' । पितुः कुशस्य राज्ञः प्रसादादनुग्रहादस्मत्तातपादानस्मत्पितरम् । गाधिमित्यर्थः । उपपादयदुत्पादितवान् । 'तातस्तु जनकः पिता' इत्यमरः । तातपादानिति बहुवचनं पूजार्थं गौडपादानितिवत् ॥

---

१. 'कन्याशतं घृताच्याम्' इति पाठः. २. 'कुशनाभेन क्षमामेव' इति पाठः. ३. 'मन्वानेन' इति पाठः. ४. 'सौमतेयाय' इति पाठः. ५. 'प्रदत्ता' इति पाठः. ६. 'पितृप्रसादाद' इति पाठः. ७. 'प्रसादादस्मत्तात' इति पाठः.

इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशमननिरायामयामिनीयामानुवन्धो वन्धूकस्तवकसुन्दरवन्धुरेण संध्यारागेण प्राचीमुखेन शोणीकृतेन शोणाभिधानं दधानेन नदेन प्रवर्तितप्रत्यूषकृत्यः कृतनियमेन मुनिना सह गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत।

इत्थमिति। इत्थमनेन प्रकारेण दाशरथिः श्रीरामः कौशिकोत्पत्तिकथाया विश्वामित्रोदयोपाख्यानस्य निशमनेनाकर्णनेन निरायाम आयामरहितः। अदीर्घ इति यावत्। यामिन्या निशाया यामानुवन्धः प्रहरानुवृत्तिर्यस्य स तथोक्तः। कथाश्रवणजनितकौतूहलपारवश्यात्संकुचितवत्प्रतीयमानत्रियाम इत्यर्थः। 'द्वौ यामप्रहरौ समौ' इत्यमरः। तथा बन्धूकस्तवकवद्बन्धूकपुष्पगुच्छवत्सुन्दरं रमणीयं सद्बन्धुरं मनोज्ञं तेन संध्यारागेण संध्यारागवता। 'अरुणोदयवशाल्लोहितायमानेनेत्यर्थः। 'वन्धूको बन्धुजीवकः' इत्यमरः। प्राचीमुखेन पूर्वदिग्भागेन [कर्त्रा] शोणीकृतेनानुरञ्जितेन। स्वसावर्ण्यमासादितेनेत्यर्थः। अभूततद्भावे च्विः। 'अस्य च्वौ' इति दीर्घः। शोण इत्यभिधानं नाम दधानेन धारयता। दधातेः कर्तरि शानच्। नदेन कासारविशेषेण [ करणेन ] शोणाख्यपुण्यप्रवाहजलेनेत्यर्थः। प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदाः नर्मदां विनेत्याहुः। 'शोणस्तरलपादपे। नदेऽग्नौ रक्ततरुगे रागे' इत्यभिधानात्। प्रवर्तितप्रत्यूषकृत्यो विहितप्रातःस्नानसंध्यावन्दनादिनित्यकर्मतन्त्रः सन् कृतनियमेन विरचितानुष्ठानेन मुनिना सह विश्वामित्रेण साकम्। 'साकं सत्रा समं सह' इत्यमरः। गङ्गां भागीरथीमुपतिष्ठमानेनानुसरता पथा। गङ्गाप्रापकमार्गेणेत्यर्थः। प्रातिष्ठत प्रावर्तत। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। पथेत्यत्र तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानात्तृतीयोपपत्तिः। समेन धावतीतिवत्तत्रापि पथः करणत्वस्य प्रतीयमानत्वात्कर्तृकरणयोरेव तृतीयेति भाष्यकारः। यथाह कालिदासः— 'दक्षिणेन प्रवृत्ता' इति। वन्धूकस्तवकसुन्दरेत्यत्रोपमा। शोणीकृतेनेत्यत्र नदस्य स्वनैर्मल्यं विहाय प्राचीमुखरागहरणोक्तेस्तद्गुणालंकारः। 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात्॥

आजानपावनक्षीरां वृषानन्दविधायिनीम्।
श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव॥ ५४॥

आजानेति। सोऽयं श्रीराम आजानपावनं स्वभावशुद्धं क्षीरं नीरं यस्यास्ताम्। 'शुद्धं भागीरथीजलम्' इति वचनादिति भावः। आजानशब्दः स्वभावे रूढः। अथवा जनानां समूहो जानम्। 'तस्य समूहः' इत्यण्। आ समन्तात्। वहिरभ्यन्तरे चेत्यर्थः। जानं जनसमूहं पावयति स्नानपानाभ्यां पवित्रीकरोतीत्याजानपावनं क्षीरं यस्यास्तां तथोक्ताम्। 'क्षीरं स्यान्नीरदुग्धयोः' इति रत्नमाला। वृषैर्यमनियमादिभि-

---

१. 'निशमनेन निरायासा यामिनीमनुभूय' इति पाठः. २. 'स्तवकबन्धुरेण' इति पाठः. ३. 'प्राचीमुखे शोणीकृते' इति पाठः. ४. 'दधाने नदे' इति पाठः. ५. 'प्रत्यूषः कृत्यः' इति पाठः.

धर्मैर्य आनन्दस्तं विदधातीति वृषानन्दविधायिनीम्। तीर्थविशेषस्नाननियमादिकर्मणां निःश्रेयसहेतुत्वेन शास्त्रप्रसिद्धेर्ब्रह्मानन्दकरीमित्यर्थः। यद्वा वृषाणामानन्दमुल्लासं विदधातीति तथोक्ताम्। धर्मादिभिर्वृद्धिकरीमित्यर्थः। यद्वा वृषानानन्दं च विदधातीति तथोक्ताम्। समस्तधर्मनिर्वहणद्वारा निरतिशयानन्दानुसंधायिनीमित्यर्थः। 'वृषः स्याद्वासवे धर्मे सौरभेये च शुक्रजे। पुंराशिभेदयोः शृङ्ग्यां मूषिकश्रेष्ठयोरपि॥' इति विश्वः। 'सुकृते वृषभे वृषः' इत्यमरश्च। श्रुतिप्रणयिनीं श्रुतिपरिचिताम्। वेदप्रतिपाद्यामित्यर्थः। 'सितासिते सरिते यत्र संगते' इत्यादिश्रुतिप्रसिद्धत्वादिति भावः। प्रणयः स्यात्परिचये याञ्चायां सौहृदेऽपि च' इति यादवः। अथवा तरङ्गसंगतघुमघुमध्वनिभिः श्रोत्रानन्दकरीमित्यर्थः। 'श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः। अपां समूह आपम्। समूहार्थेऽण्। तेन गच्छतीत्यापगा। 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। उपपदसमासः। तां भागीरथीम्। लक्षणया तत्कूलमित्यर्थः। आप प्राप। कथमिव स्थिताम्। गां धेनुमिव स्थिताम्। धेनुं कीदृग्विधाम्। आजानपावनमाजन्मशुद्धं क्षीरं दुग्धं यस्यास्ताम्। वृषस्य वृषभस्यानन्दं विदधाति रतिप्रदत्वादिति तथोक्ताम्। श्रुतिप्रणयिनीं श्रुतिसखीम्। तत्कल्पामित्यर्थः। 'चत्वारि वाक्परिमितापदानि' इति श्रुत्या वेदवाचो धेनुत्वेन निरूपितत्वादिति भावः। तथा गां कामधेनुमिव स्थितां। कीदृशीं कामधेनुम्। आजानपावनक्षीरामिति समानम्। वृषस्य शक्रस्य। 'वासवो वृत्रहा वृषा' इत्यमरः। विष्णोर्वा आनन्दं विदधाति वाञ्छितार्थदोग्धृत्वादिति तथोक्ताम्। श्रुतिप्रणयिनीम् 'स्वर्गे लोके कामधुग्भवति' इत्यादिश्रुतिभिरुदाहरणीयामित्यर्थः। तथा गां भुवमिव स्थिताम्। कीदृशीं भुवम्। आजानपावनक्षीराम्। सकलपुण्यतीर्थाधारामित्यर्थः। यद्वा आजानपावनानि स्वतःपवित्राणि क्षीराणि क्षीरत्वेन परिणतानि रत्नमहौषधिप्रभृतिवस्तूनि यस्यास्ताम्। 'ताः क्षीरपरिणामिनीः' इति विष्णुपुराणात्। पूर्वं गोरूपधारिण्यास्तस्यास्तथा दुग्धत्वादिति भावः। अत्रार्थे प्रमाणं श्रूयते—'दुग्धा पुनर्दिव्यैर्वसुंधरा। महौषधीश्च भास्वन्ति रत्नानि विविधानि च। वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिः॥' इति रत्नौषधिप्रभृतीनामाजानपावनत्वं स्मृतिसिद्धं द्रष्टव्यम्। कामवर्षित्वाद्वृषो विष्णुः। 'तेजो वृषो द्युतिधरः सर्वशस्त्रभृतां वरः' इति सहस्रनामस्तोत्रे। तस्यानन्दं विदधाति पत्नीत्वेनेति तथोक्ताम्। 'विष्णुपत्नीं महीं देवीम्' इति श्रुतेः। श्रुतिप्रणयिनीम्। 'मेदिनी देवी वसुंधरा' इत्यादिश्रुतिप्रतिपाद्यामित्यर्थः। तथा गां भारतीमिव स्थिताम्। कीदृशीं भारतीम्। आजन्मशुद्धत्वादाजानपावना क्षीरसवर्णत्वात्क्षीरा। 'अग्निर्माणवकः' इत्यादिवद्गौणोऽयं प्रयोगः। अथवा क्षीरं क्षीरसावर्ण्यमस्या अस्तीति क्षीरा। अर्शआदित्वादच्प्रत्ययः। आजानपावना च क्षीरा च ताम्। 'स्त्रियाः पुंवत्—' इत्यादिनाजानपावनशब्दस्य पुंवद्भावः। सुरश्रेष्ठत्वाद्धर्मस्वरूपत्वाद्वा वृषो ब्रह्मा तस्यानन्दं विदधाति पत्नीत्वेनेति तथोक्ताम्। 'विरिञ्चिपत्नी कमलासनस्थिता सरस्वती नृत्यतु वाचि मे सदा' इत्यादिवचनादिति भावः। श्रुतिप्रणयिनीम्। श्रुतीत्युपलक्षणम्। श्रुतिस्मृतीतिहासपुराणागमादिरूपेण परिणतामित्यर्थः। 'गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि॥' इति केशवः। तदेवमुपमानेषूपमेये

चार्थपञ्चकवचनवत् अर्थपञ्चकवाच्यविषयश्चित्रभेदः । अत्र श्लेषस्य शुद्धविषयतयासंभवेन सर्वालंकारबाधकत्वादुपमाप्रतिभोत्थापितः प्रकृताप्रकृतश्लेषोऽयमिश्र-लंकारसर्वस्वकारः । एवंच पूर्णोपमाया निर्विषयत्वप्रसङ्गाच्छ्लेषप्रतिभोत्थापितेयमुपमैवेत्यन्ये ॥

**अथ भागीरथीकथां श्रोतुकामाय रामाय भगवानिदमभाषत।**

**अथेति** । अथानन्तरं भागीरथीकथां मन्दाकिन्युपाख्यानं श्रोतुमाकर्णितुं कामोऽभिलाषो यस्य तस्मै । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । श्रीरामाय भगवान् । 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इत्युक्तलक्षणो विश्वामित्र इदं वक्ष्यमाणम्। गङ्गावतरणवर्णनपरं वचनमित्यर्थः । अभाषतोक्तवान् ॥

अथ चतुस्त्रिंशता श्लोकैरानुष्टुभेन छन्दसा मन्दाकिन्युत्पत्तिप्रकारं वर्णयितुमारभते—

**पुरा मनोरमा नाम सुमेरोरभवत्सुता।**
**गृहमेधी तयैवासीच्चक्रवर्ती धराभृताम् ॥ ५५ ॥**

**पुरेति** । पुरा पूर्वं मनोरमा नाम । मनोरमेति प्रसिद्धेत्यर्थः । सुमेरोः सुता मेरुकन्यका । 'मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः' इत्यमरः । तया मनोरमयैव। परिग्रहान्तरव्यवच्छेदार्थमेवकारः । धराभृतां चक्रवर्ती पर्वतसार्वभौमो हिमवान्गृहमेधी गृहस्थ आसीत् । तामुपयेम इत्यर्थः । 'मेधृ संगमे' । इति धातोस्ताच्छील्ये णिनिः । गृहेषु संगतो गृहस्थ इत्यर्थः । अथवा । 'प्रजापतिरश्वमेधमसृजत । यो मेधायालभ्यते । आशासाना मेधपतिभ्यां मेधम्' इत्यादिश्रुतौ दर्शनान्मेधशब्दो यागवचनः यथा त्वमेव पितृमेध इतिवत् । 'दारेष्वपि गृहाः' इत्यमरः । गृहैः पत्न्या सह मेधो यस्येति गृहमेधी । सर्वधनीत्यादिवत्कर्मधारयादपि मत्वर्थीयप्रत्ययः ॥

**कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः।**
**अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी ॥ ५६ ॥**

**कन्येति** । अमुष्य मनोरमाजानेर्हिमवतः कन्याद्वयमासीत् । द्वे कन्ये समुत्पन्ने इत्यर्थः । तयोः कन्यकयोर्मध्य एका आद्या कन्या मन्दाकिनी इति नाम्ना प्रसिद्धाभूदित्यर्थः । अन्या द्वितीया कन्या साक्षाद्भगवती प्रत्यक्षपरमेश्वरी । अतश्चन्द्रचूडकुटुम्बिनी चन्द्रशेखरभार्या आसीदित्यर्थः । भविष्यदीश्वरपरिग्रहाभिप्रायेणेत्थं सिद्धपदाभिधानेनोक्तमित्यवगन्तव्यम् । 'भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरः ॥

**तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन्।**
**तपस्यन्तीं गिरिगौरीं देवाय महते ददौ ॥ ५७ ॥**

---

१. 'इत्थम्' इति पाठः. २. 'तु मेनका नाम' इति पाठः.

तामिति । विबुधा देवास्तां नदीं मन्दाकिनीं लब्ध्वा याञ्चापूर्वकं हिमवन्नियोगात्प्राप्य नाकलोकं स्वर्गलोकम् । 'आकाशे त्रिदिवे नाकः' इत्यमरः । अनीनयन्प्रापयामासुः । अतएव स्वर्णदीति प्रसिद्धिः । नयतेर्णौ चङ्युपधाह्रस्वोऽभ्यासदीर्घश्च । नीवह्योर्हरतेश्च द्विकर्मकता । तथा गिरिर्हिमवांस्तपस्यन्तीं तपश्चरन्तीम् । ईश्वरपरिग्रहलाभार्थमेवेति भावः । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्प्रत्ययः । गौरीं पार्वतीं महते देवाय महादेवाय ददौ भार्यात्वेन दत्तवान् । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी ॥

एवमन्ययोर्वृत्तान्तं संक्षेपेणोक्त्वा तत्र बह्वपेक्षितत्वान्मन्दाकिनीवृत्तान्तस्यादौ तमुपेक्ष्य सूचीकटाहन्यायेन गौरीवृत्तान्तं तावदाह—शिवयोरित्यादिपञ्चभिः ।

शिवयोर्युञ्जतोर्वीर्यं दृष्ट्वा[1] धात्र्यां समर्पितम्[2] ।
पावकः प्रतिजग्राह दैवतैरनुनाथितः[3] ॥ ५८ ॥

शिवयोरिति । शिवा च शिवश्च शिवौ तयोः शिवयोः पार्वतीपरमेश्वरयोः । 'पुमान्स्त्रिया' इत्येकशेषः । युञ्जतोर्मिथुनकर्मतत्परयोः सतोः । धात्र्यां भुवि समर्पितं निक्षिप्तम् । शिवेनैवेति शेषः । पार्वतीगर्भसमुत्पत्स्यमानमहाभूतप्रभीतैर्देवैर्वीर्यं भुवि समुत्सृजेति प्रार्थितत्वादिति भावः । वीर्यं रेतो दृष्ट्वा दैवतैरिन्द्रादिभिर्देवैरनुनाथितस्त्वमेव तद्गृहाणेति याचितः सन् । 'नाथृ याञ्चायाम्' इति धातोः कर्मणि क्तः । पावकोऽग्निः प्रतिजग्राह स्वीकृतवान् ॥

अनपत्यानथामर्त्यान्बहुभार्यां[4] च मेदिनीम् ।
अकरोदम्बिकाक्रोधः[5] पुत्रालाभसमुद्भवः ॥ ५९ ॥

अनपत्यानिति । अथानन्तरं पुत्रालाभसमुद्भवः पुत्राप्राप्तिजनितोऽम्बिकाक्रोधः पार्वतीकोपोऽमर्त्यान्देवाननपत्यानपुत्रकांस्तथा मेदिनीं भुवं बहूनां राज्ञां भार्यां चाकरोत् । कोपवशात्तथा शशापेत्यर्थः । तेषां स्वपुत्रलाभविघातकत्वादिति भावः । तथा रामायणे—'अथ शैलसुता राम त्रिदशानिदमब्रवीत् । समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ॥ यस्मान्निवारिता चैवं संगता पुत्रकाम्यया । अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ ॥ एवमुक्त्वा सुरान्सर्वाञ्शशाप पृथिवीमपि । अवनेऽनेकरूपा त्वं बहुभार्या भविष्यसि ॥' इति ॥

अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः ।
वह्निरह्नाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥ ६० ॥

अथेति । अथानन्तरं वह्निरग्निः । सेनां नयतीति सेनानीः सेनानायकः । 'सेनानीरग्निभूर्गुहः' इत्यमरः । नयतेः क्विप् । तं सेनान्यमिच्छद्भिः । तारकासुरसंहारार्थमिति भावः । सब्रह्मभिर्ब्रह्मादिभिः सुरैरुक्तो जाह्नव्यामेतन्निषिञ्चेति व्याहृतः सन् । अह्नाय झटिति । 'स्राग्झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः । ऐश्वर-

---

१. 'सुरतः' इति पाठः. २. 'भूत्वा धात्र्या' इति पाठः. ३. 'अनुमोदितः' इति पाठः. ४. 'तथा' इति पाठः. ५. 'कोपः' इति पाठः.

मीश्वरस्य संबन्धि वीर्यं तेजो जह्नोरपत्यं स्त्री जाह्नवी तस्यां मन्दाकिन्यां न्यषिञ्च-न्निक्षिप्तवान् ॥

**सापि सप्तार्चिषा क्षिप्तं तेजस्तद्वोढुमक्षमा ।**
**हिमवत्प्रान्तकान्तारे श्रान्ता शरवणे जहौ ॥ ६१ ॥**

**सेति** । सा जाह्नव्यपि सप्तार्चिषा वह्निना । 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः । क्षिप्तं निक्षिप्तं तदैश्वरं तेजो वीर्यं वोढुं धारयितुमक्षमासमर्था । अतएव श्रान्ता खिन्ना सती हिमवत्प्रान्तकान्तारे तुहिनभूधरनिकटकानने यच्छरवणं शरप्रचुरं वनं तत्र जहौ तत्याज । 'प्रनिरन्तःशर-' इत्यादिना वननकारस्य णत्वम् ॥

**तत्राभूत्कृत्तिकाप्रीत्यै षोढारूढमुखाम्बुजम् ।**
**तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः ॥ ६२ ॥**

**तत्रेति** । तत्र शरवणे कृत्तिकानां स्तन्यप्रदानार्थं देवैः प्रेरितानां षण्णां मातॄणां प्रीत्यै परितोषार्थं षोढा षड्भिः प्रकारैः । 'प्रकारवचने थाल्' । आरूढानि प्रादुर्भूतानि मुखाम्बुजानि वक्त्रकमलानि यस्य तत्तथोक्तम् । तासामवैषम्येन स्तन्यग्रहणार्थं गृहीतमुखषट्कमित्यर्थः । अतएव षण्णां मातॄणामपत्यं षाण्मातुरम् । 'षाण्मातुरः शक्तिधरः' इत्यमरः । 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्यण्प्रत्यय उकारश्चान्तादेशः । तारकस्तारकासुर एव ध्वान्तं तिमिरं तद्विध्वंसयति नाशयतीति तारकध्वान्तविध्वंसि महस्तेजः । कुमारस्वामीत्यर्थः । अभूज्जातम् । 'तेजो धाम महो विभा' इत्यमरः । रूपकालंकारः ॥

अथ वियद्गङ्गावतरणं प्रस्तौति—

**त्रैविध्यं श्रूयतां वत्स सरितस्त्रिदिवौकसाम् ।**
**यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे ॥ ६३ ॥**

**त्रैविध्यमिति** । हे वत्स श्रीराम । आदरातिशयेन संबोधनमेतत् । त्रिदिवः । स्वर्ग ओकः स्थानं येषां ते त्रिदिवौकसो देवास्तेषां संबन्धिन्याः सरितः । मन्दाकिन्या इत्यर्थः । अध्वरे यागे यथोक्तं शास्त्रविहितं हूयत इति हव्यमाज्यादिकमश्नन्त्या देवताया इव । अग्नेरिवेत्यर्थः । त्रैविध्यं त्रिप्रकारत्वम् । मया कथ्यमानमिति शेषः । श्रूयतामाकर्ण्यताम् । आहवनीयगार्हपत्यदक्षिणाग्निरूपेण तस्यापि त्रैविध्यसंभवादिति भावः । उपमालंकारः । एतेनात्यन्तपावनादिगुणयुक्तश्लाघ्यतास्याः सूच्यते ॥

तदेव विवृणोति—

**पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः ।**
**केशिनीसुमतिभ्यां च लङ्घितप्रथमाश्रमः ॥ ६४ ॥**

**पुरीमिति** । सावित्रः सवितृवंशोद्भवस्तथा केशिनीसुमतिभ्यां पत्नीभ्यां लङ्घितप्रथमाश्रमोऽतिक्रान्तब्रह्मचर्यः । गृहीतगृहस्थाश्रम इत्यर्थः । सगरो नाम नृपो राजा-

१ 'सोढुम्' इति पाठः.

योध्यां पुरीमयोध्याख्यां नगरीमध्यास्ताधिष्ठितवान् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥

स पुत्रीयन्सपत्नीकस्तपस्तेपे समाः शतम् ।
भृगुः प्रीतमनास्तस्मै ददौ दायादसंपदम् ॥ ६५ ॥

**स इति** । स सगरः पुत्रानात्मन इच्छन्पुत्रीयन् । 'सुप आत्मनः क्यच्' इति क्यच् । सह पत्नीभ्यां सपत्नीकः सन् । 'तेन सह' इति तुल्ययोगे बहुव्रीहिः । 'नद्यृतश्च' इति कप् । शतं समाः शतसंख्याकान्वत्सरान् । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । तपस्तेपे । तपश्चरणतत्परोऽभूदित्यर्थः । भृगुर्महर्षिः प्रीतमनास्तपसा संतुष्टान्तःकरणः सन् तस्मै सगराय दायादसंपदं सुतसंपत्तिं ददौ दत्तवान् । दायं विभक्तद्रव्यमत्तीति दायाद इति विग्रहः । 'दायादौ सुतबान्धवौ' इत्यमरः ॥

पुत्रसंपत्तिमेवाह—

असमञ्जं[2] सुतं लेभे वैदर्भी केशिनी तयोः ।
षष्टिं पुत्रसहस्राणां सुमतिश्च यवीयसी ॥ ६६ ॥

**असमञ्जमिति** । तयो राजपुत्र्योर्मध्ये विदर्भस्य राज्ञोऽपत्यं स्त्री वैदर्भी । 'तस्यापत्यम्' इत्यण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । केशिनी ज्येष्ठपत्न्यसमञ्जं नाम सुतं लेभे प्राप । स्वमनोरथानुसारेणेति भावः । तथा यवीयसी कनिष्ठा । युवशब्दादीयसुनि 'स्थूलदूर–' इत्यादिना गुणयणादिपरलोपौ । 'उगितश्च' इति ङीप् । सुमतिश्च पुत्रसहस्राणां षष्टिम् । षष्टिसहस्रसंख्याकान्पुत्रानित्यर्थः । लेभे । पूर्ववद्भावः । ततः परितोषितेन मुनिनैकपुत्रपक्षं षष्टिसहस्रसंख्याकपुत्रपक्षं च निर्दिश्यानयोः को वा पक्षोऽभिमत इति पृष्टे बहुपुत्रपोषणासमर्था केशिन्येकपुत्रमङ्गीचकार । अन्या त्वन्यमिति श्रीरामायणकथात्रानुसंधेया ॥

असमञ्जसचारित्रमसमञ्जमपोह्य[3] सः ।
आरब्धहयमेधः सन्नमुञ्चत तुरंगमम् ॥ ६७ ॥

**असमञ्जसेति** । स सगरोऽसमञ्जसचारित्रं पौरजनोपद्रवकारित्वादसाधुचरित्रमसमञ्जं केशिनीतनयमपोह्य त्यक्त्वा । गुणगृह्या एव महात्मानो न पक्षपातिन इति भावः । वक्ष्यति च—'सिद्धार्थको महामान्यस्तत्परित्यागमब्रवीत् । सरयूपातितानेकप्रजामारणकारणात्' इति । आरब्धहयमेध उपक्रान्ताश्वमेधः सन् । तुरंगममश्वमेधीयाश्वममुञ्चत त्यक्तवान् ॥

क्रव्यादवपुषा सोऽयमहारि हरिणा हयः ।
ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे ॥ ६८ ॥

**क्रव्यादेति** । सोऽयं हयोऽश्वमेधीयाश्वः क्रव्यादवपुषा राक्षसवेषधारिणा ।

---

१. 'हिमालये' इति पाठः. २. 'असमञ्जसुतम्' इति पाठः. ३. 'अपास्य' इति पाठः.

'राक्षसः कौणपः क्रव्यात्' इत्यमरः । हरिणेन्द्रेण । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति शाश्वतः । अहार्यपहृतः स्वपदभ्रंशभयादिति भावः । हरतेः कर्मणि लुङ् । 'भावकर्मणोः' इति चिण् । 'चिणो लुक्' । ततस्तदनन्तरं नष्टमपहृतं तमश्वमन्वेष्टुं परिमार्गितुं सुमत्या अपत्यानि पुमांसः सौमतेयाः षष्टिसहस्रसंख्याकाः सुमतिपुत्राः । 'स्त्रीभ्यो ढक्' इति ढक् । प्रतस्थिरे प्रस्थिताः । पित्राज्ञयेति भावः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥

सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः ।
चक्रुर्झर्झरितध्वान्तं नागलोकं नखांशुभिः ॥ ६९ ॥

**सर्वे इति ।** सर्वे षष्टिसहस्रसंख्याकाः सगरात्मजाः सगरपुत्राः सपर्वतां सशैलामुर्वीं भुवं खनन्तोऽवदारयन्तः सन्तः नखांशुभिर्नखकान्तिभिर्नागलोकं पातालं झर्झरितध्वान्तं विध्वंसितान्धकारं चक्रुः । सर्वामप्युर्वीं विचित्य तत्राश्वालाभात्तैरेव पातालपर्यन्तं भुवमवदारयाभासुरित्यर्थः । 'अधोभुवनपातालं बलिसद्म रसातलम् । नागलोकः' इत्यमरः ॥

त एते तपसा दीप्ते तमःस्तोमप्रमाथिनि ।
कापिले ज्वलने वीरा लेभिरे शलभोपमाम् ॥ ७० ॥

**तत इति ।** एते वीराः सर्वे सगरकुमारास्तपसा व्रतनियमोपवासादिकर्मणा दीप्ते ज्वलिते अतएव तमःस्तोममन्धकारपटलं गाढाज्ञानं च प्रकर्षेण मथ्नाति नाशयतीति तथोक्ते । ताच्छील्ये णिनिः । कापिले कपिलमहर्षिरूपेणावतीर्णस्य विष्णोः संबन्धिनि ज्वलने कोपाग्नौ शलभोपमां शलभसादृश्यं लेभिरे प्राप्ताः । कपटनाटकपटुना महेन्द्रेण पाताले कपिलनिकटनिबद्धमश्वं दृष्ट्वा 'अश्वापहर्तायं लब्धः' इति तं बाधयन्तः सर्वे सगरकुमाराः कोपानलेन भस्मीकृता इत्यर्थः ॥

असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत् ।
सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति ॥ ७१ ॥

**असमञ्जेति ।** अथानन्तरं सगरोऽसमञ्जस्य केशिनीतनयस्य सुतमंशुमन्तमंशुमन्नामानं पौत्रं प्रत्यब्रवीदुवाच । किमिति । भवान्सप्तिमश्वमेधीयहयं हृत्वानीय । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । सप्तभिर्गायत्र्यादिभिश्छन्दोभिस्तन्यत इति सप्ततन्तुः । सप्त तन्तवः संस्था यस्येति वा सप्ततन्तुरश्वमेधक्रतुः । 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः । 'सितनिगमि—' इत्यादिना औणादिकस्तुन्प्रत्ययः । तं समाधत्ताम् । समापयत्वित्यर्थः । अन्यथा महाननर्थो भूयादिति भावः । 'शेषे प्रथमः' इति प्रथमः ॥

सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान्पितॄन् ।
साश्रुस्तेभ्योऽञ्जलिं दित्सुश्चिरंल्लेभे तुरंगमम् ॥ ७२ ॥

१. 'जलम्' इति पाठः. २. 'चिरात्' इति पाठः.

**स इति** । सोऽप्यंशुमानपि विलं पातालकुहरं गत्वा तत्र विले[1] भस्मीकृतान्निर्दग्धान् । अभूततद्भावे च्विः । 'अस्य च्वौ' इति दीर्घः । पितॄन्पितृस्थानीयान्सौमतेयान्दृष्ट्वा साश्रुः कृतरोदनस्तथा तेभ्यः पितृभ्योऽञ्जलिं तर्पणाञ्जलिं दित्सुर्दातुमिच्छुः सन् । ददातेः सन्नन्तादुप्रत्ययः । 'सनि मीमा—' इत्यादिना इसादेशः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । चरन्पर्यटंस्तुरंगममश्वमेधीयाश्वं लेभे प्राप ॥

**मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत् ।**
**गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा ॥ ७३ ॥**

**मातुल इति** । तेषां सौमतेयानां मातुलो मातृभ्राता । 'मातुर्भ्राता तु मातुलः' इत्यमरः । गरुडो गरुत्मांस्तत्र पाताल एनमंशुमन्तं प्रत्येवमनेन प्रकारेणाब्रवीत् । परमकारुणिकात्संवन्धवशाच्च भागिनेयानां तरणोपायमुपदिदेशेत्यर्थः । तदेव विवृणोति । हे आयुष्मन्नित्यादरादामन्त्रणम् । गङ्गां मन्दाकिनीमिह पाताल आनय प्रापय । एषा गङ्गा एषां भस्मीकृतानां सौमतेयानां परा गतिः । परलोकप्रापिकेत्यर्थः । तद्व्यतिरेकेण न कश्चित्तरणोपायोऽस्तीति भावः ॥

**ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरंगमः ।**
**समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः ॥ ७४ ॥**

**तत इति** । ततस्तदनन्तरं सगरो लब्धतुरंगमः प्राप्ताश्वमेधीयाश्वः सन् । अंशुमतानीतत्वादिति भावः । तनयानां वृत्तान्तं विनाशवार्तां श्रुत्वा । अंशुमन्मुखादिति शेषः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । सत्रमश्वमेधयागं समाप्य निर्वर्त्य पुत्रशोकात्पुत्रनाशजनितशोकाद्धेतोर्दिवं स्वर्गं गतः ॥

**अथांशुमानयं राज्यं चिराय परिपालयन् ।**
**दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये ॥ ७५ ॥**

**अथेति** । अथानन्तरमयमंशुमान् । राज्ञः कर्म राज्यम् । पुरोहितादित्वाद्यक्प्रत्ययः । चिराय । चिरकालमित्यर्थः । 'चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः' इत्यमरः । विभक्तिप्रतिरूपकमव्ययमेतत् । परिपालयन्संरक्षयन् । ततो दिलीपे दिलीपनाम्नि स्वपुत्रे न्यस्तभूभारो निक्षिप्तभूपालनकृत्यः सन् । हिमस्यालयः स्थानमिति हिमालयस्तस्मिन्हिमवत्पर्वते तपस्तेपे । गङ्गाया भूलोकावतारणार्थं तपश्चर्यातत्परोऽभूदित्यर्थः । 'न भवति कुलधुर्ये सूर्यवंश्यो गृहाय' इति स्वकुलाचारपर्यवसितमस्य तपो न गङ्गानयनायैवेति तात्पर्यम् ॥

**दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः ।**
**अमर्त्यसरितं कर्तुं मेने मर्त्यतरंगिणीम् ॥ ७६ ॥**

**दिलीप इति** । दिलीपेऽपि दिवं याते स्वर्गं गते सति भगीरथो दिलीपपुत्रो वृत्तम् । पितृतर्पणार्थं संचरन्तमंशुमन्तं प्रति गरुडेनोक्तं वृत्तान्तमित्यर्थः । श्रुत्वा ।

१. अस्य पूर्वम् 'पितॄन्विधातुं सुगतीन्विदधे मतिमान्मतिम्' इति क्वचित्पाठः.

अमर्त्यसरितं सुरनदीं मर्त्यतरंगिणीं मानुषनदीं कर्तुं मेने । पितृतर्पणार्थं स्वर्णदीं भुवमवतारयितुमुद्योजितवानित्यर्थः ॥

**ततो गोकर्णमासाद्य तपस्यति भगीरथे ।**
**देवो देवापगां वोढुमन्वमंस्त दयानिधिः ॥ ७७ ॥**

**तत इति** । ततस्तदनन्तरं भगीरथे गोकर्णाख्यसिद्धक्षेत्रमासाद्य तपस्यति तपश्चरति सति । देवप्रसादार्थमिति भावः । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यच् । दया निरवधिपरदुःखप्रहाणेच्छा तस्या निधिः । दयासमुद्र इत्यर्थः । देवो गोकर्णेश्वरो देवापगां सुरनदीं वोढुं शिरसा धारयितुमन्वमंस्ताङ्गीकृतवान् । अनुदात्तत्वादिट्प्रतिषेधः ॥

अथ गङ्गावतरणं चतुर्भिः श्लोकैः कुलकेनाह—

**अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ।**
**शशाङ्कशङ्खसंभिन्नतारामौक्तिकदन्तुरा ॥ ७८ ॥**

**अथेति** । अथानन्तरं वीचीचयैस्तरंगपरम्पराभिश्छन्नमाच्छादितं दिगन्तगगनान्तरं नभोऽन्तरालं च यस्याः सा । शशाङ्कश्चन्द्र एव शङ्खस्तेन संभिन्नानि संगतानि तारा नक्षत्राण्येव मौक्तिकानि मुक्तामणयस्तैर्दन्तुरा व्याप्ता । 'दन्त उन्नत उरच्' इत्युरच् । 'नक्षत्रमृक्षं भं तारा' इत्यमरः । रूपकालंकारः ॥

**तरंगाकृष्टमार्तण्डतुरंगायासितारुणा ।**
**फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा ॥ ७९ ॥**

**तरंगेति** । पुनस्तरंगैराकृष्टामार्गप्रवर्तिता ये मार्तण्डतुरंगाः सूर्यरथाश्वास्तैरायासितः पुनर्निजमार्गप्रवर्तनक्लेशवान्कृतोऽरुणः सूर्यसारथिर्यस्याः सा । 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरः । तथा फेनैर्डिण्डीरमण्डलैश्छन्न आच्छादितो यः स्वमातङ्ग ऐरावतस्तस्य मार्गणेऽन्वेषणे व्यग्रः संभ्रान्तो वासवो यस्याः सा । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरशेषः । ऐरावतस्य शुभ्रत्वेन विविच्य ग्रहीतुमशक्यत्वादिति भावः । अतएव सामान्यालंकारः । 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात् ॥

**आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा ।**
**प्लवोदकनभोमार्गदिग्व्यूढदिवसेश्वराः ॥ ८० ॥**

**आविरिति** । पुनराविर्भूताभिः प्रत्यक्षाभिः शाखाभिः पल्लवपुष्पादिभिरभिव्यञ्जकैरुन्नेयमनुमेयं नन्दनद्रुमाणां मन्दारादिपुरंदरोद्यानतरूणां कर्षणं विलेखनं यस्याः सा । अनुमानप्रकारस्तु—इयं मन्दाकिन्याकृष्टनन्दनद्रुमा भवितुमर्हति । तत्पुष्पपल्लवकीलितत्वात् । या नैवं सा नैवं यथा गोदावरीति केवलव्यतिरेकी । अथवा आविर्भूताभिः शाखाशिखाभिः शाखाग्रैरुन्नेयमभ्यूहनीयं नन्दनद्रुमाणां कर्षणमाकर्षणं यस्याः सा । प्रकाण्डानां जलनिमग्नत्वात् । संलक्ष्यमाणशिखामात्रोत्प्रेक्षणीय-

१. 'शाखि' इति पाठः।

नन्दनद्रुमोत्पादिकेत्यर्थः। तथा एकोदकः केवलजलाप्लुतो नभोमार्गो यस्याः सा अतएव दिङ्मूढो दिग्भ्रान्तिमान्दिवसेश्वरः सूर्यो यस्याः सा तथोक्तेति कृतबहुव्रीह्योर्विशेषणयोर्मिथोविशेषणविशेष्यभावविवक्षायाम् 'विशेषणं विशेष्येण बहुलम्' इति समासः। यद्वा—एकोदकः केवलजलप्रायो यो नभोमार्गस्तस्मिन्दिङ्मूढो दिवसेश्वरो यस्याः सा। अथवा एकोदका जलप्रचुरा नभोमार्गो दिशश्च यया सा एकोदकनभोमार्गदिक्। अतएव मूढो मन्दरश्मिर्दिवसेश्वरो यस्याः सा तथोक्तेति व्यस्तसमासो वा॥

**आवर्तगर्तसंभ्रान्तविमानप्लवविप्लवा।**
**नीलजीमूतशैवालकृतरेखाहरित्तटा॥ ८१॥**

**आवर्तेति।** पुनः—आवर्ता अम्भसां भ्रमास्त एव गर्ताः प्रदरास्तेषु संभ्रान्ताः परिभ्रममाणा ये विमाना व्योमयानानि तेषां प्लवविप्लवा उन्मज्जननिमज्जने यस्याः सा तथोक्ता। 'स्यादावर्तोऽम्भसां भ्रमः'। 'व्योमयानं विमानो स्त्री' इत्यपि चामरः। अथवा विमाना एव प्लवा उडुपानि तेषां विप्लवो विशिष्टप्लवनं यस्यां सा। 'उडुपं तु प्लवः कोलः' इत्यमरः। तथा नीलजीमूता नीलमेघास्त एव शैवालानि तैः कृता विरचिता रेखाः श्रेणयो येषां तानि तथोक्तानि हरित्तटानि दिक्कूलानि यया सा तथोक्ता। निजवेगासहिष्णुतया मेघानां दिक्कूलनिलयाच्छ्रेणीभूतमेघवत्कृतदिगन्तेत्यर्थः। 'जलनीली तु शैवालं शैवलः' इत्यमरः। जीवनस्य मूतः पुटबन्धो जीमूत इति विग्रहः। पृषोदरादित्वात्साधुः। रूपकालंकारः॥

**अवलेपभराक्रान्ता सुरलोकतरंगिणी।**
**पपात पार्वतीकान्तजटाकान्तारगह्वरे॥ ८२॥**

**अवलेपेति।** अवलेपो गर्वः स एव भरो भारस्तेनाक्रान्ताधिष्ठिता। मदीयवेगस्य को वा सोढेति समुत्पन्नमहागर्वेत्यर्थः। 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः। सुरलोकतरंगिणी मन्दाकिनी पार्वतीकान्तस्य धूर्जटेर्जटाकान्तारं जटागहनं तस्य गह्वरे महाकुहरे पपात। प्रावहदित्यर्थः। भाराक्रान्तस्य पतनं युक्तमेवेति भावः॥

**अलब्धनिर्गमा शंभोः कपर्दादमरापगा।**
**दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम्॥ ८३॥**

**अलब्धेति।** अमरापगा मन्दाकिनी शंभोः कपर्दाज्जटाजूटात्। 'कपर्दोऽस्य जटाजूटः' इत्यमरः। अलब्धनिर्गमाप्राप्तबहिःप्रसरा सती। तद्गर्वनिर्वापणकृत्यसंरम्भेण शंभुना तथाकृतत्वादिति भावः। दूर्वाशिखायां दूर्वाग्रे लग्ना संसक्ता या तुषारकणिका हिमबिन्दुस्तदुपमां तत्सादृश्यं दधौ धृतवती। तथात्यल्पतयालक्ष्यतेत्यर्थः। कर्तुमकर्तुमन्यथाकर्तुं समर्थस्य भगवतः शंभोः किं दुष्करमिति भावः। 'तुषारस्तुहिनं हिमम्' इत्यमरः। उपमालंकारः॥

**अदृष्ट्वा तां नदीं तत्र तुष्टाव परमेश्वरम्।**
**भगीरथो विधेः क्रौर्यात्परिक्षीणमनोरथः॥ ८४॥**

---

१. 'केवा' इति पाठः। २. 'मण्डल' इति पाठः।

अदृष्ट्वेति । भगीरथस्तत्र धूर्जटिजटागह्वरे तां नदीं मन्दाकिनीमदृष्ट्वानवलोक्य विधेः क्रौर्याद्दैवप्रातिकूल्यात्परिक्षीणः प्रणष्टो मनोरथो गङ्गावतरणरूपो यस्य स तथोक्तः सन् परमेश्वरं महादेवं तुष्टाव स्तुतवान् । गङ्गायाः पुनर्निर्गमनार्थमिति भावः॥

गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि ।
तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥ ८५ ॥

गङ्गेति । स्तुत्या भगीरथकृतस्तोत्रेण हेतुना प्रसन्नेन प्रसादमधिगतेन तेन परमेश्वरेण क्षिप्ता प्रेरिता गङ्गा सप्त आकृतयः स्रोतांसि यस्याः सा तथोक्ता जाता सती । एकधारासंपातेन हिमवान्न सहेतेति मत्वा सप्तभिः प्रवाहैः प्रवृत्ता सतीत्यर्थः। धरतीति धरः पर्वतः । हिमवानित्यर्थः । पचाद्यच् । 'अहार्यधरपर्वताः' इत्यमरः । तस्य मूर्धनि शिखरे न्यपतत्प्रथमं पपात । अथ बिन्दुसरसि बिन्दुसरोनामककासारविशेषेऽपि न्यपतत् । अत्रेदं रामायणविरुद्धम् । तत्र—'गगनाच्छंकरशिरस्ततो धरणिमाश्रिता' इत्येतावन्मात्रस्यैव कथनाद्धिमवन्मूर्ध्नि निपातस्याकथनात् । तथाच 'न्यपतद्धरमूर्धनि' इति पदविभागं कृत्वा व्याख्यानेऽसांगत्यपौनरुक्त्यदोषापत्तेः । अतो यथाश्रुतमेव युक्तमित्युत्पश्यामः । विरोधपरिहारस्तु—'शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरम्' इति भर्तृहरिवचनात् पुराणान्तराच्चापि नेयमित्यलमतिप्रसङ्गेन । 'गङ्गा सप्ताकृतिर्जाता न परं हरमूर्धनि' इति पाठे गङ्गा हरमूर्धनि परं सप्ताकृतिर्न जाता । अपि तु स्तुत्या प्रसन्नेन परमेश्वरेण बिन्दुसरस्यपि क्षिप्ता सती सप्ताकृतिर्जाता । सप्ता जटायुक्ता आकृतिर्यस्याः सा इत्येकत्र, अन्यत्र तु सप्तप्रकारा आकृतयः स्वरूपाणि यस्याः सा तथोक्तेत्यर्थः । अलंकारस्तु विरोधाभासः श्लेषानुप्राणितः । एवमर्थकल्पने न कोऽपि दोष इति प्रतिभाति ॥

तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥ ८६ ॥

तास्विति । तासु सप्तसु गङ्गासु तिस्रो ह्लादिनीप्रभृतयो गङ्गाः प्राचीं पूर्वदिशं प्रति गताः । तिस्रः सुचक्षुःप्रभृतयः प्राचेतसीं वारुणीं दिशम् । प्रतीचीमित्यर्थः । गताः । अन्या अवशिष्टा सप्तमी गङ्गा पितृक्रियायां पितृतर्पण उद्युक्तस्य भगीरथस्य । भगीरथस्य पन्थाः भगीरथपथः । 'ऋक्पूरब्धूः—' इत्यादिना समासान्तः । तमनुगच्छत्यनुसृत्य यातीति तथोक्ता । जातेति शेषः ॥

सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् ।
तां स पीत्वा ततः शान्तो जहौ श्रोत्रेण वर्त्मना ॥ ८७ ॥

सैति । सैषा भागीरथी भगीरथस्यापत्यं स्त्री गङ्गा जह्नोर्मुनेः सत्रक्षेत्रं यज्ञवाटं समावृणोत्समन्तादावृतवती । तत्र आवरणानन्तरं स जह्नुस्तां गङ्गां पीत्वा निजसत्रक्षेत्रावरणजनितकोपान्निपीय ततः शान्तो भगीरथकृतस्तुत्या प्रसन्नः सन् श्रोत्रेण वर्त्मना श्रोत्ररूपेण मार्गेण जहौ तत्याज ॥

---

१. 'मूर्धतः' इति पाठः. २. 'रथानुगा' इति पाठः.

**तया तटिन्यां जाह्नव्या प्रापयत्त्रिदिवं पितॄन् ।**
**भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥ ८८ ॥**

**तयेति** । भगीरथस्तया जह्नोरपत्येन जाह्नव्या । उत्तरीत्या तस्यापि जनकत्वादित्थं निर्देशः । तटिन्या गङ्गया पितॄन्कापिलानलभस्मीकृतान्सौमतेयांस्त्रिदिवं स्वर्गं प्रापयत् । गङ्गां पातालं नीत्वा भस्मीकृतान्पितॄंस्तयाप्लाव्य तत्संस्कारजनितपुण्यात्स्वर्गलोकनिवासिनश्चकारेत्यर्थः । आप्नोतेर्ण्यन्तात्कर्तरि लङ् । 'गतिबुद्धि–' इत्यादिना अणिकर्तुः कर्मत्वम् । ततः परिपूर्णमनोरथः सन् पुरीमयोध्यां प्राप प्राप्तः ॥

**अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां विलोक्य पुरीं कस्येयमिति गाधिनन्दनमपृच्छत् । सोऽप्येवमवोचत् ।**

**अथेति** । अथानन्तरमाकर्णिता विश्वामित्रमुखाच्छ्रुता भागीरथ्याः कथा उपाख्यानं येन स तथोक्तो दाशरथिः श्रीरामस्तां सरितं भागीरथीं विलङ्घ्य तीर्त्वा ततो विशालां विशालाख्यां पुरीं विलोक्य इयं परिदृश्यमाना पुरी कस्य राज्ञः संबन्धिनीत्येवं गाधिनन्दनं गाधितनयं विश्वामित्रमपृच्छत्पृष्टवान् । स गाधितनयोऽप्येवं वक्ष्यमाणप्रकारेणावोचदकथयत् ॥

तदेव विवृणोति—

**पुरा खलु सुरासुराणां सुधानिमित्तं मिथोविरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामास ॥**

**पुरेति** । पुरा खलु पूर्वकाले । खलुशब्दो वाक्यालंकारे । 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः । सुराश्चासुराश्च सुरासुराः । 'येषां च विरोधः शाश्वतिकः' इति नैकवद्भावः । येषां कार्यत एव विरोधः, गोव्याघ्रादिवन्न शाश्वतिकः इत्याहुः । अथवा सुरैः संगता असुरा इति मयूरव्यंसकादित्वात्समासः उत्तरपदलोपश्च । न तु सुराश्चासुराश्चेति द्वन्द्वः । तत्र हि 'येषां च विरोधः शाश्वतिकः' इत्येकवद्भावः स्यात् । तेषां सुरासुराणां देवदानवानां सुधानिमित्तम् । सुधालाभार्थमित्यर्थः । मिथोविरोधेऽन्योन्यवैरे प्रवृत्ते प्रसक्ते सति । विश्वरूपः प्रपञ्चस्वरूपः । अथवा विश्वानि विश्वरक्षणतत्पराणि रूपाणि मत्स्यकूर्माद्यवतारा यस्य स विश्वरूपः श्रीमन्महाविष्णुः । विश्वमोहिनीं जगन्मोहजननीं मायाम् । योषिदाकृतिमित्यर्थः । प्रदर्श्य दर्शयित्वा । अन्योन्यवैरदार्ढ्यापादनेन दैतेयानिन्द्रेण घातयितुं मायायोषिद्रूपेण स्वयमाविर्भूयेत्यर्थः । शतधारपाणिनेन्द्रेण । दैतेयविदलनसमर्थसाधनसंपन्नत्वद्योतनार्थं शतधारपाणिनेत्युक्तम् । शतधारं पाणौ यस्येति विग्रहः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति सप्तम्याः परनिपातः । दित्या अपत्यानि पुमांसो दैतेयाः । 'स्त्रीभ्यो ढक्' इति ढक् । तेषां निधनं नाशं कारयामास ।

---

१. 'प्राप्य' इति पाठः. २. 'पुरीं विलोकयन्' इति पाठः.

न चैतत्प्राघुर्णिकहस्तेन सर्पमारणम्, किंतु कपटनाटकसूत्रधारोऽयं निजमायावैचित्र्यप्रकटनार्थमित्थं कृतवानित्यवगन्तव्यम्। 'हृक्रोरन्यतरस्याम्' इत्यणिकर्तुः शतधारपाणेः कर्मत्वविकल्पत्वात्करणत्वम् ॥

ततः किं जातमित्यत्राह—

**तेषां[१] जननी दितिरतिवेलमन्युः[२] शतमन्युशासनं कमपि पुत्रं लब्धुकामा पत्युर्मारीचस्य[३] वचनात्कुशप्लवे[४] सुचिरं तपश्चचार।**

तेषामिति। तेषां दैतेयानां जननी माता दितिरतिवेलमन्युः पुत्रविनाशात्समुत्पन्नोत्कटकोपा अतएव शतं मन्यवः क्रतवो यस्य स शतमन्युस्तं शास्ति शिक्षयतीति शतमन्युशासनम्। इन्द्रहन्तारमित्यर्थः। कर्तरि ल्युट्। 'मन्युः क्रोधे क्रतौ दैन्ये' इत्युभयत्रापि विश्वः। कमप्यनिर्वाच्यवलं पुत्रं लब्धुकामा प्राप्तुकामा सती। 'तुं काममनसोरपि' इति तुमुनो मकारलोपः। पत्युर्भर्तुः। 'पतिः समास एव' इति घिसंज्ञाभावः। मारीचस्य मरीचिब्रह्मपुत्रस्य कश्यपस्य वचनादाज्ञावचनात्कुशप्लवे विशालायाः पूर्वस्थाने तपोवने सुचिरं बहुकालं तपश्चचार। व्रतनियमोपवासादिरूपकर्माचरणतत्परा बभूवेत्यर्थः ॥

तदन्विन्द्रोऽपि तत्प्रतिक्रियां चकारेत्याह—

**तां कैतवेन शुश्रूषमाणः[५] शतधारपाणिः पादकलितकचकलापा[६]मापन्ननिद्रामपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम।**

तामिति। शतधारपाणिर्वज्रहस्तः। एतच्च विशेषणं भाविकार्योपयोगार्थमित्यवगन्तव्यम्। शतधारपाणिरिन्द्रः कैतवेन सति रन्ध्रे गर्भं निर्भेत्स्यामीति कपटेन तां दितिं शुश्रूषमाणस्तत्तत्कालोचितैरुपचारैः सेवमानः सन् पादयोः पादस्थाने कलितो निक्षिप्तः कचकलापः केशपाशो यया ताम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः। तथैवापन्ननिद्रां प्राप्तस्वापाम्। शय्यायां शिरःस्थाने पादौ पादस्थाने शिरः कृत्वा निद्राणामित्यर्थः। एतच्छास्त्रनिषिद्धमिति भावः। अतएव तामपवित्राशुचिरिति निर्वर्ण्यावलोक्य। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। अवगाहिततदीयजठरः प्रविष्टदित्युदरकुहरः सन् गर्भं पिण्डं सप्तधा सप्तभिः प्रकारैः। 'प्रकारवचने थाल्'। निर्भिद्य विदार्य निर्जगाम निर्गतः। जठरादिति शेषः। अपवित्रेत्यत्र अपवित्रामिति कर्मत्वे वक्तव्ये निपातेनेति शब्देनाभिहितत्वान्न द्वितीयेत्युक्तम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥

**दितिरपि विदिततनयवृत्तान्ता[७] तान्यपि खण्डान्याखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा।**

दितिरिति। इन्द्रनिर्गमनानन्तरार्थकोऽयमपिशब्दः। विदितो ज्ञातस्तनयस्य

---

१. 'तेषां तु' इति पाठः. २. 'अभ्युपगतमन्युः' इति पाठः. ३. 'मरीचेः' इति पाठः. ४. 'कुशप्लवने' इति पाठः. ५. 'शुश्रूषमाणः शक्रः' इति पाठः. ६. 'केश' इति पाठः. ७. 'कदना' इति पाठः.

गर्भस्थस्य वृत्तान्तो विच्छेदनरूपवार्ता यया सा तथोक्ता सती तानि सप्त सप्तसंख्याकान्यपि खण्डानि गर्भशकलान्याखण्डलेनेन्द्रेण सप्तमरुतो वाताभिमानिनीर्देवताः। आवहादीनां सप्तानां मरुतां स्थानपालानित्यर्थः। कारयित्वा तृतीयं विष्टपं स्वर्गं प्रविष्टा। आवहादीनां नामानि–'आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा। विवहाख्यः परीवाहः परावह इति क्रमात्॥ सप्तैते मारुतस्कन्धा महर्षिभिरुदाहृताः। आवहो वर्तयेद्वायुर्मेघोल्कावृष्टिविद्युतः॥ वर्तयेत्प्रवहश्चापि तथा मार्ताण्डमण्डलम्। संवहो मारुतस्कन्धस्तथा शीतांशुमण्डलम्। वर्तयेदुद्वहश्चापि तथा नक्षत्रमण्डलम्। पञ्चमो विवहाख्यस्तु तथैव ग्रहमण्डलम्॥ सप्तर्षिचक्रं स्वर्गङ्गां षष्ठः परिवहस्तथा। परावहस्तथा वायुर्वर्तयेद्ध्रुवमण्डलम्॥' इति॥

अस्तु तर्हि ततः किमित्याशङ्क्य प्रश्नस्योत्तरमाह—

**ततः।**

**अलम्बुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः।**
**विशालेति स्वनाम्नात्र विशालां विदधे पुरीम्॥ ८९॥**

**तत इति**। ततो दितेः स्वर्गप्रवेशानन्तरम्। **अलम्बुसायामिति**। इक्ष्वाकोर्युष्मद्वंशकूटस्थाद्राज्ञोऽलम्बुसायां अलम्बुसाख्यायां निजभार्यायां जात उत्पन्नः कश्चिन्महीपतिर्विशालो नाम राजा। अत्र कुशप्लवे स्वस्य यन्नाम विशाल इत्यभिधानं तेनैव। अङ्कितामिति शेषः। अतएव विशालेति नाम्ना प्रसिद्धां विशालां विस्तृतां पुरीं विदधे निर्ममे। 'वेः शालच्छङ्कटचौ' इति शालच्प्रत्ययः। विशालनिर्मितत्वमेव विशालपदप्रवृत्तिनिमित्तमित्यर्थः॥

**तदनु तद्वास्तव्येन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो भगवान्विश्वामित्रस्तत्र निशीथिनीं नीत्वा मिथिलां प्रति प्रस्थितः प्रतपसामुत्तमस्य गौतमस्याश्रमं प्रदर्श्य तद्दारानुषक्तां कथामित्थमकथयत्।**

**तदन्विति**। तदनु विशालानगरीवृत्तान्तकथनानन्तरं भगवान्पूज्यो विश्वामित्रस्तस्यां विशालायां वसतीति तद्वास्तव्यः तत्र वसन्। 'वसेस्तव्यत्कर्तरि णिच्' इति कर्तरि तव्यत्प्रत्ययो वृद्धिश्च। तेन सुमतिरिति नाम यस्य तेन सुमतिनाम्ना नृपतिना राज्ञा कृतातिथ्यो विहितातिथिसत्कारो राजपुत्राभ्यां रामलक्ष्मणाभ्यां सह सराजपुत्रः सन् तत्र विशालायां निशीथिनीं रात्रिम्। 'निशा निशीथिनी रात्रिः' इत्यमरः। नीत्वा गमयित्वा मिथिलां विदेहनगरीं प्रति प्रस्थितः सन् प्रतपसामुत्तमस्य महातपस्विप्रवरस्य गौतमस्य मुनेराश्रमं तपोवनं प्रदर्श्य तस्य गौतमस्य दारा भार्याहल्या तस्यामनुषक्तां तदनुबद्धां कथामुपाख्यानमित्थमनेन प्रकारेणाकथयत्कथयामास॥

तदेव विवृणोति—

**अत्रागमद्गौतमधर्मदाराननार्यजुष्टेन पथा महेन्द्रः।**
**स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥ ९०॥**

१. 'विशालः स्वेन नाम्नात्र' इति पाठः. २. 'सराजपुत्रौ विश्वामित्रः' इति पाठः. कृतस्ततो' इति पाठः.

अत्रेति। अत्राश्रमे महेन्द्रोऽनार्यजुष्टेनासाधुजनाचरितेन पथा। कितवमार्गेणेत्यर्थः। गौतमस्य धर्मदारान्धर्मपत्नीमहल्याम्। 'दाराः पुंसि च भूम्न्येव' इत्यभिधानात्। अगमद्ग्राम्यधर्मेण संगतवान्। गमेर्लुङ्। पुषादित्वाच्च्लेरङादेशः। स मुनिर्गौतमश्च क्रुधाहल्याजारत्वजनितक्रोधेन वृषाणं महेन्द्रम्। 'वासवो वृत्रहा वृषा' इत्यमरः। निर्वृषणं विगताण्डकोशम्। 'मुष्कोऽण्डकोशो वृषणः' इत्यमरः। तथा भार्यामहल्यां चादृश्याम्। पूर्वरूपपरित्यागेन पाषाणभावमापन्नामित्यर्थः। चकार तथा शशाप। उपजातिवृत्तम्॥

शापान्तं कथयति—

वनमेतद्गते रामे शापमुक्ता भविष्यसि।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥ ९१॥

वनमिति। रामे श्रीरामचन्द्र एतद्वनमेतदरण्यं गते प्राप्ते सति शापात्पाषाणभावनिर्बन्धरूपान्मुक्ता भविष्यसि। श्रीरामचन्द्रपदारविन्दरजःकणस्पर्शादेव मच्छापपरिप्राप्तां पाषाणभावावस्थां विहाय निजशरीरं प्राप्स्यसीत्यर्थः। इत्यनेन प्रकारेण गौतमः पत्नीमहल्यां प्रत्युक्त्वा तपसे तपश्चर्यार्थं हिमाद्रिं ययौ प्राप॥

इत्थं विदितवृत्तान्ते देवतानां गणे तदा।
पितृणां प्राभवाल्लेभे मेषस्य वृषणं वृषा॥ ९२॥

इत्थमिति। इत्थमनेन प्रकारेण देवतानां गणेऽग्न्यादिदेवसङ्घे विदितवृत्तान्ते गौतमशापादिन्द्रो निर्वृषणोऽभूदिति विज्ञातवृत्तान्ते सति तदा तस्मिन्समये वृषेन्द्रः पितृणां पितृदेवतानां प्राभवान्माहात्म्यान्मेषस्य हविष्ट्वेन कल्पितस्यैडकाख्यपशुविशेषस्य वृषणं लेभे प्राप। मेषवृषणं छित्त्वैतद्वृषणस्थाने योजयामासुरित्यर्थः। अतएव 'मेषवृषण इन्द्रः' इति लोकवेदयोः प्रसिद्धिः। 'मेण्ढोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः॥

तदेनामेनसो मुक्तां प्रतिगृह्णातु गौतमः।
इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥ ९३॥

तदिति। तत्तस्मात्कारणाद्गौतम एनसो महेन्द्रसंभोगजनितपापान्मुक्ताम्। युष्मत्पादरजोमहिम्नेति शेषः। एनामहल्यां प्रतिगृह्णातु पुनः स्वीकरोतु। इति। उक्त्वेति शेषः। इतिनैव गम्यमानार्थत्वादप्रयोगः। प्रयोगे वा पौनरुक्त्यमित्यालंकारिकाः। कौशिको विश्वामित्रो रामेण साकं तस्य गौतमस्याश्रमं भेजे प्राप॥

दुःखे सुखे च रज एव बभूव हेतु-
स्तादृग्विधे महति गौतमधर्मपत्न्याः।
यस्माद्गुणेन रजसा विकृतिं गता सा
रामस्य पादरजसा प्रकृतिं प्रपेदे॥ ९४॥

---

१. 'ततो' इति पाठः। २. 'ततः। दुःखे' इति पाठः।

दुःख इति । तादृग्विधे तादृक्प्रकारे । अनिर्वाच्य इत्यर्थः । महत्यनल्पे च गौतमधर्मपत्न्या अहल्याया दुःखे पाषाणावस्थाजनितक्लेशे सुखे पूर्वरूपाप्तिजनितानन्दे च विषये रज एव रजोगुणो रेणुश्च । एवकारोऽवधारणार्थकः । हेतुः कारणं बभूव । कुतः । यस्मात्कारणात्सा गौतमधर्मपत्नी गुणेन गुणरूपेण रजसा । रजोगुणेनेत्यर्थः । विकृतिं गता पाषाणावस्थाविकारं प्राप्ता । तथा रामस्य श्रीरामचन्द्रस्य पादरजसा चरणरेणुना प्रकृतिं पूर्वरूपं प्रपेदे । श्रीरामचन्द्रचरणारविन्दरजःसंपर्कात्पाषाणत्वं विहाय निजाकृतिं प्रापेत्यर्थः । 'रजो रजोगुणे रेणावार्तवे च' इति नानार्थरत्नमाला । रज इति केवलप्रकृतगोचरः श्लेषालंकारः । यद्यपि पूर्वमदृश्यां चकारेत्युक्तम्, नतु पाषाणावस्थाम्, तथा 'विकृतिं गता प्रकृतिं प्रपेदे' इत्यनेन पद्मपुराणोक्तपाषाणावस्था सूच्यते । तथाच पाद्मे—'सा ततस्तस्य रामस्य पादस्पर्शान्महात्मनः । अभूत्सुरूपा वनिता समाक्रान्ता महाशिला ॥' इति । गुहेनाप्युक्तम्—'क्षालयामि तव पादपङ्कजं नाथ दारुदृषदोः किमन्तरम् । मानुषीकरणचूर्णमस्ति ते पादयोरिति कथा प्रथीयसी ॥' इति । महानाटकेऽप्युक्तम्—'शिला कम्पं धत्ते शिव शिव वियुङ्क्ते कठिनतामहो नारीच्छायामयति वनितारूपमयते । वदत्येवं रामे विकसितमुखी वल्कलमुरःस्थले धृत्वा बध्वा कचभरमुदस्थादृषिवधूः ॥' इति । अन्यत्र गौतमेन च—'पदकमलरजोभिर्मुक्तपाषाणदेहामलभत यदहल्यां गौतमो धर्मपत्नीम् । त्वयि चरति विशीर्णग्राविण विन्ध्याद्रिपादे कति कति भवितारस्तापसा दारवन्तः ॥' इति । वसन्ततिलकावृत्तम् ॥

**तस्मिन्नहल्यया[1] गौतमेन च कृतमातिथ्यं विश्वामित्रः सराजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुवि[2] जनकयजनभवनमभजत ।**

तस्मिन्निति । तस्मिन्नाश्रमे विश्वामित्रोऽहल्यया गौतमेन च कृतातिथिसत्कारं सराजपुत्रः श्रीरामलक्ष्मणसहितः सन्प्रतिगृह्य स्वीकृत्य मिथिलोपकण्ठभुवि विदेहनगरान्तिकप्रदेशे जनकस्य यजनभवनं यज्ञशालामभजत प्राविशत् । 'विदेहो मिथिलापुरी' । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इति चामरः ॥

**तदनु जनकेन विधिवदभ्यर्चिते[3] तस्मिन्निमिकुलपुरोधाः[4] शतानन्दो रघुनन्दनमेवमभाषत ।**

तदन्विति । तदनु यज्ञशालाप्रवेशानन्तरं तस्मिन्विश्वामित्रे जनकेन राज्ञा विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' इति वतिप्रत्ययः । अभ्यर्चिते पूजिते सति निमिर्नाम राजा विदेहानां कूटस्थस्तत्कुलपुरोधास्तद्वंशपारम्पर्यागतपुरोहितः । पुरस्तादेव राज्ञो हितं धत्ते पुरोधाः इति विग्रहः । 'पुरोधास्तु पुरोहितः' इत्यमरः । शतानन्दो गौतमपुत्रो मुनिः रघुनन्दनं श्रीरामं प्रत्येवं वक्ष्यमाणप्रकारेणाभाषतावोचत् । विश्वामित्रमाहात्म्यं वक्तुमुपचक्रामेत्यर्थः ॥

---

१. 'अहल्यया कृत' इति पाठः. २. 'भुवि जातं' इति पाठः. ३. 'अभ्यर्चिते' इति पाठः. ४. 'तस्मिन्कुशिकसुते निमि' इति पाठः.

तदेव विवृणोति—

**तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-**
**रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।**
**सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष**
**क्रोशन्तीं तां तयैव प्रचुरबलजुषा कांदिशीको बभूव॥ ९५॥**

**तिष्ठन्निति।** असावयमिति हस्तनिर्देशः। मुनिर्मननशीलो विश्वामित्रः क्षत्रार्हवृत्तौ क्षत्रवर्णयोग्यव्यापारे। 'क्षात्रार्ह-' इति पाठे क्षत्रधर्मयोग्यव्यापारे। तिष्ठन्वर्तमानः सन्। पुरेति शेषः। ब्रह्मसूनोर्वसिष्ठस्याश्रमं तपोवनमगमत्प्राप। आखेटकयात्रायामिति शेषः। अथ तत्राश्रमे निरवधि निर्मर्यादम्। षड्रसोपेतं चतुर्विधमृष्टान्नपानादिसमृद्धतया निर्वक्तुमशक्यमित्यर्थः। आतिथ्यमतिथिसत्कारं लब्ध्वा प्राप्य। वसिष्ठकृतमिति शेषः। ततः सुरभेः कामधेनोः। 'सुरभिर्गवि च स्त्रियाम्' इत्यमरः। प्राभवात्सामर्थ्यादित्येवमवेत्य ज्ञात्वा सा सुरभिस्तेन विश्वामित्रेण प्रार्थिता मह्यमियं दीयतामिति वसिष्ठमुद्दिश्य याचिताभूत्। तदनु याच्ञानन्तरं मुनिवरे मुनिश्रेष्ठे वसिष्ठे नाभ्युपेते। धेनुं दातुमनङ्गीकृतवति सतीत्यर्थः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। क्रोशन्तीमार्तस्वरं कुर्वतीं तां धेनुं चकर्ष बलात्कारेण नीतवान्। ततः प्रचुरबलजुषात्यन्तबलिष्ठया तया धेन्वैव कांदिशीको भयद्रुतो बभूव। महाबलसंपन्नकामधेनुविदलितचतुरङ्गबलः सन्पलायितोऽभूदित्यर्थः। 'कांदिशीको भयद्रुतः' इत्यमरः। तयैवेत्यत्र एवकारो वसिष्ठव्यवच्छेदार्थकः। राजा तपोबलेन न वध्य इति तेनोपेक्षिततत्वादिति भावः। तदुक्तं श्रीरामायणे किष्किन्धाकाण्डे—'दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च। राजानो वानरश्रेष्ठ प्रदातारो न संशयः॥ तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत्। देवा मानुषरूपेण चरन्त्येते महीतले॥' इति स्रग्धरावृत्तम्। तदुक्तं केदारेण—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति॥

एवंभूतोऽपि पुनर्युद्धार्थमेव प्रवृत्त इत्याह—

**बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।**

**बहुश इति।** बहुशो बहुप्रकारम्। 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति शस्प्रत्ययः। तस्याः कामधेनोर्बलाच्छक्तेश्चकितस्य भयसंभ्रान्तस्य। 'चकितं भयसंभ्रमः' इत्यभिधानात्। तपसा तपोबलेनाधिगताः प्राप्ताः विविधा बहुप्रकाराश्चायुधनिगमा धनुर्वेदाद्यस्त्रविद्या येन तस्य अतएव सुरभिनिमित्तं कामधेनुप्राप्त्यर्थं भूयः पुनरपि समारब्धसमरस्योपक्रान्तयुद्धस्य। विश्वामित्रस्येति शेषः। दिव्यास्त्रपरम्परामभ्रा-

---

१. 'सुरभी' इति पाठः. २. 'सोऽनेन प्रार्थितोऽभूत्' इति पाठः. ३. 'चकर्षन्' इति पाठः. ४. 'सुरभिनिमित्तं भूयोऽपि' इति पाठः.

नुपास्त्रश्रेणिं ब्रह्मदण्डेन ब्रह्मतेजोमयेन दण्डेन निरुन्धन्निवारयन् । मोघीकुर्वन्नित्यर्थः। अरुन्धत्येव जाया यस्यारुन्धतीजानिर्वसिष्ठः । 'जायाया निङ्' इति निङादेशः । अवतस्थ औन्मुख्येन स्थितवान् । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥

**ततोऽयं जातव्यलीकः क्षात्रात्तेजसः[१] परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार ।**

**तत इति ।** ततस्तदनन्तरमयं विश्वामित्रो जातव्यलीकः क्षत्रियबले समुत्पन्नाप्रीतिः सन् । 'अलीकं त्वप्रियेऽनृते' इत्यमरः । अथवा उत्पन्नदुःखः । 'व्यलीकमप्रिये दुःखे' इति वैजयन्ती । अतएव क्षात्रात्क्षत्रसंवन्धिनस्तेजसो बलात् । 'तेजः प्रभावे दीप्तौ च वले' इत्यमरः । परमत्यन्तं ब्राह्मं ब्रह्मसंवन्धि महस्तेज एव महीयो महत्तरम् । प्रशस्तमिति यावत् । इति निश्चित्य निर्धार्य । तथा श्रीरामायणे— 'धिग्वलं क्षत्रियबलं ब्रह्मतेजोवलं बलम् । एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥' इति । तत्सिद्धये ब्रह्मतेजःप्राप्त्यर्थं दक्षिणस्यां दिशि तीव्रतरमत्युग्रं तपश्चचार । घोरतरतपोनिष्ठोऽभूदित्यर्थः ॥

**अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो[२] वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितैर्दत्तचण्डालभावस्तमेनं शरणमभजत ।**

**अथेति ।** अथानन्तरं सावित्रः सवितृवंशोद्भवः । क्षत्रियः क्षत्रकुलप्रसूतः । 'क्षत्राद्घः' इति घप्रत्ययः । विशेषणद्वयेनापि गृहीतापरित्यागत्वं सूच्यते । त्रिशङ्कुराजा सशरीरः शरीरसहितः सन्नेव स्वर्गसिद्धिं स्वर्लोकप्राप्तिमभ्यर्थयमानः । सशरीर एवाहं स्वर्गं यास्यामीति याचमानः सन्नित्यर्थः । वसिष्ठेन गुरुणा प्रत्याख्यातः सशरीरस्वर्गगमनमशक्यमिति निराकृतः । तथा निर्बन्धकुपितैर्युष्माभिरपि गुरुपुत्रैरहं सशरीर एव स्वर्गं प्रापणीय इति पुनः पुनर्याञ्चानिर्बन्धजनितोपद्रवसंजातकोपैर्महोदय आदिर्येषां तैस्तस्य वसिष्ठस्य पुत्रैर्दत्तश्चण्डालभावो यस्य स तथोक्तः । चण्डालो भवेति शप्तः सन्नित्यर्थः । तमेनं विश्वामित्रं तपस्यन्तं शरणमभजत । तत्प्रतिपक्षतयायं मां स्वर्गं प्रापयिष्यतीति शरणागतोऽभूदित्यर्थः ॥

ततः किमत आह—

**असावपि तन्मनोरथपरिपूर्तये[३] क्रतुमेकं प्राक्रमत[४] ।**

**असाविति ।** असौ विश्वामित्रोऽपि तस्य त्रिशङ्कोर्मनोरथपरिपूर्तये । सशरीरस्वर्गप्राप्तिरूपमनोरथं परिपूरयितुमित्यर्थः । एकं क्रतुं प्राक्रमत । कंचिद्यागं प्रारब्धवानित्यर्थः ॥

**तत्र समागतेषु ब्राह्मणेषु जुगुप्सया त्रिशङ्कोरनागतान्[५]वसिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत् ।**

---

१. 'क्षात्रतेजसः' इति पाठः. २. 'प्रार्थयमानो' इति पाठः. ३. 'पूर्तये' इति पाठः' ४. 'क्रतुं प्राक्रमत' इति पाठः. ५. 'त्रिशङ्कुयजनेऽनागतान्' इति पाठः.

तत्रेति। त्रिशङ्कोः संबन्धिनि तत्र तस्मिन्क्रतौ ब्राह्मणेषु ब्रह्मर्षिषु समागतेषु विश्वामित्रभयादुपागतेषु सत्सु त्रिशङ्कोर्नृपात्। 'जुगुप्साविराम–' इत्यादिना पञ्चमी। जुगुप्सया। शाखान्तरं प्रविष्टो जातिभ्रष्टोऽस्मत्परिपन्थिनं शरणं गतश्चण्डालोऽयं यजमानः क्षत्रियश्च याजकस्तस्मात्तत्र गमनमनुचितमित्युत्पन्नमनःसंकोचेनेत्यर्थः। अनागतानसंप्राप्तान्वसिष्ठस्य पुत्रानयं विश्वामित्रः शापेन श्वभक्षकानकरोत्। यतोऽस्मदुपक्रान्तयागं प्रतीर्ष्यया न समागतास्त इमे वसिष्ठस्य पुत्राः श्वभक्षका भवन्त्विति शशापेत्यर्थः॥

**ततः क्रतुभुजां वर्गेऽपि स्वर्गादनवतीर्णे।**

तत इति। ततस्तदनन्तरम्। क्रतुं भुञ्जत इति क्रतुभुजस्तेषामिन्द्रादिदेवानां वर्गे सङ्घेऽपि स्वर्गादनवतीर्णे जुगुप्सयैवानवतरति। हविर्भागान्ग्रहीतुमिति शेषः॥

**अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम्।**
**नीलाम्बरं निह्नुतराजवेषं वर्षानिशीथादविशेषवेषम्॥ ९६॥**

अयमिति। महात्मा महानुभावोऽयं विश्वामित्रस्तपसः प्रभावात्तपःसामर्थ्यात्त्रिशङ्कुं दिवं स्वर्गमारोपयामासारोपितवान्। रुहेर्ण्यन्ताल्लिट्। 'रुहः पोऽन्यतरस्याम्' इति पकारः। 'गतिबुद्धि–' इत्यादिनाणिकर्तुर्णौ कर्मत्वम्। कीदृशं त्रिशङ्कुम्। 'नीलमम्बरं वासो व्योम च यस्य तम्। एकत्र चण्डालाकृतिधारित्वादित्यर्थः। अन्यत्र मेघावरणजनितान्धकारावृतत्वात्। 'अम्बरं वाससि व्योम्नि' इति विश्वः। तथा निह्नुत आच्छादितो राजवेषो नृपनेपथ्यं चन्द्रप्रकाशश्च यस्य तम्। 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः' इति विश्वः। अतएव वर्षानिशीथात्प्रावृट्कालार्धरात्रादविशेषो विशेषरहितो वेषो यस्य तम्। अर्धरात्रतुल्याकारमित्यर्थः। 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इति, 'अर्धरात्रनिशीथौ द्वौ' इति चामरः। श्लेषालंकारः। इन्द्रवज्रावृत्तम्॥

**ततः**

**अपातयत्स्वर्गमुपाश्रयन्तं संजातमन्युः शतमन्युरेनम्।**
**ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम्॥९७॥**

ततः। अपातयदिति। ततस्तदनन्तरं शतं मन्यवः क्रतवो यस्य शतमन्युरिन्द्रः संजातमन्युश्चण्डालं किमिति स्वर्गमारोपितवानिति समुत्पन्नक्रोधः सन्। 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। स्वर्गमुपाश्रयन्तं प्रविशन्तमेनं त्रिशङ्कुमपातयत्पातयामास। ततोऽनन्तरं त्रिशङ्कुः। पतमान इति शेषः। अस्य महात्मनो विश्वामित्रस्य नियोगशङ्कुं त्वमत्रैव तिष्ठेत्याज्ञारूपावलम्बनयष्टिविशेषमवलम्ब्यावष्टभ्य गगने प्रतिष्ठां स्थितिं लेभे प्राप। एतन्नियोगावलम्बेनान्तरिक्षे स्थितोऽभूदित्यर्थः। महात्मानः किं वा कर्तुं न शक्नुवन्तीति भावः। उपजातिवृत्तम्॥

**ततो गीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं तत्र**

१. 'तत्र' इति पाठः. २. 'सर्वगीर्वाणगण' इति पाठः.

**तपःप्रत्यूहः प्रत्युद्भूत इति पश्चिमायां दिशि पुष्करे पुष्कलं तपश्चरन्तममुमम्बरीषयज्ञपशुविनाशप्रायश्चित्तार्थे बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्तावदृचीकस्य मध्यमपुत्रः शुनःशेपः शरणमयाचत ।**

**तत इति ।** ततस्त्रिशङ्कोर्गगनप्रतिष्ठापनानन्तरं गीर्वाणगणप्रार्थनया पुरंदरादिवृन्दारकवृन्दयाञ्चया परित्यक्तं विसृष्टं भुवनान्तरनिर्माणकर्म स्वर्गान्तररचनैव कर्म येन तम् । तत्र दक्षिणस्यां दिशि । तपःप्रत्यूहस्तपोविघ्नः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । प्रत्युद्भूतः संजात इति पश्चिमायां दिशि पुष्करे तीर्थविशेषे पुष्कलं समग्र तपश्चरन्तममुं विश्वामित्रमम्बरीषस्य महाराजस्य यज्ञपशुविनाशे निमित्ते प्रायश्चित्तार्थे । प्रायश्चित्तं नाम प्रारब्धकर्मलोपजनितदुरितनिराकरणार्थमवश्यकर्तव्यकर्मविशेषः, तदर्थं बह्वीभिरनेकाभिः । शतसंख्याकाभिरित्यर्थः । 'वोतो गुणवचनात्' इति ङीप् । गोभिर्मूल्यभूताभिः क्रीत्वा गृहीत्वा नरपशुतां नीयमानः । तत्प्रायश्चित्तस्य नरपशोर्निर्वर्त्यत्वेन विधिबोधितत्वादिति भावः । तावत्तदानीमृचीकस्य ऋचीकनाम्नः कस्यचिद्दरिद्रब्राह्मणस्य शुनःशेपः शुनःशेपनामा । शुन इव शेपो यस्येति विग्रहः । 'शेपपुच्छलाङ्गूलेषु—' इत्यलुक् । मध्यमपुत्रः शुनःपुच्छः शुनोलाङ्गूल इत्याद्यतृतीयपुत्रापेक्षया मध्यमोऽयं पुत्रः । मध्ये भवो मध्यमः । 'मध्यान्मः' इति मप्रत्ययः । 'पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् । विक्रीतं मध्यमं मन्ये राजपुत्र नयस्व माम् ॥' इति श्रीरामायणे तेनैवोक्तत्वात् । शरणमयाचत । आपन्नोऽहम्, मत्प्राणसंरक्षणं कुर्वेति प्रार्थितवानित्यर्थः । ननु ऋचीकोऽयं ब्राह्मणः, तत्कथं स्वदग्धोदरपूरणाय पश्वर्थं स्वपुत्रदानरूपं पापं कृतवान् । किंच 'आत्मा वै पुत्रनामासि' इति श्रुतेः पुत्रस्यात्मरूपत्वादात्महन्तृत्वदोषप्रसङ्गश्चेति चेत्, सत्यम् । बुभुक्षितस्यास्य तादृग्विवेकशून्यत्वात् । उक्तं च—'त्यजेत्क्षुधार्ता महिलापि पुत्रं भुङ्क्ते क्षुधार्ता भुजगी स्वमण्डम् । बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥' अन्यच्च—'अस्य दग्धोदरस्यार्थे किं न कुर्वन्त्यसांप्रतम्' इति । अतस्तथा कृतवानित्यलमतिप्रसङ्गेन ॥

ततः किं कृतवान्मुनिरित्यत आह—

**अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखेभ्यस्तेभ्यो हविष्यन्दादिभ्यः शापेन वसिष्ठपुत्रदशां दत्त्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्याममम्बरीषं शुनःशेपं च परिपूर्णमनोरथौ कारयामास ।**

**अयमिति ।** अयमिति पुरोवर्तिनि निर्देशः । भगवान् 'उत्पत्तिं च विनाशं च' इत्युक्तलक्षणो विश्वामित्रो निजतनयविनिमयेन स्वपुत्रप्रत्यर्पणेनैनं शुनःशेपं रक्षितुं पालयितुमुन्मुखः । 'सर्वकामसमृद्धस्य ह्यश्वमेधस्य यत्फलम् । तत्फलं लभते त्वत्से

१. 'अम्बरीषं च शुनःशेपं च' इति पाठः.

रक्षिते शरणागते ॥' इति शरणागतरक्षणे महाफलश्रवणान्निजतनयार्पणेनाप्येनं पशुभावनिर्बन्धान्मोचयितुं कृतनिश्चय इत्यर्थः। पराङ्मुखेभ्यो विनिमयानङ्गीकारेण प्रतिकूलेभ्यो हविष्यन्द आदिर्येषां तेभ्यो हविष्यन्दप्रमुखेभ्यस्तेभ्यो निजतनयेभ्यः शापेन वसिष्ठपुत्रदशां श्वभक्षकावस्थां दत्त्वा । वसिष्ठतनया इव श्वमांसभोजिनो भवन्त्विति शशापेत्यर्थः। 'दशा वर्ताववस्थायाम्' इति विश्वः। गाथाद्वयप्रीताभ्यां गाथयोरिन्द्रोपेन्द्रप्रसादकसूक्तविशेषयोर्द्वयेन शुनःशेपगीतेन प्रीताभ्यां संतुष्टाभ्यामिन्द्रोपेन्द्राभ्यां यागाधिष्ठानदेवताभ्याममम्बरीषं शुनःशेपं चेत्युभौ परिपूर्णमनोरथौ संपूर्णाभिलाषौ कारयामास। इन्द्रोपेन्द्रसंतोषोत्पादनपूर्वकं यज्ञस्य साङ्गत्वापादनेनाम्बरीषमनोरथं प्राणपरित्राणेन शुनःशेपमनोरथं च पूरयामासेत्यर्थः॥

**ततस्तपस्यन्तमेनं मेनकासङ्गतस्तपोभङ्गश्चिरमङ्गीचकार।**

**तत इति।** ततस्तदनन्तरं तपस्यन्तं तपःकुर्वाणम्। तपोनिष्ठमित्यर्थः। एनं विश्वामित्रं मेनकाया मेनकाख्याया अप्सरसः सङ्गतः सङ्गात्। पञ्चम्यास्तसिः। तपोभङ्गस्तपोविघ्नः कर्ता। चिरं बहुकालमङ्गीचकारानुससार । मेनकासंभोगतात्पर्येण चिरकालमयं परित्यक्तनियमोऽभूदित्यर्थः॥

**पश्चात्पश्चात्तापाभिभूतोऽयमुत्तरे भूभृति कौशिकीतीरे घोरं तपश्चचार।**

**पश्चादिति।** पश्चात्तदनन्तरमयं विश्वामित्रः पश्चात्तापेन किमेतदसदाचरितमङ्गीकृतमित्यनुतापेनाभिभूत आक्रान्तः सन्नुत्तर उत्तरस्मिन्भूभृति हिमवत्पर्वते। 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पास्मिन्नादेशाभावः। कौशिक्यास्तत्रत्यायाः स्वभगिन्या नद्यास्तीरे घोरमत्युग्रं तपश्चचार। तथाच श्रीरामायणे—'कौशिकी परमोदारा प्रवृत्ता च महानदी। दिव्यपुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकाम्यार्थं प्रवृत्ता भगिनी मम ॥' इति श्रीरामं प्रति स्वेनैवोक्तम्॥

**तत्र जम्भारिप्रहितां रम्भां शैली भवेति शप्त्वा पूर्वस्यां दिशि निरस्तनिश्वासं तपश्चरत्यमुष्मिन्नुष्मणा तपोग्नेरुद्विग्नितामरसखस्तामरसासनः सन्निधाय जितेन्द्रियत्वाद्ब्रह्मर्षिरसि वसिष्ठोऽप्येवं व्याहरतु भवन्तमित्यभाषत।**

**तत्रेति।** तत्र तस्मिन्पर्वते जम्भारिणा जम्भाख्यदैत्यद्वेषिणेन्द्रेण प्रहितां तपोविघ्नार्थं प्रेषितां रम्भामप्सरसम् ॥ 'स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः। घृताची मेनका रम्भा उर्वशी च तिलोत्तमा ॥' इत्यमरः। शैली शिलारूपा भवेति शप्त्वा। शापेन पाषाणावस्थां दत्त्वेत्यर्थः। पूर्वस्यां दिशि प्राच्यां निरस्तनिश्वासं निरुद्धप्राणसंचारं यथा तथा। रेचकपूरककुम्भकलक्षणप्राणायामसहितमित्यर्थः। अमुष्मिन्विश्वामित्रे तपश्चरति महोग्रतपोनिष्ठापरतन्त्रे सति तपोग्नेस्तपोरूपवह्नेरूष्मणा संतापजनकज्वालयोद्विग्निता विह्वलिता ये अमरा देवास्तेषां सखा तत्सखः। भयसंभ्रान्ताखिलगीर्वाणसहितः सन्नित्यर्थः। 'राजाहःसखिभ्यष्टच्'। ताम-

१. 'ततः' इति पाठः. २. 'उद्विग्नमानसः' इति पाठः.

रसासनो ब्रह्मा सन्निधाय सन्निहितो भूत्वा जितेन्द्रियत्वाद्विषयप्रवृत्तिप्रतिरोधेन शिक्षितेन्द्रियग्रामत्वाद्धेतोः ब्रह्मर्षिरसि जातः । वसिष्ठोऽपि त्वत्प्रतिपक्ष्यपि भवन्तमेवं ब्रह्मर्षिरसीति व्याहरतु वदतु । मदनुग्रहेणेति शेषः । तथैव तव मनसि विद्यत इति भावः । इतीत्थमभाषत ॥

ततः किं तत्राह—

**असौ वसिष्ठनिर्देशाद्ब्रह्मर्षित्वमविन्दत ।**
**यथोपनयसंस्काराद्द्विजन्मा ब्रह्मवर्चसम् ॥ ९८ ॥**

**असाविति** । असौ विश्वामित्रो वसिष्ठस्य निर्देशान्निरूपणाद्ब्रह्मर्षित्वम् । द्वे जन्मनी उत्पत्तिकर्मभ्यां यस्य स द्विजन्मा ब्राह्मण उपनयसंस्कारादुपनयनरूपसंस्काराद्ब्रह्मवर्चसं यथा ब्रह्मतेज इवाविन्दतालभत 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्प्रत्ययः । अत्र यथाशब्द इवार्थकः । 'इववद्वायथाशब्दाः' इति दण्ड्याचार्यानुशासनात् । अतएवोपमा ॥

**इति जनकपुरोधःश्लाघितो गाधिसूनुः**
**सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा ।**
**विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं**
**सरसिजदयिताय ज्योतिषे छान्दसाय ॥ ९९ ॥**

**इतीति** । इत्युक्तप्रकारेण जनकस्य पुरोधसा पुरोहितेन शतानन्देन श्लाघितः प्रशंसितो गाधिसूनुर्विश्वामित्रो नृपतनयाभ्यां सह श्रीरामलक्ष्मणाभ्यां साकं तत्र यज्ञशालायां शर्वरीं रात्रिं नीत्वा गमयित्वा सरसिजदयिताय पद्मबान्धवाय छान्दसाय छन्दोमयाय । संध्यात्रयेऽपि क्रमेण ऋगादिवेदत्रयमयायेति भावः । तथाच श्रुतिः—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते' इति । ज्योतिषे सूर्याय पुष्पदर्भाग्रगर्भं पुष्पदर्भाङ्कुरमिश्रम् । तथाभूतस्यैव शास्त्रचोदितत्वादिति भावः । उक्तं च ज्ञानवासिष्ठे—'दत्त्वार्घ्यं कीर्णकुसुमं प्रणम्याशु प्रदक्षिणैः । विष्णुमाह द्विजो वाक्यैरम्भोदमिव चातकः ॥' इति । अर्घार्थं पूजार्थं जलमर्घ्यं जलाञ्जलिः । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'मूल्ये पूजाविधावर्घः' 'षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः । विधिवद्विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' इति वतिप्रत्ययः । आदिशद्दत्तवान् । अत्र श्रुतिः—तदुह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' इति । मालिनीवृत्तम् ॥

**तदनु जनकराजधानीं राम्रलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन[1] विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन[2] पौरनारीलोचनरोचिषा[3] कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत[4] ।**

---

१. 'पातितेन' इति पाठः. २. 'मरीचिवीचिमलि' इति पाठः. ३. 'पौरनारीजनविलोचन' इति पाठः. ४. 'इत्थम्' इति पाठः.

**तदन्विति** । तदनन्वर्घ्यप्रदानानन्तरं विश्वामित्रः रामलक्ष्मणयोः कर्मणोः निरीक्षणकौतुकाद्विलोकनकौतूहलाद्धेतोः । 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः । अनवरतपतितेन निरन्तरप्रसृतेन विकचकुवलयानामुत्फुल्लनीलोत्पलानां निचयेन समूहेनोपचीयमाना प्रवर्धमाना या मेचकमरीचिः श्यामलकान्तिः । 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । तस्या मलिम्लुचेन पाटच्चरेण । तिरस्करणेनेति यावत् । तद्वन्नीलवर्णेनेत्यर्थः । अतएवोपमा । 'प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' इत्यमरः । पौरनारीणां पुरसुन्दरीणां लोचनरोचिषा नयनकान्त्या कवचितः संवलितो नरपतेः पन्था नरपतिपथो राजमार्गो यस्यास्ताम् । 'ऋक्पूः—' इत्यादिना समासान्तः । राजानो धीयन्तेऽस्यामिति राजधानी । जनकस्य राजधानी जनकराजधानी मिथिलानगरी ताम् । 'करणाधिकरणयोश्च' इत्यधिकरणार्थे ल्युट्प्रत्ययः । प्रविश्य । दशरथतनयौ श्रीरामलक्ष्मणौ प्रतीदं वचनमभाषत ॥

तदेवाह—

**अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात्सीतानामधेयभाजनमजीजनत्कन्यारत्नं रत्नगर्भा भगवती ।**

**अस्यामिति** । अस्यां नगर्यां मिथिलायाम् । खलुशब्दः प्रसिद्धार्थकः । भगवती पूज्या । रत्नानि मणयो गर्भे यस्याः सा रत्नगर्भा भूः । तथा । 'जगती रत्नगर्भा च' इत्यमरः । आरब्धयज्ञस्योपक्रान्तसवस्य राज्ञः । हलमुखकर्षणेन यज्ञभूमिं शोधयत इत्यर्थः । भागधेयाद्भाग्याद्धेतोः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । सीता लाङ्गलपद्धतिस्तज्जन्यत्वात्सीतेत्यन्वर्थसंज्ञा । 'सीता लाङ्गलपद्धतिः' इत्यमरः । सीतेति नामधेयस्य नाम्नो भाजनं पात्रम् । 'नामरूपभागेभ्यः स्वार्थे धेयो वक्तव्यः' इत्युभयत्रापि धेयप्रत्ययः । कन्यारत्नम् । श्रेष्ठां कन्यकामित्यर्थः । अजीजनज्जनयामास । रत्नगर्भायास्तस्या रत्नजननं युक्तमेवेति भावः । जनेर्णौचङ्युपधाया ह्रस्वोऽभ्यासदीर्घश्च । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते' इत्यभिधानात् ॥

**अस्याः[1] पुनः किमपरं[2] माहात्म्यम् ।**

**अस्या इति** । अस्याः पुनर्मिथिलानगर्या अपरमितोऽन्यन्माहात्म्यं महानुभावत्वं किं वर्णनीयमस्ति । न किंचिदस्तीत्यर्थः ॥

**यतः[3] ।**

**देव्या[4] यस्या वसनमुदधिः पीठिका हाटकाद्रि-**
**र्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः ।**
**क्रीडाशैलः प्रथमपुरुष[5]क्रोडदंष्ट्रा च तस्याः**
**सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः ॥ १०० ॥**

यतो यस्मात् कारणात् ॥ **देव्या इति** । यस्या देव्याः भूदेव्या उदकानि धीय-

---

१. 'तस्याः' इति पाठः. २. 'किं परं किमपि' इति पाठः. ३. 'कुतः' इति पाठः. ४. 'यस्याः पृथ्व्याः' इति पाठः. ५. 'परमपुरुष' इति पाठः.

न्तेऽस्मिन्नित्युदधिः समुद्रः । 'उदकस्योदः संज्ञायाम्' इत्युदकशब्दस्योदादेशः । वसनं वस्त्रम् । तथा हाटकाद्रिः स्वर्णाचलः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' । अल्पं पीठं पीठी सैव पीठिकोपवेशनपीठम् । गौरादित्वान्ङीप् । ततः स्वार्थे कः । 'केऽणः' इति ह्रस्वः । तथा सगरतनयानां कपिलानलदग्धानां स्वर्गमार्गे एकबन्धुर्मुख्यसुहृत् । स्वर्लोकप्रापिकेत्यर्थः । सिन्धुः सरित् । मन्दाकिनीति यावत् । हारो मुक्ताकलापः । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । तथा प्रथमपुरुषः पुराणपुरुषो विष्णुः स चासौ क्रोडो वराहश्च तस्य दंष्ट्रा दन्तविशेषश्च क्रीडाशैलो विहाराचलः । सर्वत्राभूदिति शेषः । तस्याः सीतामातुः सीताजनन्या भूदेव्या जगति । जगत्स्वित्यर्थः । मिथिलां परिच्छिन्नतया वर्तमानां मिथिलानगरीं सूतिकागेहं सूतिकागृहमाहुर्ब्रुवन्ति । यत एवमपरिमेयानुभावाया भूदेव्या मिथिलां सूतिकागेहं कथयन्ति । अतोऽस्या माहात्म्यं किमन्यद्वक्तव्यमस्तीत्यर्थः । 'ब्रुवः पञ्चानाम्–' इत्यादिना णलादेशः । ब्रुव आहादेशश्च । अत्रोदध्यादिषूपरञ्जकत्वेन वसनत्वादिरूपणात्समस्तवस्तुवर्तिरूपकालंकारः । 'आरोपविषयस्य स्यादतिरोहितरूपिणः । उपरञ्जकमारोप्यमाणं तद्रूपकं मतम् ॥' इति लक्षणात् । तत्र तथाल्पीयस्यां मिथिलायां सागराम्बरादिमत्तया महीयस्या भूदेव्या आधेयत्वकथनाद्धिकप्रभेदोऽलंकारः । तदुक्तम्—'आधाराधेययोरानुरूप्यभावोऽधिको मतः' इति । अयं चोक्तरूपकानुप्राणित इति संकरः । मन्दाक्रान्तावृत्तम् ॥

**तत्र सीताविवाहार्थममरैरपि दुष्करम् ।**
**जनकः कल्पयामास धनुरारोपणं पणम् ॥ १०१ ॥**

**तत्रेति** । तत्र मिथिलायां सीतोत्पत्तिसमये जनको राजा पिता च । 'तातस्तु जनकः पिता' इत्यमरः । सीताया विवाहार्थममरैरिन्द्रादिभिरपि । किमुतान्यैरिति भावः । दुष्करं-कर्तुमशक्यम् । 'ईषद्दुःसुषु–' इत्यादिना खल्प्रत्ययः । धनुषो हरकोदण्डस्यारोपणमवनमनं पणं मूल्यं कल्पयामास । यो वा को वा इदं धनुरारोपयति तस्मा इयं कन्या दीयते नत्वन्यस्मा इति प्रतिज्ञातवानित्यर्थः । इत्थमभाषतेति पूर्वेण संबन्धः । 'पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च' इत्यमरः ॥

**ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मासदृशीं प्रपेदे ।**
**तौ चापतुश्चापविलोकलोलौ सचापकौ कोसलराजपुत्रौ ॥ १०२ ॥**

**तत इति** । ततः सीतावृत्तान्तकथनानन्तरं महर्षिर्विश्वामित्रः । ऋषिलक्षणमुक्तम् । सुधर्मासदृशीं देवसभासमाम् । 'स्यात्सुधर्मा देवसभा' इत्यमरः । जनकराजस्य सभामास्थानं प्रपेदे प्राप । तथा चापविलोकलोलौ धनुर्दर्शनलालसौ । 'लोलुपो लोलुभो लोलो लम्पटो लालसश्च सः' इति यादवः । कुतः । चापाभ्यां सह सचापकौ धन्विनौ । इति धनुर्विद्याविशारदत्वं सूच्यते । 'तेन सह–' इत्या-

१. 'अत्र' इति पाठः. २. 'सचापलौ' इति पाठः.

दिना बहुव्रीहिः। 'शेषाद्विभाषा' इति कप्प्रत्ययः। तौ कोसलराजपुत्रौ रामलक्ष्मणौ च। एतेन महाकुलीनत्वादिसकलगुणसंपत्तिः सूच्यते। आपतुः प्राप्तवन्तौ। उपजातिवृत्तम्। लक्षणं तूक्तम्॥

**तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।**

**तत्रेति।** तत्र सभायां कुशवंशसंभूतत्वात्कौशिको विश्वामित्रः। 'कुशवंशसंभूतत्वात्कौशिकं रघुनन्दनः' इति श्रीरामायणे। विधिवद्यथाशास्त्रमभ्यर्चितः पूजितः। राज्ञेति शेषः। तथा। कथित उपवर्णितो दशरथतनयस्य वृत्तान्तो वंशप्रशंसादिवृत्तिर्येन स तथोक्तः सन्। 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः। तथा कौशिकप्रमुखैर्महेन्द्रादिभिरमरैः। 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः। अस्मत्कुलमहत्तरेऽस्मद्वंशश्रेष्ठे देवराते राज्ञि निक्षिप्तं विन्यस्तं विशेषतो विशेषाकारेण सीतायाः शुल्कार्थं विवाहमूल्यार्थम्। तदारोपणस्यैव सीताप्रदानमूल्यत्वादिति भावः। 'शुल्कोऽस्त्री स्त्रीधनेऽपि च' इत्यमरः। मया रक्षितं गुप्तमिदम्। धनुरिति शेषः। इत्युक्त्वा इतिनैव गम्यमानार्थत्वादप्रयोगः। जनकेन प्रदर्शितस्य चापस्यारोपणायावनमनाय राममादिदेशाज्ञापयामास। नन्वीश्वरेण धनुर्देवराते न्यासभूततया निक्षिप्तमिति रामायणादौ श्रूयते। अत्रेन्द्रादिभिरिति कथमेतत्संगच्छत इति चेत्, स देवेभ्यो धनुषि दित्सिते तदानीमेतैर्देवैः सन्निकर्षं गत्वा स्वयं ग्रहीतुं भीतैरस्मदर्थेऽस्य देवरातस्य देहीति प्रार्थितः सन् तस्य हस्ते दत्तवानिति न कोऽपि विरोधः॥

**ततः[3]।**

**रामे बाहुबलं विवृण्वति धनुर्वंशे गुणारोपणं**
**मा भूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्तने।**
**आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं**
**भङ्गस्तस्य न केवलं क्षितिभुजां दोःस्तम्भदम्भस्य च॥ १०३॥**

तत आदेशानन्तरम्॥ **राम इति।** रामे बाहुबलं निजभुजबलं विवृण्वति प्रकटयति सति धनुर्वंशे केवलं धनूरूपवेणुदण्ड एव गुणारोपणं मौर्वीयोजनं शौर्योदर्पणं च मा भून्नासीत्। अत्र माङो ननर्थत्वात् 'माङि लुङ्' इति लुङाशीरर्थत्वावकाशः। किंत्वात्मना स्वेन तिलकिते संजाततिलके। अलंकृते इत्यर्थः। अत्र स्वस्यावतीर्णत्वादिति भावः। 'तदस्य संजातं तारकादिभ्यः—' इतीतच्प्रत्ययः। तारकादिराकृतिगणः। वैकर्तने विकर्तनसंबन्धिनि वंशे सूर्यकुलेऽपि। 'वंशो वेणौ कुलेऽपि च' इति विश्वः। गुणारोपणमभूदिति विरोधस्य शौर्यादिगुणसमर्पणमभूदिति परिहाराद्विरोधाभासोऽलंकारः। इतरवंशजै राजभिर्धनुषोऽनारोपितत्वात्सूर्यवंशा-

१. 'वृत्तान्तः कौशिकमुखैः' इति पाठः. २. 'आरोपणे' इति पाठः. ३. 'ततः' इति नास्ति क्वचित्. ४. 'नाभूत्' इति पाठः.

वतंसेन श्रीरामेणारोपितत्वादिति तद्वंशस्य महती प्रतिष्ठा संपादितेत्यर्थः । 'मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसंध्यादिके गुणः' इत्युभयत्राप्यमरः । किंच तद्धनुरेव नितरामतिशयेन कृष्टं मा भूत् । किंतु परमत्यन्तं द्रुतं शीघ्रं सीतामनोऽप्याकृष्टमभूत् । धनुराकर्षणस्यैव तन्मनःसमाकर्षणहेतुत्वादिति भावः । तथा तस्य केवलं धनुष एव भङ्गो विभेदो नाभूत् । किंतु क्षितिभुजां दोःस्तम्भदम्भस्य दोर्दण्डकैतवबलाडम्बरस्य च । 'दम्भस्तु कैतवे कल्के' इति विश्वः । भङ्गोऽभूत् । भग्नं धनुर्दृष्ट्वा राजानो निर्वापितनिजभुजगर्वा बभूवुरित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम् ।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
सीतायाः[1] किल मानसे परिणये माङ्गल्यतूर्यायितम् ॥ १०४ ॥

रामेति । रामाकर्षणेन श्रीरामकर्तृकाकर्षणेन भग्नं विदलितं यत्कार्मुकं तस्माद्भवतीति तथोक्तेन । तथा रोदसी द्यावाभूमी रुणद्धि आवृणोतीति रोदोरुधा । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । सर्वव्यापिनेत्यर्थः । 'द्यावाभूमी च रोदसी' इत्यमरः । ध्वानेन ध्वनिना कर्त्रा दृप्ता मदोद्रिक्ता ये क्षत्राः क्षत्रियाः । अत्र जातिवाचिना क्षत्रशब्देन तज्जन्याः क्षत्रिया लक्ष्यन्ते । तेषां यश एव सितच्छदकुलं हंसश्रेणीति रूपकम् । तस्मिन्विषये । 'हंसास्तु श्वेतगरुतः' इत्यमरः । जीवनस्य जलस्य मूतः पुटबन्धो जीमूतो मेघः 'मूत बन्धने' पृषोदरादित्वात्साधुः । 'जीमूतौ मेघपर्वतौ' इत्यभिधानात् । जीमूतनादेन जलदगर्जितेनेवाचरितं जीमूतनादायितम् । तस्य तन्निवारकत्वादिति भावः । 'कर्तुः क्यङ् सलोपश्च' । ततो भावे क्तः । 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः । एवमुत्तरत्रापि योज्यम् । तथा वीरश्रियो वीरलक्ष्म्याः प्रथमप्रवेशसमये प्रथमप्रवेशकाले । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । पुण्याहघोषेण स्वस्तिवाचनरवेणेवाचरितं पुण्याहघोषायितम् । पुण्यं च तदहश्च पुण्याहमिति विशेषणसमासः । 'राजाहःसखिभ्यष्टच्' इति टच् । 'पुण्यसुदिनाभ्यामह्नः क्लीबचेष्टा' इति क्लीबत्वम् । तथा सीताया मैथिल्या मानसे । मनसि प्रवर्तमान इत्यर्थः । परिणये विवाहविषये माङ्गल्यतूर्येण माङ्गल्यार्थं तूर्यध्वनिनेवाचरितं माङ्गल्यतूर्यायितम् । किलेति संभावनायाम् । 'वार्तासंभाव्ययोः किल' इत्यमरः । लुप्तोपमालंकारः । वृत्तं पूर्ववत् ॥

नवैः[2] कठिनकर्षणत्रुटितचापजन्मा क्षणा-
द्दिशां द्विरदधीकृतैः[3] कृतहरित्पतिस्वागतः ।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गना-
प्रयाणपटहध्वनिं प्रथयति स्म तारध्वनिः[4] ॥ १०५ ॥

नव इति । कठिनकर्षणाद्दृढाकर्षणाद्धेतोस्त्रुटितो भग्नो यश्चापस्तस्माज्जन्म यस्य स

१. 'मैथिल्याः' इति पाठः. २. 'रवः' इति पाठः. ३. 'फीत्कृतैः' इति पाठः. ४. 'ताराध्वनिः' इति पाठः.

तथोक्तः। इति व्यधिकरणबहुव्रीहिः। 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः। क्षणादतिशीघ्रं दिशां द्विरदघींकृतैर्दिग्गजघींकारैर्हेतुभिः। स्वभयजनितैरेवेति भावः। कृतो विहितो हरित्पतिस्वागतो दिगीश्वरकर्तृकशोभनागमनप्रश्नो यस्य स तथोक्तः। अतिवेगेन दिगन्तव्यापीत्यर्थः। नवोऽभूतपूर्वस्तारध्वनिरुच्चध्वनिः। जगद्भ्रमणकौतुकाल्लोकसंचारकौतूहलाद्धेतोः। उच्चलिता प्रवृत्ता रामस्य कीर्तिरेवाङ्गनेति रूपकम्। तस्याः प्रयाणपटहध्वनिं यात्रारम्भे भेरीभांकारं प्रथयति स्म प्रकटयति स्म। ताद्रूप्यमवापेत्यर्थः। अत्र धनुर्भङ्गजनितध्वनौ पटहध्वनित्वारोपणाद्रूपकालंकारः। तथान्यनिष्ठेषु घींकृतेष्वन्यकर्तृकस्वागतत्वरूपणाद्व्यधिकरणरूपमित्यनयोर्नैरपेक्ष्यात्संसृष्टिः। पृथ्वीवृत्तम्। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात्॥

**तत्र[1] दशरथः सीतापरिणयकृतनिश्चयजनकप्रहितदूताहूतः पुरोहिताभ्युपगमान्मिथिलामुपागमत्[2][3]।**

**तत्रेति**। तत्र तस्मिन्समये दशरथः सीतापरिणये सीताविवाहे कृतनिश्चयेन विहितनिर्णयेन। 'समौ निर्णयनिश्चयौ' इत्यमरः। जनकेन प्रहिताः प्रेषिता ये दूताः प्रेष्यास्तैराहूतः सन् पुरोहिताभ्युपगमाद्वसिष्ठाङ्गीकारात्। 'अङ्गीकाराभ्युपगम–' इत्यमरः। मिथिलामुपागमत्॥

तमेव दशरथं वर्णयति—

**यत्कीर्तिस्तिलकायते सुरवधूसंगीतगोष्ठीमुखे**
**येनाद्यः पितृमान्पुमान्वसुमती येनैव राजन्वती।**
**इन्द्रः संगरसंकटेषु विजहौ वीरस्य यस्योन्मुख-**
**प्रेङ्खत्स्यन्दनकेतनाम्बरदशासंदर्शनाद्दुर्दशाम्॥ १०६॥**

**यदिति**। यस्य दशरथस्य कीर्तिर्दानक्षात्रोद्भवा समाख्या सुरवधूनां देवतास्त्रीणां संगीतगोष्ठी संगीतप्रस्तावस्तस्यां मुखं प्रारम्भः स एव मुखं वक्त्रमिति श्लिष्टरूपकम्। तस्मिन्। 'मुखं प्रधाने प्रारम्भे वक्त्रे' इति नानार्थरत्नमाला। तिलकायते तिलको भूषणविशेषः स इवाचरति। सुरवधूनामपि गेयान्तरापेक्षया प्रथमत एव वर्णनयोग्यो भवतीत्यर्थः। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः। 'तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः। तथा येन दशरथेन आद्यः पुमान्पुराणपुरुषो विष्णुः पितास्यास्तीति पितृमान्। अभूदिति शेषः। श्रीरामरूपेणास्य तद्गर्भसंभूतत्वादिति भावः। एतेनास्य महाभाग्यसंपत्तिः सूच्यते। येन दशरथेन। नान्येनेत्येवकारार्थः। वसुमती पृथ्वी सुराजा अस्या अस्तीति राजन्वती सुराज्ञी अभूत्। 'सुराज्ञि देशे राजन्वान्' इत्यमरः। 'राजन्वान्सौराज्ये' इति निपातनात्साधुः 'उगितश्च' इति ङीप्। तथा यस्य

---

१. 'तत्र सीता' इति पाठः. २. 'नियम' इति पाठः. ३. 'उपागमद्दशरथः' इति पाठः.

वीरस्य दशरथस्योन्मुखमभिमुखं यथा तथा प्रेङ्खन्त्यो वायुवशाच्चलन्त्यो याः स्यन्दनकेतनाम्बरदशा रथनिबद्धध्वजपताकाञ्चलानि तासां संदर्शनात्सम्यग्दर्शनाद्धेतोः। 'वर्त्यवस्थांशुकांशेषु दशा' इति रत्नमाला। इन्दतीतीन्द्रः। 'इदि परमैश्वर्ये'। परमैश्वर्यसंपन्नः पाकशासनः। 'उपेन्द्र–' इत्यादिना औणादिको रप्रत्ययः। संगरसंकटेषु देवासुरयुद्धसंमर्देषु। 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्यमरः। दुर्दशां दुरवस्थां विजहौ तत्याज। इन्द्रस्याप्याशास्यपौरुष इति भावः। सोऽयं दशरथो मिथिलामगमदिति पूर्वेण संबन्धः। तिलकायत इत्यत्र लुप्तोपमा। सा चोक्तरूपकेण संकीर्यते। शार्दूलविक्रीडितं वृत्तम्॥

[1]जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
हत्वा युधि सुधन्वानं सांकाश्ये स्थापितं पुरे॥ १०७॥

**जनक इति**। जनको राजा स्वस्य कनीयांसम्। अनुजमित्यर्थः। 'जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः' इत्यमरः। 'युवाल्पयोः कनन्यतरस्याम्' इति विकल्पात्कनादेशः। तथा युधि युद्धे सुधन्वानं नाम राजानं हत्वा सांकाश्ये सांकाश्याख्ये सुधन्वपट्टणे स्थापितं प्रतिष्ठितं कुशध्वजमाजुहाव। तत्पुत्र्योरपि विवाहमहोत्सवं कर्तुमाकारयामासेत्यर्थः॥

**तदनु ताभ्यामभ्यर्चितः सपुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्तयामास।**

**तदन्विति**। तदनु तदनन्तरं ताभ्यां जनककुशध्वजाभ्यामभ्यर्चितो तथार्हं पूजितः सपुरोहितः सवसिष्ठो दशरथस्तत्र तस्मिन्समये पुत्राणां श्रीरामादीनां चतुर्णां कुमाराणां गोदानमेव मङ्गलं निर्वर्तयामास। विवाहदीक्षाङ्गत्वेन कृतवानित्यर्थः। 'गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' इति केशवः। गावो लोमानि केशा दीयन्ते खण्ड्यन्ते इति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्तव्यं केशान्ताख्यं कर्मोच्यते। तदुक्तं मनुना—'केशान्तं षोडशे वर्षे ब्राह्मणस्य विधीयते राजन्यबन्धोर्द्वाविंशे वैश्यस्य ह्यधिके ततः॥' इति। 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥' इति॥

जग्राह जनकात्सीतां तातादेशेन राघवः।
आम्नायशासनेनार्चां यजमानादिवानलः॥ १०८॥

**जग्राहेति**। रघोर्गोत्रापत्यं पुमान्राघवः श्रीरामस्तातस्य पितुर्दशरथस्यादेशेनाज्ञया। 'तातस्तु जनकः पिता' इत्यमरः। जनकाद्दातुः सीतामनलो हुताशन आम्नायशासनेन श्रुतिचोदनया यजमानाद्यजनशीलाद्गृहस्थात्। यजतेस्ताच्छील्ये शानच्। 'आने मुक्' इति मुगागमः। अर्चां होमादिसत्क्रियामिव जग्राह गृहीतवान्। परिणीतवानित्यर्थः। बिम्बप्रतिबिम्बभावेनोपमालंकारः॥

---

१. 'ततः। जनकः' इति पाठः।

आश्चर्यमेतत् ।

आश्चर्यमेतत् । एतदद्भुतम् ॥

किं तदित्याह—

गुणमनिमिषचापे कंचिदारोप्य सीतां
कुशिकतनयवाक्यादग्रहीद्रामभद्रः ।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते
निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि ॥ १०९ ॥

गुणमिति । रामभद्रः श्रीरामः । अत्र भद्रशब्दप्रयोगः सकलकल्याणस्वरूपत्वाद्विवाहकर्मदीक्षितत्वाच्चेत्यवगन्तव्यम् । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । कुशिकतनयवाक्याद्विश्वामित्रवचनात् । न निमिषन्तीत्यनिमिषा देवाः । पचाद्यच् । तेषां चापे । मूर्तत्वान्निक्षेपणार्ह इति भावः । कंचिदेकं गुणं मौर्वीम् । विद्यादिष्वेकतमं गुणं चेति गम्यते । आरोप्य निक्षिप्य सीतामग्रहीद्गृहीतवान् । तदनु सीताग्रहणानन्तरं तस्य श्रीरामस्य अनु पश्चाज्जन्म यस्यानुजन्मा लक्ष्मणोऽपि मैथिलेन्द्रस्य जनकस्य चित्ते । अमूर्तत्वान्निक्षेपणानर्हेऽपीति भावः । निहिताः परयोगं विनैव निक्षिप्ता बहवोऽनेके गुणा विद्याविनयादयो मौर्व्यश्च येन स तथोक्तः सन् । ऊर्मिलां जनकस्यौरसीं कन्यामग्रहीत् । उक्तरीत्या श्रीरामस्य सीताग्रहणं युक्तम् । लक्ष्मणस्योर्मिलाग्रहणमेवाश्चर्यमित्यर्थः । दुरारोपहरचापारोपणादमानुषवीर्यवत्तां निरीक्ष्य जनकः श्रीरामाय सीतां वीर्यशुल्कं ददौ । वीर्यविनयादिसकलसद्गुणसंपन्नतया योग्यतामालोच्य लक्ष्मणायोर्मिलामिति परमार्थः । नात्र व्युत्क्रमविवाहदोषः । भिन्नोदरत्वात्तेषाम् । 'पितृव्यपुत्रसापत्नपरनारीसुतेषु च । विवाहोपनयादौ (?) न भवेत्सा हि दूषणी ॥' 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे । स्तम्भसत्वादिसंध्यादिविद्यादिविनयादिषु ॥' इति विश्वः । अत्रोपमानाच्छ्रीरामादुपमेयस्य लक्ष्मणस्याधिक्यप्रतीतेर्व्यतिरेकालंकारः । 'उपमानाद्यदन्यस्य व्यतिरेकः स उच्यते' इति लक्षणात् । स चोक्तश्लेषानुप्राणित इति संकरः । मालिनीवृत्तम् ॥

ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः ।
माण्डवीश्रुतकीर्तिभ्यामभूतां गृहमेधिनौ ॥ ११० ॥

तत इति । ततो रामलक्ष्मणविवाहानन्तरं भरतशत्रुघ्नौ कुशध्वजस्य जनकानुजस्य नियोगतो निदेशात् । पञ्चम्यास्तसिः । 'नियोजितौ' इति पाठे कुशध्वजेन नियोजितौ मदीयं कन्याद्वयं यथायोग्यं प्रतिगृह्यतामिति नियोजितौ सन्तौ । माण्डवीश्रुतकीर्तिभ्यां गृहमेधिनौ गृहस्थावभूताम् । माण्डवीश्रुतकीर्त्याख्ये कुशध्वजपुत्र्यौ क्रमेण भरतशत्रुघ्नौ परिणीतवन्तावित्यर्थः । गृहैर्दारैर्मेधेते संगच्छेते इति गृहमेधिनौ । 'दारेष्वपि गृहाः' इत्यमरः । 'जाया च गृहिणी गृहाः' इति हलायुधश्च । 'मेधृ संगमे' इति धातोर्णिनिः ॥

अथ दशरथः तनयैः सह कृतविवाहैर्विदेहेभ्यः प्रतिनिवर्तमानः

१. 'स्वतनयैः' इति पाठः ।

**संवर्तसमयमुज्जृम्भितहुतवहदुःसहरोषं भीषणदुर्वारपराक्रमं क्षत्रवर्गगर्वसर्वंकषपरश्वधधाराधीनरुधिरधाराकल्पितपितृतर्पणं दर्पवतामग्रेसरमुग्रप्रतापिनं तपःसमुचितवल्कलवसानमपि वासनावशादनतिपरिमुषितयुद्धश्रद्धं मध्येमार्गं भार्गवं मुनिं राममद्राक्षीत् ।**

**अथेति** । अथ तनयविवाहानन्तरं दशरथः कृतविवाहैर्विहितपरिणयैः । नवोढासंगतैरित्यर्थः । तनयैः सह रामादिभिः साकं विदेहेभ्यो जनपदेभ्यः । 'पञ्चमी विभक्ते' इति पञ्चमी । प्रतिनिवर्तमानो निजराजधानीं प्रत्यावर्तमानः सन् । संवर्तसमये प्रलयकाले । 'संवर्तः प्रलयः कल्पः' इत्यमरः । समुज्जृम्भितो जाज्वल्यमानो यो हुतवहोऽग्निस्तद्वद्दुःसहः सोढुमशक्यो रोषो यस्य तम् । अतएव भीषणो भयंकरो दुर्वारो निवारितुमशक्यश्च पराक्रमो भुजबलं यस्य तम् । भीषणेत्यत्र 'भीस्म्योर्हेतुभये' इति षुक् । तथा क्षत्रवर्गस्य क्षत्रियनिवहस्य गर्वसर्वंकषाहंकारनिरासका या परश्वधधारा 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः । तदधीना तदायत्ता । तन्निष्पादितेति यावत् । या रुधिरधारा रक्तप्रवाहस्तया कल्पितमनुष्ठितं पितृतर्पणं येन तथोक्तम् । सप्रतिज्ञं त्रिःसप्तकृत्वः क्षत्रियान्निजकुठारेण निहत्य तदीयरुधिरेण पितृनिवापाञ्जलिं कृतवन्तमित्यर्थः । सर्वंकषेत्यत्र 'सर्वकूलाभ्रकरीषेषु–' इति खच्प्रत्ययः। 'अरुर्द्विषद्–' इत्यादिना मुमागमः । दर्पः शौर्यादिमदस्तद्वतामग्रेसरम् । अतिमदोद्धतमित्यर्थः । उग्रप्रतापिनम् । आज्ञादण्डप्रतिदण्डाभ्यां प्रचण्डप्रतापमित्यर्थः । यद्यपि 'न कर्मधारयान्मतुप्' इति कर्मधारयान्मत्वर्थीयप्रत्ययो नोपपद्यते, तथाप्यनुद्वेगकरत्वात्सर्वधनीसर्वकेशीत्यादिवन्मत्वर्थीये इनिर्बोढव्यः । तथा तपःसमुचितं तपश्चर्यानुकूलं वल्कलं वृक्षत्वङ्निर्मितवस्त्रं वसानमाच्छादयन्तम् । 'वस आच्छादने' इति धातोः शानच् । तथापि वासनावशात्क्षत्रियक्षेत्रसंजननवशादनतिपरिमुषिता अत्यन्तानपहृता युद्धश्रद्धा युद्धादरो यस्य तम् । 'इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि' इति वचनादिति भावः । मुनिं मननशीलं भृगुवंशोद्भवं भार्गवं रामं जामदग्न्यं मध्येमार्गम् । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । तत्सन्नियोगादेकारान्तत्वं च मध्यशब्दस्य । अद्राक्षीद्दृष्टवान् दृशेर्लुङि 'इरितो वा' इति विकल्पात् अङभावपक्षे सिचि वृद्धिः । 'न दृशः' इति क्सादेशाभावः ॥

**अप्राक्षीच्च तन्निरीक्षणादेव प्रक्षीणहर्षोऽपि महर्षिभिः सह विधाय सपर्यामार्यशील, कुशलमिति ।**

**अप्राक्षीदिति** । तस्य भार्गवस्य निरीक्षणादेव । नतु व्यापारादित्येवकारार्थः । प्रक्षीणहर्षोऽपि निहतानन्दोऽपि महर्षिभिः सह वसिष्ठादिमहर्षिभिः साकं सपर्या

१. 'दुर्निमित्तदूयमानान्तरङ्गः संवर्त' इति पाठः. २. 'दुःसहरोषभीषणम्' इति पाठः. ३. 'परिकल्पित' इति पाठः. ४. 'समुदग्रप्रतापम्' इति पाठः. ५. 'वल्कलमयवसनं वसानम्' इति पाठः. ६. 'अन्विष्टराममद्रम्' इति पाठः. ७. 'समम्' इति पाठः. ८. 'आर्यशील: कुशलमन्वयुङ्क्त' इति पाठः.

पूजाम् । 'पूजा नमस्यापचितिः सपर्याचार्हणाः समाः' इत्यमरः । विधाय कृत्वा । अवश्यकर्तव्यत्वात्कालोचितत्वाच्चेति भावः । हे आर्यशील सत्स्वभावसंपन्नेति भयभक्तिभ्यामामन्त्रणम् । कुशलमिति काकुः । इत्यप्राक्षीत्पृष्टवान् । 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्' इति स्मरणात् । दर्शनसमुच्चयार्थकश्चशब्दः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥

ततः किमित्यत आह—

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां
भृगुपतिरिदमूचे प्रश्रितं रामभद्रम् ।
अवजिगमिषुरास्मं जीर्णचापात्तकीर्ते-
रविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन् ॥ १११ ॥

**अथेति** । अथ कुशलप्रश्नानन्तरं भृगुपतिर्भार्गवरामः प्रसन्नां प्रसादगुणसंपन्नाम् । श्राव्यामित्यर्थः । तां पूर्वोक्तां दशरथस्य वाणीमशृण्वन्ननादरादनाकर्णयन्प्रश्रितं । ब्राह्मणोऽयमिति विनयप्रह्वं रामभद्रं प्रति इदं वचनमूच उक्तवान् । किं तद्वचनमत आह—अविदितेति । जीर्णचापेन शिथिलहरचापारोपणेन हेतुना आत्तकीर्तेः संप्राप्तयशस इति सावहेलनवचनम् । तथा अविदितपरशोरज्ञातनिजायुधप्रभावस्येति भयोत्पादनवचनम् । येन परशुना त्रिःसप्तकृत्वः क्षत्रिया विदारिता इति भावः । ते तव दोर्मदं भुजदर्पमस्मिन्वैष्णवे कार्मुके । कर्मणे प्रभवतीति कार्मुकम् । 'कर्मण उकञ्' इति उकञ् प्रत्ययः । तस्मिन्नवजिगमिषुर्ज्ञातुमिच्छुरासमभवम् । गमेः सन्नन्तादुप्रत्ययः । शिथिलतरहरचापस्य किं नमनेन भङ्गेन वा, मदीयचापारोपणेन त्वदीयभुजबलं ज्ञातुमिच्छामीत्युक्तवानित्यर्थः । मालिनीवृत्तम् ॥

ततः श्रीरामः किमकार्षीदित्यत आह—

आदाय तत्सगुणमाशु विधाय तत्र
संधाय बाणमवधार्य[2] तपोधनत्वम् ।
तज्जीवितस्य[3] दयमानमना मनीषी
संभूतघोरसमराद्विरराम रामः ॥ ११२ ॥

**आदायेति** । मनस ईषी मनीषी विवेकसंपन्नः । शकन्ध्वादित्वात्पररूपम् । व्रीह्यादित्वान्मत्वर्थे इनिः । रामस्तद्भार्गवकार्मुकमादाय गृहीत्वा आशु शीघ्रं सगुणं सज्यं विधाय कृत्वा । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । तत्र कार्मुके बाणं शरं संधाय योजयित्वा । ततस्तपोधनत्वमवधार्य । अयं तपस्वी ब्राह्मणोऽवध्य इति निर्धार्येत्यर्थः । अतएव तज्जीवितस्य भार्गवरामप्राणधारणं प्रतीत्यर्थः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । दयमानं ताच्छील्येन दयातत्परं मनो यस्य स तथोक्तः

१. 'प्रस्थितम्' इति पाठः. २. 'अवधाय' इति पाठः. ३. 'तज्जीविताय' इति पाठः.

सन् । संभूतघोरसमरात्समुपस्थितदारुणरणाद्विरराम विरतोऽभूत् । 'जुगुप्साविराम–' इत्यादिना पञ्चमी । उक्तरीत्या चापारोपणाद्याडम्बरमेव कृतवान् । 'न ब्राह्मणो हन्तव्यः' इति न्यायेन युद्धं न कृतवानित्यर्थः । नहि युक्तायुक्तविचारतत्परा विवेकिनो निजभुजबलमेव पश्यन्तीति भावः । वसन्ततिलकावृत्तम् ॥

किंच ।

**तावुभौ च भृगुवंशसंभवौ चापदण्डजमदग्निसंभवौ ।**
**प्रह्वभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः ॥ ११३ ॥**

किंचेति चार्थः । **ताविति** । भृगुवंशौ भृगुमुनिवेणू संभवः कारणं ययोस्तौ । तज्जन्यावित्यर्थः । यद्वा भृगुवंशे शैलप्रपातजवेणौ भृगुमुनिकुले च संभव उत्पत्तिर्ययोस्तौ । 'भृगुर्दैत्यगुरौ शंभौ जमदग्निप्रपातयोः' इति नानार्थरत्नमाला । तौ पूर्वोक्तावुभौ चापदण्डजमदग्निसंभवौ धनुर्यष्टिजामदग्न्यौ केवलमत्यन्तं प्रह्वभावमपरोपणताप्रयुक्तनम्रत्वं विनयावनतत्वं चावलम्ब्य राघवेणार्पितो निक्षिप्तो गुणो मौर्वी साधुत्वं च ययोस्तौ । यद्वा राघवेर्पितो गुणः पराक्रमः सत्त्वगुणश्च याभ्यां तौ बभूवतुः । एकत्र स्वारोपस्य महापराक्रमसूचनात्, अन्यत्र विष्णववतारत्वेन तत्र सत्त्वगुणसमर्पणाच्चेति भावः । अत्र चापदण्डजमदग्निसंभवयोः केवलप्रकृतयोरेव प्रह्वभावावलम्बनरूपसमानधर्मेणौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरत्वात्तुल्ययोगितालंकारः । 'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति लक्षणात् । स चोक्तश्लेषाङ्गेन संकीर्यते । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥

**युगपत्प्राप्तगुणयोश्चापभार्गवरामयोः ।**
**ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम् ॥ ११४ ॥**

**युगपदिति** । युगपदेकदा प्राप्तौ गुणौ मौर्वी साधुत्वं च ययोस्तयोश्चापभार्गवरामयोः । 'चापभार्गवयोस्तयोः' इति च पाठः । ऋजुता आर्जवं वक्रतां नम्रत्वमाप । तथा वक्रता कौटिल्यमार्जवं प्राप । 'आप्नोतेर्लुङ्' इति लृदित्वाच्चलेरङादेशः । सज्यत्वादृजुश्चापो नम्रोऽभूत् । तादृग्धनुर्नमनदक्षमिममहं किं कर्तुं शक्नोमीत्यहंकारं परित्यज्य साधुत्वग्रहणाद्वक्रो भार्गवः ऋजुरासीदिति वाक्यार्थः । अत्र प्राप्तगुणपदार्थस्य विशेषणगत्या ऋजुतावक्रतयोरितरेतरभावप्राप्तिं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् । तथा धनुर्गुणप्राप्त्यनन्तरकालीनत्वेऽपि भार्गवगुणप्राप्तेः युगपदित्येककालीनत्वोक्त्या तदसंबन्धेऽपि संबन्धाभिधानादसंबन्धे संबन्धरूपातिशयोक्तिः । सा च स्वतःसिद्धकविप्रौढोक्तिसिद्धकार्यकारणपौर्वापर्यविपर्ययनिबन्धनेति रहस्यम् । तथा ऋजुता वक्रतां वक्रता चार्जवं प्रापेति स्फुरतो विरोधस्योक्तरीत्या समाधानाद्विरोधाभासश्चेति संकरः ॥

**ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गतिं रुरोध ।**

१. 'भार्गवयोस्तयोः' इति पाठः. २. 'स्वर्गगतिम्' इति पाठः.

तत इति। ततस्तदनन्तरं राघवस्तत्क्षणं तस्मिन्नेव क्षणे। अत्यन्तसंयोगे द्वितीया। अमोघेनान्वर्थेन शरेण भार्गवस्य भृगुनन्दनस्य रामस्य स्वर्गतिः स्वर्लोकगमनं रुरोध बभञ्जेत्यर्थः। 'स्वरव्ययं स्वर्गनाक–' इत्यमरः। 'देशोपायगमे गतिः' इति वैजयन्ती॥

स्थाने हि तत्।

स्थाने हि तत्। तद्गतिनिरोधनं स्थाने हि युक्तं खलु। 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः॥

तत्कथमित्यत आह—

नूनं जनेन पुरुषे महति प्रयुक्त-
मागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं
यद्भार्गवः परगतेर्विहतिं प्रपेदे॥ ११५॥

नूनमिति। जनेन महति पुरुषे महानुभावे विषये प्रयुक्तं कृतमागोऽपराधः। 'आगोऽपराधो मन्तुश्च' इत्यमरः। परमत्यन्तं तस्यागसोऽनुरूपमनुगुणं फलं प्रसूते जनयति। नूनमिति वस्तुविचारत्वान्नायमुत्प्रेक्षालंकारः। कुतः। यद्यस्मात्कारणाद्भार्गवः। उद्वहतीत्युद्वहो रघूणामुद्वहो रघूद्वहो रघुनन्दनः। 'तस्यास्तु तोकापत्यं च प्रसवोद्वहनन्दनः' इतिकोशः। 'नन्दिग्रहि–' इत्यादिना पचाद्यच्। तस्य गतौ विषये क्षणं क्षणमात्रमन्तरायम्। विघ्ननिरोधमिति यावत्। कृत्वा परगतेः स्वर्लोकप्राप्तेर्विहतिं हानिं प्रपेदे प्राप। ऐहिकामुष्मिकगत्योरन्यतरविच्छेदं पृष्टः सन्निहलोकसंचारतात्पर्येणामुष्मिकगतिनिरोधमेवाङ्गीचकार भार्गवः। अतस्तन्निरोधमेव श्रीरामश्चकारेत्यर्थः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासालंकारः। 'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' इति सर्वस्वसूत्रम्॥

अथ संक्रान्तया जामदग्न्यशक्तिसंपदा संपन्नं पन्नगपरिवृढभोगभुजाभिरामं राममविरलमालिङ्ग्य[1] मूर्ध्न्युपाघ्राय दशरथः परिखयेव[2] परिसरे परिसरन्त्या सरयूसरितानुविद्धामयोध्यां दारकान्सदारान्सादरमवलोकयन्तीनां पौरपुरंध्रीणां नीरन्ध्रितगवाक्षैः[3] कटाक्षैः सौन्दर्यैवञ्चितताापिञ्छैः[4] पिञ्छातपत्रायमाणधवलातपत्रः[5] प्रविवेश।

अथेति। अथ जामदग्न्यस्य परलोकगतिविहत्यनन्तरं दशरथः संक्रान्तया प्रतिफलितया। जमदग्नेरपत्यं पुमाञ्जामदग्न्यः। गर्गादिभ्यो यञ्। तस्य भार्गवरामस्य शक्तिसंपदा सामर्थ्यसंपत्त्या संपन्नं समृद्धम्। अवतारादवतारान्तरसंक्रमणनियमा-

१. 'अविरलपुलकम्' इति पाठः. २. 'सपरिखयेव' इति पाठः. ३. 'नीरंध्रित' इति पाठः. ४. 'तापिञ्छै' इति पाठः. ५. 'पिच्छातपत्रा' इति पाठः.

त्संप्रतिपन्नवैष्णवतेजःपरिपूर्णमित्यर्थः । परिवृंहतीति परिवृढः प्रभुः । वृंहेर्वा कर्तरि क्तप्रत्ययः । ते 'प्रभौ परिवृढ' इति नकारहकारयोर्लोपो निष्ठातकारस्य ढत्वं च निपात्यते । पन्नगपरिवृढस्य भुजगेन्द्रस्य भोगः कायस्तत्कल्पाभ्यां भुजाभ्यामभिरामं मनोहरम् । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । रामं श्रीरामभद्रमविरलं गाढमालिङ्ग्याश्लिष्य । तथा मूर्ध्नि शिरस्युपाघ्रायाघ्राणं कृत्वा । कृच्छ्रनिर्गतं पुत्रं पिता शिरसि जिघ्रतीति शास्त्राचारप्रसिद्धिः । परिखया पट्टणस्य वलयाकारेण निखातजलाधारदुर्गविशेषेणेवेत्युत्प्रेक्षा । परिसरे पर्यन्तभुवि । 'पर्यन्तभूः परिसरः' इत्यमरः । परिसरन्त्या प्रवहन्त्या सरयूसरिता सरय्वाख्यया नद्यानुविद्धामावेष्टितामयोध्यां निजराजधानीं सदारान्सवधूकान्दारकाञ्श्रीरामादिकुमारान्सादरं सस्नेहमवलोकयन्तीनां पौरपुरंध्रीणां संबन्धिभिस्तथा नीरन्ध्रितगवाक्षैर्निरन्तरगवाक्षमार्गैः । 'वातायनं गवाक्षः' इत्यमरः । सौन्दर्यवञ्चिततापिञ्छैः सौभाग्यनिर्जिततमालकुसुमैः । तत्सदृशैरित्यर्थः । अत एवोपमालंकारः । 'कालस्कन्धस्तमालः स्यात्तापिञ्छः' इत्यमरः । तापिञ्छस्य पुष्पं तापिञ्छम् । 'पुष्पमूलेषु बहुलम्' इति लुक् । कटाक्षैरपाङ्गावलोकनैः । यद्वा । 'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥' इत्युक्तलक्षणैः । पिञ्छातपत्रं वर्हमयच्छत्रं तद्वदाचरतीति पिञ्छातपत्रायमाणम् । 'पिञ्छवर्हे नपुंसके' इत्यमरः । पिञ्छातपत्रशब्दादाचारक्यङन्ताल्लटः शानजादेशः । 'आने मुक्' इति मुगागमः । तथाभूतं धवलातपत्रं श्वेतच्छत्रं यस्य स तथोक्तः । सन्प्रविवेश प्रविष्टवान् । अत्रातपत्रस्य स्वधवलिमपरित्यागेन कटाक्षनीलिमस्वीकरणत्वोक्तेस्तद्गुणालंकारः । तेन चोक्तोपमानिरूढेन धवलातपत्रस्य पिञ्छातपत्रत्वमुत्प्रेक्ष्यत इति त्रयाणां संकरः ॥

लज्जा[1]वशादविशदस्मरविक्रियाभि-
स्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान् ।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां
तारुण्ययोगचतुरश्चतुरः सिषेवे ॥ ११६ ॥

**लज्जेति ।** लज्जावशाल्लज्जायत्तत्वाद्धेतोः । त्रपापारतन्त्र्यादित्यर्थः । 'वश आयत्ततायां च' इत्यमरः । अविशदा अस्फुटाः स्मरविक्रिया मन्मथचेष्टा यासां ताभिः । एतेन मुग्धावस्था सूच्यते । 'उदययौवना मुग्धा लज्जाविजितमन्मथा' इति लक्षणात् । ताभिर्वधूभिः सीतादिभिर्नवोढाभिः । 'वधूर्जायानवोढयोः' इति विश्वः । अतिवेलमत्यर्थमवाप्तसौख्यान्प्राप्तानन्दांश्चतुरश्चतुःसंख्याकानिक्ष्वाकुनाथस्य दशरथस्य तनयाञ्श्रीरामादीन्कुमारांस्तारुण्ययोगे यौवनसंगतिदशायां चतुरो निपुणः । विनोदकर इति यावत् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । रसानां नवानां प्रथमः शृङ्गाररसः सिषेवे सेवितवान् । सवधूकानां तरुणानां चतुर्णां राजकुमाराणां श्रीरामादीनां संभोगशृङ्गारः प्रवृत्त इत्यर्थः । नवरसास्त्वलंकारशास्त्र उक्ताः—

१. 'तत्र । लज्जा' इति पाठः.

'शृङ्गारवीरकरुणरौद्रहास्यभयानकाः। बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः॥' इति। तत्र शृङ्गारो द्विविधः—संभोगो विप्रलम्भश्चेति। तदुक्तं शृङ्गारतिलके—'संभोगो विप्रलम्भश्च द्विधा शृङ्गार इष्यते। संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः॥ विप्रलम्भश्चतुर्धात्र वर्ण्यते रसकोविदैः। पूर्वानुरागमानाख्यः प्रवासे करुणात्मना॥ प्रागसंगतयोर्यूनोराद्यः स्यादुत्तरे त्रयः। स्युः प्राक्संगतयोरेव तत्र पूर्वानुरञ्जनम्॥' इति। अत्र समवायिकारणत्वेनालम्बनयोर्नायिकानायकयोः समागमजन्मा रतिस्थायी संभोगशृङ्गारः। रतिर्नाम संभोगविषयक इच्छाविशेषः। तदुक्तम्—'यूनोरन्योन्यविषया स्थायिनीच्छा रतिः स्मृता' इति। संभोगश्च यूनोरन्योन्यानन्दजनकं दर्शनालिङ्गनादि कर्म। तदुक्तं भावप्रकाशे—'कामोपचारसंभूतः कामः स्त्रीपुंसयोः सुखम्। सुखमानन्दसंभेदः परस्परविमर्दजः॥ उपचारस्तथानन्दकारकं कर्म कथ्यते॥' इति। तद्विषय इच्छाविशेषः स्पृहापरपर्यायः प्रमोदात्मकमनोवृत्तिविशेषो रतिरित्यर्थः। तदुक्तम्—'संपन्नैश्वर्यसुखयोरशेषगुणयुक्तयोः। नवयौवनयोः श्लाघ्यप्रकृत्योः श्लिष्टरूपयोः॥ नारीपुरुषयोस्तुल्यपरस्परविभावना। स्पृहाह्वया चित्तवृत्ती रतिरित्यभिधीयते॥' इत्यलमतिप्रसङ्गेन। वसन्ततिलकावृत्तम्॥

**विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।**
**राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥ ११७॥**

**विद्ययेति**। दर्भपत्राग्रधीः। निशितबुद्धिरिति यावत्। सुधीर्विद्वान् [कर्ता]। विशेषणद्वयमेतद्रामेऽपि योज्यम्। त्रयी त्रिवेदी। 'इति वेदास्त्रयस्त्रयी' इत्यमरः। तस्या दृष्ट्या पर्यालोचनेन या विद्या ज्ञानं तयेव रामस्तया राजपुत्र्या जानक्या। 'सुतोऽग्रराजभोजमेरुभ्यो दुहितुः पुत्रड्वक्तव्यः' इति दुहितृशब्दस्य पुत्रडादेशः। उत्तमां प्रीतिं परमानन्दं प्रपेदे प्राप। उपमालंकारः॥

अथ कविः काव्यवर्णनमाख्यानपूर्वकं काण्डसमाप्तिं कथयति—

**इति विदर्भराजविरचिते चम्पूरामायणे बालकाण्डं समाप्तम्।**

**इतीत्यादि**। इतिशब्दः परिसमाप्तौ। विदर्भाणां जनपदानां राजा विदर्भराजो भोजस्तेन विरचिते प्रणीते इति कविनामकथनम्। 'गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते' इत्युक्तलक्षणं चम्पूः तथाभूतं रामस्यायनं चरितं वृत्तं चम्पूरामायणं तस्मिन्निति काव्यवर्ण्ययोः कथनम्। शिष्टं स्पष्टम्॥

इति श्रीमत्परमयोगीन्द्रवृन्दमानसेन्दीवरसंदोहामन्दानन्दलाभाभिनन्दितरघुनन्दनचरणारविन्दमकरन्दास्वादनकन्दलितसारस्वतेनाखण्डतपःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्य वचनान्वयसुधापारावारपारिजातस्य धन्वन्तर्यवतारान्तरस्यायुर्वेदप्रमुखनिखिलविद्यासारसर्वज्ञसार्वभौमस्य कोदण्डपण्डितवर्यस्य तनूजेन गङ्गाम्बिकागर्भरत्नाकरसुधाकरेण श्रीरामचन्द्रबुधेन्द्रेण विरचितायां चम्पूरामायणव्याख्यायां साहित्यमञ्जूषिकासमाख्यायां बालकाण्डं समाप्तम्॥

रामचन्द्रार्यरचिता रामचन्द्रपदार्पिता।
बालकाण्डस्य संपूर्णा व्याख्या मञ्जूषिकाभिधा॥

---

६-८

# अयोध्याकाण्डम् ।

गच्छता दशरथेन निर्वृतिं भूभुजामसुलभां भुजाबलात् ।
मातुलस्य नगरे युधाजितः स्थापितौ भरतलक्ष्मणानुजौ ॥ १ ॥

**गच्छतेति** । भुजाबलान्निजभुजशक्तेः । 'बलं शक्तौ बलासुरे' इति शाश्वतः । भुजशब्दष्टाबन्तोऽप्यस्ति । 'त्रेतायां रघुनायकस्य महितख्याता भुजाया यथा' इति प्रयोगश्च । भूभुजां राज्ञामसुलभां दुर्लभाम् । अनन्यसाधारणामिति भावः । निर्वृतिं सुखम् । 'निर्वाणं निर्वृतिः सुखम्' इति पर्यायः । गच्छता प्राप्तवता । अनुभवतेति यावत् । गुणवत्पुत्रलाभेन निजभुजबलस्य साफल्यसिद्धेरिति भावः । दशरथेन । भरतलक्ष्मणानुजौ भरतशत्रुघ्नौ । शत्रुघ्नस्य रामानुजत्वेऽपि नैयत्येन भरतानुजत्वम्, लक्ष्मणस्य च श्रीरामानुजत्वमित्युभयस्यापि स्वतःसिद्धत्वादिति भावः । युधाजितो युधाजिन्नाम्नो मातुलस्य मातृभ्रातुः । तयोरेवेति भावः । 'मातृभ्राता तु मातुलः' इत्यमरः । नगरे केकयस्य पुरेऽश्वमेधपुरे वा स्थापितौ प्रतिष्ठापितौ । दौहित्रदिदृक्षोर्वृद्धस्य केकयस्याज्ञया तदानयनार्थमुपागतवति युधाजिति राजा तनयौ प्रेषितवानित्यर्थः । श्रीरामायणे अयोध्याकाण्डप्रारम्भे 'गच्छता मातुलकुलम्' इत्याद्यपद्ये प्रथमतः प्रयुक्तं 'गच्छता' इति पदं वाल्मीकिना, तदेतद्भोजेनात्रापि मङ्गलाचारतया चमत्कारकारितया वा प्रयुक्तमित्यनुसंधेयम् । एवमुत्तरत्रापि तत्तत्काण्डाद्यपदं तत्तत्काण्डादौ प्रयुक्तमित्यवगन्तव्यम् । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥

तदनन्तरं राजा श्रीरामाभिषेकं कर्तुमुद्युक्तवानित्याह—

अथ दशरथः पुत्रं रामं स्वतस्त्रिजगत्पतिं
स्वविषयमहीमात्रे कर्तुं पतिं विदधे मतिम् ।
भुवनभरणे कल्यं कल्याणभूधरमादरा-
त्स्वगृहपटलीधुर्यस्तम्भं विधातुमना इव ॥ २ ॥

**अथेति** । अथ भरतशत्रुघ्नयोर्मातुलनगरप्रतिष्ठापनानन्तरं दशरथः स्वतः स्वभावादेव । त्रयाणां जगतां समाहारस्त्रिजगत् । 'तद्धितार्थ–' इत्यादिना द्विगुः । तस्य पतिं त्रिलोकाधीश्वरं पुत्रं निजभाग्योदयात्पुत्ररूपेणावतीर्णं रामम् । श्रीरामनामाङ्कितं विष्णुमित्यर्थः । स्वविषया स्वस्य परिपाल्यत्वेन गोचरा या मही भूस्तन्मात्रे । तावत्यां मह्यामित्यर्थः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । पतिं कर्तुं मतिं विदधे । निर्धारितवानित्यर्थः । अर्थनिर्धारणं मतिरिति तज्ज्ञाः । कथंभूत इव । भुवनभरणे त्रिलोकोद्वहने । 'भुवनं सलिले लोके' इत्यजयः । कल्यं समर्थं कल्याणभूधरं स्वर्णाचलम् । 'कल्याणमक्षये स्वर्णे कल्याणं मङ्गलेऽपि च' इति विश्वः । आदराच्छ्लाघ्योऽयमित्यासक्तेः स्वगृहपटली निजगृहनिवहः । गौरादित्वान्ङीष् । तस्या धुरं वहतीति धुर्यो धुरंधरः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । स चासौ स्तम्भश्च तं विधातुमना इव कर्तुकाम इवेत्युत्प्रेक्षा । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । श्रीरामस्य

परिमितमहीपतिकरणनिर्धारणं सुमेरोर्गृहाधारदारुविशेषकरणनिर्धारणप्रायमिवेत्युत्प्रेक्षार्थः। तया च विशिष्टमतिविधानमेरुस्तम्भविधानयोर्वाक्यद्वयार्थयोर्निर्दिष्टैकत्वासंभवात्सादृश्यलक्षणायामसंभवद्वस्तुसंबन्धवाक्यार्थवृत्तिर्निदर्शनाभेदो व्यज्यत इत्यलंकारेणालंकारध्वनिः। स चायं दृष्टान्तो ध्वनितो वाक्यभेदेन प्रतिबिम्बकरणाक्षेपे तस्योत्थानात्। अत्र तु वाक्यार्थे 'वाक्यार्थसमारोपाद्वाक्यैकवाक्यतायां तथा भावः' इत्यलंकारसर्वस्वकारः। हरिणीवृत्तम्—'भवति हरिणी न्सौ म्रौ स्लौ गो रसाम्बुधिविष्टपैः' इति लक्षणात्॥

**तदनन्तरमसौ संमन्त्र्य मन्त्रिभिः सह पौरवृद्धान्वृद्धश्रवःपुरोधः-समान्समाहूय समादिदेश।**

**तदिति**। तदनन्तरं मतिविधानानन्तरम्। असौ दशरथो मन्त्रिभिः सुमन्त्रप्रमुखैरमात्यैः सहेत्यर्थः। सहार्थविवक्षायां तृतीया। अतएव 'विनापि सहशब्देन भवति' इति काशिका। संमन्त्र्य सम्यगालोच्य वृद्धश्रवःपुरोधाः पुरुहूतपुरोहितो बृहस्पतिस्तत्समान्। विद्याबुद्ध्यादिभिर्गुणैस्तत्कल्पानित्यर्थः। उपमालंकारः। पुरे भवाः पौरास्ते च ते वृद्धाश्च तान्वयोवृद्धान्विप्रान्समाहूयामन्त्र्य समादिदेश। उक्तवानित्यर्थः॥

समादेशप्रकारमेव विवृणोति—

**विदितमेव हि भवतां शिवतातिमेव मतिं दधानाः सुपथा संचरमाणाः प्राणिनां दयमानमानसा मानधनाः यशःसमार्जनजागरूकाः जनोपतापसंमार्जनतत्पराः परां निर्वृतिमुपेत्य देवभूयं गताः सर्वे नः पूर्वपुरुषा इति॥**

**विदितमिति**। शिवतातिं शिवंकरीम्। कल्याणीमेवेत्यर्थः। 'शिवतातिः शिवंकरः' इत्यमरः। मतिं बुद्धिं दधाना धारयन्तः। न तु कदाचिदप्याघ्रातदुर्बुद्धिगन्धाः। सुपथा नीतिशास्त्रोक्तमार्गेण संचरमाणाः प्रवृत्तितत्पराः। न तूत्पथवर्तिनः। पथेत्यत्र 'पथो विभाषा' इति विकल्पात्समासान्ताभावः। तृतीयाविधाने 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीयापत्तिरित्याद्युक्तं प्राक्। तथा प्राणिनां दयमानमानसाः। सकलभूतदयापूर्णचित्ता इत्यर्थः। न तु कठिनहृदयाः। प्राणिनामिति 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। मानधना मानैकवित्ताः। न तु यथाकथंचित्प्राणनपरायणाः। यशःसमार्जनजागरूकाः कीर्तिसंपादनसावधानाः। न तु केवलार्थार्जनतत्पराः। 'जागर्तेरूकः' इत्यूकप्रत्ययः। जनोपतापसंमार्जनतत्परा निरुपधिपरदुःखप्रहाणेच्छापरतन्त्राः। न तूपेक्षातत्पराः। इत्थंभूता नोऽस्माकम्। इदानींतनाभिप्रायसंभावनया न। इति बहुवचनम्। सर्वे निखिलाः पूर्वपुरुषा इक्ष्वाकुप्रभृतयः पुरातननृपालाः परां निर्वृतिं परमसुखमुपेत्य देवभूयं देवत्वम्। 'भुवो भावे' इति क्यप्। गताः

१. 'समान्पुरोहितान्' इति पाठः. २. 'अयशःसंसरणिसंमार्जनजागरूकाः' इति पाठः. ३. 'मार्जनपराः' इति पाठः.

प्राप्ताः । इत्येतद्वृत्तं भवतां विदितमेव । भवद्भिर्ज्ञातमेवेत्यर्थः । न तु मया ज्ञापनीयम् । तथापि वक्तव्यार्थसंगत्यर्थं ज्ञापितमित्येवकारार्थः । 'मतिबुद्धि-' इत्यादिना वर्तमानार्थे क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । विशेषणाभिप्रायगर्भत्वात्परिकरालंकारः । 'साभिप्रायविशेषणं परिकरः' इति लक्षणात् ॥

**तस्मादस्माभिरपि तेषां मनीषामनुसरमाणैरेतावन्तं कालं परिपालिताः किल सकलाः प्रजाः ।**

तस्मादिति । तस्मात्कारणात्तेषामस्मत्पूर्वपुरुषाणां संबन्धिनीं मनीषां बुद्धिम् । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । 'सरणिम्' इति पाठे पद्धतिम् । मार्गमित्यर्थः । अनुसरमाणैरनुवर्तमानैः । 'अवश्यं पितुराचारः' इति न्यायेन शिवतातिबुद्धिधारणादिवैशिष्ट्येनैव प्रवर्तमानैरित्यर्थः । अत्रास्या मनीषाया अन्यत्रासंभवात्तत्सदृशीं मनीषामिति सादृश्याक्षेपादसंभवद्वस्तुरूपो निदर्शनालंकारः । अस्माभिरप्येतावन्तं कालम् । बहुकालमित्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । सकलाः प्रजाः परिपालिताः किल । नीतिशास्त्रानुसारेण संरक्षिताः खलु । 'वार्तासंभाव्ययोः किल' इत्यमरः ॥

न तु वार्तामात्रमेव, किंतु भवन्तोऽप्यत्र प्रमाणमित्याह—

**प्रमाणमत्र परिपालनक्रियामिमां मदीयामनुभवन्तो ननु भवन्त एव[3]**

प्रमाणमिति । अत्रास्मिन्नर्थे इमां प्रवर्तमानां मदीयां परिपालनक्रियां प्रजासंरक्षणकृत्यमनुभवन्तः प्रत्यक्षमनुसंदधाना भवन्तो यूयमेव प्रमाणं ननु । साक्षिणः खल्वित्यर्थः । किं प्रमाणान्तरोपन्यासेनेत्येवकारार्थः । नन्वित्यामन्त्रणे वा ॥

अस्तु तर्हि । ततः किं तत्राह—

**भवतामभ्युपगमानां निगमानां प्रतीपगामिनीं पदवीं न प्रत्येति खलु लोकस्तदस्ति किंचिदभ्यर्थनीयम् ।**

भवतामिति । भवतामभ्युपगमानाम् । भवद्भिरङ्गीकृतानामित्यर्थः । 'अङ्गीकाराभ्युपगम-' इत्यमरः । निगमानां नीतिशास्त्राणां प्रतीपगामिनीं प्रतिकूलवर्तिनीं पदवीं मार्गं लोको जनः । कश्चिदपीति शेषः । न प्रत्येति नानुवर्तते खलु । युष्मदुपदिष्टनीतिमार्गमेवानुसरतीत्यर्थः । तत्तस्मात्कारणात्किंचित्प्रयोजनमभ्यर्थनीयं याचनीयम् । द्रष्टव्यमिति यावत् । अस्ति ॥

किं तदभ्यर्थनीयमित्याह—

**मम सुरनरगीतख्यातिभिर्हेतिभिर्वा**
**दिवि भुवि च समानप्रक्रमैर्विक्रमैर्वा ।**

---

१. 'एतेषां सरणिम्' इति पाठः. २. 'क्रियामनुभवन्तो' इति पाठः. ३. 'एवम्' इति पाठः. ४. 'अभ्युपगतानां निगमानां वा' इति पाठः.

नियतमपरिहार्या या जरा सा मदङ्गे
विकचकमलषण्डे चन्द्रिकेवाविरासीत् ॥ ३ ॥

**ममेति**। सुरनरगीतख्यातिभिर्देवमानुषाभिष्टुतप्रतिष्ठैर्हेतिभिरायुधैर्वा । 'हेति-ज्वलांशुरायुधम्' इति वैजयन्ती ।-'हेतिः शस्त्रेऽपि नृस्त्रियोः' इति केशवश्च । तथा दिवि भुवि च स्वर्गमर्त्यलोकयोः समानप्रक्रमैस्तुल्यप्रकारैः । लोकद्वयेऽप्यप्रतिहतप्रसारैरित्यर्थः । विक्रमैः पराक्रमैर्वा या जरा पलितादिरूपा जीर्णावस्था । 'पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा' इत्यमरः । नियतं निश्चितमपरिहार्या परिहर्तुमशक्या । आयुधशक्त्या वा दुष्परिहरेत्यर्थः । सा जरा मदङ्गे मदीयशरीरे विकचकमलषण्डे प्रफुल्लाम्बुजकदम्बे चन्द्रिका कौमुदीवाविरासीत्प्रादुरभूत् । यथा चन्द्रिका कमलसंकोचम्लानतादिहेतुस्तथा मदीयाङ्गसंकोचादिहेतुर्जरा समुत्पन्नाभूदित्यर्थः । 'मृणालं बिसमब्जादिकदम्बे षण्डमस्त्रियाम्' इत्यमरः । 'चन्द्रिका कौमुदी ज्योत्स्ना' इति चामरः । उपमालंकारः । मालिनीवृत्तम् ॥

ततः किमित्यत आह—

तस्मात्समस्तक्षत्रवर्गगर्वपाटनेवरिष्ठधारापरश्वधभरणभीषणवेषभार्गवभङ्गादपरिच्छिन्नतरशौर्यशालिनि सौजन्यभाजने जनानुरागनिलये निर्मत्सरे वत्सले वत्सेऽस्मिन्विश्वंभराभारं चिरकालधार्यमाणमार्यैरनुमतः सन्नवतार्य विश्रान्तिसुखमनुभवितुमभिलषामीति ।

**तस्मादिति**। तस्माज्जराविर्भावाद्धेतोः समस्तक्षत्रवर्गस्य कार्तवीर्याद्यशेषक्षत्रियनिवहस्य गर्वपाटनेनाहंकारविदलनेन वरिष्ठोरुतरा । महत्तरेति यावत् । 'प्रियस्थिर—' इत्यादिनोरुशब्दस्य वरादेशः । तादृशी धारा यस्य स तथोक्तः परश्वधः कुठारस्तस्य भरणेन धारणेन भीषणो भयंकरो वेषो नेपथ्यं यस्य स तथोक्तस्तस्य भार्गवस्य जामदग्न्यस्य भङ्गेन गर्वनिर्वापणेनापरिच्छिन्नतरमतिगम्भीरं यच्छौर्यं तेन शालत आभीक्ष्ण्येनेति तथोक्ते । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । सौजन्यभाजने सुजनत्वैकनिकेतने जनानुरागनिलये सकलप्राणिलोकप्रेमास्पदे निर्मत्सरे परोत्कर्षासहनं मत्सरस्तद्रहिते । अनसूय इत्यर्थः । वत्सले सर्वतः स्निग्धे । वत्सः स्नेहः सोऽस्यास्तीति वत्सलः । 'स्निग्धस्तु वत्सलः' इत्यमरः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । अस्मिन्वत्स एतादृशसकलसद्गुणसंपन्ने श्रीरामे । चिरकालमारभ्य धार्यमाणमूह्यमानम् । विश्वं बिभर्तीति विश्वंभरा । 'संज्ञायां भृतॄवृजि—' इत्यादिना खच्प्रत्यये मुमागमः । विश्वंभराभारमशेषभूपरिपालनव्यापारमार्यैस्तत्रभवद्भिरनुमतस्तपोवनाश्रयार्थमनुज्ञातः सन् अवतार्य निवेश्य । निक्षिप्येत्यर्थः । विश्रान्तिसुखमखण्डविश्रमानन्दमनुभवितुमनुसंधातुमभिलषामीच्छामीति । एवमादिदेशेति पूर्वेण संबन्धः ॥

---

१. 'खण्डे' इति पाठः. २. 'पटुधारा' इति पाठः. ३. 'मत्सले च' इति पाठः.
४. 'आर्यैरमात्यैः' इति पाठः.

ततः किं जातमित्यत आह—

**ततः प्रावृषेण्यपयोवाहव्यूहस्तनितनादाकर्णनसमुदीर्णनिरतिशयाह्लादसंसर्गनिरर्गलनिर्गलत्केकालापिनः कलापिन इव जनाः प्रमदभवकलकलरवमुखरितहरिन्मुखा बभूवुः ॥**

**तत इति**। तत आदेशानन्तरं प्रावृषि भवः प्रावृषेण्यो वार्षिकः। 'प्रावृष एण्यः' इति एण्यप्रत्ययः। तादृशो यः पयोवाहव्यूहो जलधरपटलस्तस्य स्तनितं गर्जितमेव नादो ध्वनिः। 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः। तस्याकर्णनेन श्रवणेन समुदीर्णः। समुत्पन्न इत्यर्थः। गौणार्थत्वादग्राम्यत्वं प्रत्युतोत्कर्षावहमेव। यथाह दण्डी—'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति। तथाभूतो यो निरतिशयाह्लादः परमानन्दस्तस्य संसर्गेणावेशेन निरर्गलमप्रतिबन्धं यथा तथा निर्गलन्त्यो निर्गच्छन्त्यो याः केकाः स्ववाण्यस्ता आलपन्ति ताच्छील्येन कूजन्तीति तथोक्ताः। के मूर्ध्नि कायति ध्वनयतीति विग्रहः। 'केका वाणी मयूरस्य' इत्यमरः। कलापिनो बर्हिणो मयूरा इवेत्युपमा। जनाः श्रोतारः प्रमदभवो हर्षसमुत्पन्नः। 'प्रमदसंमदौ हर्षे' इत्यप्प्रत्ययान्तो निपातः। यः कलकलरवः कोलाहलध्वनिः। 'कोलाहलः कलकलः' इत्यमरः। तेन मुखरितानि मुखरीकृतानि। वाचालीकृतानीत्यर्थः। 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः। तानि हरितो दिङ्मुखानि दिगन्तराणि तान्येव मुखानि वदनानि येषां ते तथोक्ता बभूवुरिति श्लिष्टरूपकमुक्तोपमया संकीर्यते। श्रीरामाभिषेकवार्ताश्रवणजनितानन्दातिशयोल्लसितकोलाहलेनाशेषदिगन्तरालानि प्रतिध्वनिं चक्रुरित्यर्थः॥

**आनन्दबाष्पविसरो वदने प्रजाना-**
**माविर्बभूव मकरन्द इवारविन्दे।**
**रामस्य कान्तिमभिषेकदिने भवित्रीं**
**प्रक्षाल्य चक्षुरिव वीक्षितुमादरेण ॥ ४ ॥**

**आनन्देति**। आनन्दबाष्पविसर आनन्दाश्रुपूरः प्रजानां जनानां वदने मुखेऽरविन्दे पद्मे मकरन्दः पुष्परस इवेत्युपमा। आविर्बभूव प्रादुरासीत्। 'मकरन्दः पुष्परसः' इत्यमरः। किं कर्तुमिव। अभिषेकदिने पट्टाभिषेकदिवसे भवित्रीं भाविनीं रामस्य कान्तिं शोभाविशेषम्। चक्षुः। नेत्राणीत्यर्थः। प्रक्षाल्य संशोध्यादरेण प्रेम्णा वीक्षितुं द्रष्टुमिवेति फलोत्प्रेक्षा। यथा लोके चक्षुःप्रक्षालनपूर्वकं द्रष्टव्यं वस्तु पश्यन्ति तथात्रापि जना विशिष्टश्रीरामशरीरकान्तिं द्रष्टुकामाश्चक्षुः प्रक्षालयितुमिवानन्दाश्रूणि प्रवर्तयामासुरित्यर्थः। उत्प्रेक्षा। उक्तालंकारयोरन्योन्यनैरपेक्ष्यात्संसृष्टिः। वसन्ततिलकावृत्तम्॥

**राजापि तेषां संपत्स्यमानमहोत्सवोत्सुकजनसंमर्दजनिष्यमाण-**

---

१. 'निनदाकर्णन' इति पाठः. २. 'निसर्ग' इति पाठः. ३. 'नयने' इति पाठः.

**रजोराजिपातपरिजिहीर्षयेव रोमाञ्चप्रपञ्चेन कञ्चुकिताङ्गानां प्रमाणातीतां प्रीतिं प्रपन्नानां हर्षप्रकर्षेण द्विगुणीकृतमानन्दमन्तर्नियम्य सुमन्त्रप्रमुखान्मन्त्रिमुख्यानेवमाचख्यौ ।**

**राजेति ।** राजा दशरथोऽपि संपत्स्यमानः प्रत्यासन्नतया संभविष्यमाणो यो महोत्सवो हर्षोत्पादकश्रीरामपट्टाभिषेकरूपव्यापारः । उक्तं च भावप्रकाशे—'उत्सूते हर्षमित्येव उत्सवः परिकीर्तितः' इति । तेनोत्सुकाः कालक्षमत्वलक्षणौत्सुक्यसंपन्नाः । 'प्रसितोत्सुकाभ्यां—' इत्यादिना तृतीयासमासः । ये जनास्तेषां संमर्दैन संभ्रमेण जनिष्यमाण उत्पत्स्यमानो यो रजोराजिपातो धूलिनिकुरम्बपतनं तस्य परिजिहीर्षया परिहरणेच्छयेवेति हेतूत्प्रेक्षा । 'उत्पन्नस्य प्रतीकारादनर्थस्योत्पत्तिप्रतिबन्ध एव वरम्' इति न्यायेन प्रागेव रजःसंश्लेषपरिहरणोपायचिकीर्षयेवेत्युत्प्रेक्षार्थम् । परिपूर्वाद्धरतेः सन्नन्तात्स्त्रियामप्रत्यये टाप् । रोमाञ्चप्रपञ्चेन रोमहर्षणव्याप्त्या । 'रोमाञ्चो रोमहर्षणम्' इत्यमरः । कञ्चुकितानि कञ्चुकवत्कृतानि । निर्मितानीत्यर्थः । तान्यङ्गानि येषां तेषाम् । कञ्चुकशब्दात् 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः । ततः प्रमाणातीतां प्रीतिमपरिच्छिन्नानन्दं प्रपन्नानां तेषां जनानां हर्षप्रकर्षेण इष्टलाभजन्यो मनःप्रसादो हर्षस्तस्य प्रकर्षेणातिशयेन हेतुना । द्वौ गुणावावृत्ती यस्य स द्विगुणः । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । द्विगुणीकृतो द्विरावृत्तः । पूर्ववत्कर्मणि क्तः । तमानन्दमिष्टानुष्ठानानुभवजन्यसुखम् । राज्याभिषेकस्य प्रजाहर्षमूलत्वात्तदुपबृंहितानन्दातिरेकमित्यर्थः । अन्तर्नियम्यान्तरङ्गे निरुध्य । सुमन्त्रप्रमुखान्सुमन्त्रादीन्मन्त्रिमुख्यानमात्यप्रवरान्प्रत्येवं वक्ष्यमाणप्रकारेणाचख्यौ । उवाचेत्यर्थः । अत्र प्रतिहर्षानन्दशब्दानां वृत्तिभेदाद्भेदोऽपनेयः ॥

आख्यानप्रकारमेवाह—

**अस्माननाश्रिततपोवनभूमिभागा-**
**न्नुन्मुच्य मार्गपरिपालनजागरूकान् ।**
**अम्लानमौग्ध्यमचिरादवलम्ब्य राम-**
**मेवंविधः कथमुदेति जनानुरागः ॥ ५ ॥**

**अस्मानिति ।** अनाश्रितोऽनधिष्ठितस्तपोवनभूमिभागः पुण्यारण्यभूप्रदेशो यैस्तांस्तथोक्तान् । अस्वीकृतवानप्रस्थाश्रमानित्यर्थः । किंच मार्गेण नीतिशास्त्रपद्धत्या परिपालने प्रजासंरक्षणे जागरूकान्सावधानान् । विशेषणद्वयेनाप्यपरित्याज्यत्वं सूच्यते । एवंविधानप्यस्मान्नः । बहुवचनमत्रात्मसंभावनया अमात्याभिप्रायेण वा द्रष्टव्यम् । उन्मुच्य त्यक्त्वा । अम्लानमक्षीणं मौग्ध्यं मुग्धभावो यस्य तम् । अनतिप्रौढमित्यर्थः । त्रिजगत्पतेः सकलकार्यधुरंधरस्य श्रीरामस्य तत्त्वतोऽत्यन्तप्रौढिमसंपन्नभावेऽप्यादरातिशयादित्थं निर्दिष्टमित्यनुसंधेयम् । राममचिरात्क्षिप्रमेवावलम्ब्याश्रित्य । एवंविध इत्थंभूतप्रकारः । अनिर्वाच्य इति यावत् । जनानुरागः प्रजाभिलाषविशेषः

१. 'व्रात' इति पाठः.

कथं कुतो वोदेत्युत्पद्यते । एतदाश्चर्यमित्यर्थः । मनःप्रवृत्तेः परतन्त्रा एव प्रजाः न संस्तवपरतन्त्रा इति भावः । एतच्च 'अन्यत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराभवम्' इति न्यायेन राज्ञोऽभिमतमेवेति रहस्यम् । वसन्ततिलकावृत्तम् ॥

**तेऽपि नियमितनिजमनोरथाय दशरथाय सविनयमेवं व्यजिज्ञपन् ।**

**त इति ।** ते सुमन्त्रप्रमुखा मन्त्रिणोऽपि नियमितो निर्धारितो निजः स्वकीयो मनोरथः श्रीरामाभिषेककरणरूपो यस्य तस्मै । यद्वा नियमितः प्रजानुरागस्य श्रीरामे प्रवृत्तत्वात्संकोचितो निजमनोरथो राज्याभिलाषो यस्य । दशरथाय सविनयं सप्रश्रयं यथा तथा एवं वक्ष्यमाणरीत्या व्यजिज्ञपन्विज्ञापयामासुः ॥

विज्ञापनमेवाह—

**देवे स्थितेऽपि तनयं तव रामभद्रं**
**लोकः स्वयं भजतु नाम किमत्र चित्रम् ।**
**चन्द्रं विना तदुपलम्भनहेतुभूतं**
**क्षीरोदमाश्रयति किं तृषितश्चकोरः ॥ ६ ॥**

**देव इति ।** देवे राज्ञि त्वयि । 'देवः सुरे धने राज्ञि' इति विश्वः । स्थिते प्रजापरिपालनदक्षतया वर्तमाने सत्यपि लोको जनस्तव तनयं रामभद्रं स्वयं चोदनां विनैव भजतु सेवताम् । समाश्रयत्वित्यर्थः । नामेति संभावनायाम् । अत्रास्मिन्नर्थे किं चित्रमाश्चर्यम् । न किंचिदपीत्यर्थः । कुत एतदित्याशङ्क्य दृष्टान्तमाह—चन्द्रमिति । तृषितः पिपासितश्चकोरश्चन्द्रिकापायी पक्षिविशेषः । 'चकोरश्चन्द्रिकापायी' इत्युक्तत्वात् । चन्द्रं विना । चन्द्रं विहायेत्यर्थः । 'पृथग्विना–' इत्यादिना विकल्पाद्द्वितीया । तदुपलम्भनस्य चन्द्रोत्पत्तेर्हेतुभूतं कारणभूतं क्षीराण्युदकानि यस्य तं क्षीरोदं क्षीरसमुद्रम् । 'उदकस्योदः संज्ञायाम्' इत्युदकशब्दस्योदादेशः । आश्रयति सेवते किम् । नाश्रयत्येवेत्यर्थः । अतएव तत्र चित्रमिति वैधर्म्येण दृष्टान्तालंकारः । 'बिम्बानुबिम्बन्यायेन निर्देशो धर्मधर्मिणोः । दृष्टान्तालंकृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रया ॥' इति विद्याचक्रवर्तिलक्षणात् । वृत्तं पूर्ववत् ॥

**तदनन्तरं [1]त्वरे तत्परस्तत्त्वविदां [2]वरिष्ठस्य वसिष्ठस्य शासनादभिषेकोपकरणाहरणाय सामात्यः पौरवर्गः ।**

**तदनन्तरमिति ।** तदनन्तरं राजमन्त्रिसंभाषणानन्तरकाले तत्त्वविदामागमरहस्यवेत्तॄणां वरिष्ठस्य श्रेष्ठस्य वसिष्ठस्य महर्षेः शासनादाज्ञावचनादभिषेकोपकरणानां पुण्यतीर्थपरिपूरितकनककलशभद्रासनच्छत्रचामरादिराज्याभिषेकसाधनानामाहरणाय । तान्याहर्तुमित्यर्थः । तत्पर आसक्तः सन् । 'तत्परे प्रसितासक्तौ' इत्यमरः । सामात्यो मन्त्रिसहितः पौरवर्गो नागरिकसमूहस्त्वरे त्वरां चकार ॥

१. 'त्वरे तत्त्वविदां' इति पाठः. २ 'वरस्य' इति पाठः.

अनन्तरंवृत्तान्तमाह—

**आहूय रामं विनयाभिराममाविःप्रमोदः प्रभुरेवमूचे ।**
**तवोत्तमाङ्गे मुकुटं विधातुमह्नाय तिष्ये दिवसे यतिष्ये ॥ ७ ॥**

**आहूयेति ।** प्रभुर्दशरथो विनयेन प्रश्रयेणाभिरामं रमणीयं राममाहूयाविःप्रमोदः समुत्पन्नानन्दः सन् एवं वक्ष्यमाणप्रकारेणोच उक्तवान् । तदेवाह—अह्नाय द्रुतं । तिष्ये । पुष्यनक्षत्र इत्यर्थः । 'पुष्ये तु सिध्यतिष्यौ' इत्यमरः । 'पुष्यः सर्वार्थसाधकः' इति शास्त्रात्सकलकार्यसिद्धिसाधकत्वेन प्रशस्तत्वादिति भावः । दिवसे । श्व एवेत्यर्थः । तथा रामायणे दशरथवचनम्—'श्व एव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः' इति । तवोत्तमाङ्गे शिरसि । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । मुकुटं महाराज्यलक्षणं कनककोटीरं विधातुं निक्षेप्तुं यतिष्ये यत्नं करिष्ये । स्वाभाविकशास्त्राभ्यां जनितभेदेन द्विविधस्यापि विनयस्य त्वयि विद्यमानत्वाद्राजानं त्वां करिष्यामीत्यर्थः । अत्र कामन्दकः—'विनयप्रग्रहान्भूत्यै कुर्वीत नृपतिः सुतान् । अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ॥' इत्यूच इति संवन्धः । उपजातिवृत्तम् ॥

**अथ दशरथमनोरथं कौसल्यायै निवेद्य स्वभवनमुपागतस्य रामस्य भगवान्वसिष्ठः संजातकौतुकः कौतुकमङ्गलं निर्वर्तयामास ।**

**अथेति ।** अथानन्तरं दशरथस्य मनोरथं मूर्धाभिषेककरणसंकल्पं कौसल्यायै निजजनन्यै निवेद्य विज्ञाप्य स्वभवनं निजमन्दिरमुपागतस्य प्रविष्टस्य श्रीरामस्य भगवान्पूज्यो वसिष्ठः संजातकौतुकः । इदानीं खल्वहं कृतार्थ इत्यर्थः । यतः श्रीरामाभिषेकप्रक्रियानुवर्तनतात्पर्येण संभवामीति समुत्पन्नहर्षः सन् कौतुकं हस्तसूत्रबन्धनरूपं मङ्गलं मङ्गलाचारं निर्वर्तयामास । चकारेत्यर्थः । क्षोणीपाणिग्रहोत्सवेऽवश्यकर्तव्यत्वेन शास्त्रबोधितत्वादिति भावः । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इत्युभयत्रापि शाश्वतः ॥

**आपूरयन्मङ्गलतूर्यघोषैराशावशावल्लभकर्णतालान् ।**
**उज्जृम्भितः कोऽपि गिरामभूमिरुन्मस्तकः पौरजनप्रमोदः[1] ॥ ८ ॥**

**आपूरयन्निति ।** मङ्गलतूर्यघोषैर्मङ्गलार्थवाद्यध्वनिभिराशासु दिक्षु ये वशानां करिणीनां वल्लभास्तेषां दिग्गजानां कर्णतालान्कर्णसंघट्टनजनितध्वनीन् । 'वशा स्त्री करिणी वन्ध्या' इत्यमरः । आपूरयन्विस्तारयन् । कोऽप्यभूतपूर्वः । अतएव गिरामभूमिर्वाचामगोचरः । इयत्तयेदन्तया वक्तुमशक्य इत्यर्थः । उन्मस्तक उन्नतशिराः । महानित्यर्थः । अथवा उल्लङ्घितशिरस्कः । अतिप्रभूत इत्यर्थः । पौरजनानां प्रमोद आनन्द उज्जृम्भितः । उत्कटोऽभूदित्यर्थः । अत्र तूर्यघोषाणां दिग्गजकर्णतालपूरणासंवन्धेऽपि तत्संबन्धाभिधानादसंबन्धे संबन्धरूपातिशयोक्तिः । इन्द्रवज्रावृत्तम् ॥

**तत्र ।**

**तत्रेति ।** तत्र । तस्मिन्प्रमोदोज्जृम्भणसमय इत्यर्थः ।

---

१. 'पौरजनप्रतिमोदः' इति पाठः।

यामेवाहुर्निशिचरकुलोन्मूलने मूलहेतुं
यस्याश्चित्तं प्रकृतिकुटिलं गात्रमित्रं बभूव ।
अम्भोजिन्याः शिशिरसरसः कासरीवाच्छमम्भः
कैकेय्याः सा हृदयमदयं मन्थरा निर्ममन्थ ॥ ९ ॥

**यामेवेति** । यां मन्थराम् । एवकारोऽन्यव्यवच्छेदार्थकः । निशिचराणां रावणादिराक्षसानां कुलोन्मूलने वंशनाशने गणविध्वंसने वा । 'सजातीयगणे गेहे गोत्रेऽपि कथितं कुलम्' इति विश्वः । मूलहेतुमाद्यकारणमाहुर्ब्रुवते । जना इति शेषः । 'ब्रुवः पञ्चानां–' इत्यादिना णलादेशो ब्रुव आहादेशश्च । तद्दुर्बोधाद्विपरीतबुद्ध्या कैकेय्या वनं प्रव्राजिते ततः सीतापहरणे सति श्रीरामेण रावणादिसंहारस्य प्रकृतत्वादिति भावः । तथा प्रकृत्या कुटिलं स्वभावेन वक्रम् । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीयासमासः । यस्या मन्थरायाश्चित्तं गात्रमित्रं तस्या एव शरीरसदृशं बभूव । यथा तद्गात्रं स्वभाववक्रं तथा चित्तमप्यासीदित्यर्थः । 'आकारसदृशी प्रज्ञा' इति वचनात्प्रायेण प्रज्ञाया आकारसदृशत्वनियमादिति भावः । सा मन्थरा मन्थराभिधाना कैकेयीगृहवासिनी । कासरी वनमहिषीव । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । शिशिरं च तत्सरसं मधुरं चेति विशेषणयोरपि मिथोविशेषणविशेष्यभावविवक्षायाम् 'विशेषणं विशेष्येण बहुलम्' इति समासः । अच्छं निर्मलम् । एतद्विशेषणद्वयं हृदयेऽपि योज्यम् । अम्भोजिन्याः सरस्या अम्भ इव कैकेय्या हृदयमदयं दयारहितं यथा तथा निर्ममन्थालोडयामास । यथा तन्मनः श्रीरामाभिषेकविघातप्रवणं स्यात्तथा निजचित्तगात्रमित्रैरेव वाक्यैः प्रलोभयामासेत्यर्थः । मनोवाक्कायकर्मसु कुटिलायास्तस्याः किं कपटं नाटयितुमशक्यमिति भावः । पूर्णोपमालंकारः । मन्दाक्रान्तावृत्तम् ॥

अलघुचलितझञ्झावातनिष्पेषदोषा-
दशनिरिव कठोरः शीतलाम्भोदपङ्क्तौ ।
अपहृतजनसौख्यान्मन्थराभेदवाक्या-
दपि भरतजनन्यां हन्त दौर्जन्यमासीत् ॥ १० ॥

**अलघ्विति** । अलघ्वमन्दं चलितः प्रवृत्तो यो झञ्झावातो ध्वनिविशेषः । सूक्ष्माम्बुवर्षमिश्रितो महामारुतस्तेन यो निष्पेषः संघर्षणं स एव दोषस्तस्माद्धेतोः । 'झञ्झा ध्वनिविशेषे स्यादपि सूक्ष्माम्बुवर्षणे' इति नानार्थरत्नमाला । शीतलाम्भोदपङ्क्तौ शिशिरजलदपटले कठोरस्तीक्ष्णोऽशनिर्दम्भोलिरिव । अपहृतं विध्वंसितं जनानां सौख्यं श्रीरामाभिषेकमहोत्सवजनितानन्दो येन तस्मान्मन्थरायाः भेदवाक्यात् । 'राजेदानीं श्रीराममभिषेक्तुमुद्युक्तः, ततस्त्वं श्रीरामस्य प्रव्राजनं भरतस्याभिषेकं च पूर्वदत्तवरद्वयेनाभ्यर्थय, अन्यथा महाननर्थः स्यात्' इत्युपजापवचनादित्यर्थः । 'भेदोपजापौ' इत्यमरः । भरतजनन्यां भरतस्य मातरि कैकेय्यामपि दौर्जन्यं श्रीरामाभि-

१. 'सरितः' इति पाठः.

पेक्वविघातकत्वरूपमसाधुत्वमासीत्। प्रादुरभूदित्यर्थः। भरतजनन्यामित्यनेन भरते सौजन्यं सुप्रसिद्धमेव, तथा च तज्जनन्यामपि तथात्वमुपपद्यते। कारणगुणपूर्वकत्वात्कार्यगुणानाम्। अतः सौजन्ययुक्तायामप्यस्यां दौर्जन्यमासीदिति विरोधसूचकोऽयमपिशब्दः। एतेन मन्थराया वचनस्य तादृक्किल्बिषोत्पादकपाटवं सूच्यते। हन्तेति विषादे। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः। अलंकारस्तु पूर्ववत्। मालिनीवृत्तम्। तथा श्रीरामायणे कैकेयीं प्रति मन्थरावाक्यम्—'तव देवासुरैर्युद्धे सह राजर्षिभिः पतिः। अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत्॥' इत्यारभ्य 'तौ वरौ याच भर्तारं भरतस्याभिषेचनम्। प्रव्राजनं च रामस्य त्वं वर्षाणि चतुर्दश॥' इत्यन्तम्॥

ततः कैकेयी किमकरोदित्याशङ्कायामाह—

**सैषा मन्थराभिधानपिशाचिकावेशपरवशनिजाशया पूर्वं दण्डके वैजयन्तपुरवास्तव्यशम्बरासुरसंगरसंगतवेदनापनोदनार्थमात्मने वितीर्णं वराय दशरथाय वरद्वयं न्यवेदयत्।**

**सैषेति।** मन्थरेत्यभिधानं नाम यस्याः सा तथोक्ता या पिशाचिका महाभूतग्रहः स्वार्थे कः। 'केऽणः' इति ह्रस्वः। तस्या आवेशेनाभिनिवेशेन। आक्रमणेनेति यावत्। परवशः परतन्त्रः। विवेकशून्य इति यावत्। निजाशयः स्वकीयान्तःकरणं यस्याः सा तथोक्ता। सैषा कैकयी पूर्वं पूर्वकाले दण्डके वने वैजयन्तमिति यत्पुरं तद्वास्तव्यस्तत्र वसन्। 'वसेस्तव्यत्कर्तरि णिच्च' इति कर्तरि तव्यत्प्रत्ययो वृद्धिश्च। यः शम्बरासुरः शम्बराख्यो महादैत्यस्तस्य संगरे युद्धे संगता प्राप्ता या वेदनासुरशस्त्रक्षतिजनितखेदः। 'खेदेऽपि वेदना' इत्यमरः। तदपनोदनं तन्निवारणमर्थः प्रयोजनं यस्य तत्। तत्संभावितमित्यर्थः। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। आत्मने स्वस्मै वितीर्णम्। तादृग्रणसंकटापसार्यं तत्रत्यबाधाया निवर्तितत्वात्पारितोषिकतया दत्तमित्यर्थः। वरयोर्द्वयम्। द्वौ वरावित्यर्थः। 'देवाद्वृते वरः श्रेष्ठे' इत्यमरः। वराय भर्त्रे दशरथाय। 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी। न्यवेदयज्ज्ञापयामास। तथा रामायणे—'स्मर राजन्पुरावृत्तं तस्मिन्दैवासुरे रणे। तत्र चाच्यावयच्छत्रुस्तव जीवितमन्तरा॥ तत्र चापि मया देव यत्त्वं समभिरक्षितः। जाग्रत्या यतमानायास्ततो मे प्रददा वरौ॥ तौ तु दत्तौ वरौ देव निक्षेपौ मृगयाम्यहम्। तवैव पृथिवीपाल सकाशे सत्यसंगर॥' इति॥

विज्ञापितस्य वरद्वयस्य विनियोगप्रकारमेवाह—

**तयोरेकस्य संरम्भो भरतस्याभिषेचनम्।**
**अन्यस्य वन्यवृत्त्यैव वने रामस्य वर्तनम्॥ ११॥**

**तयोरिति।** तयोर्वरयोर्मध्य एकस्य संरम्भः। संवृत्तिरिति यावत्। भरतस्याभिषेचनं राज्याभिषेकः। अन्यस्य वरस्य संरम्भो वन्यवृत्त्या मुनिवृत्त्या। जटावल्कल-

१. 'आवेशनिजाशया' इति पाठः। २. 'अपनोदनवेतनार्थम्' इति पाठः।

धारणकन्दमूलफलाशनरूपव्यापारेणेत्यर्थः। उपजाप्रबुद्धिजनकवृत्त्यन्तरव्यवच्छेदार्थमेवकारः। रामस्य वने दण्डकावने वर्तनं वृत्तिः। अवस्थानमिति यावत्। पूर्वं सामान्येन दत्तौ वराविदानीं भरताभिषेकरामविवासनरूपेण दातव्यावित्युक्तवतीत्यर्थः। तथाच रामायणम्—'नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः। चीराजिनजटाधारी रामो भवतु तापसः। भरतो भजतामद्य यौवराज्यमकण्टकम्॥' इति॥

तदानीं किं जातमित्याह—

तस्मिन्क्षणे वरयुगं चिरतप्ततामृ-
नाराचवेधपरुषं श्रवसी विदार्य।
सत्यप्रहाणचकितस्य नृपस्य काम-
मूरीचकार हृदये पुटपाकरीतिम्॥ १२॥

तस्मिन्निति। तस्मिन्क्षणे तत्काले। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः। चिरं चिरकालं तप्तोऽग्निसंतप्तः अतएव ताम्रो रक्तवर्णो यो नाराचः शलाकाकारस्तीक्ष्णशस्त्रविशेषस्तस्य वेधः संप्रहारस्तद्वत्परुषं कठोरम्। दुःसहमिति यावत्। वरयुगं कर्तृ। सत्यस्य सूनृतभाषित्वस्य प्रहाणं प्रच्युतिः। 'कृत्यचः' इति णत्वम्। तस्माच्चकितस्य भयसंभ्रान्तस्य नृपस्य राज्ञो दशरथस्य श्रवसी विदार्य श्रोत्रे विभिद्य। बाह्येन्द्रियद्वारा अन्तरिन्द्रियस्यार्थग्राहकत्वादिति भावः। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। हृदये तस्यैव मानसे पुटपाकरीतिं मूषिकासंपुटमध्ये सुवर्णादिकं निगूढं निक्षिप्याग्निना संतापनं पुटपाकस्तस्य रीतिम्। तत्सदृशीं परिपाटीमित्यर्थः। अतएव निदर्शना। काममत्यन्तमूरीचकाराङ्गीचकार। 'प्रतिश्रुतस्याश्रवणेऽग्रहणे वा सत्यविप्लवो भवेत्' इति श्रुत्वा गृहीतत्वाच्च तप्तनाराचदुःसहं वरयुगद्वारभूतश्रवणविदाहपूर्वकं राज्ञोऽन्तरङ्गं प्रविश्य तं निरुच्छ्वासं तापयामासेत्यर्थः। 'ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः। 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायाम् 'कुगतिप्रादयः' इति समासः। वसन्ततिलकावृत्तम्॥

तनयविरहवार्तामात्रसंतप्यमाना-
दथ दशरथचित्ताच्चेतना निर्जगाम।
दवहुतवहरोचिर्ज्वालया लेह्यमाना-
ज्झटिति गहनगुल्मादुज्जिहाना मृगीव॥ १३॥

तनयेति। अथानन्तरं तनयविरहवार्तामात्रेण श्रीरामविरहवृत्तान्ताकर्णनेनैव संतप्यमानाद्दह्यमानात्। विरह एव सति किं भविष्यति वा न ज्ञायत इति मात्रशब्दार्थः। दशरथस्य चित्ताद्धृदयात्। 'ध्रुवमपायेऽपादानम्' इत्यपादानत्वात्पञ्चमी। चेतना संज्ञा जीवनशक्तिर्दवहुतवहस्य वनवह्ने रोचिर्ज्वालया दीप्तिशिखया रोचिषा ज्वालया वा। 'वने च वनवह्नौ च दवो दाव इतीरितः' इति शाश्वतः। लेह्यमानात् आस्वाद्यमानादिति यावत्। गहनगुल्मात्काननकुञ्जादुज्जिहाना निर्गमनशीला। 'ओहाङ् गतौ' इति धातोः शानच्। मृगी कुरङ्गीव। 'जातेरस्त्रीविषयादयोपधात्'

१. 'क्षणतस' इति पाठः. २. 'तदनु' इति पाठः. ३. 'लिह्यमानात्' इति पाठः.

इति ङीष् । झटित्यञ्जसा । 'द्रागञ्झटित्यञ्जसाह्नाय' इत्यमरः । निर्जगाम निरगात् । श्रीरामविरहवार्तां श्रुत्वातिमात्रपुत्रवत्सलो राजा सपदि मूर्च्छामगच्छदित्यर्थः । पूर्णोपमालंकारः । मालिनीवृत्तम् ॥

**अथ दशरथः कथमपि लब्धसंज्ञः कैकेयीमभाषत ।**

**अथेति ।** अथ चेतनानिर्गमनानन्तरं दशरथः कथमपि कृच्छ्रेण लब्धसंज्ञः प्राप्तचेतनः सन् कैकेयीं प्रतीदं वचनमभाषतावोचत ॥

तत्प्रकारमेवाह—

**रामः काममुपाश्रयिष्यति वनं त्यक्त्वा धृतं कौतुकं**
**लोकस्त्यक्ष्यति कौतुकं चिरधृतं तस्याभिषेके कथम् ।**
**धर्मापायभयेन वत्सविरहं वक्ष्यामि वक्ष्यामि किं**
**यावत्कल्पमकीर्तिरार्तिजननी जायेत जाये तव ॥ १४ ॥**

**राम इति ।** रामो धृतं राज्यभिषेकाङ्क्षत्वेनामुक्तं कौतुकं हस्तसूत्रं त्यक्त्वा लीलयैव विसृज्य काममत्यन्तम् । अप्रतिबन्धमित्यर्थः । वनमुपाश्रयिष्यति प्रवेक्ष्यति । धर्माचारतत्परत्वादनायासेनैव प्रव्रजिष्यतीत्यर्थः । तथा लोको जनस्तस्य श्रीरामस्याभिषेके विषये चिरधृतं चिरकालमारभ्य संभृतं कौतुकं हर्षं कथं कथंचित्त्यक्ष्यति । दुस्त्यजमप्यतिकृच्छ्रेण विलक्ष्यतीत्यर्थः । तथा धर्मस्याङ्गीकृतपरिपालनरूपसुकृतस्यापायाद्विनाशाद्यद्भयं तेन वत्सविरहं रामवियोगं वक्ष्यामि धारयिष्यामि । अहमिति शेषः । 'वह प्रापणे' इत्यस्माद्धातोर्लृट् । किं प्रतिवचनं वक्ष्याम्यालपिष्यामि । वक्तुमवकाशाभावादिति भावः । अत्र 'वद व्यक्तायां वाचि' इत्यस्माद्धातोर्लृट् । अथवा वक्ष्यामि वक्ष्यामीति वहनार्थे द्विरुक्तोऽयं शब्दः । पुनःपुनर्धारयिष्यामीत्यर्थः । 'चापले द्वे भवतः' इति द्विरुक्तिः । 'संभ्रमेण प्रवृत्तिश्चापलम्' इति काशिका । अतिदुःखसहपुत्रविरहवेदनाजनितोद्वेगात्संभ्रमः । किंतु हे जाये हे भार्ये, तव यावत्कल्पम् । कल्पान्तपर्यन्तमित्यर्थः । 'यावदवधारणे' इत्यव्ययीभावः । आर्तिजननी पीडाकरी । मर्मभेदिनीति यावत् । 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः । अकीर्तिः श्रीरामाभिषेकविघ्नाचरणजन्याऽपख्यातिर्जायेत प्रादुर्भवेत् । जनेर्लिङि तङ् । यथातथा वास्माकं निर्वाहो भविष्यति, जायात्वेन संभावितायास्तवैव महाननर्थः । 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति गीतायां भगवतोक्तत्वादिति भावः । वृत्त्यनुप्रासः । शार्दूलविक्रीडितं वृत्तम् ॥

**वत्सं कठोरहृदये नयनाभिरामं**
**रामं विना न खलु तिष्ठति जीवितं मे ।**
**धातुर्बलादुपयमस्त्वयि जातपूर्वः**
**कैकेयि मामुपयमं नयतीति मन्ये ॥ १५ ॥**

**वत्समिति ।** हे कठोरहृदये कठिनचित्ते, यतः स्वप्नेऽपि दुःसहं श्रीरामविरहं

१. 'द्रक्ष्यामि' इति पाठः

साक्षात्त्वं बोधयसि, अतस्त्वद्धृदयस्य कठोरत्वं किं वक्तव्यमित्येतत्संबोधनम् । नयनाभिरामं नेत्रानन्दकरं वत्सं बालं तनयम् । विरहासहिष्णुत्वद्योतनार्थमेतद्विशेषणद्वयम् । 'वत्सो ना धुटजे (?) वर्षे तर्णके तनयादिके' इति वैजयन्ती । रामं विना । रामं विहायेत्यर्थः । 'पृथग्विना–' इत्यादिना पञ्चम्यभावपक्षे द्वितीया । मे मम जीवितं जीवनं न तिष्ठति खलु । सुनिश्चितं मरिष्यामीत्यर्थः । अतः हे कैकेयि, अत्र यद्यपि भार्यानामग्रहणं शास्त्रनिषिद्धं तथापि भार्येयं चण्डीति व्यवहर्तुं युज्यत इत्येवमामन्त्रितमित्यवधेयम् । धातुर्बलाद्विधिवलात्त्वयि विषये पूर्वं जातो जातपूर्वः । 'सुप्सुपा' इति समासः । उपयमो विवाहः यमसामीप्यं च ध्वन्यते । 'विवाहोपयमौ समौ' इत्यमरः । मां यमस्यान्तकस्य समीपं उपयमम् । 'अव्ययं विभक्ति–' इत्यादिनाव्ययीभावः । नयति प्रापयतीत्येवं मन्ये बुध्यामि । उपयमस्योपयमप्रापकत्वं युक्तम् । अतो ममाप्येवं मरणमुपयुज्यत इत्यर्थः । लोके लक्षणवतीनां कन्यकानां परिणयो भर्तृजीवनाय भवति, ईदृगवलक्षणदुर्भगायास्तव परिणयस्तु मम मरणाय भवतीति भावः । वसन्ततिलकावृत्तम् ॥

**तदनु निजमनोरथैकपरिपूरणे[1] कृतादरा कैकेयी सोपहास[2]मवादीत् ।**

**तदन्विति ।** तदनु दशरथभाषणानन्तरं निजमनोरथैकस्य भरताभिषेचनरामप्रव्राजनरूपस्वाभिलाषस्यैव परिपूरणे निष्पादने । अत्र मनोरथैकशब्दयोः शिवभागवतवत्समासः । अथवा एकपरिपूरणे मुख्यपरिपूरणे । 'एके मुख्यान्यकेवलाः' इत्यमरः । कृतादरा विहितास्था कैकेयी सोपहासं सोल्लुण्ठनमवादीदुवाच । 'सोल्लुण्ठनं तु सोत्प्रासं सोपहासः समास्त्रयः' इति हलायुधः ॥

उक्तप्रकारमेव विवृणोति—

**सत्यविप्लवमपत्यसंगतः संगतं भृशमपश्यतस्तव ।**
**आश्रुतस्य विफलत्वमस्ति चेदाः श्रुतस्य रचितोऽयमञ्जलिः ॥१६॥**

**सत्येति ।** अपत्यसंगतः पुत्रमोहाद्धेतोः । पञ्चम्यास्तसिः । संगतं प्राप्तं सत्यविप्लवं सत्यवाक्यप्रच्युतिं भृशमत्यन्तमपश्यतोऽनालोचयतः । ईषदप्यननुसंदधत इत्यर्थः । तवाश्रुतस्य वरद्वयं दास्यामीति प्रतिज्ञावचनस्य । 'अङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः । विफलत्वं नैष्फल्यमस्ति चेत् । तत्प्रतिश्रुतं विफलं भवति यदीत्यर्थः । आः इत्युपहासे विसर्गान्तो निपातः । श्रुतस्य 'सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः', 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इत्यादि धर्मशास्त्रस्य । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । अयमञ्जलिः प्रणामः । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । रचितो विहितः । 'शासनाच्छास्त्रम्' इति व्युत्पत्त्या दुरध्वप्रवृत्तिप्रतिषेधकत्वेन प्रसिद्धं शास्त्रम् । ईदृक्शास्त्रज्ञस्यापि भवतो यद्येवं प्रवृत्तिःस्यात्तर्ह्यकिंचित्करत्वात्तं नमस्करोमीत्यर्थः । 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इत्यादिभगवद्वचनाच्छास्त्रमनुसरता

---

१. 'पूरणकृतादरा' इति पाठः. २. 'सापहासम्' इति पाठः.

त्वया प्रतिश्रुतनिर्वाहोऽवश्यं कर्तव्यः । नान्यथा श्रेय इति तात्पर्यम् । भक्तिश्रद्धावरबन्धुरान्तःकरणतया विधीयमानो नमस्कारः प्रसिद्धस्तथोपहासादावपि नमस्कारः संभवति । तथा प्रयुक्तं पूर्वैः—'विन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोविन्दुकं कर्मेति क्रमशिक्षितान्वयकला ये केऽपि तेभ्योऽञ्जलिः । ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरामुल्लासैः कवयन्ति विह्लणकविस्तेष्वेव संनह्यति ॥' इति । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥

प्रतिश्रुतमवश्यं कर्तव्यमिति पुरातनराजवृत्तान्तं दृष्टान्तयति—

**किं नागतस्ते श्रवसोः सकाशमरिंदमः सत्यगिरां पुरोगः ।**
**श्येनामिषीभूतकपोतपोतजीवातवे शस्त्रनिकृत्तगात्रः ॥ १७ ॥**

**किमित्यादिना** । सत्यगिरां पुरोगः सत्यसंधाग्रगण्यः । अतएवानामिषमामिषं संपद्यमानमामिषीभूतम् । अभूततद्भावे च्विः । 'कुगतिप्रादयः' इति समासः । श्येनस्य श्येनभूमिकाधारिण इन्द्रस्यामिषीभूतो मांसखण्डीभूतः । 'पिशितं तरसं मांसं पललं क्रव्यमामिषम्' इत्यमरः । यद्वा भोग्यवस्तुभूतः । 'आमिषं भोग्यवस्तुनि' इति केशवः । यः कपोतपोतः कपोतडिम्भवेशधारी यमः । 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । तस्य जीवातवे जीवनौषधार्थम् । तमुपजीवयितुमित्यर्थः । 'जीवातुर्जीवनौषधम्' इत्यमरः । 'तादर्थ्ये चतुर्थी वक्तव्या' । शस्त्रनिकृत्तगात्रः खड्गविदलितशरीरः । अरीन्दमयतीत्यरिंदमः शिबिचक्रवर्त्यपरनामा त्वद्वंश्यो महाराजः । 'संज्ञायां भृतॄवृजि–' इत्यादिना खच् । 'अरुर्द्विषत्–' इत्यादिना मुमागमः । ते तव श्रवसोः सकाशं श्रोत्रपथं नागतः किम् । त्वया न श्रुतः किमित्यर्थः । श्रुतश्चेत्कथमेवं वक्ष्यसीति भावः ।—पुरा किलेन्द्रयमौ शिबिसत्यसंधतायां विवदमानौ तत्परीक्षार्थं श्येनकपोतौ भूत्वा तत्र संकेतपूर्वकं श्येनेनोपद्रुतत्वमात्मनो नाटयन्कपोतो यागदीक्षितं शिबिं शरणं जगाम । सोऽपि श्येनेन 'मदामिषीभूतोऽयं देयः' इति पृष्टः शरणागतपरित्यागे दोषस्मरणात्तत्परिमाणस्वशरीरमांसपिण्डदानेनैव मोचयितुकामः कपोतं तुलायामारोप्य स्वमांसशकलदाने कैतवेन भारायमाणकपोतविप्रलब्धः प्रतिज्ञाभङ्गभयादशेषशरीरं निकृत्तवान्–इति पौराणिकी कथात्रानुसंधेया । पठन्ति चात्रेमं श्लोकम्–'कर्णस्त्वचं शिबिर्मांसं प्राणाञ्जीमूतवाहनः । ददौ दधीचिरस्थीनि किमदेयं महात्मनाम् ॥' वृत्तमुपजातिः ॥

ननु 'बहूनामनुग्रहो न्याय्यः' इति लोकप्रसिद्धिरेकेन दृष्टान्तेन किं चरितार्थेत्याह—

**किंच ।**

**किंचेति** । नैक एवायं दृष्टान्तः, किंतु राजान्तरमपि वियत इत्यर्थः ।

तमेवाह—

**अभ्यर्च्य कस्मैचिदुपाश्रिताय वितीर्य विप्राय विलोचने स्वे ।**
**आपूरयत्कश्चिदलर्कसंज्ञः प्राज्ञः प्रतिज्ञां प्रथितप्रभावः ॥ १८ ॥**

**अभ्यर्च्येति** । प्रज्ञ एव प्राज्ञः । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । प्रज्ञादि-

त्वात्स्वार्थेऽण्प्रत्ययः । अथवा प्रज्ञास्यास्तीति प्राज्ञः । 'प्रज्ञाश्रद्धार्चाभ्यो णः' इति णप्रत्ययः । प्रथितप्रभावः प्रख्याततेजाः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । अलर्कसंज्ञोऽलर्कनामा कश्चिद्राजा । 'संज्ञा नामनि गायत्र्यां चेतनायां रवेः स्त्रियाम्' इति विश्वः । उपाश्रिताय । नेत्रयाचनार्थमतिथिभावेन समीपमाश्रितायेत्यर्थः । कस्मैचिदज्ञातकुलगोत्राय न तु परिचिताय विशेषं प्रापयतीति विप्राय ब्राह्मणाय वेदवेदाङ्गपारगाय । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी । अभ्यर्च्य पूजयित्वा । न त्ववज्ञायेत्यर्थः । अन्यथा 'असत्कृतमवज्ञातं तत्तामसमुदाहृतम्' इति गीतायां भगवदुक्तरीत्या प्रख्यापनीयता स्यादिति भावः । स्वे स्वकीये 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये' इत्यमरः । विलोचने नेत्रे । द्वितीयाद्विवचनमेतत् । न तु यत्किंचिद्दृगित्यर्थः । वितीर्य दत्त्वा प्रतिज्ञां सत्यसंधतामापूरयत्परिपूरयामास । समर्थितवानित्यर्थः । सत्यसंधतानिर्वाहेण कीर्तिसंपादनतत्परा राजानो नात्मक्लेशं गणयन्तीति भावः । तव तु नैवंविधक्लेशः, तस्मादाश्रुतं परिपालनीयमिति श्लोकद्वयस्य तात्पर्यम् । वृत्तं पूर्ववत् । 'शैब्यः श्येनकपोताय स्वमांसं पक्षिणे ददौ । अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम् ॥' तथा च— 'संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः । प्रदाय पक्षिणे राजा जगाम गतिमुत्तमाम् ॥ तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे । याचमाने स्वके नेत्रे उद्धृत्याविमना ददौ ॥' इत्येतच्छ्लोकद्वयास्यापि मूलम् ॥

यद्येवमाश्रुतो न परिपाल्येत तर्हि सत्यसंधसमानस्कन्धगर्हणरूपानर्थः समापतेदित्याह—

> असुरसमरवेलाजातबाधावसाने
> वरयुगमदिशस्त्वं प्रीतिपूर्वं यया मे ।
> अशिथिलगुणबन्धाः सत्यसंधा नरेन्द्रा
> जललिपिरिति कामं संगिरन्तां गिरं ताम् ॥ १९ ॥

असुरेति । असुरसमरवेलायां शम्बरासुरयुद्धसमये जाता समुत्पन्ना या बाधासुरशस्त्रक्षतजनितवेदना तस्या अवसानेऽन्ते । संग्रामादन्यत्रापसरणेन तद्बाधाया निवर्तितत्वादिति भावः । त्वं यया गिरा वाचा मे मह्यं वरयोर्युगं युगलम् 'युग्मं तु युगलं युगम्' इत्यमरः । प्रीतिपूर्वं बाधानिवर्तनजनितपरितोषपूर्वकं यथाऽदिशो दत्तवानसि । पारितोषिकतया वरद्वयं दास्यामीति यां गिरमुक्तवानसीति भावः । तां गिरमशिथिलोऽविच्छिन्नो गुणबन्धो दानदाक्षिण्यादिगुणानुवृत्तिर्येषां ते । सद्गुणसंपादनदृढीकरणतत्परा इत्यर्थः । 'संधा विधौ प्रतिज्ञायाम्' इत्यमरः । नरेन्द्रा राजानः । 'नरेन्द्रः पार्थिवे राज्ञि विषवैद्येऽपि च स्मृतः' इति वैजयन्ती । तां गिरं जललिपिरिति जलाक्षरविन्यासरूपेति । 'लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ' इत्यमरः । काममत्यन्तं संगिरन्तामालपन्ताम् । संभावनायां लोट् । दशरथवचनं जललिपिवदप्रतिष्ठितमिति सत्यसंधकृतं गर्हणं संभविष्यतीत्यर्थः । सत्यसंधनरेन्द्रविरचिताद्वाक्यप्रतिष्ठाभङ्गप्रयुक्तगर्हणादन्यः को वानर्थपदार्थोऽस्ति संभावितानामिति

भावः । जललिपेः कर्मत्वेऽपि निपातेनाभिहितत्वान्न द्वितीयेत्युक्तम् । अत्र गिरो जललिपित्वरूपणाद्रूपकालंकारः । मालिनीवृत्तम् ॥

किं बहुना ।

किं बहुनेति । किंबहुना मन्मनोरथापरिपूरणे स्वस्या मरणं निश्चितमित्याह—

सत्योद्यां गिरमिह निर्वहस्व मा वा
सन्मानं भुवि न सहेय राममातुः ।
संस्थास्ये विषमुपभुज्य पश्यतस्ते
संनाहं त्यजसि न चेत्प्रवर्तमानम् ॥ २० ॥

सत्येति । गिरं वरयुगं दास्यामीत्येवंरूपां वाचं सत्येनोद्येति सत्योद्यां यथार्थवाच्याम् । 'वदः सुपि क्यप्च' इति क्यप् । 'उपपदम्—' इति समासः । इहेदानीं निर्वहस्व समर्थयस्व वा उत मा वा मा निर्वहस्व । सत्योद्यां मृषोद्यां वा कुरुष्वेत्यर्थः । नात्र ममाभिनिवेश इति भावः । किंतु भुवि लोके राममातुः कौसल्यायाः सन्मानं राजमातृत्वप्रयुक्तसत्कारं न सहेय न क्षमिष्ये । सोढुं न शक्नुयामित्यर्थः । सहेर्लिङ् । रामसन्मानस्य सह्यत्वेऽपि सपत्नीसन्मानस्य दैन्यावहत्वेन दुःसहत्वादिति भावः । अतः प्रवर्तमानं संपद्यमानं संनाहं रामाभिषेकसंभ्रमं न त्यजसि चेत् न विसृजसि यदि ते तव पश्यतः सतः । पश्यन्तं त्वामनादृत्येत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी। विषमुपभुज्य गरलमभ्यवहृत्य । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः । संस्थास्ये मरिष्ये । हीनजीवनाद्वरं मरणमेवेति भावः । 'संस्थाधारे स्थितौ मृतौ' इत्यमरः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अत्र रामायणश्लोकः—'तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् । अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ अहं हि विषमद्यैव पीत्वापि हि तवाग्रतः । पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥' इति । प्रहर्षिणीवृत्तम्—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥

एवंवादिनीमेनां भूयोऽपि भूपतिरवदत् ।

एवमिति । एवंवादिनीमेनां कैकेयीं भूयः पुनरपि भूपतिर्दशरथोऽवददुवाच ॥

तदेवाह—

अयि कठिनहृदये, किमुन्मुक्तलोकमर्यादया दयापेतया त्वयोक्तम्[1] ।

अयीति । कठिनहृदये कठिनचित्ते । पुनः पुनरनुनयेऽपि मार्दवाभावाद्धृदयस्येदं संबोधनम् । उन्मुक्ता परित्यक्ता लोकमर्यादा सतीपतिन्यायरूपा यया तया । समतिक्रान्तकुलवधूसमाचारयेत्यर्थः । दयापेतया दयाहीनया । क्रूरयेति यावत् । त्वया किम् । कुत्सितवचनं वक्तुमनुचितमित्यर्थः । 'कुत्साप्रश्नवितर्केष्वाक्षेपे किंशब्द इष्यते' इति शाश्वतः ॥

---

१. 'किमुक्तं मुक्त' इति पाठः.

७-च

अनर्थानेवाह—

नैवाभवस्त्वमिह शीलवतीषु गण्या
नैवाभजत्पितृमतां गणनां स रामः।
नैवापमात्मजसुखान्यहमप्यनार्ये
नैवापमम्बु भरतेन न मे प्रदेयम्॥ २१॥

नेति। हे अनार्ये दुःशीले, अतएव त्वमिह लोके शीलवतीषु सद्वृत्तिसंपन्नासु। साध्वीष्वित्यर्थः। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। गण्या गणनीया नैवाभवो नैवासि। भुवो लङ्। परोपतापेऽप्यात्मनः श्रेयोभावेन 'भक्षितेऽपि लशुने व्याधिर्न निवृत्तः'। 'व्रतभ्रंशे सुखाप्राप्तिः' इत्यादिवदुभयभ्रष्टासीत्यर्थः। तथा स रामः पितृमतां जीवत्पितृकाणां राजन्यानां मध्ये गणनां संख्यां नैवाभजन्न प्राप्नोत्। पिशाचिकयेव त्वया कान्तस्य ममाकिंचित्करत्वात्पितृकर्तव्याभिषेकादिसन्मानासिद्धेरिति भावः। तथाहमप्यात्मजैर्यानि सुखानि तानि नैवापम्। वार्धके पुत्रकृतोपचारादिजनितसौख्यानि नैव प्राप्नवमित्यर्थः। रामप्रव्राजनेन महादुःखपूर्वकमरणस्यावश्यंभावित्वादिति भावः। सर्वत्रैवकारोऽवधारणार्थकः। आप्नोतेर्लुङ्। लृदित्त्वाच्लेरङादेशः। तथा भरतेन मे मह्यम्। निवापः पितृतर्पणम्। 'पितृदानं निवापः स्यात्' इत्यमरः। तस्य संबन्धि नैवापम्। संबन्धार्थेऽण्। अम्बूदकं न प्रदेयं न दातव्यम्। भरतस्यार्यत्वेऽप्यनार्यायास्तव दुर्भगगर्भसंभूतत्वात्। 'सद्बीजान्यपि सस्यानि दुष्येयुः क्षेत्रदोषतः' इति न्यायेनायोग्यतया ममौर्ध्वदैहिकक्रिया न कर्तव्येत्यर्थः। भवन्मरणभयाद्रामे प्रव्राजिते आत्मनोऽपि मरणं सुनिश्चितमेवेति भावः। अत्र परेतस्य निवापोदकमिष्टमेव तथापि न देयमिति निषेधितत्वादनिष्टविधेरिवेष्टनिषेधस्याप्यनुपपद्यमानतया आभासत्वात्तेन निजमरणमाक्षिप्यत इत्याक्षेपालंकारः। उक्तं च विद्यानाथेन—'समानार्थतयानिष्टविध्याभासोऽप्याक्षेप इत्युपगम्यते। यथा चेष्टनिषेधस्याप्यनुपपद्यमानतया आभासत्वम्, तथानिष्टविधेरप्यनुपपद्यमानतया आभासत्वम्' इति। रामाभिषेकविघातेऽपि पुत्रस्य राज्यलाभः स्यादिति लोभेन शीलवतीगण्यत्वाभावाद्यनर्थाङ्गीकारत्वे स्वस्य वैधव्यं स्वपुत्रस्य पितृकर्माचरणानर्हत्वं चेत्यैहिकामुष्मिकविरुद्धमनर्थद्वयं स्यादिति वा मत्वा, अस्मादभिनिवेशाद्विरता भविष्यतीति मत्वानेन राज्ञा भरतनिवापाम्बुदाननिषेधोपन्यासेन निजनिधनं सूचितमिति परमरहस्यम्। अत्र रामायणश्लोकः—'रामः कारयितव्यो मे मृतस्य सलिलक्रियाम्। सपुत्रया त्वया नैव कर्तव्या सलिलक्रिया॥' इति। यद्वा भरतेन नैवापमम्बु मे न प्रदेयमिति काकुः। प्रदेयमेवेत्यर्थः। रामप्रव्राजनोत्तरक्षणमेव निजमरणस्यावश्यंभावित्वात्तत्सांनिध्याभावेन भरत एव ममौर्ध्वदैहिकक्रियाचरणतत्परो भविष्यतीति भावः। वसन्ततिलकावृत्तम्॥

---

१. 'अगमत्' इति पाठः।

वक्तव्यान्तरं विवृत इत्याह—
**किंच ।**

**वासस्त्वचां भवतु किंचन तारवीणां**
**छायाद्रुमाश्च भवनानि भवन्तु धन्याः ।**
**कैकेयि तस्य शयनानि कथं भवेयु-**
**स्त्वच्चेतसोऽपि कठिनानि शिलातलानि ॥ २२ ॥**

**किंच । वास इति ।** हे कैकेयि, तस्य रामस्य । दिव्याम्बरधारिण इति भावः । तारवीणां तरुसंबन्धिनीनाम् । संबन्धार्थेऽण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । त्वचां संबन्धि किंचन किंचत् । वल्कलादिकमित्यर्थः । 'त्वक्स्त्री वल्कं वल्कलमस्त्रियाम्' इत्यमरः । वासो वस्त्रं भवतु । तथा धन्याः श्रीरामस्य निवासत्वेन सफलजन्मानश्छायाप्रधाना द्रुमा वृक्षाश्छायाद्रुमा नमेरुतरवः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । 'छायावृक्षो नमेरुः स्यात्' इति शब्दार्णवः । नीरन्ध्रद्रुमा वा भवनानि गृहाणि भवन्तु । दिव्यभवनसंचारिण इति भावः । किंतु त्वच्चेतसस्तव हृदयादपि कठिनानि कठोराणि । त्वच्चेत एवातिकठिनं ततोऽप्यतिकठिनत्वेन तेषां योग्यता किं वक्तव्येति भावः । शिलातलानि शिलाप्रदेशाः शयनानि शय्याः कथं भवेयुः । वल्कलच्छायाद्रुमैर्यथाकथंचिदेव यात्रा भविष्यति । किंतु शिरीषपुष्पाधिकसौकुमार्यसंपन्नशरीरस्य हंसतूलिकातल्पस्वापोचितस्य कठिनतरशिलातलान्येव शयनानि भवितुं नार्हन्तीत्यर्थः । एतदेव मम हृदयं निकृन्ततीति भावः । वृत्तं तु पूर्ववत् । रामस्य भावीनि शयनानि शिलातलानि त्वच्चेतसोऽपि कठिनानि कथं भवेयुः । त्वच्चेतसः कठिनतराणि नैव । किंतु त्वच्चेतः शिलातलसमकठिनमिति ध्वन्यते ॥

**एवं भर्त्रा भर्त्सिताप्यार्द्रचित्ता नाभूदेषा मन्थराक्रान्तवृत्तिः ।**
**राकाचन्द्रे राजमानेऽप्यबाधं वीरुच्छन्ना चन्द्रकान्तस्थलीव ॥ २३ ॥**

**एवमिति ।** एवमुक्तरीत्या भर्त्सिता ताच्छील्येनेति भर्त्रा तेन प्राणेश्वरेण दशरथेन 'मृङस्ताच्छील्ये' इत्यङ् । भर्त्सितापवादितापि । 'भर्त्सनं त्वपवादनम्' इत्यमरः । मन्थरया पिशाचकल्पयाक्रान्ताच्छन्ना । निह्नुता इति यावत् । वृत्तिः सद्वर्तनं यस्याः सा । 'वृत्तिर्वर्तनजीवने' इत्यमरः । एषा कैकेयी राकाचन्द्रे पूर्णिमाचन्द्रे । 'पूर्णे राका निशाकरे' इत्यमरः । अबाधं मेघावरणादिप्रतिबन्धरहितं यथा तथा राजमाने प्रकाशमाने सत्यपि वीरुच्छन्ना लताच्छादिता । 'लता प्रतानिनी वीरुत्' इत्यमरः । चन्द्रकान्तस्थली चन्द्रकान्तमणिभूमिरिव । 'जानपद–' इत्यादिना अकृत्रिमार्थे ङीष् । आर्द्रचित्ता स्नेहार्द्रहृदया । रामाभिषेकविघाताभिनिवेशपराङ्मुखीति यावत् । नाभून्नासीत् । नहि दुष्टाक्रान्ताः प्रयत्नेनापि प्रकृतिं प्रतिपद्यन्त इति भावः । अत्र माङो नञर्थकत्वान्माङि लुङो नाशीरर्थत्वावकाशः ।

---

१. 'माभूत्' इति पाठः. २. 'निशायां' इति पाठः.

अत्र सति भर्त्सितत्वकारणे चित्तस्यार्द्रीभावरूपकार्यानुदयाद्विशेषोक्तिरलंकारः । 'तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते' इति लक्षणात् । तथा मन्थराक्रान्तवृत्तित्वस्य विशेषणगत्या चित्तार्द्रीभावाभावं प्रति हेतुत्वात्काव्यलिङ्गमलंकारः । तथा च चन्द्रकान्तस्थलीवेत्यत्र उपमेति त्रयाणामन्योन्यसापेक्षितत्वात्संकरः । शालिनीवृत्तम् । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥

**तदनु मुहूर्तमात्रमपि रामसुखावलोकनसुखमनुबुभूषुर्दशरथः कुमारमानयेति सुमन्त्रमादिदेश ।**

**तदन्विति** । तदनु कैकेयीचित्तस्यानार्द्रीभावानन्तरम् । मुहूर्तमात्रं क्षणमात्रं घटिकाद्वयमपि वा । समनन्तरं श्रीरामविरहस्यावश्यंभावित्वादिति भावः । एतेन कैकेय्या अनिवार्यनिश्चयत्वं अधर्मभीरो राज्ञो रामप्रव्राजनविनिश्चितत्वं च सूच्यत इत्यवगन्तव्यम् । 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति विश्वः । रामसुखावलोकनेन यत्सुखमानन्दस्तदनुबुभूषुरनुभवितुमिच्छुः । श्रीरामं दिदृक्षुः सन्नित्यर्थः । भुवः सन्नन्तात् 'सनाशंसभिक्ष उः' । दशरथः कुमारं राममानय समीपं प्रापयेति सुमन्त्रं नाम मन्त्रिणमादिदेशाज्ञापयामास ॥

**तेन सत्वरं राजभवनं प्रवेशितो[2] रामः कृतप्रणामः पितरमयथाभूतमुखविकास[3]मारादालक्ष्य चकितः[4] किमिदमिति कैकेयीमन्वयुङ्क्त ।**

**तेनेति** । तेन सुमन्त्रेण सत्वरमविलम्बितम् । राज्ञो विलम्बासहिष्णुत्वादिति भावः । 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इत्यमरः । राजभवनं दशरथगृहं प्रवेशितः सन् । विशेर्ण्यन्तात्कर्मणि क्तः । रामः कृतप्रणामः कृताभिवादनः सन् अयथाभूतः पृथग्भूतः पूर्वापेक्षया विलक्षणो मुखविकासो वक्त्रश्रीर्यस्य तं पितरं दशरथमारात्समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । आलक्ष्य दृष्ट्वा चकितो भयसंभ्रान्तः सन् । इदं राज्ञो मुखविकासराहित्यं किम् । कुतो वा जातमित्यर्थः । इत्येवं कैकेयीमन्वयुङ्क्तापृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥

**सापि पापाशया प्रत्यवादीत् ।**

**सेति** । ततः पापाशया पापाभिप्राया । दुःसंकल्पेति यावत् । 'आशयः स्यादभिप्राये मानसाधारयोरपि' इति विश्वः । सा कैकेय्यपि प्रत्यवादीत्प्रत्युवाच । श्रीरामप्रश्नस्योत्तरं ददावित्यर्थः । वदेर्लुङि सिचि वृद्धिः ॥

तदेव विवृणोति—

**वत्स, प्रतिश्रुतवरद्वयनिर्वहणे निपुणेतरस्तातस्ते संप्रति सानुशयस्तनयवात्सल्यात्सत्यव्यत्यासत्रासाच्च गाढमगाधे[5] शोकसागरे निमज्जतीति ।**

**वत्सेति** । हे वत्स राम, ते तव तातः पिता । 'तातस्तु जनकः पिता' इत्यमरः ।

---

१. 'अनुबुभूषुः कुमारम्' इति पाठः. २. 'प्रवेशितस्ततः' इति पाठः. ३. 'विलास' इति पाठः. ४. 'चकितमतिः' इति पाठः. ५. 'अगाधशोक' इति पाठः

संप्रतीदानीं प्रतिश्रुतं पूर्वं प्रतिज्ञातं यद्वरद्वयं तस्य निर्वहणे समर्थने । वरद्वयं समनन्तरं स्वयमेव परिहरिष्यति । निपुणः प्रवीणस्तस्मादितरः । असमर्थः सन्नित्यर्थः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । अतएव सानुशयः समनःसंतापः सन् । 'रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । तनये त्वयि वात्सल्यस्नेहात् । 'श्रीमान्स्निग्धस्तु वत्सलः' इत्यमरः । तथा सत्यव्यत्यासः भरताभिषेकाकरणप्रयुक्तसत्यविपर्यासस्तत्रासात्तद्भयाच्च हेतोरगाधे गम्भीरे । दुस्तर इत्यर्थः । शोकसागरे दुःखार्णवे गाढं भृशम् । असंभावितोन्मज्जनमित्यर्थः । 'प्रगाढं भृशकृच्छ्रयोः' इत्यमरः । निमज्जति निमग्नो भवतीत्येवं प्रलपतीदिति पूर्वेण संबन्धः॥

किं तद्वरद्वयमित्याशङ्कायामाह—

**वरद्वयं तावत्तव मुनिवृत्त्यैव[1] वने वर्तनमवनेरवनं भरतस्येति[2] ।**

वरेति । वरद्वयं वरयुगलम् । तावच्छब्दोऽवधारणार्थकः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । तव भवतो मुनिवृत्त्या तापसवृत्त्यैव । एवकारो भेदबुद्धिजनकवृत्त्यन्तरव्यवच्छेदार्थकः । वने दण्डकावने वर्तनं चतुर्दशवत्सरावस्थानम् । तथा भरतस्यावनेरवनं भूरक्षणं च । 'अव रक्षणे' कर्तरि ल्युट् । तव वनवास एको वरः, भरतस्य भूपरिपालनमपर इत्यर्थः । इति वाक्यसमाप्तौ । अथवा इति च प्रलपतीदिति संबन्धः । यद्वा इति वरद्वयं तावद्वरद्वयं खल्वित्यन्वयः ॥

**रामस्तदाकर्ण्य प्रमुदितहृदयः कृताञ्जलिरेनां प्रति व्यजिज्ञपत्[3] ।**

राम इति । रामस्तद्वरद्वयमाकर्ण्य सविशेषं श्रुत्वा प्रमुदितहृदयो धीरोदात्ततया विकारमन्तः संस्तभ्य संतुष्टान्तःकरणः सन् । धीरोदात्तलक्षणं तु—'महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः । सुवर्णाचलवद्धीरो धीरोदात्तः सुसंमतः ॥' इति । एतेन धैर्यमुक्तम् । 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः । अतएव कृताञ्जलिर्विरचितकरसंपुटः । भक्तिविनयविधेयतालक्षणमेतत् । एनां कैकेयीं प्रति व्यजिज्ञपद्विज्ञापयामास ॥

तदेवाह—

**भीतो भूभरतः किमम्ब भरतः किंवा वनात्पावना-**
**त्त्रस्तोऽहं सगरान्ववायककुदस्तातः कुतः शोचति ।**
**दिव्यायाः सरितो निवापकरणाल्लघ्वीं प्रतिज्ञामिमा-**
**मावाभ्यामभिपूरयिष्यति[4] न चेत्पुत्री कथं स्यादयम् ॥ २४ ॥**

भीत इति । हे अम्ब मातः, 'अम्बा माताथ बाला स्यात्' इत्यमरः । 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । अत्र सापत्नमातृत्वेऽपि सांप्रतिकविरोधाचरणतत्परत्वेऽपि भर्तृप्रातिकूल्यपरायणत्वेऽपि स्वयं निर्विकारत्वादेवमामन्त्रितवानित्यवगन्तव्यम् । भरतस्त्वत्पुत्रो भूभरतो भूभारात् । न तु वृथाभूभरात् । 'प्रशम्यास्त्वसिः'

---

१. 'वन्यवृत्त्यैव' इति पाठः. २. 'भरतस्य चेति' इति पाठः. ३. 'एनां व्यजिज्ञपत्' इति पाठः. ४. 'इह पूरयिष्यति' इति पाठः.

'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी । भीतो भयविभ्रान्तः किम् । न भीत एवेत्यर्थः । तथाहं रामः । पावयतीति पावनात्पवित्रताहेतोः । न तु नैरर्थक्यापादकात् । 'पूङ् पवने' । कर्तरि ल्युट् । वनात्तपोवनात् । पूर्ववत्पञ्चमी । त्रस्तो भीतः किम् । न त्रस्त एवेत्यर्थः । 'चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम्' इत्यमरः । अतः सगरस्य सगरचक्रवर्तिनोऽन्ववायस्य कुलस्य ककुदः श्रेष्ठः । अथवा सगरान्ववायानां राज्ञां श्रेष्ठः । 'वंशोऽन्ववायः संतानः' इति वंशपर्यायेष्वमरः । 'ककुद्वत्ककुदौ श्रेष्ठे वृषाङ्गे राजलक्ष्मणि' इति विश्वप्रकाशः । अत्र सगरान्ववायग्रहणं सर्वेऽपि सगरकुलोद्भवा भगीरथादयो राजानो दुस्तरप्रतिज्ञापारावारपारीणा एव, अतस्तत्कुलश्रेष्ठस्यास्येदक्प्रतिज्ञाकुल्यावतरणं कियदिति सूचनार्थमित्यवगन्तव्यम् । अतोऽस्मत्पिता मादृशपुत्रजनको दशरथः कुतो हेतोः शोचति खिद्यति । न कुतोऽपि शोचितव्यमित्यर्थः । शोककारणयोरुभयोरप्यन्यतरस्याभावादिति भावः । तत्कुत इत्याशङ्क्याह—दिवि भवा दिव्या तस्याः सरितो वियद्गङ्गाया निवापकरणात्पितृतर्पणाञ्जलिविधानात् । अस्मत्पूर्वमहाराजभगीरथकर्तृकादिति भावः । 'निवापः पितृतर्पणम्' इत्यमरः । लघ्वीमल्पाम् । न ततोऽप्यधिकां वेत्यर्थः । 'वोतो गुणवचनात्' इति ङीप् । इमां प्रतिज्ञां वरद्वयरूपाम् । अयमस्मत्तातः । आवाभ्यां स चाहं चावाभ्यां साधनभूताभ्याम् । भरतेन मया चेत्यर्थः । 'त्यदादीनि सर्वैर्नित्यम्' इति सर्वग्रहणादत्यदादिना भरतेन सहास्मदस्त्यदादित्वादेकशेषः । 'युवावौ द्विवचने' इत्यावादेशः । 'युष्मदस्मदोरनादेशे' इत्यकारोऽन्तादेशश्च । नाभिपूरयिष्यति चेन्न निर्वहिष्यति चेत् । कथं कुतः पुत्री प्रशस्तपुत्रवान् । प्रशंसायामिनिः । स्याद्भवेत् । न स्यादेव । पुंनाम्नो नरकात्त्रायत इति व्युत्पत्त्या अनन्यसाधारणनिरयोद्धरणैकसूत्राणां पुत्राणामस्माकं जनने बहुक्लेशभागिनोऽस्य राज्ञोऽस्मत्पूर्वराजस्य निर्व्यूढप्रतिज्ञापेक्षया अल्पतराया अस्या निर्वहणाभावे कुतो वा नः पुत्रशब्दवाच्यता । कुतो वायं पुत्रवान्स्यात् । तस्मादावाभ्यामेतदङ्गीक्रियते तातेनापि न शोचितव्यमित्यर्थः । शार्दूलविक्रीडितम् ॥

वनभुवि तनुमात्रत्राणमाज्ञापितं मे
सकलभुवनभारः स्थापितो वत्समूर्ध्नि ।
तदिह सुकरतायामावयोस्तर्कितायां
मयि पतति गरीयानम्ब ते पक्षपातः ॥ २५ ॥

**वनेति** । हे अम्ब, मे मह्यं वनभुवि कान्तारसीम्नि तनुमात्रस्य मामकदेहस्यैकस्यैव त्राणं रक्षणम् । अल्पभारभरणमित्यर्थः । आज्ञापितमादिष्टम् । ममैतत्सुकरमिति भावः । किंतु वत्सो बालः । भारोद्वहनासमर्थ इति यावत् । तस्य भरतस्य स्वगर्भसंभूतस्य मूर्ध्नि शिरसि सकलभुवनभारोऽशेषभूभारः गुरुतरत्वाद्दुर्वह इत्यर्थः । स्थापितो निक्षिप्तः । 'भुवनं विष्टपे लोके सलिलेऽपि वियत्यपि' इति विश्वः । ततस्तस्मात्कारणादिहास्मिन्कार्यद्वये विषये । आवयोः । भरतस्य मम चेत्यर्थः । सुकरतायां सौकर्ये तर्कितायामालोचितायां सत्यां गरीयान्गुरुतरः । गुरुशब्दादीयसुनि 'प्रियस्थिर—' इत्यादिना गुरोर्गरादेशः । ते तव पक्षपात आदरो मयि पतति

प्रसरति । स्वतनये भरते सपत्नीनन्दने मयि चादरानादराभ्यां सुखासुखसंपादकराज्याभिषेकवनवासविधानार्थं प्रयत्नः कृतः, सोऽयं विचार्यमाणे विपरीतो जातः। अतस्तदेतद्गुरूकरणप्रवृत्तौ मर्कटभावन्यायप्रायं सुखार्थं चन्दनलेपे वातोद्रेकप्रसङ्गकल्पं चाभूदित्यर्थः । अतएव विषमालंकारः—'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् । विरूपघटना सा स्याद्विषमालंकृतिस्त्रिधा ॥' इति लक्षणात् । मालिनीवृत्तम् ॥

आस्तां तावद्युक्तिरचना । सुनिश्चितं वक्तव्यान्तरमस्तीत्याह—

**किंच ।**

**तातः स्ववाचा व्यवहृत्य हृद्यं वत्साभिषेकोत्सवमङ्गलं मे ।**
**प्रमाणसंज्ञस्य मयार्पितस्य किं पूर्णपात्रस्य न पात्रमासीत् ॥ २६ ॥**

**किंचेति** । तत्प्रकारमेवाह—**तात इति** । तातोऽस्मत्पिता स्ववाचा स्वमुखोच्चारितेन नियोगवचनेनैव न भवद्वचने भरताभिषेकमभिनन्दयतो मम स्ववचनेन चेत्किमु वक्तव्यमिति भावः । हृद्यं मनोहरं वत्सस्योभयोरप्युपलालनीयस्य भरतस्याभिषेको मूर्धाभिषेकः स एवोत्सवः 'उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः' इत्युक्तलक्षणः स एव मङ्गलं कल्याणं मे मह्यं व्यवहृत्योक्त्वा । कथयित्वेति यावत् । 'व्याहार उक्तिर्लपितम्' इत्यमरः । मयार्पितस्य दत्तस्य प्रणामसंज्ञस्य नमस्काराख्यस्य पूर्णपात्रस्योत्सवादिषु देयवस्तुनः पात्रं योग्यो नासीत्किं न जातः किमिति काकुः । तातेन भरताभिषेकः क्रियत इति वक्तव्यम्, मया चाङ्गीकारपूर्वकं नमस्कर्तव्यं चेत्यर्थः । सत्यसंधस्य स्वस्य स्वमुखोच्चारणे कः संकोचः । स्वतो निःसंकोचं वदत्विति तात्पर्यम् । 'उत्सवादिषु यद्देयं पूर्णपात्रं तदुच्यते' इत्यभियुक्ताः । 'योग्यभाजनयोः पात्रम्' इत्यमरः । अत्र नासीत्किमिति काक्वा राज्ञो योग्यतापादनद्वारा रामस्य भरताङ्गीकरणमाक्षिप्यत इति गुणीभूतव्यङ्ग्यम् । तदुक्तम्—'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥' इति । वृत्तमुपजातिः ॥

**तत्क्षणमशनिहत इव पर्वतः, सर्वतः परीतदवदहन इव वनस्पतिः दिवस्पतिपदभ्रंशविधुर इव नहुषः पपात निःसंज्ञः पङ्क्तिरथः ।**

**तत्क्षण इति** । तस्मिन्नेव क्षणे । रामस्य भरताभिषेकाङ्गीकारसमय इत्यर्थः । अत्यन्तसंयोगे द्वितीया । पङ्क्तिरथो दशरथः । 'पङ्क्तिश्छन्दोऽपि दशमम्' इत्यमरः । अशनिहतो वज्रविदारितः पर्वत इव । सर्वतः समन्तात्परीतदवदहनो व्याप्तदवाग्निर्वनस्पतिर्वृक्ष इव । 'वनस्पतिर्वृक्षमात्रे विना पुष्पैः फलद्रुमे' इति विश्वः । दिवः स्वर्गस्य पतिर्दिवस्पतिरिन्द्रः । 'शतमन्युर्दिवस्पतिः' इतीन्द्रपर्यायेष्वमरः । 'षष्ठ्याः पतिपुत्र-' इत्यादिना अलुकि कस्कादित्वाद्विसर्जनीयस्य सत्वम् । तस्य पदाभ्रंशेन प्रच्युत्या विधुरो विश्लिष्टः । 'विधुरः प्रत्यपेते स्यात्कष्टविश्लिष्टयोरपि' इति वैजयन्ती । नहुषो ययातिपितेव निःसंज्ञो विचेतनः सन् पपात । रामविरहा-

सहिष्णुत्वान्मुमूर्च्छेत्यर्थः ।–पुरा किल नहुषः कुतश्चित्पुण्योदयात्स्वर्गे इन्द्रत्वं प्राप्य तत्र निजाहंकारहुंकारप्रकोपितेन कुम्भसंभवेन भुजङ्गो भवेति शप्तः स्वर्गपदात्प्रच्युतो भुवि पपात—इति पौराणिकी कथा । वक्ष्यति चारण्यकाण्डे । उपमालंकारः ॥

**ततः सा पितृनिदेशमाचरेति राममादिदेश ।**

**तत इति** । ततस्तदनन्तरं सा कैकेयी पितुर्दशरथस्य निदेशमाज्ञामाचर विधेहीति राममादिदेशाज्ञापयामास ॥

ततो रामः किमकार्षीदित्यत आह—

**स एषः ।**

**मातुराज्ञां वहन्मूर्ध्ना मालामिव महायशाः ।**
**वनाय रामो वव्राज जगतामवनाय च ॥ २७ ॥**

**स इति** । योऽयं कैकेय्याज्ञप्तः स एष महायशाः कीर्तिसंपन्नो रामोमातुः कैकेय्या आज्ञां वनवासाय व्रजेत्येवंरूपशासनं मालां पुष्पस्रजमिव मूर्ध्ना वहन् । शिरसा धारयन्नित्यादरोक्तिः । वनाय । दण्डकावनं प्रतीत्यर्थः । 'क्रियार्थोपपद–' इत्यादिना चतुर्थी । तथा जगतामवनाय जगद्रक्षणाय च वव्राज जगाम । वनं प्रति गन्तुमैच्छदित्यर्थः । वनवासे दुष्टनिग्रहशिष्टपरिपालनाभ्यां लोकनिर्वाहस्य जायमानत्वाज्जगतामवनायेत्युक्तमित्यवगन्तव्यम् । उपमालंकारः ॥

**असौ समासाद्य सद्यः कौसल्यासदनमभिषेकप्रतिबन्धं कैकयीनिर्बन्धमात्मनश्च वनवासं प्रणामानन्तरं तस्यै न्यवेदयत् ।**

**असाविति** । असौ रामः सद्योऽविलम्बेन कौसल्यासदनं निजमातृगृहं समासाद्य प्रविश्याभिषेकस्य निजराज्याभिषेकस्य प्रतिबन्धमन्तरायभूतं कैकेय्या निर्बन्धं संकटम् । वरद्वयाख्यपाशेन राजानं निर्बन्ध्य भरतस्याभिषेकप्रवर्तनरूपाभिनिवेशमित्यर्थः । तथा आत्मनो वनवासं च प्रणामानन्तरं नमस्कारानन्तरकाले तस्यै कौसल्यायै न्यवेदयत् । कथितवानित्यर्थः ॥

**सैतदाकर्ण्य विदीर्णहृदया विषदिग्धमुखशिलीमुखविद्धश्रवणयुगलेव सहसा निपत्य विललाप ।**

**सैतदिति** । सा कौसल्या एतद्रामवनवासवचनमाकर्ण्य श्रुत्वा विदीर्णहृदया विदलितान्तरङ्गा सती । तस्य वज्रप्रहारप्रायत्वादिति भावः । शिली शल्यं मुखे यस्य शिलीमुखम् । विषदिग्धं विषरूषितं मुखमग्रभागो यस्य स तथोक्तः यः शिलीमुखो बाणः । 'मुखं स्यादग्रभागेऽपि', 'अलिबाणौ शिलीमुखौ' इत्युभयत्राप्यमरः । तेन विद्धं संप्रहृतं श्रवणयुगलं कर्णयुग्मं यस्याः सा तथोक्तेवेत्युत्प्रेक्षा । तथा चैतद्वचनस्य विशिष्टबाणवदत्यन्तदुःसहत्वं सूच्यते । सहसा शीघ्रम् । 'स्वरादिपाठादव्यय-

१. 'निदेशविचारमचिरम्', 'निदेशमविचारम्' इति पाठः. २. 'समासाद्य कौसल्या' इति पाठः. ३. 'एतत्' इति पाठः. ४. 'भूम्यां निपत्य' इति पाठः.

त्वम्' इति शाकटायनः। निपत्य भुवि पतित्वा। स्थातुमशक्यत्वादिति भावः। विललाप परिदेवनवती बभूव। 'विलापः परिदेवनम्' इत्यमरः॥

तदेवाह—

रेखारथाङ्गसरसीरुहशङ्खचिह्ने
क्षेमंकरे तव करे जगतां त्रयाणाम्।
कान्तारकन्दखननं रचयेति नून-
मावद्धवान्प्रतिसरं भगवान्वसिष्ठः॥ २८॥

**रेखेति।** रेखा एव रथाङ्गानि चक्राणि च सरसीरुहाणि च शङ्खाश्च। रथाङ्गाद्याकाररेखा इत्यर्थः। ते चिह्नानि यस्य तस्मिन्। सामुद्रिकशास्त्रोक्तमहाभाग्यसंपत्तिसूचकतया तादृग्लक्षणलक्षित इत्यर्थः। त्रयाणां जगतां भूर्भुवःस्वर्लोकानां स्वर्गमर्त्यपातालानां वा। उपलक्षणमेतत्। अशेषलोकानामित्यर्थः। क्षेमं करोतीति क्षेमंकरे शुभकरे। 'क्षेमप्रियमद्रेऽण्च' इति खच्। 'अरुर्द्विषद्–' इत्यादिना मुमागमः। तव करे हस्ते। 'बलिहस्तांशवः कराः' इत्यमरः। कान्तारे अरण्ये कन्दानामभ्यवहारोचितानां मूलविशेषाणां खननमवदारणम्। 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः। रचय विधेहि। जीवनोपायार्थमिति भावः। इति मत्वेति शेषः। भगवान्। 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥' इत्युक्तलक्षणो वसिष्ठः प्रतिसरं हस्तसूत्रमावद्धवान्निबद्धवान्नूनम्। अन्यथा कथमेवं भवेदिति भावः। 'ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्' इत्यमरः। अत्र राज्याभिषेकाङ्गत्वेनामुक्तस्य प्रतिसरस्य कन्दखननार्थत्वेनोत्प्रेक्षितत्वादुत्प्रेक्षा। सा च नूनमिति व्यञ्जकसद्भावाद्वाच्या। 'यत्रान्यधर्मसंबन्धादन्यत्वेनोपकीर्तितम्। प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते॥' इति लक्षणात्॥

अत्रान्तरे रामाभिषेकविघातमसहमानो निरूढाभिमानो लक्ष्मणस्तावदूच इत्याह-

**तत्र सौमित्रिरतिमात्रप्रवृद्धमन्युः शतमन्युसमानमेवमग्रजमकथयत्।**

**तत्रेति।** तत्र कौसल्याविलापसमये। सुमित्राया अपत्यं सौमित्रिर्लक्ष्मणः। 'बाह्वादिभ्यश्च' इतीञ्प्रत्ययः। अतिमात्रप्रवृद्धमन्युः श्रीरामवनवासकथायाः श्रोतुमशक्यत्वादत्यन्तप्रवृद्धकोपः सन् शतमन्युसमानं भोगैश्वर्यादिसंपत्त्या इन्द्रतुल्यमित्युपमा। अग्रजं ज्येष्ठभ्रातरं श्रीरामं प्रत्येवं वक्ष्यमाणरीत्याकथयदवोचत्॥

तत्प्रकारमेव विवृणोति—

**आर्य, अकार्यमिदं लोकगर्हणार्हायाः कैकेय्या वचसा रजसा जरसा च समाक्रान्तस्वान्तया कृत्याकृत्यविवेकमूकस्य राज्ञः प्रज्ञाशैथिल्यान्निःसृतेन वचसा संत्यज्य राज्यमटवीपर्यटनं विधातुम्।**

---

१. 'न कार्यम्' इति पाठः. २. 'लोकगर्हणीयायाः' इति पाठः. ३. 'वचसा जरसा' इति पाठः.

**आर्येति** । हे आर्य पूज्य, इदमेतदकार्यमयुक्तम् । तवैतन्नोपपद्यत इत्यर्थः । किमिदमित्यत आह—लोकेति । लोकगर्हणार्हाया ईदृगकार्यकरणशीलत्वाल्लोकनिन्द्यायाः । 'कुत्सा निन्दा च गर्हणे' इत्यमरः । कैकेय्या वचसा विप्रलापेन रजसा रजोगुणेन च । 'रजो रजोगुणे धूलौ परागार्तवयोरपि' इति शाश्वतः । जरसा वार्धकावस्थया च । 'जराया जरसन्यतरस्याम्' इति जराशब्दस्य जरसादेशः । समाक्रान्तस्वान्ततया समभिभूतान्तःकरणतया हेतुना । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । कृत्याकृत्यविवेकमूकस्य कार्याकार्यविवेकशून्यस्य । उक्तत्रितयमध्य एकैकमप्यनर्थाय भवति, मेलने तु किमु वक्तव्यमिति भावः । राज्ञः प्रज्ञाशैथिल्याद्बुद्धिमान्द्यान्निःसृतेन वचसा निर्गतेनानर्थकवाक्येन राज्यं प्रजापरिपालनात्मकं राजकृत्यं संत्यज्य विहाय । अटवीपर्यटनमरण्यसंचारं विधातुं कर्तुम् । अकार्यमिति पूर्वेण संबन्धः ॥

ननु भवतु यथा तथा वा, श्रेयस्कामेन पुंसा गुरुनिदेशोऽवश्यं कर्तव्यः । अन्यथा निषेधस्मरणादित्याशङ्क्य तत्र युक्तिं वक्ति—

**किंतु तुभ्यमनभ्यर्थमानाय प्रथमैव पित्रा प्रदत्ता ननु पृथिवी ।**

**किंत्विति** । किंतु । ततः किमुच्यते चेदित्यर्थः । अनभ्यर्थमानायायाचमानाय । पुनःपुनर्याञ्चानिर्बन्धेनानुपद्रवकारिण इत्यर्थः । अभ्यर्थमानायैव दत्तं पुनर्न ग्राह्यम् । अनभ्यर्थमानाय चेत्किमु वक्तव्यमिति भावः । 'अत्रेमेऽर्थयतेरर्था याचेर्याञ्चावरोधने' इति वचनात् । तुभ्यं भवते । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी । पित्रा पृथिवी भूः प्रदत्ता ननु वितीर्णा खलु । अतः प्रगृहीतायाः पुनरग्रहणेन तवापि प्रतिग्रहपरित्यागदोषः । तस्यापि नतवयं दत्तापहरणदोषः । तस्मादुभयतारकत्वात्त्वया पुनरवश्यं पृथ्वी ग्राह्येति तात्पर्यम् ॥

ननु तथापि न समायं धर्मः पुरुषार्थव्याहतिहेतुत्वादिति न मन्तव्यम् । 'क्षत्रियस्य परो धर्मः प्रजानामेव पालनम्' इति मनुवचनात् । वस्तुतो धर्ममार्गभ्रंशेऽपि सम्यक्प्रजापालनतत्परस्य पुरुषस्य मोक्षसाधकत्वादित्याह—

**क्षत्रधर्मोऽपि धर्म्यात्पथः[1] प्रमाद्यापि[2] वर्णाश्रमरक्षणतः समीचीनः प्रायेण पुरुषं निश्रेयसे नियोजयेत् ।**

**क्षत्रेति** । समीचीनः समर्थः क्षत्रधर्मः क्षत्रियकुलाचारोऽपि । वस्तुस्वभावावधारणार्थकोऽयमपिशब्दः । धर्मादनपेतो धर्म्यः । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । तस्मात्पथो मार्गात् । 'जुगुप्साविराम–' इत्यादिना पञ्चमी । प्रमाद्यापि प्रमादं प्राप्यापि । धर्ममार्गानवहितो भूत्वापीत्यर्थः । वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचर्यादयः, तेषां रक्षणतः परिपालनाद्धेतोः । प्रायेण भूम्ना । 'प्रायो भूम्न्यन्तगमने' इत्यमरः । पुरुषम् । नितरां श्रेयो निश्रेयसम् । 'अचतुर–' इत्यादिना सूत्रेणाच्प्रत्ययान्तो निपातितः । तस्मिन्सकलपुरुषार्थाध्यक्षे नियोजयेत्प्रवर्तयेत् । मोक्षाधिकारिणं कुर्यादित्यर्थः । कुतश्चित्कारणाद्धर्ममार्गप्रमादेन वैगुण्येऽपि स्वधर्मत्वात्सम्यक्प्रजापरि-

---

१. 'सत्यात्पथः' इति पाठः. २. 'प्रमाद्योऽपि' इति पाठः

पालनात्मकस्य क्षत्त्रधर्मस्य मुनिजनोचिताटवीपर्यटनरूपपरधर्मानुष्ठानापेक्षया श्रेष्ठत्वाच्छ्रेयस्करत्वं संभवति। 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥' इति भगवद्वचनादिति भावः॥

अथ दैवबलाल्लङ्घनेनापि पौरुषस्य पुरुषार्थसमर्थनसामर्थ्यसंभवात्क्षत्त्रधर्मनिर्वाहकः पुरुषकार एव समाश्रयणीय इत्याह—

**नियतं नियतिबलमतिलङ्घ्य पौरुषमेव धीरस्य पुरुषार्थान्समर्थयेत्।**

**नियतमिति।** पुरुषस्य कर्म पौरुषं पुरुषकार एव। 'पौरुषं पुरुषस्योक्ते भावे कर्मणि तेजसि' इति विश्वः। युवादित्वादण्। अवधारणार्थोऽयमेवकारः। नियतं निश्चितं यथा तथा। नियतिबलं दैवबलम्। 'नियतिर्नियमे दैवे' इति विश्वः। अतिलङ्घ्यातिक्रम्य। धीरस्य धैर्यशालिनः पुंसः पुरुषार्थान्धर्मार्थकाममोक्षचतुर्विधपुरुषार्थान्समर्थयेन्निर्वहेत्। स्वशक्त्या पौरुषनिर्वाहस्यैव पुरुषार्थलाभो नत्वन्यस्य। अतः पुरुषकार एव समाश्रयणीय इति भावः॥

इत्थं स्वमतमुपन्यस्य तस्य फलितमाह—

**मा भूस्त्वत्पदपद्मयोररुणिमा कान्तारसंचारतः**
**पाणौ पाटलिमा मनाक्प्रसरतु ज्याकर्षणादेव मे।**
**कैकेयीपरिभूततातवचने नम्रो भवान्मा स्म भू-**
**र्किंचिन्मामकमार्य शौर्यजलधे नम्रं धनुर्वर्तताम्॥ २९॥**

**मा भूदिति।** हे आर्य पूज्य, शौर्यजलधे। अपारशौर्यसंपन्नेत्यर्थः। त्वत्पदपद्मयोर्भवच्चरणारविन्दयोः कान्तारसंचारतोऽरण्यसंचारादरुणिमा आरुण्यम्। लौहित्यमिति यावत्। 'वर्णदृढादिभ्यः ष्यञ्च' इति चकारादिमनिच्। मा भून्मास्तु। 'माङि लुङ्' इत्याशिषि लुङ्। किंतु ज्याकर्षणान्मौर्व्याकर्षणात्। 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। मे मम पाणौ हस्त एव पाटलिमा रक्तिमा। 'श्वेतरक्तस्तु पाटलः' इत्यमरः। पूर्ववदिमनिच्। मनागीषत्प्रसरतु प्रवर्तताम्। तथा भवान्कैकेय्या परिभूतस्य विमोहितस्य तातस्य पितुर्वचने विषये नम्रः प्रह्वः। विधेय इति यावत्। मास्म भूत्। मा भूयादित्यर्थः। स्त्रैणवचनस्यानादरणीयत्वादिति भावः। 'स्मोत्तरे लङ् च' इति चकारादाशीरर्थे लुङ्। 'न माङ्योगे' इत्यट्प्रतिषेधः। 'शेषे प्रथमः' इति प्रथमपुरुषत्वम्। किंतु किंचिदीषन्मामकं मदीयम्। 'तवकममकावेकवचने' इति ममकादेशः। धनुर्नम्रं सत् वर्तताम्। स्त्रीपरतन्त्रस्य पितुर्वचननियन्त्रिततया कान्तारसंचारतत्परो मा भव। किंतु मौर्व्याकर्षणपूर्वकं मदीयं धनुरायम्य बाणप्रयोगेण कार्याकार्यविचारविधुरममित्रभूतं पितरं हनिष्यामीत्यर्थः। तथा च रामायणे—'प्रोत्साहितोऽयं कैकेय्या संतुष्टो यदि नः पिता। अमित्रभूतो निःशङ्कं वध्यतां बध्यतामिति॥' तथा स्मृतिश्च—'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथप्रतिपन्नस्य कार्यं भवति

---

१. 'नियतेर्बलं' इति पाठः. २. 'पुरुषस्य धीरस्य' इति पाठः. ३. 'र्थानर्थयेत्' इति पाठः. ४. 'किंवा' इति पाठः.

शासनम् ॥' इति । लक्ष्मणो धीरोद्धतत्वादित्थमुक्तवानित्यनुसंधेयम् । लक्षणं तु— 'दर्पोत्थाश्चर्यभूयिष्ठश्चण्डवृत्तिर्विकत्थनः । मायावी सुलभक्रोधः स धीरोद्धत उच्यते॥' इति । अत्र साम्यैकत्वेन प्राप्तयोः श्रीरामपादपद्महस्तारुणिमपाटलिम्नोः श्रीरामपादपद्मारुणिमानं कठोरोक्त्या वर्जयित्वा पाणौ नियमनादेकः परिसंख्यालंकारः । तथोत्तरार्धे श्रीरामधनुर्नम्रत्वयोः प्राप्तयोः श्रीरामनम्रत्वं वर्जयित्वा धनुषि नियमनादपर इति तयोर्वापेक्षित्वात्संकरः । 'एकस्य वस्तुनः प्राप्तावनेकत्रैकदा यदा । एकत्र नियमः सा हि परिसंख्या निगद्यते ॥' इति लक्षणात् ॥

**एवमाचक्षाणं लक्ष्मणं रामः सान्त्वयन्नेवावोचत् ।**

**एवमिति ।** एवमुक्तरीत्याचक्षाणं वदन्तम् । 'वद व्यक्तायां वाचि' इत्यस्माद्धातोः शानच् । लक्ष्मणं रामः सान्त्वयन्सामवादैरुपलालयन्नेव । 'सामसान्त्वमुभे समे' इत्यमरः । अवोचत् ॥

तत्प्रकारमेवाह—

**वत्स सवितृवंशजातानां पितृनिदेश एव देशिकः सर्वकर्मसु ।**

**वत्सेति ॥** हे वत्स लक्ष्मणेत्यादरेणामन्त्रणम् । सवितृवंशजातानां सूर्यवंशोद्भवानां राज्ञां पितृनिदेशः पितृनियोग एव सर्वकर्मसु सकलकार्येषु देशिक आचार्यः । उपदेष्टेति यावत् । सूर्यवंशोद्भवाः सर्वे पितुराज्ञापरिपालनतत्परा एवेत्यर्थः । अतो नास्माकमिदं विरुद्धमिति भावः ॥

न केवलमस्माकमियं मर्यादा, किंतु पूर्वेषामन्येषामपीत्याह—

**बहवः खलु पितृनिदेश[1]गौरवाद्गोहत्यामपि मातृवधमपि तारुण्यविनिमयमपि कण्डु[2]रैणुकेयपूरुप्रभृतयः कुर्वाणा[3] निर्विचारमाचारवतामग्रण्या इति गण्यन्ते ।**

**बहव इति ।** कण्डुर्नाम महर्षिः । रेणुकाया अपत्यं रैणुकेयो जामदग्न्यो रामः । 'स्त्रीभ्यो ढक्' । पूरुर्ययातिनन्दनः । प्रभृतिग्रहणात्सगरपुत्रादयः । कण्डुश्च रैणुकेयश्च पूरुश्चेति द्वन्द्वः । ते प्रभृतिरादिर्येषां ते तथोक्ताः । बहवोऽनेके पूर्वे महात्मानः पितृनिदेशे पित्राज्ञायां गौरवादादरातिशयात् गोहत्यामपि । न तु यस्यकस्यचिज्जन्तोर्हत्याम् । 'हनस्त च' इति हन्तेर्भावे क्यप् । तकारश्चान्तादेशः । स्त्रीत्वं लोकात् । तथा मातृवधमपि । न तु यस्याः कस्याश्चित्स्त्रियो वधम् । तथा तारुण्यस्य यौवनस्य विनिमयो बुद्धिपूर्वकपरिवृत्तिस्तमपि । न तु यस्यकस्यचिद्वयसो विनिमयम् । अत्यन्ताकृत्यविनियोजक एव पितृनिदेशो न लङ्घनीयः, इयत्कालवनवासविनियोजकस्तु किं वक्तव्यमित्यपिशब्दत्रयार्थः । निर्विचारं विचाररहितं यथातथा धर्मशास्त्रनिषिद्धं गोहत्यादिमहापातकं कथंकारं कर्तुमुपयुक्तं स्यादिति शङ्काशून्यमित्यर्थः । कुर्वाणा आचरितवन्तः करोतेस्ताच्छील्ये शानच् । तेनाचरणेनाचारवतां सदाचारसंपन्नानाम् । अग्रं नयन्तीत्यग्रण्यः श्रेष्ठाः । 'सत्सूद्विष—' इत्यादिना क्विप् । 'अग्र-

१. 'वचन' इति पाठः. २. 'मृकण्डु' इति पाठः. ३. 'कुर्वाणास्ते' इति पाठः.

ग्रामाभ्यां नयतेर्णो वक्तव्यः' इति णत्वम् । इत्येवं गण्यन्ते संख्यायन्ते । प्रशस्यन्ते खल्वित्यर्थः । पितृनिर्देशं गुरुं कुर्वतामीदृगकार्यकरणमेव प्रशंसाहेतुरभूत् । किमुत वनवासादिकार्यकरणमिति भावः ॥

उक्तमर्थं निगमयति—

**तस्मादवश्यं वश्य एव पितुरवगाहे गहनमिति ।**

**तस्मादिति ।** यस्मात्पितृनियोगोऽवश्यमनुष्ठेयस्तस्मात्कारणादित्यर्थः । अवश्यं निश्चितं पितुर्वश्यो वशं गत एव सन् । नतु विमत इत्येवकारार्थः । 'वशं गतः' इति यत्प्रत्ययः । गहनमरण्यमवगाहे प्रविशेयेत्यवोचतेति पूर्वेण संबन्धः । अत्र रामायणम्—'ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा । गौर्हता कण्डुना धर्मं जानतापि विपश्चिता ॥ जामदग्न्येन रामेण रेणुका जननी स्वयम् । कृत्ता परशुनारण्ये पितुर्वचनकारणात् ॥ अस्माकं तु कुले पूर्वं सगरस्याज्ञया पितुः । खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥' इति । पूरुस्तु न रामायणे संगृहीतः । तस्येयं कथा महाभारतादौ कथिता—पूर्वं शुक्रशापवशादसमयसंप्राप्तदुःसहजराभारविह्वलेन पित्रा ययातिना नियुक्तः पूरुः स्वतारुण्यं तस्मै दत्त्वा तज्जरां स्वयं गृहीतवानिति । अत्र गोहत्याद्युद्दिष्टक्रमेण कण्ड्वादीनामुद्देशात्क्रमापरनामा यथासंख्यालंकारः—'उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् । उद्देशो नु भवेद्यत्र तद्यथासंख्यमुच्यते ॥' इति लक्षणात् ॥

**तत्र विस्तृतपुत्रवात्सल्या कौसल्या तेन सह गन्तुमभिलषन्ती कृतप्रणामेन रामेण सविनयमेवमभिहिता ।**

**तत्रेति ।** तत्र तस्मिन्समये विस्तृतपुत्रवात्सल्या समधिकपुत्रस्नेहा कौसल्या तेन सह पुत्रेण साकं गन्तुम् । वनं प्रतीति शेषः । अभिलषन्ती कामयमाना सती । कृतप्रणामेन विहितनमस्कारेण रामेण सविनयं सप्रश्रयमेवं वक्ष्यमाणरीत्याभिहितोक्ता ॥

तत्प्रकारमेवाह—

**कान्तारभाजि मयि केकयराजपुत्र्याः**
**कार्कश्यकन्दलितया दलितस्य वाचा ।**
**तातस्य शोकदहनग्लपितं शरीरं**
**मातस्त्वया न तु कदाचिदुपेक्षणीयम् ॥ ३० ॥**

**कान्तारेति ।** हे मातः, मयि कान्तारभाजि अरण्यं गते सति । केकयराजपुत्र्याः क्षत्रियतनयायाः । अतः क्षात्रं युक्तमेव करिष्यतीति भावः । कार्कश्येन क्रौर्येण । 'कर्कशं कठिनं क्रूरम्' इत्यमरः । कन्दलितयोत्पन्नया वाचा । शस्त्रधाराकल्पयेत्यर्थः । दलितस्य विदारितस्य । पीडितस्येत्यर्थः । तातस्यास्मत्पितुः संबन्धि शोकदहनग्लपितं मद्विरहजनितशोकानलेन पीडितम् । संतप्तमिति यावत् । शरीरं त्वया कदाचित्क्षणमात्रमपि नोपेक्षणीयं नानादरणीयम् । तुरवधारणार्थकः । किंतु

तत्तत्कालोचितोपचारैः सर्वदा परितोषणीयमित्यर्थः । वाक्शस्त्रविदलनमेव दुःसहम्, तत्रापि शोकानलसंतापश्चेत्किमु वक्तव्यम् । नखव्रणोपरि मुसलाघातप्रायत्वादिति भावः । मयैकेनैव वनं प्रति गम्यते । पतिदेवतया त्वया तु तदुपचारतात्पर्येण गृह एव स्थातव्यमिति भावः । वसन्ततिलकावृत्तम् ॥

**ततः सा तनयस्य स्वस्त्ययनाय समस्तदेवताकीर्तनपुरःसरीमाशिषमाचचक्षे ।**

**तत इति ।** ततस्तदनन्तरं सा कौसल्या तनयस्य रामस्य स्वस्त्ययनाय । माङ्गल्यसंपादनार्थमित्यर्थः । समस्तदेवताकीर्तनपुरःसरीमिन्द्रादिसकलदेवतास्तुतिपूर्विकाम् । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्यये 'टिड्ढाणञ्–' इत्यादिना ङीप् । आशिषमाचचक्ष उवाच । 'यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥' इत्याद्याशीर्वादं चकारेत्यर्थः ॥

**तदनु रामस्तामभिवन्द्य निष्क्रान्तः प्रक्रान्तनेपथ्यायाः सीतायाः प्रासादमाससाद ।**

**तदन्विति ।** तदन्वाशीरुक्त्यनन्तरं रामस्तां कौसल्यामभिवन्द्य नमस्कृत्य निष्क्रान्तः मातृगृहाद्विनिर्गतः सन् प्रक्रान्तमारब्धं नेपथ्यमभिषेकोचितवेषो यस्यास्तस्याः सीतायाः प्रासादं सदनमाससाद विवेश ॥

ततः श्रीरामः किमकरोदित्याह—

**कल्याणवादसुखितां सहसैव कान्तां**
**कान्तारचारकथया कलुषीचकार ।**
**अम्भोदनादमुदितां विपिने मयूरीं**
**संत्रासयन्निव धनुर्ध्वनिना पुलिन्दः ॥ ३१ ॥**

**कल्याणेति ।** कल्याणवादेन राज्याभिषेकमङ्गलकथनेन सुखितां संजातसुखाम् । तारकादित्वादितच् । तां कान्तां प्रियतमां सीतां कान्तारचारकथयारण्यसंचारवार्तया विपिनेऽम्भोदनादेन जलदगर्जितेन मुदितामानन्दिताम् । मह्यामतिशयेन रौतीति मयूरीं मयूराङ्गनाम् । पृषोदरादित्वात्साधुः । 'जातेरस्त्रीविषयात्–' इति ङीष् । धनुर्ध्वनिना धनुष्टङ्कारेण पुलिन्दो व्याध इव संत्रासयन्भीषयन्सहसा सद्य एव कलुषीचकार संक्षोभयामास । कैकेयीवचननियन्त्रितेन राज्ञा नियुक्तोऽहं वनं प्रति गमिष्यामीत्येवंरूपवचनेन विमनीचकारेत्यर्थः । उपमालंकारः । नात्र नीचोपमाशङ्का धर्मप्राधान्यकथनेनैव तथात्वोपपत्तेः किंत्वत्र संत्रासनमात्र एव कविविश्रान्तिः । अन्यथातिप्रसङ्गादित्यलम् । वृत्तं पूर्ववत् ॥

ततः किमत आह—

**अथमेनामनुगन्तुमुपक्रान्तामकथयत् ।**

---

१. 'उपगन्तुम्' इति पाठः.

**अयमिति ।** अयं श्रीरामोऽनुगन्तुमनुसर्तुमुपक्रान्तां कृतादरामेनां सीतां प्रत्य-कथयदवोचत् ॥

तदेवाह—

> **प्रिये जनकनन्दिनि प्रकृतिपेशलामीदृशीं**
> **कथं ग्लपयितुं सहे तव शिरीषमृद्वीं तनुम्।**
> **गृहीतहरिणीगणत्रिकविसारिनानाशिरा-**
> **क्षतक्षरितशोणितारुणवृकानने कानने ॥ ३२ ॥**

**प्रिय इति ।** प्रीणातीति प्रिया । 'इगुपध—' इत्यादिना कप्रत्ययः । अकारान्तत्वाट्टाप् । हे प्रिये जनकनन्दिनि जनकराजपुत्रि । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणसामर्थ्यान्नन्द्यादित्वाल्ल्युटप्रत्ययः। टित्वान्ङीप् । एतत्संबोधनद्वयं कान्तारसंचारानर्हताद्योतनार्थम् । प्रकृत्या पेशलां चारुतराम् । 'चारौ दक्षे च पेशलः' इत्यमरः । अतएव शिरीषमृद्वीं शिरीषपुष्पवन्मृदुलामीदृशीमित्थंभूताम् । सुखोपचारोचितामित्यर्थः । तव तनुं शरीरम् । गृहीतं दष्टं यद्धरिणीगणत्रिकं कुरङ्गनिकुरुम्बत्रिकप्रदेशः। वृको हि जिघृक्षितजन्तोस्त्रिकप्रदेशमेव प्रथमं गृह्णातीति प्रसिद्धिः । 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः । तत्र विसारिण्यो निःसरन्त्यो नानाशिरा नानाविधनाड्यः । 'नाडी तु धमनिः शिरा' इत्यमरः। ताभ्योऽक्षतमविच्छिन्नं यथा तथा । यद्वा तासां क्षतेभ्यो व्रणेभ्यः क्षरितं परिस्रुतं यच्छोणितमसृक्तेनारुणानि वृकाणामीहामृगाणामाननानि यस्मिंस्तस्मिन् । हिंस्रप्रचुरतयात्यन्तभयंकर इत्यर्थः । 'कोकस्त्वीहामृगो वृकः' इत्यमरः । काननेऽटव्यां ग्लपयितुं परिक्लेशयितुं कथं सहे कुतो वा मृष्ये । न कथंचिदपि सह इत्यर्थः । एवमकथयदिति पूर्वेण संबन्धः । पृथ्वीवृत्तम् । लक्षणं तूक्तम् ॥

**तदनु नानाविधप्रयत्नेनाप्यनुन्मिषदनुजिगमिषाशैथिल्यायां मैथिल्यां लक्ष्मणेऽप्यनवसितानुगमनव्यवसाये वासिष्ठाय सुयज्ञाय भूषणमशेषं नागसहस्रेण सह शत्रुंजयाह्वयं मातुलदत्तं मत्तहस्तिनमगस्त्यकौशिकाभ्यां च महार्घाणि रत्नानि वितीर्य तदनु निर्जरारिवीर्यमुषी धनुषी निरपायत्राणकर्मणी वर्मणी निर्मर्यादशिलीमुखकृतानुषङ्गौ निषङ्गौ निर्वर्तितवीरपाणौ कृपाणौ वरुणेन जनकसदसि दत्तमेतत्समस्तमायुधजातमादाय मामनुगच्छेति सौमित्रिमन्वग्रहीत् ।**

**तदन्विति ।** तदनु तदनन्तरं मैथिल्यां जानक्यां नानाविधेन हितबुद्ध्या खलु वचोमयेन । तदभिधीयते—'सदा सुखं न जानामि दुःखमेव सदा वनम्' इत्यादि रामायणोक्तप्रकारेणापि प्रयत्नेन । बहुप्रकारैरप्युपकारैरित्यर्थः । अनुन्मिषदनुदयद-

---

१. 'क्षति' इति पाठः. २. 'प्रयत्नशतेन' इति पाठः. ३. 'अतुलं मातुलदत्तं हस्तिनम्' इति पाठः. ४. 'महार्हाणि च रत्नानि वितीर्य निर्जरारातिं' इति पाठः. ५. 'सर्वमादाय' इति पाठः.

नुजिगमिषाशैथिल्यमनुगमनेच्छादौर्बल्यं यस्यास्तस्याम् । अनिवृत्तानुसरणेच्छायां सत्यामित्यर्थः । तथा लक्ष्मणेऽप्यनवसितानुगमनव्यवसायेऽनिवर्तितानुयात्रोद्योगे सति । अनवसितेत्यत्र 'षोऽन्तकर्मणि' इति धातोः कर्मकर्तरि क्तः । ततो नञ्समासः । ततो वासिष्ठाय वसिष्ठपुत्राय । 'तस्यापत्यम्' इत्यण् । सुयज्ञाय सुयज्ञनाम्न आचार्यायाशेषं भूषणं भूषणजातम् । कनकरत्नमयकेयूराङ्गदकुण्डलाद्यशेषभूषणानीत्यर्थः । शत्रूञ्जयतीति शत्रुंजयः । 'संज्ञायां भृतॄवृजि–' इत्यादिना खच्प्रत्ययः । 'अरुर्द्विषत्–' इत्यादिना मुमागमः । स इत्याह्वयो यस्य तम् । शत्रुंजयनाम्ना प्रसिद्धमित्यर्थः । मातुलेन दत्तं मत्तहस्तिनं मत्तेभं च नागसहस्रेण सह गजसहस्रेण साकम् । 'ग्राहाश्राहिगजा नागाः' इति वैजयन्ती । वितीर्य दत्त्वा । तथागस्त्यकौशिकाभ्यां कुम्भसंभवविश्वामित्राभ्यां च महार्घाण्यमूल्यानि । 'मूल्ये पूजाविधावर्घः' इत्यमरः । रत्नानि मणिकाञ्चनादीनि श्रेष्ठवस्तूनि च । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । वितीर्य तदनु निर्जरारीणां देवद्विषां दैत्यानां वीर्यं प्रभावं सामर्थ्यं वा मुष्णतोऽपहरत इति तथोक्ते । 'अमरा निर्जरा देवाः', 'वीर्यं शुल्के प्रभावे च तेजःसामर्थ्ययोरपि' इत्यमरशाश्वतौ । धनुषी च निरपायं निरातङ्कं त्राणकर्म रक्षणकृत्यं ययोस्ते तथोक्ते वर्मणी कञ्चुके । 'तनुत्रं वर्म कञ्चुकम्' इत्यमरः । तथा निर्मर्यादा असंख्येया ये शिलीमुखा बाणास्तैः कृतोऽनुषङ्गोऽनुबन्धो ययोस्तौ । अक्षयसायकावित्यर्थः । निषङ्गौ तूणीरौ च । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । निर्वर्तितं निष्पादितं वीरपाणं रणसमाप्त्यनन्तरकर्तव्यमधुपानं याभ्यां तौ । शत्रुसंहारकावित्यर्थः । 'वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे' इत्यमरः । कृपाणौ खड्गौ चेत्येतत्समस्तम् । 'नपुंसकमनपुंसकेन–' इत्येकशेषः । जनकसदसि जनकयज्ञसभायां वरुणेन मे मह्यं दत्तमायुधजातमस्त्रकलापमादाय गृहीत्वा मामनुगच्छानुसरेति सौमित्रिं लक्ष्मणमन्वग्रहीदनुगृहीतवान् । आज्ञापितवानित्यर्थः । तथा च श्रीरामायणम्—'ये च राज्ञो ददौ दिव्ये महती वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी ते प्रदर्शय ॥ उभे च कवचे दिव्ये तूणी चाक्षयसायकौ । आदित्याविव तौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ सत्कृत्य निहितं सर्वमेतदार्यस्य सद्मनि । स त्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥' इति । अत्रैके व्याख्यातारः किंचिदाशङ्क्य समादधुः । तत्प्रकारस्तु—ननु जनकयज्ञे धनुरादिप्रदानस्याश्रवणात्कथमप्रसिद्धे तदनुवादः क्रियते । सत्यमेतत् भगवतो वाल्मीकेरियं शैली प्रस्तुतार्थप्रतिपादनापारवश्याद्यत्र वक्तव्यमर्थं तत्रानुक्त्वोत्तरत्र केनचिद्व्याजेन प्रसिद्धमनुवदतीति । यथा बालकाण्डे नाभिहितं मणिबन्धनम् 'मणिरत्नमिदं दत्तं वैदेह्यै श्वशुरेण मे' इति सुन्दरकाण्डेऽभिहितवान्, अयोध्याकाण्डे वक्तव्यं काकासुरवृत्तान्तम् 'स पित्रा च परित्यक्तो यः सुरैश्च महर्षिभिः' इत्यादि सुन्दरकाण्ड उक्तवानिति । अतस्तदनुसारिणा तत्रभवता भोजेनापि तथैवोक्तत्वान्न विरोध इति मन्तव्यम् ॥

ततः किमित्यत आह—

**सीतापि निजाभरणजातं सुयज्ञपत्न्यै न्यदात् ।**

१ 'गर्णम्' इति पाठः. २ 'विदधे' इति पाठः.

सीतापीति । चार्थोऽपिशब्दः । निजाभरणजातं रत्नकेयूराङ्गदरशनादिस्वकीयभूषणकलापं सुयज्ञस्य पत्न्यै भार्यायै न्यदाद्दत्तवती । महाप्रभोः श्रीरामस्याचार्यसंभावनं तत्पत्न्याः सीतायास्तत्पत्नीसंभावनं युक्तमित्यर्थः ॥

**ततः सौमित्रिरपि स्वाधीनेन धनेन कंचित्कौसल्याश्रितमुपाध्यायमतोषयत् ।**

तत इति । ततः सौमित्रिर्लक्ष्मणोऽपि स्वाधीनेन स्वायत्तेन । 'अधीनो निघ्न आयत्तः' इत्यमरः । धनेन रत्नकाञ्चनादिरूपेण द्रव्येण कौसल्याश्रितम् । कौसल्यायाः प्रत्येकं पुरोहितमित्यर्थः । कंचित्तैत्तिरीयाचार्यमुपाध्यायं ब्राह्मणमतोषयत् । स्वकीयद्रव्यप्रदानेन संभावयामासेत्यर्थः । एतेन सौमित्रेर्निजजनन्यपेक्षया कौसल्यायामेवात्यन्तादरः सूच्यते ॥

**तत्र सकुटुम्बाय त्रिजटाभिधानाय निर्धनाय द्विजातये स्वहस्तनिक्षिप्तदण्डपतितदेशावधिकं गोधनं च कपिञ्जलादिभ्यो द्विजातिभ्यश्च रघुपतिर्वित्तानि विविधानि विततार ।**

तत्रेति । तत्र तस्मिन्समये रघुपतिः सकुटुम्बाय कुटुम्बसहिताय । पत्नीपुत्रसहितायेत्यर्थः । त्रिजट इत्यभिधानं नामधेयं यस्य तस्मै निर्धनायोञ्छवृत्तये कस्मैचिद्विजातये । स्वहस्तेन त्रिजटहस्तेन निक्षिप्तः परिक्षिप्तः । दण्डेन यावत्तावदवाप्स्यसीति ब्राह्मणानां गोग्रहणचापल्यप्रदर्शनार्थमुदीरितश्रीरामवचनवशात्प्रेरितो यो दण्डस्तस्य पतितदेशः स एवावधिर्मर्यादा यस्य तथोक्तम् । तावद्देशस्थमित्यर्थः । गोधनं गोव्रजं च । 'गोकुलं तु गोधनं स्याद्गवां व्रजे' इत्यमरः । तथा कपिञ्जलो नाम ब्राह्मण आदिर्येषां ते तथोक्तास्तेभ्यो द्विजातिभ्यः कठकलापमाणवकादिभ्यो ब्राह्मणेभ्यश्च विविधानि नानारूपाणि वित्तानि गोरत्नाम्बरयानादीनि द्रव्याणि । 'द्रव्यं वित्तं स्वापतेयम्' इत्यमरः । विततार विश्राणितवान् । 'विश्राणनं वितरणम्' इत्यमरः ॥

**ततस्ते पौरनारीणां निश्वासझञ्झानिलचलदधरकिसलयानामस्रसलिलासारेण शोकपावकेन च वपूंषि मनांसि च सिक्त्वा दग्ध्वा च निषिद्धपरिजनानुगमनतया प्रकाशितप्रवाससिद्धान्ता शुद्धान्तान्निश्चक्रमुः ।**

तत इति । ततो विश्राणनानन्तरम् । ते सीतारामलक्ष्मणाः । निश्वासैरेव झञ्झानिलैः सध्वनिमहामारुतैश्चलन्ति वलमानान्यधरकिसलयान्योष्ठपल्लवा यासां तास्तथोक्तास्तासां पौरनारीणां वपूंषि मनांसि च । अस्रसलिलासारेणाश्रुजलधारासंपातेन । 'अस्रमश्रुणि शोणिते' इति विश्वः । शोकपावकेन शोकदहनेन सिक्त्वार्द्रीकृत्य दग्ध्वा संताप्य च । वपूंष्यस्रसलिलासारेण सिक्त्वा मनांसि शोकपावकेन

---

१. 'सौमित्रिरपि स्वधनेन.' इति पाठः. २. 'त्रिजटाभिधाय द्विजातये' इति पाठः. ३. 'स्वहस्ततलनिक्षिप्तदण्डदेशा' इति पाठः. ४. 'काम्पिल्यादिभ्यो' इति पाठः. ५. 'विश्वासान्निश्वासजृम्भानिल इति पाठः. ६. 'अश्रु' इति पाठः.

दग्ध्वा चेति यथाक्रममन्वयाद्यथासंख्यालंकारः । तथोद्वेलं विषादमुत्पाद्येत्यर्थः । निषिद्धपरिजनानुगमनतयैकान्तिकत्वान्निवारितभृत्यानुयात्रतया हेतुना प्रकाशितः प्रकटीकृतः प्रवाससिद्धान्तो वनवासनिश्चयो यैस्तथोक्ताः सन्तः शुद्धान्तादन्तःपुरान्निश्चक्रमुर्निर्जग्मुः ॥

तत्र ।

सीता पुरा गगनचारिभिरप्यदृष्टा
मा भूदियं सकलमानवनेत्रपात्रम् ।
इत्याकलय्य नियतं पिदधे विधाता
बाष्पोदयेन[1] नयनानि शरीरभाजाम् ॥ ३३ ॥

तत्रेति । तत्र निर्गमनसमये ॥ सीतेति । सीता पुरा पूर्वं गगनचारिभिरपि खेचरैरपि । किमुतान्यैरिति भावः । अदृष्टानवलोकिता । महाराजपरिग्रहत्वादिति भावः । इयं सीता सकलमानवनेत्रपात्रं समस्तजनदृग्गोचरा मा भून्माभूत् । 'माङि लुङ्' इत्यादिनाशीरर्थे लुङ् । 'न माङ्योगे' इत्यट्प्रतिषेधः । इत्येवमाकलय्य विचार्य विधत्त इति विधाता युक्तायुक्तसाधनतत्परो ब्रह्मा बाष्पोदयेनाश्रूत्पादनेन शरीरभाजां प्राणिनां नयनानि नेत्राणि पिदध आच्छादितवान् । नियतं निश्चितमित्युत्प्रेक्षायाम् । श्रीरामप्रवासमसहमाना मानवाः सोद्वेगं रुरुदुरित्यर्थः । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः ॥

ततः[2] ।

रुद्धापि यान्तमनुगच्छति मैथिली मां
वत्सो जहाति न कदाचन लक्ष्मणोऽपि ।
इत्येतयोरनुगतिं प्रतिबोध्य गन्तुं
भूयोऽपि राजभवनं प्रविवेश रामः ॥ ३४ ॥

तत इति । ततस्तदनन्तरम् । रुद्धेति । मैथिली सीता रुद्धा बहुप्रयत्नेन निवारितापि यान्तं वनं प्रति गच्छन्तम् । यातेः शतृप्रत्ययः । मामनुगच्छत्यनुसरति । तथा वत्सोऽनुजो लक्ष्मणोऽपि कदाचन क्षणमात्रमपि मां न त्यजति । 'सोऽप्यनुगच्छतीत्यर्थः । इत्यनेन प्रकारेणैतयोः सीतालक्ष्मणयोरनुगतिमनुयात्रां प्रतिबोध्य विज्ञाप्य । दशरथायेति शेषः । गन्तुं वनं प्रति यातुं रामो भूयः पुनरपि राजसदनं दशरथगृहं प्रविवेश । सर्वत्र तदाज्ञाया एव प्राधान्यादिति भावः ॥

तस्मिन्सुमन्त्रेण विज्ञाप्य प्रदर्शिते[3] भूपतिर्भूताविष्ट इव विष्टरान्निपत्य सदारः सदारचितपरिदेवनो वनोत्कण्ठां स्वयमप्यकरोत् ।

---

१. 'बाष्पोदकेन' इति पाठः. २. 'ततः' इति क्वचिन्नास्ति. ३. 'दर्शिते दाशरथौ' इति पाठः.

**तस्मिन्निति**।तस्मिञ्श्रीरामे सुमन्त्रेण मन्त्रिवृद्धेन विज्ञाप्य रामोऽयं भवद्दर्शनार्थं समागत इति विज्ञापनं कृत्वा। इत्थंभूतव्यवहारस्य राजधर्मत्वादिति भावः। प्रदर्शिते दृग्गोचरीकृते सति भूपती राजा भूताविष्टः पिशाचाक्रान्त इव। 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः। विष्टरादासनात्। 'वृक्षासनयोर्विष्टरः' इति निपातनात् 'ध्रुवमपायेऽपादानम्' इत्यपादानत्वात्पञ्चमी। निपत्य शोकवेगस्य सोढुमशक्यत्वान्मूर्च्छया भुवि पतित्वेत्यर्थः। सदा अविच्छिन्नम्। क्रियाविशेषणमेतत्। रचितपरिदेवनः कृतविलापः सन्। सदारः कौसल्यासहितः स्वयमपि वनोत्कण्ठां वनवासौत्सुक्यम्। 'वनोत्कण्ठमतिम्' इति पाठे वनवासोत्सुकां बुद्धिम्। अकरोत्॥

**तदा सुमन्त्रः कैकेयीमब्रवीत्।**

**तदेति**। तदा तस्मिन्समये सुमन्त्रः कैकेयीमब्रवीदवोचत्॥

तत्प्रकारमेवाह—

**देवि, विरम[१] रामाभिषेकसमुन्मिषिताह्लादाङ्कुरावग्रहादाग्रहात्।**

**देवीति**। हे देवि कैकेयि, रामाभिषेकेण श्रीरामराज्याभिषेकोत्सवेन सम्यग्जलसेकेन च समुन्मिषितः समुत्पन्नो य आह्लादाङ्कुर आनन्दकन्दल इति रूपकम्। तस्यावग्रहात्प्रतिबन्धकादाग्रहादभिनिवेशात्। 'जुगुप्साविराम—' इत्यादिना पञ्चमी। विरम विरता भव। तादृगाग्रहं परित्यजेत्यर्थः। 'व्याङ्परिभ्यः—' इति परस्मैपदम्॥

पुनस्तस्याः दौःशील्यपरित्यागार्थं तन्मातृगोचरमितिहासमाह—

**पुरा खलु वरद[२]प्रसादादवगतसकलप्राणिभाषणतया पर्यङ्कपर्यन्तपरिसरत्पिपीलिकालापे कृतहासं तव पितरं हसनकारणं पृष्ट्वा तद्विवरणं पत्युर्मरणकर[३]मित्यवेत्यापि भूयसो निर्बन्धात्कुपितेन राज्ञावज्ञाताया मातुस्ते विधां मानुकुर्वीथा[४] इति।**

**पुरेति**। पुरा पूर्वकाले। खलुशब्दो वाक्यालंकारे। वरदस्य वरप्रदातुः कस्यचिद्योगिनः प्रसादादनुग्रहादवगतसकलप्राणिभाषणतया विज्ञातसकलजन्तुवचनतया हेतुना पर्यङ्कपर्यन्ते शयनसमीपे परिसरन्तीनां प्रसर्पन्तीनां पिपीलिकानां भूविवरसंचारिसूक्ष्मजन्तुविशेषाणामालापे भाषणे विषये कृतहासं किमेते अज्ञानजन्तवः समालपन्तीति हसितवन्तं तव पितरं केकयं हसनकारणं हासहेतुं पृष्ट्वा। केनापि हेतुनायं हसतीति जिज्ञासयानुयुज्येत्यर्थः। तद्विवरणं हसनकारणकथनं पत्युर्भर्तुर्मरणकारणमित्यवेत्य ज्ञात्वापि। तद्वचनादेवेति भावः। भूयसो बहुलात् 'बहोर्लोपो भू च बहोः' इति भूरादेशो बहोर्लोपश्च। निर्बन्धात्प्रयासकरणाद्धेतोः कुपितेन क्रुद्धेन राज्ञा केकयेनावज्ञाताया अवमानितायास्ते तव मातुर्विधां प्रकारम्। 'विधा विधौ प्रकारे च' इत्यमरः। मानुकुर्वीथाः। मानुकुरुष्वेत्यर्थः। भर्तृप्रतिकूलाचरणेन मातृवद्विगर्हणीया मा भूरित्यर्थः। करोतेर्लिङि आथाङ्। इत्यब्रवीदिति पूर्वेण संबन्धः॥

---

१ 'विरम विरम' इति पाठः. २. 'ब्रह्मणो वरप्रसादात्' इति पाठः. ३. 'मरणहेतुः' इति पाठः. ४. 'मार्गं मा कुर्वीथाः' इति पाठः.

सुमन्त्रवचनं श्रुत्वा सा किमकार्षीदित्यत आह—

ततः ।

**कृतासमञ्जनिर्यासं सगरं केकयात्मजा ।**
**निदर्शनत्वे[1] निर्दिश्य निरबध्नान्निजं पतिम् ॥ ३५ ॥**

**तत इति** । केकयात्मजा कैकेयी । कृतो विहितोऽसमञ्जनाम्नः पुत्रस्य निर्यासः परित्यागो येन तम् । असमञ्जाख्यपुत्रत्यागिनमित्यर्थः । सगरं राजानं निदर्शनत्वे दृष्टान्तत्वे निर्दिश्य । सगरवत्त्वमपि पुत्रं परित्यजेति निरूप्येत्यर्थः । निजं पतिं स्वभर्तारं निरबध्नान्निरुत्तरं चकारेत्यर्थः ॥

अत्रान्तरे कैकेयीवचनमसहमानः कश्चिदमात्यवृद्धः प्रत्यवोचदित्याह—

तत्र ।

**सिद्धार्थको महामात्यस्तत्परित्यागमब्रवीत् ।**
**सरयूपातितानेकप्रजामरणकारणात्[2] ॥ ३६ ॥**

**तत्रेति** । तत्र कैकेयीनिर्बन्धवाक्यसमये सिद्धार्थकः सिद्धार्थकनामा महामात्यः सुमन्त्रादन्योऽमात्यप्रवरः । अमा सह भवतीत्यमात्यः । शुभाशुभकार्येषु सदा सह वर्तत इत्यमात्यः । 'अव्ययात्त्यप्' । सरयूपातितानां सरयूनदीनिक्षिप्तानामनेकप्रजानां बहुजनानां मरणमेव कारणं निमित्तं तस्मात् । तत्परित्यागं तस्यासमञ्जस्य त्यागः समञ्जसः सकलसद्गुणाभिरामस्य तु परित्यागः कथं समञ्जस इति भावः ॥

इत्थं बहूपालम्भेऽप्यवार्यनिश्चयामवबुध्य राजा राममेवमुवाचेत्याह—

**अथ दशरथेन रामः सपरिच्छद एव गच्छेति निर्दिष्टः केवलं खनित्रपिटकौ[3] वल्कलयुगलं च प्रार्थयत ।**

**अथेति** । अथामात्योक्त्यनन्तरं दशरथेन रामः सपरिच्छदः सपरिवारः सन्नेव गच्छ व्रजेत्येवं निर्दिष्टो नियुक्तः सन् । परिच्छाद्यतेऽनेनेति परिच्छद इति विग्रहः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । 'घादेरुपसर्गस्य' इति ह्रस्वः । खनित्रपिटकौ खनित्रमवदारणं खननसाधनम् । कुद्दालादिकमित्यर्थः । पिटकः कन्दमूलफलाद्याहरणयोग्यः कण्डोलः । तौ केवलं तावेव । 'खनित्रमवदारणे', 'कण्डोलपिटकौ' इति चामरः । केवलशब्दस्त्ववधारणार्थकः । तथा वल्कलयुगलं वल्कलवस्त्रयुग्मं च । प्रार्थयतायाचत । त्यक्तसंगस्य मम परिच्छदेन कार्यं किम्, अपि तु मुनिजनोचितं वल्कलखनित्रपिटकमात्रमेव दातव्यमिति प्रार्थितवानित्यर्थः ॥

अत्रान्तरे श्रीरामविवासनदीक्षिता कैकेयी विलम्बासहिष्णुतया द्रुततरं वल्कलान्याजहारेत्याह—

**सुखोचितानां सुव्यक्तदिव्यलावण्यसंपदाम् ।**
**त्रयाणामपि कैकेयी वल्कलादीन्युपाहरत्[4] ॥ ३७ ॥**

---

१. 'निदर्शनेन' इति पाठः. २. 'पतित' इति पाठः. ३. 'पिटके' इति पाठः. ४. 'वल्कलान्युदपाहरत्' इति पाठः.

**सुखोचितानामिति।** कैकेयी सुखोचितानां सुखार्हाणां सुव्यक्तं स्फुटं यथा तथा दिवि भवं दिव्यं श्रेष्ठम्। 'तत्र भवः' इति भवार्थे यत्प्रत्ययः। लावण्यं शरीरसौन्दर्यादि संपल्लक्ष्मीश्च येषां ते तथोक्तास्तेषाम्। सकलगुणसंपन्नानामित्यर्थः। त्र्याणां सीतारामलक्ष्मणानामपि। नैकस्यैव श्रीरामस्येत्यपिशब्दार्थः। वल्कलानि चीराण्युपाहरत्। परिधद्ध्वमिति प्रादादिति भावः॥

**अथ रघुकुलनाथो मध्यमाम्बानियोगा-**
**द्गुणवति परिधाने मङ्गलार्हे निराशः।**
**अधिकुचतटवल्गज्जानकीबाष्पसेका-**
**दपगतखरभावं वल्कलं पर्यधत्त॥ ३८॥**

**अथेति।** अथ वल्कलाहरणानन्तरं रघुकुलनाथो रघुवंशश्रेष्ठः श्रीरामः। मध्ये भवा मध्यमा। 'मध्यान्मः' इति मप्रत्ययः। सा च सा अम्बा च तस्या मध्यमाम्बायाः कैकेय्या नियोगादाज्ञावशात्। मङ्गलार्हे राज्याभिषेककल्याणोचिते गुणवति मार्दवादिगुणसंपन्ने तन्तुविनिर्मिते वा परिधानेऽधोंशुके। 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके' इत्यमरः। निराशो निःस्पृहः सन्। अधिकुचतटेऽधिकुचतटम्। विभक्त्यर्थेऽव्ययीभावः। तत्र वल्गन्तः प्लवन्तो ये जानकीबाष्पाः सीतानेत्राम्बूनि तैः सेकात्। कठिनतरकुचतटपतनोत्पतनाद्बाष्पबिन्दूनां तत्र संक्रमणादिति भावः। तेन जानक्या भर्तुरत्यन्तसान्निध्यं वल्कलधारणासहिष्णुत्वं च सूच्यते। 'बाष्पो नेत्राम्बुधूमयोः' इत्यभिधानात्। अपगतः खरभावः कार्कश्यं यस्य तत्प्राप्तमार्दवम्। संधारणानुकूलमित्यर्थः। वल्कलं पर्यधत्त परिधृतवान्। अत्र केचित्—राज्ञः कैकेयी तृतीयैव महिषी। मध्यमाशब्दप्रयोगस्तु मध्यमाछन्दोवत्प्रसिद्धत्वान्नतु मध्येभवत्वात् अर्जुनस्य कुन्तीसुतमध्यमप्रयोगवदिति वदन्ति। तदेतदविचाररमणीयम्। बकबन्धप्रयासत्वात्किंचिज्ज्ञप्रामादिकप्रयोगाणामेव तादृक्समाधानत्वात्। किंतु स्वर्गपातालयोर्मध्येभवत्वाद्भूलोकस्य यथा मध्यमलोकप्रयोगः तथा कौसल्यासुमित्रयोर्मध्येभवत्वान्मध्यमेयमिति युक्तमुत्पश्यामः। एतदभिप्रायेणैव सर्वज्ञो भोजोऽपि मध्यमाम्बानियोगादिति प्रयुक्तवानित्यलं प्रसक्तानुप्रसक्त्या। मालिनीवृत्तम्॥

**तत्र चित्रीयन्तः सर्वे निर्विकारवदनलक्ष्मीकमिक्ष्वाकुकुलाध्यक्षमध्यक्षयन्तस्तेषामेव शोकशङ्कुकीलितमानसानामाननेषु पारम्पर्येणास्फुरद्विकारः।**

**तत्रेति।** तत्र तस्मिन्काले श्रीरामवल्कलधारणसमये। सर्वे अशेषा ये जनाश्चित्रीयन्त आश्चर्यं कुर्वन्तः। 'नमोवरिवश्चित्रङः क्यच्' इत्यनेन 'चित्रङ् आश्चर्ये' इत्यतः क्यच्। निर्विकारा धीरोदात्तत्वादविकारा विकाररहिता प्रसन्ना लक्ष्मीर्मुखशोभा यस्य तम्। शैषिकः कप्रत्ययः। इक्ष्वाकुकुलाध्यक्षमिक्ष्वाकुलश्रेष्ठं श्रीरामम्। अध्यक्षं प्रत्यक्षं कुर्वन्तोऽध्यक्षयन्तः। पश्यन्त इत्यर्थः। अध्यक्षशब्दात्करोतेर्ण्यन्ताल्लटः शत्रादेशः। शोक एव शङ्कुस्तेन शोकशल्येन कीलितमानसानां विद्धहृदयानां तेषामेव

१. 'तत्र ये' इति पाठः. २. 'संकीलित' इति पाठः.

जनानामाननेषु मुखेषु । 'मानसेषु' इति पाठे हृदयेषु । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । पारम्पर्येणाविच्छेदेन । विकारो वैवर्ण्यं वैकल्यं च अस्फुरत् । वल्कलवसानं श्रीरामं दृष्ट्वा सर्वे जना विवर्णवदना विकलमानसाश्च बभूवुरित्यर्थः । निर्विकारदर्शनेन विकारोत्पत्तिश्चित्रमिति भावः ॥

तदानीं सर्वसाधारण्याद्वसिष्ठस्योत्पन्नं विकारमन्यथा योजयति—

**किंतु[1]**

**सवल्कले दाशरथौ विषादादामीलिताक्षो यदभूद्वसिष्ठः ।**
**तदेव जातं करणं महर्षेः काकुत्स्थयाथार्थ्यविलोकनस्य ॥३९॥**

**किंत्विति** । तदेवाह—**सवल्कल इति** । दाशरथौ श्रीरामे । 'अत इञ्' । सवल्कले । द्रुमत्वग्विकारवासोधारिणि सतीत्यर्थः । विषादात्खेदाद्वसिष्ठ आमीलिताक्षो द्रष्टुमशक्ततयेषन्मीलितनयनः । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' । अभूदिति यत्तन्मीलिताक्षत्वमेव महर्षेः ऋषिश्रेष्ठस्य वसिष्ठस्य । काकुत्स्थयाथार्थ्यविलोकनस्य श्रीरामतत्त्वदर्शनस्य । भावे क्तः । करणं साधनं जातम् । आमीलितनयनानामृषीणां तत्त्वावमर्शसंभवप्रसिद्धेः । महर्षेरमुष्यामीलितनयनत्वं तारकब्रह्मणः श्रीरामस्य तत्त्वावबोधकत्वेनोपकारकमभूदित्यर्थः । तत्त्वानुसंधानसमये संयमिनामर्धोन्मीलितनयनत्वं योगशास्त्रसिद्धम् । केवलनिमीलने निद्रा स्यात् केवलोन्मीलने विषयदर्शनेनच चित्तविक्षेपः स्यादिति । अत्र विषादकृतमीलनस्य तत्त्वानुसंधानपरत्वेनोत्प्रेक्षणादुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । वृत्तमुपजातिः ॥

अतएव न व्यथितोऽभूदित्याह—

**अस्य पीताम्बरत्यागे किं जाता विक्रियाऽपुरा ।**
**इति प्रत्यग्दृशां श्रेष्ठो वसिष्ठो नातिविव्यथे ॥ ४० ॥**

**अस्येति** । अस्य श्रीरामस्य पीताम्बरत्यागे काञ्चनाम्बरविसर्जने सति । पीताम्बरं त्यक्त्वा वल्कलं दधाने सतीत्यर्थः । अपुरा अपूर्वा । पीताम्बरधारणसमयेऽनुपलभ्यमानेत्यर्थः । पूर्वार्थवाचिनो निपातात्पुराशब्दान्नञ्समासः । विकारो विक्रिया जाता उत्पन्ना किम् । न जातैवेत्यर्थः । स्वतो निर्विक्रियाणामलंकारानलंकारयोरकिंचित्करत्वादिति भावः । इत्यालोच्येति शेषः । प्रत्यग्दृशामन्तर्मुखानाम् । ज्ञानिनामित्यर्थः । श्रेष्ठः प्रशस्यः । 'प्रशस्यस्य श्रः' इति श्रादेशः । वसिष्ठो नातिविव्यथेऽत्यन्तव्यथां न प्राप । लौकिकानुवृत्त्या किंचिद्व्यथां प्रापैवेत्यतिशब्दार्थः । पीताम्बरं त्यक्त्वा वल्कलं धृतवतः श्रीरामस्य बाह्याभ्यन्तरविकारराहित्येन विशुद्धचित्स्वभावमनुसंधाय न शुशोचेत्यर्थः । उक्तं च ज्ञानवासिष्ठे—'यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी । नित्यं चिदनुसंधानः स न शोकेन बाध्यते ॥' इति ॥

**सोऽयं मैथिलीवल्कलधारणमरुणंदरुणसारथिकुलगुरुः ।**

**स इति** । सोऽयमरुणसारथिकुलगुरुः । अरुणोऽनूरुः सारथिर्यस्यारुणसारथिः

---

१. 'किंतु' इति नास्ति क्वचित्.

सूर्यः। 'सूरसूतोऽरुणोऽनूरुः' इत्यमरः। तस्य कुलं वंशस्तस्य गुरुराचार्यो वसिष्ठः। मैथिलीवल्कलधारणमरुणत्न्यवारयत्। अस्याः सुकुमार्या राजकुमार्या नेदृग्वसनधारणं योग्यमिति निवारितवानित्यर्थः। रुधेर्लङि 'रुधादिभ्यः श्नम्' इति श्नम्। 'श्नसोरल्लोपः' इत्यकारलोपे संयोगान्तलोपः। 'अट्कुप्वाङ्–' इत्यादिना णत्वम्। अत्र लक्ष्मणवल्कलधारणाकथनेऽपि श्रीरामस्य तद्धारणकथनात्सीतायाश्च तन्निषेधात्सोऽपि धृतवानेवेत्यनुसंधेयम्॥

**तत्र प्रयाणाय प्रणिपतन्तीं स्नुषामाश्लिष्य प्रस्नुतपुत्रवात्सल्या कौसल्या बाष्पगद्गदमवदत्।**

**तत्रेति।** तत्र तस्मिन्समये प्रयाणाय वनवासयात्रार्थं प्रणिपतन्तीं नमस्कुर्वाणां स्नुषां श्रीरामवधूं सीताम्। 'समाः स्नुषाजनीवध्वः' इत्यमरः। आश्लिष्यालिङ्ग्य। प्रस्नुतं समुत्पन्नं पुत्रे श्रीराम इव वात्सल्यं स्नेहो यस्याः सा तथोक्ता। स्नुषायामपि सुतनिर्विशेषं स्नेहवतीत्यर्थः। कौसल्या बाष्पैर्गद्गदमविस्पष्टं वचनमवददवोचत्॥

तत्प्रकारमेव[1] विवृणोति—

**घर्मे निदाघकिरणस्य करैः कठोरैः**
**कान्तारमध्यपदवीषु नखंपचासु।**
**त्वां वीक्ष्य संस्थुलपदां[2] वनदेवताभि-**
**र्निन्दिष्यते नियतमेव निमेषहानिः॥ ४१॥**

**घर्म इति।** घर्मे ग्रीष्मर्तौ निदाघकिरणस्योष्णांशोः कठोरैस्तीक्ष्णैः करैः किरणैः। नखान्पचन्ति संतापयन्तीति नखंपचासु। 'मितनखे च' इति खचि मुमागमः। कान्तारमध्यपदवीषु गहनान्तरालमार्गेषु संस्थुलपदां परिस्खलितपादविन्यासाम्। पदवीनामत्यन्तसंतप्तत्वात्परिक्लिष्टसंचारामित्यर्थः। त्वां वीक्ष्य दृष्ट्वा वनदेवताभिः। वनाभिमानिनीभिर्देवताभिरित्यर्थः। निमेषहानिः स्वकीयनिर्निमेषत्वं निन्दिष्यते गर्हिष्यत एव। निर्निमेषत्वादस्माभिरीदृक्कुमारीपरिक्लेशाविच्छिन्नदर्शनजनितसंतापोऽनुभूयते। सनिमेषत्वे तु नैवं स्याद्धिक्कष्टं ब्रह्मणा कीमेतत्कृतमित्युपालप्स्यत इत्यर्थः। नियतमित्युत्प्रेक्षायाम्। वसन्ततिलकावृत्तम्॥

**अथ मैथिलीनाथः सलक्ष्मणः सप्रदक्षिणं राजानं जननीजनं च प्रणम्य प्रतिषिद्धप्रतीहारचक्रो निश्चक्राम।**

**अथेति।** अथानन्तरं मैथिलीनाथः सीतापतिः। श्रीरामः मैथिलीग्रहणं तया च सहितः सन्निति सूचनार्थम्। सलक्ष्मणो लक्ष्मणसहितः सन्। सप्रदक्षिणम्। प्रदक्षिणप्रक्रमपूर्वकमित्यर्थः। राजानं दशरथम्। जनन्य एव जनस्तं च। कौसल्यादिजननीश्चेत्यर्थः। प्रणम्य नमस्कृत्य प्रतिषिद्धप्रतीहारचक्रो निवारितद्वाःस्थनिवहः सन्। अनुसरतो द्वारपालकान्निवार्येत्यर्थः। निश्चक्राम निर्जगाम। अन्तःपुरादिति शेषः। 'द्वारि द्वाःस्थे प्रतीहारः' इत्यमरः॥

---

१. 'आलिङ्ग्य कौसल्या गद्गदम्' इति पाठः। २. 'निस्तुलपदाम्' इति पाठः।

ततः किमित्यत आह—

**रथोऽपि दशरथाज्ञापरतन्त्रेण सुमन्त्रेण द्वारि समानीतः ।**

**रथ इति ।** दशरथाज्ञापरतन्त्रेण । रामप्रयाणार्थं रथमानयेति दशरथनियुक्तेनेत्यर्थः । सुमन्त्रेण रथो द्वारि द्वारप्रदेशे समानीतः संप्रापितः । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः ॥

तदानीमौत्सुक्यात्प्रथमं सीतैव रथमारुरोहेत्याह—

**प्रारब्धयात्रस्य रघूद्वहस्य प्रागेव सीता रथमारुरोह ।**
**आनीलरथ्यं रथमारुरुक्षोरह्नां प्रभोरग्रसरी प्रभेव ॥ ४२ ॥**

**प्रारब्धेति ।** सीता प्रारब्धयात्रस्य प्रक्रान्तप्रयाणस्य । वनं प्रति जिगमिषोरित्यर्थः । रघूद्वहस्य रघुनन्दनस्याग्रसरी सती । इदं च वाक्यान्तरस्थमप्यन्वयसौकर्यार्थमत्रानुषञ्जनीयम् । अन्यथा 'अन्यारादितरर्ते—' इत्यादिना पञ्चमी स्यात् । प्राक्प्रथममेव रथमारुरोहारूढवती । कथमिव । रथं वहन्तीति रथ्याः 'तद्वहति रथयुग—' इति यत्प्रत्ययः । आनीला ईषन्नीलाः । हरिद्वर्णा इत्यर्थः । रथ्या रथवोढारोऽश्वा यस्य तं रथमारुरुक्षोरारोढुमिच्छोः । रुहेः सन्नन्तादुप्रत्ययः । अह्नां प्रभोरहर्पतेः सूर्यस्याग्रे सरतीत्यग्रसरी पुरःसरी । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । टित्वान्ङीप् । प्रभा दीप्तिरिवेति श्रौती पूर्णोपमा । तया च सीतारामयोरत्यन्ताविनाभूतरूपं वस्तु व्यज्यत इत्यलंकारेण वस्तुध्वनिः । इन्द्रवज्रावृत्तम् ॥

**दाशरथी च रथमारुरुहतुः ।**

**दाशरथी इति ।** दाशरथी रामलक्ष्मणौ च तं रथमारुरुहतुरूढवन्तौ ॥

**यथा यथा राघवराजधानीं विहाय सीता विपिनोत्सुकाभूत् ।**
**तथा तथाजायत यातुकामा लङ्कां विना राक्षसराजलक्ष्मीः ॥४३॥**

**यथेति ।** सीता यथा यथा येन येन प्रकारेण । वीप्सायां द्विर्भावः । राघवराजधानीमयोध्यां विहाय त्यक्त्वा विपिनोत्सुका वनवासोत्कण्ठिताभूत् । तथा तथा तेन तेन प्रकारेण । पूर्ववद्विर्भावः । राक्षसराजलक्ष्मी रावणसाम्राज्यश्रीः । लङ्कां विना । विहायेत्यर्थः । 'पृथग्विना—' इत्यादिना पाक्षिकद्वितीया । यातुं कामो यस्याः सा यातुकामा गन्तुमनाः । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । अजायत जाता । तद्वनवासमूलत्वात्तदपसरणस्येति भावः । वृत्तमुपजातिः ॥

**आबालवृद्धमनुगच्छति रामभद्र-**
**मेषा पुरी तदिह मा खलु निर्गुणा स्याम् ।**
**इत्यादरादिव धरा बहुधा विधाय**
**धूलिच्छलान्निजतनुं तमनु प्रतस्थे ॥ ४४ ॥**

**आबालेति ।** एषा पुरी अयोध्या । बालाश्च वृद्धाश्च बालवृद्धास्तानभिव्याप्या-

---

१ 'अपि' इति नास्ति क्वचित्.

वालवृद्धम् । अभिविधावव्ययीभावः । रामभद्रं प्रयान्तं श्रीराममनुगच्छत्यनुसृत्यग-च्छति तत्तस्मात्कारणादिह जगत्यहं निर्गुणानुसरणाद्गुणहीना मा स्यां खलु न भवेयं किमिति काकुः । स्यामेवेत्यर्थः । भक्त्या गौरवेण सद्धर्मेण वा महदनुसरणस्य कर्तव्यत्वादिति भावः । इति मत्वेति शेषः । धरा भूः । आदरात्प्रेमवशान्निजतनुं स्वकीयमूर्तिं धूलिच्छलाद्रजोव्याजाद्बहुधा विधाय बहुप्रकारं कृत्वा । तमनु श्रीरा-मस्य पश्चादित्यर्थः । 'पश्चात्सादृश्ययोरनु' इत्यमरः । 'अनुर्लक्षणे' इति कर्मप्रवचनी-यत्वम् । 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । 'पुरतः' इति पाठे तस्य पुर-स्तात्प्रतस्थे जगामेति क्रियास्वरूपोत्प्रेक्षा वाच्या व्यञ्जकसद्भावात् । सा च धूलिच्छ-लादिति च्छलशब्देनासत्यत्वप्रतिपादनरूपापह्नवोज्जीवितेति संकरः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । वसन्ततिलकावृत्तम् ॥

नृपसुखविमुखेन स्वेन कान्तेन साकं
दुहितरि[1] विधिपाकात्काननाय व्रजन्त्याम् ।
अकुशलमिति मत्वा नूनमह्नाय धात्री
परिजनमुखबाष्पं पांसुभिः पर्यहार्षीत् ॥ ४५ ॥

**नृपेति ।** नृपसुखविमुखेन राजभोगविरक्तेन स्वेन स्वकीयेन कान्तेन साकं प्राण-नाथेन श्रीरामेण सह । 'जीवितेशः प्राणनाथः कान्तो रमणवल्लभौ' इति प्रतापमा-र्तण्डः । दुहितरि स्वपुत्रिकायां विधिपाकाद्दैवविपर्यासात्काननाय वनाय । 'क्रियार्थो-पपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । व्रजन्त्यां गच्छन्त्यां सत्याम् । धात्री वसुमती जननी च । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति विश्वप्रकाशः । अकुशलममङ्गलमिति मत्वा परिजनमुखेषु भृत्यजनवदनेषु यो बाष्पो नेत्राम्बु अह्नाय द्राक्पांसुभिः परागैः पर्यहार्षीत्परिहृतवती । परिपूर्वाद्धरतेर्लुङि सिचि वृद्धिः । नून-मित्युत्प्रेक्षायाम् । मालिनीवृत्तम् ॥

रामानुसाररसनिर्गतपौरवर्गा
संस्थानमात्रगृहचत्वरराजमार्गा ।
निर्मुक्तभोगभुजगत्वमिव क्षणेन
लघ्वी बभूव रघुपुंगवराजधानी ॥ ४६ ॥

**रामेति ।** रामस्यानुसरणे यो रसो रागस्तेन निर्गतः पौरवर्गः पुरजननिवहो यस्याः सा । 'गुणे रागे द्रवे रसः' इत्यमरः । अतएव संस्थानमात्रा अवस्थित्यै-वावशिष्टाः । नतु तत्तदनुगुणसंभ्रमोज्जृम्भिता इत्यर्थः । ते गृहाश्चत्वराण्यङ्गणानि राजमार्गाश्च यस्याः सा । 'अङ्गणं चत्वराजिरे' इत्यमरः । रघुपुंगवानां राजधानी प्रधाननगरी । 'प्रधाननगरी राज्ञां राजधानीति कथ्यते' इति प्रतापमार्तण्डः । निर्मुक्तो भोगः कायो यया सा तथोक्ता या भुजगत्वङ्निर्मोकपट्टिका सेव क्षणेन लघ्वी निःसारा । शून्येति यावत् । बभूव 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्य-मरः । उपमालंकारः । वसन्ततिलकावृत्तम् ॥

---

[1] 'सह' इति पाठः.

**अथ दशरथः सान्तःपुरजनः पुरान्निर्गत्य गत्यन्तराभावात्तमेव रामं सुचिरमालोकयन्नालोकपथमतिक्रान्ते सुमन्त्राक्रान्तस्यन्दने रघुनन्दने स्यन्दमानबाष्पप्रवाहो मोहमुपगम्य भूम्यां पपात।**

**अथेति**। अथ श्रीरामनिर्गमनानन्तरं दशरथः सान्तःपुरजनः सावरोधवधूकः सन्। पुरादयोध्यानगरान्निर्गत्य। गम्यत इति गतिर्गन्तव्यदेशः। अन्या गतिर्गत्यन्तरम्। 'सुप्सुपा–' इति समासः। तस्याभावादसंभवात्। 'दशोपायगमे गतिः' इति वैजयन्ती। तं राममेव सुचिरं बहुकालमालोकयन्। ततः सुमन्त्रेण सारथिनाक्रान्तोऽधिष्ठितः स्यन्दनो रथो यस्य तस्मिन्। 'शताङ्गः स्यन्दनो रथः' इत्यमरः। रघुनन्दने। आलोकपथं दर्शनमार्गम्। 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः। 'ऋक्पूः–' इत्यादिना समासान्तः। अतिक्रान्तेऽतीत्य गते सति। स्यन्दमानबाष्पप्रवाहो विगलदश्रुपूरः सन्। मोहं मूर्च्छामुपगम्य भूम्यां पपात॥

ततः किं जातमित्यत आह—

**ततः परिजनकृताश्वासाल्लब्धसंज्ञाय राज्ञे कौसल्यासदनमरोचत।**

**तत इति**। ततस्तदनन्तरं परिजनैः सेवकजनैः कृतो विहितो य आश्वासो मूर्च्छापगमोचितोपचारस्तस्माद्धेतोः लब्धसंज्ञाय पुनःप्राप्तचेतनाय राज्ञे दशरथाय। 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी। कौसल्यायाः सदनं गृहमरोचत निवासार्हतयेष्टमभूत्। तद्गृहं प्रविवेशेत्यर्थः। एतेन राज्ञः पूर्वं कैकेयीगृहमेव नियतनिवास इति सूच्यते॥

ततः श्रीरामवृत्तान्तमाह—

**अथ दाशरथिरहमहमिकया संमूर्च्छन्महाजनौघदुरवगाहतया मन्दायमानस्यन्दनवेगः सकलजनविवेककोकनदं मुकुलयन्मोहतमसा तमसातटमुपागमत् चरमगिरितटमपि सहस्रदीधितिः।**

**अथेति**। दाशरथिः श्रीरामोऽपि। अन्योन्यं प्रति श्रेष्ठोऽहमित्यभिमानोऽहमहमिका। 'अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः' इत्यमरः। अहमिति विभक्तिप्रतिरूपकमव्ययं निपातितम्। तस्य वीप्सायां द्विरुक्तिः संज्ञायां कप्प्रत्ययः। तया। अहंप्रथमिकयेत्यर्थः। संमूर्च्छन्संमिलन्यो महाजनौघो बहुजनसंघस्तेन दुरवगाहतया दुष्प्रवेशतया मन्दायमानो मन्दीभवन्स्यन्दनवेगो यस्य स तथोक्तः सन् मोहस्तम इव मोह इव तमश्चेत्युपमितसमासः। तेन मोहान्धकारेण। सकलजनानामशेषजनानां विवेकः कोकनदं रक्तोत्पलमिव स इव च कोकनदम्। 'रक्तोत्पलं कोकनदम्' इत्यमरः। मुकुलयन्संकोचयन्। विशेषणमेतत्सूर्येऽपि योज्यम्। तमसा नाम नदी तस्यास्तटमुपागमत्प्राप। तथा सहस्रदीधितिः सूर्योऽपि चरमगिरितटमस्ताचलकूटम्। अगमदिति संबन्धः। अत्र प्रस्तुताप्रस्तुतयोर्दाशरथिसहस्रदीधित्यो-

---

१. 'अवलोकयन्' इति पाठः. २. 'स्पन्दमान' इति पाठः. ३. 'अथ' इति नास्ति क्वचित्. ४. 'दाशरथिरपि' इति पाठः. ५. 'शिखरम्' इति पाठः.

मुकुलयन्निति समानधर्मेणौपम्यस्य गम्यत्वाद्दीपकम् । 'प्रस्तुताप्रस्तुतानां च सामान्ये तुल्यधर्मतः । औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥' इति लक्षणात् । तच्चोपमया संकीर्यते ॥

आविःप्रलापमटवीं भजतो जनस्य
काकुत्स्थपादविरहासहमानसस्य ।
आस्तीर्णपर्णशयनान्यभवन्गृहाणि
मूलस्थलानि तमसातटभूरुहाणाम् ॥ ४७ ॥

**आविरिति ।** आविःप्रलापमाविर्भवत्परिदेवनं यस्मिन्कर्मणि तद्यथा भवति तथा । अटवीं भजतः प्रविशतः । काकुत्स्थपादविरहस्य श्रीरामचरणारविन्दवियोगस्य न सहत इत्यसहिष्णु । पचाद्यच् । तन्मानसं यस्य तस्य । आस्तीर्णान्यास्तृतानि यानि पर्णानि तान्येव शयनानि शय्या येषां तानि तमसातटभूरुहाणां तमसानदीतीररुहतरूणां मूलस्थलानि मूलप्रदेशा गृहाणि मन्दिराण्यभवन् । तेषु विशश्रमुरित्यर्थः । यद्यपि 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । तथापि नपुंसकत्वे कविरेव प्रमाणम् । अत्र मूलस्थलेषु गृहत्वरूपणाद्रूपकालंकारः ॥

**अथ निशीथे दाशरथिः सुमन्त्रेण संमन्त्र्य वञ्चितजनसंहतिरतिविनतानन्दनेन स्यन्दनेन वेदश्रुतिगोमतीनिष्यन्दिकानामनदीत्रयपरिष्कृतामिक्ष्वाकवे मनुना दत्तां वसुमतीमतीत्य विविधवनगहनवीरुत्तृणपटलपिहितरथतुरगखुरमुद्रया पदव्या गङ्गातरङ्गसंगतमूलं गगनगङ्गालिङ्गितशृङ्गं शृङ्गवेरपुरालंकारमिङ्गुदीपादपमुपागमत् ।**

**अथेति ।** अथानन्तरं दाशरथिः श्रीरामो निशीथेऽर्धरात्रे । 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । सुमन्त्रेण सह संमन्त्र्य निद्राणानिमान्पौरान्विलोक्य गमिष्यामीत्यालोच्य वञ्चितजनसंहतिः प्रतारितानुगतपौरवर्गः सन् । विनतानन्दनमतिक्रान्तोऽतिविनतानन्दनस्तेन । वैनतेयाधिकजवेनेत्यर्थः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । स्यन्दनेन रथेन करणेन । वेदश्रुतिश्च गोमती च निष्यन्दिका चेति नामानि यस्य तत्तथोक्तं यन्नदीत्रयं तेन परिष्कृताम् । वेदश्रुतिगोमतीनिष्यन्दिकाख्याभिस्तिसृभिर्नदीभिर्भूषितामित्यर्थः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुडागमः । तथा इक्ष्वाकवे राज्ञे मनुना पित्रा वैवस्वतमनुना दत्तां वसुमतीं भूमिम् । कोसलदेशमित्यर्थः । अतीत्यातिक्रम्य । एतेनास्य राज्यलक्ष्म्यां तृणीकारः सूच्यते । विविधानि नानाप्रकाराणि वनानि संचारयोग्यानि गहनानि दुष्प्रवेशान्यरण्यानि तेषु वीरुधां लतानां तृणानां च पटलेन जालेन पिहिताच्छादिता । अनुपलभ्यमानेति यावत् । रथतुरगखुरमुद्रा रथाश्वखुरन्यासो यस्यां तया पदव्या मार्गेण । तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानात्तृतीयोपपत्तिः । गङ्गाया भूतलवाहिन्या मन्दाकिन्यास्तरङ्गैरूर्मिभिः संगतं मूलं यस्य तम् । गङ्गातीररुहमित्यर्थः । एतेनात्यन्तपवित्रता

---

१. 'गोमतीनिष्यन्दिनी' इति पाठः. २. 'शृङ्गिवेर' इति पाठः.

सूच्यते । तथा गगनगङ्गयाकाशगङ्गयालिङ्गितमाश्लिष्टं शृङ्गमग्रभागो यस्य तम्। इत्यौन्नत्यातिशयोक्तिः । शृङ्गवेरपुरस्य गुहनगरस्यालंकारभूतमाभरणभूतम् । शोभावहमित्यर्थः । इङ्गुदीपादपं तापसतरुमुपागमत् । तन्मूलप्रदेशमशिश्रयदित्यर्थः । 'इङ्गुदी तापसतरुः' इत्यमरः ॥

ततः ।

तत इति । ततस्तदनन्तरम् ॥

दृष्ट्वा राममनेकजन्मरचितैर्दृश्यं शुभैः कर्मभिः
श्रुत्वा मातृवरद्वयादुपगतां वृत्तिं च वैखानसीम् ।
अत्युज्जृम्भितहर्षशोकजनितैर्बाष्पैर्निषादाधिपः
शीताशीतगुणान्वितैरविरलैः संपृक्तवक्त्रोऽभवत् ॥ ४८ ॥

दृष्ट्वेति । निषादा वनगोचरजात्यन्तरास्तेषामधिपो राजा गुहः । अनेकजन्मरचितैः । जन्मान्तरसहस्राचरितैरित्यर्थः । शुभैः कर्मभिर्व्रतनियमोपवासादिसत्कृत्यैर्हेतुभिर्दृश्यं साक्षात्करणीयम् । रामं दृष्ट्वा । तथा मातुः कैकेय्या वरद्वयात्पूर्वोक्ताद्वरयुग्माद्धेतोरुपगतां प्राप्ताम् । वैखानसानां वानप्रस्थानां संबन्धिनीं वैखानसीम् । 'तस्येदम्' इत्यण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । वृत्तिं च । जटावल्कलधारणकन्दमूलाद्यशनवनवासव्यापारं चेत्यर्थः । 'वैखानसो वनेवासी वानप्रस्थश्च तापसः' इति यादवः । श्रुत्वा । अत्युज्जृम्भिताभ्यामत्युत्कठाभ्यां हर्षशोकाभ्यामानन्दविषादाभ्यां जनितैः । श्रीरामदर्शनाद्धर्षः । वनवासश्रवणाच्छोक इति विवेकः । अत एव शीताशीतगुणाभ्यां शीतोष्णगुणाभ्यामन्वितैः समवेतैः । हर्षजत्वाच्छीतगुणान्वितत्वम्, शोकजत्वादशीतगुणान्वितत्वमिति विवेकः । अविरलैः सान्द्रैर्बाष्पैरश्रुभिः संपृक्तवक्त्रः । परिक्लिन्नवदनोऽभवत् । श्रीरामदर्शनवनवासश्रवणजनितानन्दविषादाभ्यां शीताशीतगुणान्वितान्यश्रूण्यवर्तयदित्यर्थः । अतएव यथाक्रममन्वयात्क्रमापरनामा यथासंख्यालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

सोऽयं प्रियसुहृत्समासाद्य[2] गुहः कृताञ्जलिरञ्जसा रघुनाथमनुनाथितवान् ।

स इति । सोऽयं प्रियसुहृत्प्रियमित्रम् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । गुहः समासाद्य समीपमागत्य कृताञ्जलिर्विरचितकरसंपुटः सन् । विनयलक्षणमेतत् । अञ्जसा याथार्थ्येन । न त्वौपचारिकतयेत्यर्थः । 'तत्वे त्वद्धाञ्जसा द्वयम्' इत्यमरः । रघुनाथं श्रीराममनुनाथितवान्याचितवान् । प्रार्थितवानित्यर्थः । 'नाथृ याच्ञायाम्' इति धातोः क्तवतुप्रत्ययः ॥

तत्प्रकारमेव विवरिष्यन्नादौ तावत्सविनयमाविष्करोति—

देव, पितृनियोगप्रवणान्तःकरणमपि भवन्तं विज्ञापयितुर्मञ्जजानपदरीतिर्भारती मां मुखरयति ।

१. 'तत्र' इति पाठः. २. 'प्रिय' इति नास्ति क्वचित्. ३. 'विज्ञापयितुम्' इति पाठः. ४. 'अज्ञात' इति पाठः.

**देवेति**। हे देव स्वामिन्, पितृनियोगप्रवणं पित्राज्ञापरतन्त्रमन्तःकरणं यस्य तं तथोक्तमपि। अनिवार्यनिश्चयमपीत्यर्थः। भवन्तं प्रति विज्ञापयितुं वक्तव्यार्थं कथयितुमज्ञानामविवेकिनां जानपदानां जनपदवासिनां प्रकृतीनां रीतिः शैली यस्याः सा तथोक्ता। पामरसाधारणीत्यर्थः। भारती सरस्वती मां मुखरयति। मुखं वागस्यास्तीति मुखरो निरन्तरभाषी 'खमुखकुञ्जेभ्यो रो वक्तव्यः'[1] इति रप्रत्ययः। 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः। ततः 'तत्करोति–' इति ण्यन्ताल्लट्। मुखरीकरोति। व्याहारयतीत्यर्थः। अतो विज्ञापयामीति भावः॥

संप्रति यद्विज्ञापनीयं तदाह—

**अस्त्येतदनिवार्यवीर्योद्भटभटदुर्गवर्गयुक्तमनुषक्तभोग्यजातमन्थरं[2] मन्थराहृदयतोदावहमस्मदीयं राज्यम्।**

**अस्तीति**। अनिवार्यवीर्योद्भटा अनतिक्रमणीयपराक्रमोज्जृम्भिता भटा वीरा योधा यस्मिन्स तथोक्तो यो दुर्गवर्गो गिरिदुर्गादिगुप्तिस्थाननिवहस्तेन युक्तं संगतम्। दुर्गेत्यत्र दुःखेन गम्यतेऽत्रेति विग्रहः। 'सुदुरोरधिकरणे' च इति गमेर्डः। इत्थंभूतस्यैव च राज्ञामाश्रयणीयत्वादिति भावः। तथाह मनुः—'धनुर्दुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च। नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेन्नृपः॥' इति। तथानुषक्तमनपायि यद्भोग्यजातं स्रक्चन्दनादिभोगार्हवस्तुविशेषसमृद्धिस्तेन मन्थरं निर्भरम्। परिपूर्णमित्यर्थः। एवंभूतस्यैवोपादेयत्वादिति भावः। तथा मन्थराया युष्मद्राज्याभिषेकविघातकारिण्याः कैकेयीदास्या हृदयतोदावहं मनोव्यथाकरम्। एतद्विघटने तस्या अनधिकारादिति भावः। अस्मदीयमस्मत्संबन्धि। 'त्यदादीनि च' इति वृद्धसंज्ञायां वृद्धाच्छः। एतद्राज्यम्। अयं देश इत्यर्थः। अस्ति वर्तते॥

अस्तु प्रस्तुते किं तत्राह—

**[3]तदेतदनिदंप्रथमप्रवृत्तं परिगृह्य किंचिदनुगृह्य [4]च परिजनयोग्य[5]भाग्यभाजनममुं जनममुञ्चन्नेव [6]तातादेशं देशेऽस्मिन्विस्मयनीयानुभावमुनिवृन्दे मन्दाकिनीसंदर्शनेन मन्दायमानजननीजनवियोगदुर्दशश्चतुर्दश दशरथकथिताः समाः समापयतु भवानिति।**

**तदिति**। हे राम, भवान्। इदं प्रथमं यस्य तदिदंप्रथमम् तन्न भवतीत्यनिदंप्रथमम्। अनूतनमित्यर्थः। प्रवृत्तं व्यापारो यस्य तत्तथोक्तम्। पूर्वं यदाकदाचिदपीदृङ्महाराजपरिपालितत्वादिति भावः। एतत्पूर्वोक्तप्रकारमेतद्राज्यं परिगृह्य स्वीकृत्य। तथा अमुं जनम्। मामित्यर्थः। परिजनस्य भृत्यवर्गस्य योग्यमर्हं यद्भाग्यं भागधेयं तस्य भाजनं पात्रम्। किंचिदीषत् पूर्णानुग्रहस्यानर्हत्वादिति विनयोक्तिः। अनुगृह्य। भृत्यत्वेन नियुज्येत्यर्थः। तथा तातादेशम्। मुनिवृत्त्या वनमाश्रयेत्येवंरूपं पितृनियोगमित्यर्थः। स्वयममुञ्चन्नपरित्यजन्नेव। विस्मयनीय आश्चर्यकरोऽनुभाव-

---

१. 'रङ्करणे खमुखकुञ्जेभ्य उपसंख्यानं' इति कौ. २. 'भटवर्गदुर्गयुक्तम्' इति पाठः. ३. 'तदिदमनिशम्' इति पाठः. ४. 'च' इति नास्ति क्वचित्. ५. 'योग्यभजनम्' इति पाठः. ६. 'तातादेशेन' इति पाठः.

स्तपःसामर्थ्यं यस्य तत्तादृशं मुनिवृन्दं यस्मिंस्तस्मिन् । गङ्गातीरत्वेनात्यन्तपुण्यक्षेत्रत्वान्निरन्तरमहातपोनिष्ठनिवहाधिष्ठित इत्यर्थः । एतेन सहवासयोग्यसंपन्नतया निवासार्हता सूच्यते । अस्मिन्देशे जनपदे । मन्दाकिनीसंदर्शनेन हेतुना मन्दायमाना मन्दीभवन्ती जननीजनविरहदुर्दशा मातृवर्गविश्लेषजनितविषादो यस्य स तथोक्तः सन् । लोकजननीत्वाद्गङ्गाया इति भावः । एतेन मातॄणामत्यन्तपवित्रता सूच्यते । दशरथेन कथिता निर्दिष्टाश्चतुर्दशसंख्याकाः समा वत्सरान्समापयत्वतिवाहयतु । इत्यनुनाथितवानिति पूर्वेण संबन्धः । संपूर्वादाप्नोतेर्विचि प्रार्थनायां लोट् । शेषे प्रथमः । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः ॥

**तस्मिन्नित्थं प्रार्थनाभाजि सख्यौ प्रत्याचख्यौ रामभद्रः प्रियोक्त्या ।**
**मातुर्वाक्याद्वल्कलेनावृतं मे गात्रं क्षात्रप्रक्रियां नार्हतीति ॥ ४९ ॥**

**तस्मिन्निति** । सख्यौ मित्रे तस्मिन्गुह इत्थमनेन प्रकारेण प्रार्थनाभाजि प्रार्थनां कुर्वति सति रामभद्रः प्रियोक्त्या प्रियवचनेन । अन्यथा तस्य मनःक्लेशः स्यादिति भावः । प्रत्याचख्यौ प्रत्याख्यातवान् । तत्प्रार्थनां निराकृतवानित्यर्थः । किमिति । मातुर्वाक्यात्कैकेयीनियोगवचनात् । अत्र मातृग्रहणं पितुर्निर्दोषत्वप्रकाशनार्थम् । वल्कलेनावृतम् । मुनिवेषधारीत्यर्थः । मे मम गात्रं शरीरम् । क्षात्रप्रक्रियां क्षत्रियोचितप्रकारम् । राजवेषमित्यर्थः । गृहीतुमिति शेषः । नार्हति । योग्यं न भवतीत्यर्थः । 'गृहीतं न परित्यजेत्' इति न्यायाद्गृहीतपरित्यागस्यानुचितत्वादिति भावः । इति प्रत्याचख्याविति पूर्वेण संबन्धः । शालिनीवृत्तम् ॥

**ततस्तु तदनुरोधेन रोधस्तरोरधस्तात्सुमन्त्रनियन्त्रितरथ्ये दाशरथ्योरातिथ्यं समधुपर्कं कर्तुमिव मन्दमन्दमरविन्दवृन्दस्यन्दमानमकरन्दबिन्दुसंदोहवाहिनि वाहिनीतरङ्गमरुति वाति काननगमनावस्थां काकुत्स्थस्य प्रेक्षितुमक्षमायामिव क्ष्माभृति चरमे तिरोहितायामहामधिदेवतायां संध्यां चरमां रामः समाप्य तस्यां तरुमूलभुवि लक्ष्मणकल्पितं पर्णतल्पमभजत् ।**

**तत इति** । ततः प्रत्याख्यानानन्तरं तदनुरोधेन गुहानुवर्तनेन रोधस्तरोः । गङ्गानदीतटरुहस्य कस्यचिद्वृक्षस्येत्यर्थः । अधस्तादधः प्रदेशे सुमन्त्रे नियन्त्रितरथ्ये नियमितरथाश्वे सति दाशरथ्यो रामलक्ष्मणयोः । मधुपर्को मधुगुडादिमधुरपदार्थमिश्रितं पूज्यानां देयद्रव्यं तेन सह समधुपर्कम् । आतिथ्यमतिथिसत्कारं कर्तुमिवेति फलोत्प्रेक्षा । अरविन्दवृन्दादब्जषण्डात्स्यन्दमानं प्रस्रवन्तं मकरन्दबिन्दुसंदोहं पुष्परसशीकरनिकुरुम्बं वहतीति तथोक्ते वाहिनीतरङ्गमरुति गङ्गातरङ्गमारुते मन्दमन्दं मन्दप्रकारम् । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । कर्मधारयसद्भावात्सुपोलुक् । एतेन शैत्यमान्द्यसौरभ्यसंपत्तिरुक्ता । वाति प्रसरति सति । वातेः शतृप्रत्ययः । 'वहति' इति पाठे वहति प्रवर्तमाने सति । तदा काकुत्स्थस्य श्रीरामस्य । अत्रैकवचनग्रहणं तस्यैव

१. 'रथ्ययोः' इति पाठः।

प्राधान्यादित्यवसन्तव्यम् । काननगमनावस्थामरण्ययात्रादुर्दशां प्रेक्षितुं द्रष्टुमक्षमाया-मसहमानायामिवेत्युत्प्रेक्षा । अह्नामधिदेवतायाम् । अह्नःपतौ चरमे क्ष्माभृत्यस्ताचले । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः । तिरोहितायामन्तर्हितायां सत्याम् । सूर्येऽस्तं गते सतीत्यर्थः । रामश्चरमां पश्चिमां संध्यामुपास्य । सायंसंध्यावन्दनं कृत्वेत्यर्थः । तस्यां पूर्वोक्तायां तरुमूलभुवीङ्गुदीवृक्षाधःप्रदेशे लक्ष्मणेन कल्पितं रचितं पर्णतल्पं पर्णमय-शय्याम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । अभजत्प्रापत् । तत्र संविवेशेत्यर्थः । अत्र सकललोकवन्द्यमानचरणारविन्दस्यापि भगवतः श्रीरामस्य संध्यावन्दनचरणं लोके संप्रदायप्रवर्तनार्थमित्यवगन्तव्यम् । तदुक्तं भगवता गीतासु—'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥' इति । अथवा 'अह-रहः संध्यामुपासीत' इत्यादिसकलशास्त्राभिज्ञस्य समस्तधर्माचरणतत्परस्य लीलाविग्र-हधारिणः श्रीरामस्यायुरारोग्यादिसकलश्रेयःप्रदत्वात्संध्यावन्दनं युक्तमेवेति द्रष्टव्यम् । तथाच महाभारते—'पितामहः पितॄन्सृष्ट्वा मूर्तिं तामुत्ससर्ज ह । सा प्रातः साय-मागत्य संध्यारूपेण वर्तते । एतां संध्यां यतात्मानो ये तु दीर्घमुपासते । दीर्घायुषो भविष्यन्ति नीरुजः पाण्डुनन्दन ॥' इति

**रामे विदेहसुतया तरुमूलसंज्ञा-**
**मन्तःपुरं विशति लक्ष्मणसौविदल्ले ।**
**निध्याय तं नियमितामितबाष्पवृष्टि-**
**र्निद्रां निरस्य निषसाद निषादनाथः ॥ ५० ॥**

**राम इति ।** रामे विदेहसुतया वैदेह्या सहेत्यर्थः । अत्र सहार्थाप्रयोगेऽपि तदर्थगम्यतायाम् । 'वृद्धो यूना—' इति सूत्रादेव प्रयोगात्सहार्थानामप्रयोगेऽपि 'सह-युक्तेऽप्रधाने' इति सहार्थे तृतीया । लक्ष्मण एव सौविदल्लः कञ्चुकी दौवारिको यस्य तत् । सौमित्रिकृतसंरक्षणमित्यर्थः । 'सौविदल्लाः कञ्चुकिनः' इत्यमरः । तरुमूलं वृक्षाधःप्रदेश इति संज्ञा यस्य तम् । तद्रूपमित्यर्थः । अन्तःपुरं शुद्धान्तं विशति प्रविष्टवति सति । निषादनाथो गुहस्तं तथाभूतं भूतलशायिनं श्रीरामं निध्याय दृष्ट्वा । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । नियमितान्तर्निरुद्धामितबाष्प-वृष्टिरविच्छिन्नाश्रुसंपातो येन स तथोक्तः सन् । श्रीरामदुर्दशादर्शनेन कंचित्कालं कृतरोदन इत्यर्थः । निद्रां निरस्य त्यक्त्वा निषसाद । लक्ष्मणसंलापतात्पर्येण जाग्र-देव तत्रोपविष्टवानित्यर्थः । वसन्ततिलकावृत्तम् ॥

**व्यतीतायां विभावर्यामर्यम्णि मरीचिमालाहारिणि पूर्वोर्वीधर-मूर्ध्नि विरचितजटाबन्धौ सह सीतया दाशरथी भागीरथीकच्छम-गच्छताम् ।**

**व्यतीतायामिति ।** विभावर्यां रजन्याम् । 'विभावरीतमस्विन्यौ रजनी यामिनी तमी' इत्यमरः । व्यतीतायां प्रभातायां सत्याम् । पूर्वोर्वीधरमूर्ध्न्युदयाचलशिखरे । 'उदयः पूर्वपर्वतः' इत्यमरः । अर्यम्णि सूर्ये मरीचिमालाहारिणि तेजःपुञ्जधारिणि । अभ्युदिते सतीत्यर्थः । दाशरथी रामलक्ष्मणौ । विरचितो विहितो जटानां बन्धो

१. 'अर्यममरीचिवीचिमाला' इति पाठः. २. 'जटाबन्धौ दाशरथी' इति पाठः.

वटवृक्षक्षीरैर्ग्रथनं याभ्यां तौ। सीतया सह भागीरथीकच्छं गङ्गातीरमगच्छतां प्राप्तवन्तौ। 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः॥

**तत्र रामः प्रहृष्टचेताः सीतामाचष्ट।**

**तत्रेति।** तत्र भागीरथीकच्छे रामः प्रहृष्टचेतास्तद्दर्शनेनात्यन्तसंतुष्टान्तःकरणः सन्। सीतामाचष्टावोचत्॥

तदेवाह—

**मेध्याश्वमार्गपरिमार्गणसंभवस्य**
**दिव्यौषधिं कपिलकोपमहाज्वरस्य।**
**तातानुतर्पणपचेलिमभागधेयां**
**भागीरथीं भगवतीं शरणं भजामः॥ ५१॥**

**मेध्येति।** मेध्यः पवित्रः। यद्वा 'प्रजापतिरश्वमसृजत यो मेधायालभ्यते। आशासाना मेधपतिभ्यां मेधम्' इत्यादि श्रुतौ दर्शनान्मेधशब्दो यागवचनः। यथा 'त्वमेव पितृमेधः' इतिवत्। 'मेधः क्रतौ धियां मेधा' इति विश्वश्च। तथाच मेधे साधुः मेध्यः। 'तत्र साधुः' इति यत्प्रत्ययः। अथवा मेधार्हो मेध्यः। 'तदर्हम्' इति यत्प्रत्ययः। स चासावश्वश्च। अश्वमेधीयाश्व इत्यर्थः। तस्य मार्गपरिमार्गणे वर्त्मान्वेषणे संभव उत्पत्तिर्यस्य तस्य कपिलकोपमहाज्वरस्य कपिलमुनिक्रोधरूपमहामयस्य दिव्यौषधिमसाधारणौषधीभूताम्। तदुपशान्तिकरीमित्यर्थः। तथा तातानुतर्पणेनास्मत्पूर्वपितृसंतर्पणेन पचेलिमं परिपक्वं भागधेयं भाग्यं यस्यास्ताम्। परोपकाराचरणोपयोगितयैव जन्मसाफल्यसंभवादिति भावः। पचेलिमेत्यत्र 'कर्मकर्तरि केलिमर्वाच्यः' इति केलिमर्प्रत्ययः। भगवतीं पूज्यां भागीरथीं गङ्गां शरणं भजामः प्राप्नुमः। यतोऽस्मत्कुलमहत्तरेण भगीरथेनेन्द्रपरिमुषिताश्वमेधीयाश्वान्वेषणसमये कपिलानलदग्धानां पितॄणां स्वर्लोकप्रापणायावतारिता कार्यसिद्धिं कृतवती, अतो भागीरथीनाम्नेयं व्यवह्रियते। तस्मादस्माकमपि शरणागतानां कार्यसिद्धिं करिष्यतीति तद्भजनं युक्तमेवेति भावः। स्पष्टोऽत्र रूपकालंकारः। वसन्ततिलकावृत्तम्॥

**तदनन्तरं रामः सान्त्ववचननिवारितसुमन्त्रः ससौमित्रिर्मङ्गलानि प्रार्थयमानया तया मैथिल्या सह गुहेनानीतां नावमारुरोह।**

**तदनन्तरमिति।** तदनन्तरं भागीरथीभजनानन्तरं रामः सान्त्ववचनैः प्रियोक्तिभिरेव निवारितः। त्वं पुनरयोध्यां प्रति याहीति निवर्तितः सुमन्त्रो येन स तथोक्तः। अत्र सान्त्वग्रहणं तन्मनःखेदनिरासार्थमित्यवगन्तव्यम्। ससौमित्रिः सलक्ष्मणः सन्। मङ्गलानि। 'पुत्रो दशरथस्यायं महाराजस्य धीमतः। निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः॥' इत्यादिश्रीरामायणोक्तकल्याणानीत्यर्थः। प्रार्थयमानया याचमानया। 'यात्रायामभियाने च प्रार्थना कथ्यते बुधैः' इत्यभिधानात्। तयानुसृतया मैथिल्या सह जानक्या साकम्। गुहेनानीतां भृत्यद्वारा प्रापितामित्यर्थः। नावं तरीमारुरोहाधिष्ठितवान्। 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः॥

---

१. 'दुर्नयस्य' इति पाठः. २. केलिमर उपसंख्यानम्.

**स एष निषिध्य निषादाधिपतेरनुगमनमपि तूर्णमेव वितीर्णसुरसरित्पूरः संपूर्णसस्ये वत्साभिधाने जनपदे कृतपदश्चललक्ष्यवेधनचतुरश्चतुरो मृगान्निहत्य कुत्रचिद्वनस्पतिमूले निशामनैषीत्।**

स इति। यो नावमारुरोह स एष रामो निषादाधिपतेर्गुहस्यापि। सुमन्त्रानुसरणनिषेधसमुच्चयार्थकोऽयमपिशब्दः। अनुगमनमनुसरणं निषिध्य त्वया सम्यग्भक्तिः प्रदर्शिता, अतस्त्वमत्रैव वसेति निवार्य। तूर्णं क्षिप्रमेव। विलम्बेऽन्तरायः स्यादिति भयादिति भावः। वितीर्णसुरसरित्पूरो विलङ्घितगङ्गाप्रवाहः सन्। 'निस्तीर्ण' इति च पाठः। संपूर्णसस्ये। व्रीह्यादिसकलसस्यसमृद्ध इत्यर्थः। वत्स इत्यभिधानमाख्यां यस्य तस्मिञ्जनपदे देशे। 'नीवृज्जनपदो देशविषयौ' इत्यमरः। कृतपदः। प्रविष्ट इत्यर्थः। चललक्ष्यवेधनचतुरश्चलशरव्यसंप्रहारनिपुणः। अतएव चतुरश्चतुःसंख्याकान्मृगान्वराहादीन्निहत्य प्रहृत्य। क्षत्रधर्मत्वेनानिषिद्धत्वादिति भावः। कुत्रचित्कस्मिंश्चिद्वनस्पतिमूले वृक्षाधःप्रदेशे निशां रात्रिमनैषीद्व्यगमयत्। 'मत्स्याभिधानः' इति प्रामादिकः पाठः। उक्तं च श्रीरामायणे—'ततः समृद्धाञ्शुभसस्यशालिनः क्षणेन वत्सान्मुदितानुपागमत्। तौ तत्र हत्वा चतुरो महामृगान्वराहमृश्यं पृषतं महारुरुम्।' इत्यादि॥

**अन्येद्युर्वन्येन पथा प्रयातास्ते प्रयागे प्रतायमानहोमधूमप्राग्भारं भरद्वाजाश्रमं श्रयन्तश्चाभिवन्द्य तममन्दहर्षं महर्षिमनेनादिष्टवर्त्मना वैकर्तनीपूरोपप्लवं प्लवेन वैणवेन निस्तीर्य शमधनजनसंनिधानशमितशात्रवसकलसत्वचरित्रविचित्रं चित्रकूटाचलमभजन्।**

अन्येद्युरिति। अन्येद्युरन्यस्मिन्दिने। 'सद्यः—' इत्यादिना निपातितमव्ययम्। 'अद्यात्राह्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात्। तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः॥' इत्यमरः। ते सीतारामलक्ष्मणाः वने भवो वन्यस्तेन पथारण्यवर्त्मना प्रयाताः प्रस्थिताः सन्तः प्रयागे प्रयागाख्ये पुण्यक्षेत्रे प्रतायमानो व्याप्नुवानः। तनोतेर्यकि लटः शानचि मुमागमः। 'तनोतेर्यकि' इत्यनुनासिकस्य वैकल्पिकोऽकारः। होमधूमप्राग्भारो होमधूमसमूहो यस्मिंस्तम्। हव्यगन्धिधूमानुमेयमित्यर्थः। प्राग्भारशब्दः समूहे रूढः। भरद्वाजाश्रमं भरद्वाजाख्यमहर्षेस्तपोवनं श्रयन्त आश्रयन्तः सन्तः। अमन्दहर्षं निजागमनादमन्दो हर्ष आनन्दो यस्य तं महर्षिमृषिश्रेष्ठं तं भरद्वाजमभिवन्द्य नमस्कृत्य च। रामः स्वयं तारकब्रह्मणि क्षत्रियरूपेणावतीर्णत्वात्। 'यद्यदाचरति श्रेष्ठः' इत्यादिस्मरणात्क्षत्रियमर्यादां प्रवर्तितवानिति सूचितम्। अनेन महर्षिणादिष्टं यद्वर्त्म चित्रकूटमार्गस्तेन। विकर्तनस्य सूर्यस्यापत्यं स्त्री वैकर्तनी यमुना नदी। 'तस्यापत्यम्' इत्यण्। 'टिड्ढाणञ्—' इत्यादिना ङीप्। तस्याः पूरः प्रवाह

---

१. 'भवतीर्ण' इति पाठः. २. 'चलल्लक्ष्य' इति पाठः. ३. 'प्रभाते' इति पाठः. ४. 'प्रतीयमान' इति पाठः. ५. 'भारद्वाजाश्रममाश्रयन्तः' इति पाठः. ६. 'महर्षिजनेन' इति पाठः. ७. 'शात्रवसत्वचारित्रम्' इति पाठः. ८. 'चरित्रं विचित्रम्' इति पाठः. ९. 'चित्रकूटमचलम्' इति पाठः. १०. 'अभजन्त' इति पाठः.

एवोपप्लव आपत्तम् । मार्गनिरोधकत्वादिति भावः । 'कालिन्दी सूर्यतनया यमुना शमनस्वसा' इत्यमरः । वैणवेन वेणुमयेन प्लवेनोडुपेन । 'उडुपं तु प्लवः कोलः' इत्यमरः । निस्तीर्य तीर्त्वा । शमो वैराग्यादिना निर्विकारचित्तत्वं स एव धनं येषां ते शमधना महर्षयस्त एव जनास्तेषां संनिधानेन सांनिध्येन शमितशात्रवाणि प्रशान्तवैराणि यानि सकलसत्त्वानि गोव्याघ्रादिसमस्तजन्तवस्तेषां चरित्रेणान्योन्यसाहचर्यरूपेण विचित्रमाश्चर्यकरम् । निर्वैरदेशत्वान्निवासार्हमित्यर्थः । चित्रकूटं नामाचलं पर्वतमभजन्प्रापुः ॥

> अनुजरचितपर्णागारहृद्यासु माद्य-
> त्परभृतगेलचञ्चत्पञ्चमैरञ्चितासु ।
> जनकदुहितृयोगाज्जातसाकेतसौख्य-
> श्चिरमरमत रामश्चित्रकूटस्थलीषु ॥ ५२ ॥

अनुजेति । अनुजरचितपर्णागारहृद्यासु सौमित्रिनिर्मितपर्णशालामनोहरासु । तथा माद्यत्परभृतानां मत्तकोकिलानां गलेषु कण्ठकुहरेषु चञ्चन्तः प्रसरन्तो ये पञ्चमाः स्वरविशेषास्तैः । 'पिकः कूजति पञ्चमम्' इत्यभिधानात् । 'वनप्रियः परभृतः कोकिलः पिकः' इत्यमरः । अञ्चितासु मनोहरासु 'अञ्चेः पूजायाम्' इति इडागमः । चित्रकूटस्य स्थलीष्वकृत्रिमभूमिषु । 'जानपद–' इत्यादिना कृत्रिमार्थे ङीष् । रामो जनकदुहितृयोगाज्जानकीसांगत्याद्धेतोः । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । जातमुत्पन्नं साकेतेऽयोध्यायां यत्सौख्यमानन्दस्तत्सदृशं सौख्यं यस्य स तथोक्तः सन्निति निदर्शनालंकारः । चिरं बहुकालमरमताक्रीडत । 'साकेतं स्यादयोध्यायां कोसलानन्दिनी तथा' इति यादवः ॥

**अथ मां वनवासनैरस्यादपि नाम[3] रामः समाह्वयेदिति प्रत्याशया[4] परतन्त्रः सुमन्त्रः कानिचिदहानि गुहसकाशे नीत्वा निराशस्ततः प्रतिनिवृत्तो निवृत्तोत्सवामयोध्यामासाद्य निर्दाशरथिरयं[5] समागत इति शोकातिरेकातुरपौरजनजनितदीनाक्रन्दमन्दीभूतनेमि[6]घोषाद[7]वरुह्य रथाद्दशरथं प्रयाणोन्मुखप्राणं प्राणंसीत् ।**

अथेति । अथ चित्रकूटभजनानन्तरं वनवासे क्लेशभूयिष्ठे वनसंचारे नैरस्याद्वेषादपि नाम । असत्सहवासानुरागाभावेऽपीत्यपिशब्दार्थः । नामेति संभावनायाम् । 'नाम प्राकाश्यसंभाव्यकुत्साभ्युपगमेषु च' इति विश्वः । रामो मां समाह्वयेदाकारयेदित्येवंभूतया प्रत्याशया प्रत्याकाङ्क्षया परतन्त्रः पराधीनः । तादृगाशाबद्धः सन्नित्यर्थः । सुमन्त्रो गुहसकाशे गुहनिकटे कानिचिदहानि । द्वित्राणि दिना-

---

१. 'कुलम्' इति पाठः. २. 'रञ्जितासु' इति पाठः. ३. 'नाम' इति नास्ति क्वचित्. ४. 'प्रत्याशयो' इति पाठः. ५. 'निर्दाशरथिः सारथिरिति' इति पाठः. ६. 'शोकातिरेकात्पौर' इति पाठः. ७. 'नेमी' इति पाठः.

नीत्यर्थः । तथाच रामायणम्—'ततः सायाह्नसमये तृतीयेऽहनि सारथिः' इति । नीत्वा गमयित्वा ततस्तदनन्तरं निराशः । दृढप्रतिज्ञस्य कुतो नैरस्यं कुतः पुनराह्वानमित्याशारहितः सन् । प्रतिनिवृत्तः प्रत्यावृत्तः । निवृत्तोत्सवाम् । निरानन्दामित्यर्थः । अयोध्यामासाद्य प्राप्य । निर्दाशरथिर्दाशरथिरहितः पुनरयं समागत इति हेतोर्यः शोकातिरेको विषादातिशयस्तेनातुरैर्विह्वलैः पौरजनैर्जनित उत्पादितो यो दीनाक्रन्द आर्तघोषस्तेन मन्दीभूतोऽन्तर्हितो नेमिघोषश्चक्रधाराध्वनिर्यस्य तस्मादित्याक्रन्दातिशयोक्तिः । 'चक्रधारा प्रधिर्नेमिः' इत्यमरः । रथादवरुह्य । प्रयाणोन्मुखा उत्क्रमणोद्युक्ताः प्राणा यस्य तम् । पुत्रवियोगवेदनासहिष्णुत्वेनासन्नमरणमित्यर्थः । दशरथं प्राणंसीत्प्रणतवान् । नमेर्लुङ् । 'यमरमनमातां सक्च' इति सगागमः । चकारादिडागमश्च । 'इट ईटि' इति सिचो लुक् । 'नेटि' इति प्रतिषेधाद्वृद्ध्यभावः । 'अड्भ्यासव्यवायेऽपि' इति णत्वम् ॥

**एतद्दर्शनेन विसंज्ञो दशरथः कौसल्यासुमित्राभ्यां समाश्वासितः कथं प्रयातं रामेण कथं कथितं मैथिल्या किंवृत्तः सौमित्रिरिति मुहुर्मुहुरश्रुकुण्ठितकण्ठः सुमन्त्रमन्वयुङ्क्त ।**

**एतदिति ।** एतद्दर्शनेन सुमन्त्रस्य केवलस्यालोकनेनेत्यर्थः । विसंज्ञो विचेतनः । मूर्च्छित इति यावत् । अथ कौसल्यासुमित्राभ्याम् । कैकेय्या अनभिमततया बहिर्भूतत्वादिति भावः । समाश्वासितः । यथा ससंज्ञः स्यात्तथोपलालितः सन्नित्यर्थः । दशरथः । रामेण कथं केन प्रकारेण प्रयातं प्रस्थितम् । भावे क्तः । ननु दुःखेन प्रयातं किमित्यर्थः । तथा मैथिल्या कथं कया रीत्या कथितमुक्तम् । ननु निर्वेदेन कथितं किमित्यर्थः । तथा सौमित्रिः किंवृत्तः कथंभूतव्यापारः । अनुवर्तनतत्परो वा उत न वेत्यर्थः । इत्येवं मुहुर्मुहुः पुनःपुनः । वीप्सायां द्विरुक्तिः । अश्रुकुण्ठितकण्ठो बाष्पगद्गदवचनः सन् । सुमन्त्रमन्वयुङ्क्तापृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥

**सोऽपि राज्ञे व्यजिज्ञपत् ।**

**स इति ।** सुमन्त्रोऽपि राज्ञे दशरथाय व्यजिज्ञपद्विज्ञापितवान् ॥

तत्प्रकारमेवाह—

**देव, कथं ब्रवीमि । कठिनहृदयोऽहम् ।**

**देवेति ।** हे देव राजन्, कथं कुतो वा ब्रवीमि कथयामि । प्रत्युत्तरमिति शेषः । कुतः । यतोऽहं कठिनहृदयो निर्दयचित्तः । अरण्ये रामं विहाय पुनरागतत्वात्तस्य तादृग्यात्राकथनव्यालोलरसनत्वाच्चेति भावः ॥

एवमात्मानं विनिन्द्य संप्रति प्रश्नत्रयस्य क्रमेणोत्तरमाह—

**सेवारसानुगतपौरमनोरथस्य**
**दूरे रथस्य च सुतौ तव वर्तमानौ ।**

---

१. 'पारे' इति पाठः.

भूत्वा विदेहदुहितुर्नवसौविदल्लौ
भागीरथीतटवने पथिकावभूताम् ॥ ५३ ॥

**सेवेति** । हे देव, तव सुतौ त्वत्पुत्रौ रामलक्ष्मणौ सेवारसेन भजनानुरागेणानुगता अनुसृता ये पौराः पुरवासिनो जनास्तेषां मनोरथस्यानुवर्तनरूपाभिलाषस्य । तथा रथस्य स्यन्दनस्य च दूरे विप्रकर्षे वर्तमानौ । तमसातीरे निद्राणानां पौराणां निसृष्टत्वाच्च वनवासतत्पराणामस्माकं किमनेन रथेनेति परित्यक्तत्वाच्चेति भावः । भागीरथीतटे यद्वनं तत्र विदेहदुहितुर्वैदेह्या नवसौविदल्लौ नूतनकञ्चुकिनौ भूत्वा । तत्परिरक्षणतत्परौ संभूयेत्यर्थः । एतत्सौविदल्लस्येदंप्रथमत्वाज्जागरूकत्वद्योतनार्थत्वान्नवत्वं द्रष्टव्यम् । पन्थानं गच्छत इति पथिकौ । पादचारिणाविति यावत् । 'पथः ष्कन्' इति ष्कन्प्रत्ययः । अभूताम् । अत्र पूर्वार्धे मनोरथरथयोः केवलप्रकृतयोर्दूरीकृतत्वतुल्यधर्मेणौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगिता । उत्तरार्धे तु दाशरथ्योर्नवसौविदल्लत्वरूपणाद्रूपकालंकार इत्यनयोरन्योन्यनैरपेक्ष्यात्संसृष्टिः । वसन्ततिलकावृत्तम् ॥

वक्तव्यान्तरमप्यस्तीत्याह—

किंच[1] ।

देव त्वत्तनयस्य कुन्तलभरं क्षीरैः स्वधेनूद्भवैः
सेक्तुं नालमरुन्धतीपतिरभूत्तस्याभिषेकोत्सवे ।
सिक्तो हन्त स एष मैथिलसुताबाष्पोदकोत्पादकै-
र्न्यग्रोधक्षरितैर्जटां रचयितुं क्षीरैर्निषादाहृतैः ॥ ५४ ॥

**किंचेति** । तदेवाह—**देवेति** । हे देव, अरुन्धतीपतिर्वसिष्ठोऽभिषेकोत्सवे राज्याभिषेकमहोत्सवे तस्य त्वत्तनयस्य युष्मत्पुत्रस्य रामस्य कुन्तलभरं चिकुरनिकुरम्बम् । 'चिकुरः कुन्तलो वालः' इत्यमरः । स्वधेनूद्भवैः स्वस्य या धेनुः कामधेनुस्तदुद्भवैस्तत्संभूतैः । अत्यन्तश्लाघ्यैरित्यर्थः । क्षीरैः सेक्तुमार्द्रीकर्तुम् । तदानीं गोक्षीराभिषेकस्य शास्त्रविहितत्वादिति भावः । शक्तो नाभूत् । वैवर्ण्यापत्तिभयादिति भावः । अलमिति 'पर्याप्तिवचनेष्वलमर्थेषु' इत्यनेन तुमुन् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । स एष कुन्तलभरो मैथिलसुतायाः सीताया बाष्पोदकोत्पादकैरश्रुजलोत्पत्तिहेतुभिर्निषादाहृतैर्गुहपरिजनानीतैर्न्यग्रोधक्षरितैर्वटवृक्षोद्भवैः । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । क्षीरैर्जटां रचयितुं सिक्त आर्द्रीकृतः । हन्तेति खेदे । अत्रारुन्धतीपतेः कामधेनुक्षीराभिषेकशक्तत्वेऽपि तदशक्तत्वोक्तेः संबन्धेऽसंबन्धरूपातिशयोक्तिः । तया च कुन्तलभरस्य तादृग्रामणीयकं व्यज्यत इत्यलंकारेण वस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥

तस्या विदेहदुहितुः पदयोर्नखेषु
लाक्षां विनाप्यरुणिमा सहसा बभूव ।

---

१. 'किंतु' इति पाठः.

वन्ये पथि प्रियतमेन सह व्रजन्त्या
वैवर्ण्यमाविरभवन्न कदापि वक्त्रे ॥ ५५ ॥

**तस्या इति** । वन्ये पथि कान्तारमार्गे प्रियतमेन भर्त्रा श्रीरामेण सह व्रजन्त्या गच्छन्त्यास्तस्या विदेहदुहितुर्वैदेह्याः पदयोश्चरणयोर्नखेषु लाक्षां विनापि । अलक्तकद्रव्याभावेऽपीत्यर्थः । 'पृथग्विना–' इत्यादिना द्वितीया । अरुणिमा लौहित्यम् । 'वर्णदृढादिभ्यः ष्यञ्च' इति चकारादिमनिच् । सहसा शीघ्रं बभूव प्रादुर्बभूव । पल्लवकोमलत्वाच्चरणनखेष्वारुण्यमरण्यसंचारेणाविरभूदित्यर्थः । वक्त्रे मुखे तु कदापि कदाचिदपि वैवर्ण्यं कान्तिहैन्यं नाविरभवन्न प्रादुरभूत् । पूर्ववदेव वक्त्रमशोभतेत्यर्थः । प्रियतमसाहचर्यादिति भावः । तद्वचनं तु किमपि न श्रुतमिति वाक्यशेषः । अत्र लाक्षारूपकारणं विनाप्यरुणिमारूपकार्योत्पत्तिकथनाद्विभावनालंकारः । तथा कान्तारसंचाररूपकारणसद्भावेऽपि वैवर्ण्यरूपकार्यानुत्पत्तिकथनाद्विशेषोक्तिरित्यनयोः परस्परनैरपेक्ष्यात्संसृष्टिः स्पष्टा । वसन्ततिलकावृत्तम् ॥

सीतापतेः किसलयैः परिकल्प्य तल्पं
संचार्य सत्वदमनाय निशासु दृष्टिम् ।
धन्वी तदङ्घ्रिभजनादिव पुण्यलभ्या-
दस्वप्न एव वनवर्त्मनि लक्ष्मणोऽभूत् ॥ ५६ ॥

**सीतेति** । धन्वी धनुर्धरः । व्रीह्यादित्वादिनिः । लक्ष्मणो वनवर्त्मनि कान्तारमार्गे निशासु रात्रिषु सीतापतेः सीतासमेतस्य श्रीरामस्येत्यर्थः । किसलयैः पल्लवैस्तल्पं शय्यां परिकल्प्य निर्माय । सुखशयनार्थमिति भावः । तथा सत्त्वदमनाय । दुष्टजन्तून्दमयितुमित्यर्थः । 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । दृष्टिं संचार्य दिक्षु प्रसार्य । पुण्यलभ्यात्पुण्यैर्व्रतोपवासादिसुकृतविशेषैर्लभ्यात्प्राप्यात्तदङ्घ्रिभजनात्तस्य श्रीरामस्याङ्घ्रिभजनाच्चरणसेवाया इवेति हेतूत्प्रेक्षा । अस्वप्नो निर्निद्रः । जागरूक एवेति यावत् । देवश्चेति गम्यते । एवकारः क्षणमात्रनिद्रासंबन्धमपि व्यवच्छिनत्ति । अभूज्जातः । महात्मनस्तत्रभवतः श्रीरामस्य पादसेवाया देवभूयप्रापकत्वादिति भावः । अस्वप्न इत्यत्र अभिधायाः प्रस्तुतैकगोचरत्वादेव विषयशब्दशक्तिमूलो ध्वनिः । स चोत्प्रेक्षानिर्वाहकत्वाद्वाच्यसिद्ध्यङ्गम् ॥

**एवं सुमन्त्रनिवेदितपुत्रचरित्रश्चरमगिरिशिखरजुषि निगमवपुषि ज्योतिषि हृदयलग्नशोकशल्यां कौसल्यां समाश्वास्य नरपतिरित्थमकथयत् ।**

**एवमिति** । एवमुक्तरीत्या सुमन्त्रेण निवेदितं विज्ञापितं पुत्रयो रामलक्ष्मणयोश्चरित्रं व्यापारो यस्य स तथोक्तः । सुमन्त्रमुखादाकर्णितपुत्रस्नुषावृत्तान्त इत्यर्थः । नरपतिर्दशरथो निगमवपुषि त्रयीतनौ ज्योतिषि सूर्ये चरमगिरिशिखरजुष्यस्ताचलकूटभाजि । अस्तंगते सतीत्यर्थः । हृदयलग्नं शोक एव शल्यं शङ्कुर्यस्यास्ताम् ।

१. 'आश्वास' इति पाठः.

दुरन्तशोकाक्रान्तान्तःकरणामित्यर्थः । कौसल्यां समाश्वास्य तत्कालोचितैर्वचनैरुपला-ल्येत्थं वक्ष्यमाणरीत्याकथयदवोचत् ॥

तत्प्रकारमेवाह—

**पुरा खलु सरयूरोधसि विविधतरुनिवहपिहितदिवस्पतौ[1] मृग-यास्पृहया कमपि समयमगमम् ।**

**पुरेति** । पुरा पूर्वकाले । खलुशब्दो वाक्यालंकारे । विविधतरुनिवहेन नाना-विधवृक्षसंदोहेन पिहितदिवस्पतौ छादितसूर्ये । सूर्यतेजसोऽप्यनवकाशप्रद इति तरूणां सान्द्रत्वातिशयोक्तिः । सरयूरोधसि सरयूनदीतीरे मृगयास्पृहयाखेटकेच्छया कमपि समयम् । कस्मिंश्चित्काल इत्यर्थः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अगममगच्छम् ॥

ततः किमत आह—

**तत्र ।**

**तत्रेति** । तत्र सरयूरोधसि ॥

> **तोयादानसंदान[2]पुष्करगजभ्रान्त्या तपस्वी मया**
> **विद्धः कश्चन शब्दवेधनविदा पाथः सरय्वां[3] हरन् ।**
> **तत्पित्रोर्जरदन्धयोरनुमृतिं कर्तुं चितिं[4] चिन्वतोः**
> **शापो मय्यपतद्भवानपि सुतप्रेम्णा प्रणश्येदिति ॥ ५७ ॥**

**तोयेति** । तोयादानेनोदकग्रहणेन सनादं सबृंहितं पुष्करं शुण्डाग्रं यस्य स तथोक्तो यो गजः स इति भ्रान्त्या भ्रमेण । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः । शब्दवेधनविदा शब्दानुसारेण । लक्ष्यसंप्रहाराभिज्ञेनेत्यर्थः । मया सरय्वां नद्यां पाथ उदकम् । 'कबन्धमुदकं पाथः' इत्यमरः । हरन्पित्रर्थं कमण्डलुना सशब्दं संगृह्णन्कश्चन तपस्वी मुनिपुत्रः शरेण विद्धः संप्रहृतः । ततः किमत आह— **तदिति** । जरन्तौ जराजीर्णौ तौ च तौ अन्धौ च तयोः 'जराजीर्णौ जरन्नपि' इत्यमरः । विशेषणयोरपि मिथो विशेषणविशेष्यभावविवक्षायाम् 'विशेषणं विशेष्येण बहुलम्' इति समासः । अत एवानुमृतिं पुत्रमनुसृत्य स्मरणं कर्तुं चितिमग्निदीप्तकाष्ठ-संचयं चिन्वतोः प्रार्थयतोः । न चात्रात्मघातदोषः । 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजलसंपातैर्मरणं प्रविधीयते ॥' इति स्मरणात् । तस्य तपस्विनः पित्रोर्मातापित्रोः 'पिता मात्रा' इत्येकशेषः । शापो मय्यपतत्पपात । अगर्जिताशनि-वदिति भावः । किमिति । भवांस्त्वमपि सुतप्रेम्णा पुत्रस्नेहेन प्रणश्येन्म्रियादिति । 'शेषे प्रथमः' इति प्रथमः । शार्दूलविक्रीडितं वृत्तम् ॥

शरविद्धस्तपस्वी किं जात इत्यत आह—

> **अहं वैश्यस्य शूद्रायां जातस्तस्मान्न संभवेत् ।**
> **ब्रह्महत्येति मामुक्त्वा स्वर्गतो दुर्गतो मुनिः ॥ ५८ ॥**

---

१. 'विवस्वति वेतस्वति' इति पाठः. २. 'निदान' इति पाठः. ३. 'सरय्वा हरन्' इति पाठः. ४. 'चितां' इति पाठः.

अहमिति । अहं वैश्यस्य वणिजः शूद्रायां शूद्रजातीयाङ्गनायाम् । 'शूद्रा नन्ना स्त्रिरङ्गना' इत्यमरः । 'शूद्रा चामहत्पूर्वा जातिः' इत्युक्तत्वान्न ङीप् । जातः करणः । न तावद्वैश्योऽप्यस्मीत्यर्थः । 'वैश्यात्करणः शूद्रायाम्' इति याज्ञवल्क्यः । 'शूद्राविशोस्तु करणः' इत्यमरश्च । तस्मात्कारणाद्ब्रह्महत्या न संभवेत् । कुतो ब्रह्महत्येति भावः । इति मां प्रत्युक्त्वा दुर्गतः शरसंप्रहारदुरवस्थाक्रान्तो मुनिः स्वर्गतः स्वर्लोकं गतः । 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इत्यमरः । तथा च श्रीरामायणे—'ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न द्विजातिरहं राजन्माभूत्ते मनसो व्यथा ॥ शूद्रायामस्मि वैश्येन जातो जानपदाधिप ॥' इति ॥

**तदवश्यं वश्य एवास्मि मृत्योरिति स्मृतिपथगतराम एव विरराम ।**

तदिति । तत्तस्मान्मुनिशापकारणादवश्यं निश्चितं मृत्योरन्तकस्य वश्यो वशं गत एवास्मि । नात्र संदेह इत्येवकारार्थः । इत्युक्त्वेति शेषः । स्मृतिपथगतः स्मरणगोचरो रामो यस्य स तथोक्तः सन्नेव । राममनुशोचन्नेवेत्यर्थः । विरराम निर्वचनोऽभूत् । कण्ठगतप्राणोऽभूदित्यर्थः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥

**मुनिशापकृतोत्पत्तिर्विपत्तिर्निष्प्रतिक्रिया ।**
**ततो दशरथायाशु दिदेश दशमीं दशाम् ॥ ५९ ॥**

मुनीति । ततो विरामानन्तरं मुनिशापेनोक्तरूपेण कृतोत्पत्तिर्यस्याः सा तथोक्ता मुनिशापजनितेत्यर्थः । निष्प्रतिक्रिया प्रतिक्रियारहिता । उपायान्तरैरपरिहार्येत्यर्थः । विपत्तिरापत् । दशरथाय । दशानां पूरणी दशमी । 'तस्य पूरणे डट्' इति डट् । 'नान्तादसंख्यादेर्मट्' इति डटो मडागमः । 'टिड्ढाणञ्–' इत्यादिना ङीप् । तां दशमीं दशां मरणावस्थां दिदेश दत्तवती । अमोघमुनिशापानुसारेणैवायं ममारेत्यर्थः । मन्मथावस्थास्वस्या दशमत्वादित्थं निर्देशः । तदुक्तम्—'दङ्मनःसङ्गसंकल्पो जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥' इति दशरूपके ॥

**नाक्रान्तस्त्रिदिवः परैः सुमनसां कान्ता न वन्दीकृता**
**नाकीर्णं पुरुहूतशासनधरैः साकेतबाह्याङ्गणम् ।**
**नादिष्टाः सचिवाश्च भूतलपरित्राणाय यद्यप्यसौ**
**नाकं शोकवशादगाद्दशरथो नास्थां वहन्वाहने ॥ ६० ॥**

नेति । अत्र यद्यपीति पदं सर्वत्रानुसंबध्यते । यद्यपि विचार्यमाणे परैः शत्रुभिस्त्रिदिवः स्वर्गो नाक्रान्तो नास्कन्दितः । तथा यद्यपि सुमनसां देवानाम् । 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति वैजयन्ती । कान्ता न बन्दीकृता नोपगृहीताः । शत्रुभिरिति शेषः । 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः । तथा यद्यपि पुरुहूतशासनधरैरिन्द्राज्ञाकरैर्दूतैः साकेतबाह्याङ्गणमयोध्यापुरबहिश्चत्वरम् । 'स्यात्साकेतमयोध्यायाम्' इत्यमरः । नाकीर्णं न संकीर्णम् । इन्द्राज्ञया निजाह्वानार्थ-

---

१. 'नरपतिः श्रुतिमार्गगत' इति पाठः. २. एतदनन्तरम् 'किं बहुना' इति क्वचित्. ३. 'नाक्रान्तं त्रिदिवम्' इति पाठः.

मागतैर्देवदूतैर्न संकुलमित्यर्थः । तथा यद्यपि भूतलपरित्राणाय भूमण्डलसंरक्षणार्थं सचिवा मन्त्रिणो नादिष्टा नाज्ञप्ताः । राज्ञो देशान्तरगमने भूभारस्य सचिवेषु निक्षिप्तत्वादिति भावः । तथापीति शेषः । असौ दशरथः शोकवशात्पुत्रविरहजनितशोकायत्तत्वाद्धेतोः । 'वश आयत्ततायां च' इत्यमरः । वाहने रथ आस्थामादरं न वहन्नगृह्णन्नेव । वाहनं विहायैवेत्यर्थः । नाकं स्वर्गम् । 'आकाशे त्रिदिवे नाकः' इत्यमरः । अगात्प्राप । पूर्वं त्रिदिवस्य पराक्रमादिनिमित्तसंभवे तत्र गच्छति । इदानीं तु तादृङ्निमित्ताभावेऽपि तत्रागादित्याश्चर्यमित्यर्थः । अतएव विभावनालंकारः । पुत्रशोकातुरया स्थूलशरीरं विहाय सूक्ष्मशरीरेण स्वर्लोकं जगामेति तात्पर्यम् । शार्दूलविक्रीडितं वृत्तम् ॥

**अथ दशरथप्रशंसामांसलैः कैकेयीनिन्दाकन्दलितै रामगुणकीर्तनगुणितैरवरोधवधूजनपरिदेवनारवैर्मुखरितेषु दिङ्मुखेषु ।**

**अथेति** । अथ राज्ञः स्वर्लोकगमनानन्तरं दशरथस्य प्रशंसया महाराजोऽयं सत्यसंधः स्वर्लोकं गत इत्याद्युपश्लोकेन मांसलैः प्रचुरैः । तद्भूयिष्ठैरित्यर्थः । सिध्मादित्वान्मत्वर्थीयो लच्प्रत्ययः । कैकेय्या निन्दया पापिष्ठयानया रामे प्रव्राजिते तद्विरहशोकातुरो राजा कालधर्मं गत इत्यादिगर्हणेन कन्दलितैः समुद्भूतै रामस्य गुणकीर्तनेन गुर्वाज्ञापरतन्त्रः सत्यधर्मपरायणोऽयं मुनिव्रतचारी वनं गत इत्यादिसद्गुणवर्णनेन गुणितैरावर्तितैरवरोधवधूजनपरिदेवनारवैरन्तःपुरस्त्रीजनविलापाक्रन्दैर्दिङ्मुखेषु हरिदन्तरालेषु । वदनेषु चेति गम्यते । मुखरितेषु वाचालितेषु । प्रतिध्वनितेषु सत्स्वित्यर्थः ॥

ततः किं जातमित्यत आह—

**अभूदराजकम्लानसद्गणं गगनाङ्गणम् ।**
**आलोक्येव तदा शान्तमशेषं च महीतलम् ॥ ६१ ॥**

**अभूदिति** । तदा तस्मिन्समये । न विद्यते राजा चन्द्रो यस्य स तथोक्तः । कृष्णपक्षरात्रित्वाच्चन्द्ररहित इत्यर्थः । शैषिकः कप्प्रत्ययः । अतएव म्लानस्तेजोहीनः सद्गणो नक्षत्रमण्डलं यस्य तत्तथोक्तं गगनाङ्गणं नभःस्थलमालोक्य दृष्ट्वेवेत्युत्प्रेक्षा । अशेषं कृत्स्नं महीतलं भूमण्डलं च । अराजको दशरथरहितः । अतएव म्लानः सद्गणः साधुजननिवहो यस्य तत्तथोक्तं सच्छान्तं स्तिमितमभूत् । 'वा दान्त—' इत्यादिना निपातः । चन्द्राहित्येन गगनं यथा तेजोहीननक्षत्रकं भवति, तथा दशरथमहाराजराहित्येन भूतलमपि खिन्नसाधुजनमभूदित्यर्थः । 'राजा प्रभौ नृपे चन्द्रे क्षत्रे क्षत्रियशक्रयोः' इति विश्वः । 'सन्सत्ये विदुषि श्रेष्ठे साधौ भवति च त्रिषु । सत्क्लीबमृक्षे' इति नानार्थरत्नमालायाम् । अत्रोत्प्रेक्षाश्लेषयोः सापेक्षत्वात्संकरः ॥

---

१. 'द्विगुणितैः' इति पाठः.

**ततः प्रभाते वसिष्ठवचसा संचिवास्तैलद्रोण्यां निक्षिप्य क्षितिपतेस्तनुं क्षिप्रमेव भरतमकथितदशरथकथा एव आनयतेति दूतान्केकयेषु प्रेषयामासुः।**

**तत इति।** ततः परिदेवनानन्तरं प्रभाते प्रातःकाले सचिवा मन्त्रिणः। 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः। वसिष्ठस्य वचसा भरतागमनपर्यन्तमेतच्छरीरं रक्षन्त्विति नियोगवचनेन क्षितिपतेः परेतस्य दशरथस्य तनुं कलेवरं तैलद्रोण्यां तैलपूरितकाष्ठाम्बुवाहिन्यां निक्षिप्य। उच्छूनत्वादिना वैरूप्याभावार्थमिति भावः। 'द्रोणी काष्ठाम्बुवाहिनी' इत्यमरः। अकथितदशरथकथा अनिवेदितदशरथवृत्तान्ताः सन्त एव। अन्यथा कार्यविघातापत्तेरिति भावः। भरतं क्षिप्रमविलम्बितमेवानयत प्रापयतेति। आदिश्येति शेषः। दूतान्संदेशहारिणः केकयेषु देशेषु प्रेषयामासुः प्रहितवन्तः। 'स्यात्संदेशहरो दूतः' इत्यमरः॥

**तेऽपि जितपवनजवनवाजिसंकोचितपथास्तुरगपतिपुरे दुःस्वप्नदूयमानमानसं भरतमभिवन्द्य गुरुनियोगं व्यजिज्ञपन्।**

**तेऽपीति।** तेऽपि दूताश्च जितपवनाः पवनाधिकवेगा जवना जवशीलाश्च। 'जुचङ्क्रम्य—' इत्यादिना युच्। ये वाजिनोऽश्वास्तैः संकोचितः संकोचं प्रापित इव पन्था येषां ते तथोक्ताः सन्तः। तादृगश्ववेगवशात्संकुचिततया प्रतीयमानमार्गदैर्ध्या इत्यर्थः। तुरगपतेरश्वपतेः केकयस्य पुरे पट्टणे दुःस्वप्नेन स्वपितुर्दुरवस्थाशंसिस्वप्नेन दूयमानं परितप्यमानं मानसं यस्य तं तादृशं भरतमभिवन्द्य नमस्कृत्य गुरोर्वसिष्ठस्य नियोगं शीघ्रमागन्तव्यमित्येवंरूपामाज्ञां व्यजिज्ञपन्विज्ञापयामासुः॥

**सोऽयं मातामहेन युधाजिता चानुज्ञातः कतिपयैरेव दिनैरनिमित्तसंपातेन सातङ्कः साकेतमाससाद।**

**सोऽयमिति।** सोऽयं भरतो मातामहेन मातुः पित्रा केकयेन युधाजिता मातुलेन चानुज्ञातः कतिपयैरेव दिनैः कैश्चिदेवाहोभिः। मातुलगृहनिर्गमनदिनमारभ्याष्टमे दिन इत्यर्थः। तथा रामायणे—'अद्य मे सप्तमी रात्रिश्च्युतस्यार्यकवेश्मनः' इति कैकेयीं प्रति भरतवचनम्। अनिमित्तसंपातेन दुर्निमित्तपरम्परया सातङ्कः सभयसंभ्रमः सन्साकेतमयोध्यामाससाद प्राप॥

**अतिचकितमतिः पुरैव पश्यन्पुरमयथापुरचारपौरवर्गम्।**
**न्यविशत भरतः परीतदूतः पितुर्भवनं पितृकाननादनूनम्॥ ६२॥**

**अतीति।** परीतदूतः परिवेष्टितदूतो भरतः। पुराभावमनतिक्रम्य यथापुरं

---

१. 'सचिवाः' इति नास्ति क्वचित्. २. 'निक्षिप्य क्षिप्रमेव' इति पाठः. ३. 'कथमेव' इति पाठः. ४. 'यवनहय' इति पाठः. ५. 'दुःस्वप्नदूयमान' इति पाठः. ६. 'निदेशम्' इति पाठः. ७. 'अतिनिमित्तभूतसातङ्कः' इति पाठः. ८. 'पितृभवने पितृकाननादनूने' इति पाठः.

यथापूर्वम् । यथार्थेऽव्ययीभावः । 'स नपुंसकम्' इति नपुंसकत्वम् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । तन्न भवतीत्ययथापुरम् । ततश्चारशब्देन 'सुप्सुपा—' इति समासः । अयथापुरश्चारः प्रचारः परिपाटी यस्य स तथोक्तः । पौराणां चार आचारः प्रवृत्तिर्यस्य तस्मिन्स तथोक्तम् । श्रीरामवनवासराजविपत्तिभ्यां विषण्णजनसंकुलमित्यर्थः । पुरमयोध्यां पुरा निकट एव पश्यन्नवलोकयन् । 'स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा' इत्यमरः । अत एवातिचकितमतिरत्यन्तभयसंभ्रान्तान्तःकरणः सन् । पितृकाननाच्छ्मशानादनूनमन्यूनं भूताक्रोशभूयिष्ठत्वात्तत्कल्पम् । पितुर्दशरथस्य भवनं गृहं न्यविशत प्रविष्टवान् । 'श्मशानं स्यात्पितृवनम्' इत्यमरः । पुष्पिताग्रावृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥

**स पितरमनवेक्ष्य तत्र मातुः सदनगतः प्रणिपत्य तामपृच्छत् ।**
**क नु मम गतवान्पितेति सैषा परुषतरं भरताय वाचमूचे ॥ ६३ ॥**

**स इति ।** स भरतस्तत्र भवने पितरं दशरथमनवेक्ष्यादृष्ट्वा मातुः कैकेय्याः सदनगतो गृहं प्रविष्टः सन् तां मातरं प्रणिपत्य गुरुजनादरतत्परत्वान्नमस्कृत्य मम पिता दशरथः क नु कुत्र गतवानित्यपृच्छत्पृष्टवान् । अथ सैषा कैकेयी भरताय । भरतं प्रतीत्यर्थः । 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी । परुषतरमत्यन्तकर्णकठोरं यथा तथा वाचमूच उक्तवती । वृत्तं पूर्ववत् ॥

तत्प्रकारमेवाह—

**वनचर इव साकं मैथिलीलक्ष्मणाभ्यां**
**पितृविधिमभिरोद्धुं प्रस्थितो रामभद्रः ।**
**तदनु तव पिताभूत्कालधर्मानुयात-**
**स्त्वमनुभव यथेच्छं निःसपत्नां धरित्रीम् ॥ ६४ ॥**

**वनचर इति ।** रामभद्रो मैथिलीलक्ष्मणाभ्यां साकं पितृविधिं पितृनियोगमभिरोद्धुमनुवर्तितुं वनचरो मुनिरिव प्रस्थितो गतः । मुनिवेषधारी सन् त्वं गच्छेति पित्राज्ञप्तः सन् अरण्यं गत इत्यर्थः । तदनु तदनन्तरमसौ तव पिता दशरथः कालधर्मं मरणमनुयातोऽनुगतः । मृत इत्यर्थः । 'स्यात्पञ्चता कालधर्मः' इत्यादि मृतिपर्यायेष्वमरः । अतस्त्वं निःसपत्नां निष्कण्टकां धरित्रीं यथेच्छं स्वच्छन्दमनुभव । परिपालयेत्यर्थः । मालिनीवृत्तम् ॥

**मयूरीव महानागं कैकेयी केकयात्मजा ।**
**भारत्या भरतं चक्रे परिक्षुभितमानसम् ॥ ६५ ॥**

**मयूरीति ।** केकयात्मजा कैकेयी भारत्या उक्तरूपया वाचा भरतम् । मयूरी बर्हिणी । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । केकया स्ववाण्या । 'केका वाणी मयूरस्य' इत्यमरः । महानागं महाभुजङ्गमिव परिक्षुभितमानसं क्षुब्धहृदयं चक्रे ।

---

१. 'अनुकूलः' इति पाठः.

'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इत्यभिधानात् । मयूर्यास्तद्विरोधित्वाद्विति भावः । पूर्णोपमालंकारः ॥

**तदनु भरतश्चिरतरं विलप्य विलुप्यमानविवेकः कैकेयीमकथयत् ।**

**तदन्विति ।** तदनु कैकेयीवचनानन्तरं भरतश्चिरतरं बहुकालं विलप्य । पितृभ्रात्रुद्देशेन परिदेवनं कृत्वेत्यर्थः । विलुप्यमानो लोपं प्राप्नुवन्विवेको यस्य स तथोक्तः । पितृमरणभ्रातृप्रव्रजनश्रवणलुप्तबुद्धिस्फुरणतया कर्तव्याकर्तव्यविचारविधुर इत्यर्थः । कैकेयीमकथयदवोचत् ॥

तदेव विवृणोति—

**परिणतिपरुषाणां पाप्मनां संनिपाता-**
**न्न हि भवसि चतुर्णां सा त्वमस्माकमम्बा ।**
**तदिह तनयवत्यः संलपिष्यन्ति कामं**
**श्रुतिपुटरचितार्तेस्त्वां सवित्रीमकीर्तेः ॥ ६६ ॥**

**परिणतीति ।** हे कैकेयि, परिणतिपरुषाणां पर्यन्तदुर्दशानुसंधायकानां पाप्मनामेवंविधपापानाम् । 'अस्त्री पङ्कं पुमान्पाप्मा' इत्यपरः । संनिपातात्सङ्घाताद्धेतोः । सा तथाभूता त्वं चतुर्णां श्रीरामादीनामस्माकं अम्बा माता न भवसि हि न जायसे खलु । ईदृक् पापिष्ठा त्वमस्माकमम्बा भवितुं नार्हसीत्यर्थः । तत्तस्मात्कारणात् । इहास्मिँल्लोके तनयवत्यः पुत्रवत्यः स्त्रियः । तथाभूतानामेव परिज्ञानसंभवादिति भावः । त्वां श्रुतिपुटयोः श्रोत्रगोलकयो रचिता विहितार्तिः पीडा यया सा तथोक्ता तस्याः । श्रोतॄणामत्यन्तखेदकारिण्या इत्यर्थः । अकीर्तेर्दुष्कीर्तेः सवित्रीमम्बां काममत्यन्तं संलपिष्यन्ति । पापाचारेयं किमेतदकृत्यमकरोत् । यतो दुर्निवारापकीर्तिमूलमभूदित्यन्योन्यसंभाषणं करिष्यन्तीत्यर्थः । 'संलापो भाषणं मिथः', इत्यमरः । 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति भगवद्वचनादिति भावः । अत्र कैकेय्या निजमातृत्वमपह्नुत्याकीर्तिमातृत्वस्यारोपादपह्नवभेदः । एतदादिश्लोकचतुष्टयं मालिनीवृत्तम् ॥

**तदनु तन्मुखादाकृष्टदृष्टिरनुजमिदमवादीत् ।**

**तदन्विति ।** तदनु तदनन्तरं तन्मुखात्कैकेयीवदनादाकृष्टापसारिता दृष्टिर्यस्य स तथोक्तः । ईदृगपकारकारिण्या मुखं किमवलोकनीयमिति जुगुप्सया तदपनीतचक्षुः सन्नित्यर्थः । अनुजं शत्रुघ्नं प्रतीदं वचनमवादीदवोचत् ॥

तदेव विवृणोति—

**अविरलमिनवंशं दग्धुमाश्रित्य तापं**[1]
**जनमनसि किरन्त्यां हन्त सत्यां भवत्याम् ।**
**अनुसवनमपापैर्दैवता पूज्यमाना**
**वहति कथमिदानीमाश्रयाशाभिधानम् ॥ ६७ ॥**

---

१. 'अविकलम् इति' पाठः।

**अविरलमिति** । भातीति भवत्यां पूज्यायाम् । 'भातेर्डवतुः' इत्यौणादिको डवतुप्रत्ययः । 'उगितश्च' इति ङीप् । सत्यां साध्व्याम् । अस्यां कैकेय्यामिति सोल्लुण्ठनोक्तिः 'सती साध्वी पतिव्रता' इत्यमरः । अविरलम् । सान्द्रवृद्धमिति यावत् । 'अविकलम्' इति पाठे वैकल्यरहितम् । अक्षतमित्यर्थः । इनवंशं सूर्यवंशं वेणुवनं च गम्यते । दग्धुं नाशयितुं भस्मीकर्तुं च । आश्रित्याधिष्ठाय । जनानां मनसि हृदये तापं संतापमौष्ण्यं च किरन्त्यां विक्षिपन्त्याम् । प्रवर्तयन्त्यां सत्यामित्यर्थः । वंशविनाशकारिण्यास्तस्याः सज्जनमनःसंतापहेतुत्वादिति भावः । सवनेष्वनुसवनम् । प्रातरादिसवनत्रयेऽपीत्यर्थः । विभक्त्यर्थेऽव्ययीभावः । अपापैः सुकृतिभिर्यजमानैः पूज्यमाना देवता । पावक इत्यर्थः । इदानीमस्मिन्नवसर आश्रयं काष्ठगुल्मादिकमश्नातीत्याश्रयाशः स इत्यभिधानं नामधेयं कथं वहति प्राप्नोति । न वोढव्यमित्यर्थः । सति प्रतिपक्षे स्वप्रतिष्ठाया अनिर्वाहत्वादिति भावः । 'आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः' इत्यमरः । हन्त अप्रच्युतास्मद्वंशस्येयं प्रच्युतिं संपादितवतीति खेद इत्यर्थः । अत्रोपमेयस्याधिक्यकथनापेक्षयोपमानस्य पावकस्याश्रयाशाभिधानवहनाक्षेपात्प्रतीपालंकारः । 'यत्रोपमानस्याक्षेपः कैमर्थक्येन कथ्यते । यद्वोपमेयभावोऽत्र प्रतीपः स्यादलंकृतिः ॥' इति लक्षणात् ॥

पुत्रपीडनमतिदुःसहदुःखकारणमिति दर्शयितुमितिहासमाह—

अविरतकृषितान्तं[1] वत्समालोक्य धेनो-
रपि तनुजशतानां[2] मातुरस्रं बभूव ।
तदिह तनयशोकं संतरेदेकपुत्रा
कथय कथमिदानीं कोसलेन्द्रस्य पुत्री ॥ ६८ ॥

**अविरतेति** । अविरताविच्छिन्ना । मध्याह्नपर्यन्तमिति यावत् । तया कृष्या कर्षणेन तान्तं ग्लानं खिन्नं वत्सं तनयौ । बलीवर्दावित्यर्थः । जातावेकवचनम् । स्ववंश्यत्वाद्वत्सत्वेन निर्देशः । 'वत्सो ना कुटजे वर्षे तर्णके तनयादिके' इति वैजयन्ती । आलोक्य दृष्ट्वा । समं तुल्यं जायन्त इति समजाः पुत्रास्तेषां शतानां मातुः । अनेकपुत्रजनन्या अपीत्यर्थः । धेनोः कामधेनोः गगनस्थाया इति शेषः । अस्रमश्रु बभूव । तनयक्लेशजनितशोकवशाद्रुदितवतीत्यर्थः । 'रोदनं चास्रमश्रु च' इत्यमरः । ततस्तस्मात्कारणादेकः श्रीरामः पुत्रो यस्याः सा तथोक्तैकपुत्रा कोसलेन्द्रस्य पुत्री कौसल्या । इहास्मिंल्लोक इदानीं तनयशोकं पुत्रविरहजनितशोकम् । अतिदुस्तरमिति भावः । कथं केनोपायेन संतरेत्तरितुं शक्नुयात् । न केनापि संतरेदेवेत्यर्थः । कथय ब्रूहीति विषादाभिनयवचनम् । बहुपुत्रसंपन्नापि स्वर्लोकनिवासिन्यपि कामधेनुरपि साक्षादनात्मजस्यापि वत्सस्य क्लेशमसहमाना शोचितवती । एवंभूता कौसल्या शोचिष्यतीति किमु वक्तव्यमित्यर्थः । तथा श्रीरामायणम्—'यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् । किं पुनर्या विना रामं कौसल्या वर्तयिष्यति ॥ एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता ॥' इति । अत्र कामधेन्वपेक्षयासारायाः

१. 'तृषितान्तम्' इति पाठः. २. 'तनुज' इति पाठः.

कौसल्यायाः शोकसंतारणाशक्तत्वस्य कैमुत्यन्यायेन कथितत्वादर्थापत्तिरलंकारः । 'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथापतेत् । कैमुत्यन्यायतः सा स्यादर्थापत्तिरलंक्रिया ॥' इति लक्षणात् ॥

अपिबदियममन्त्रे कालयोगान्नरेन्द्रे
वरयुगरसनाभ्यां प्राणवायुं तदीयम् ।
अपनगरममुष्या वर्तनं युक्तरूपं
पितृवनवसुमत्यां क्वापि वल्मीकवत्याम् ॥ ६९ ॥

अपिबदिति । इयं कैकेयी भुजगी च प्रतीयते । नरेन्द्रे राज्ञि दशरथे विषवैद्ये च । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते' इति विश्वः । कालयोगात्कालवशात् । न विद्यते मन्त्र उपायचिन्तनं भुजगस्तम्भनमन्त्रश्च यस्य तस्मिन्नमन्त्रे । पूर्वं मन्त्रसंपन्नत्वेऽपि कालवशात्तद्विहीने सतीत्यर्थः । वरयुगमेव रसने ताभ्यां तदीयं नरेन्द्रसंबन्धिनम् । 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्ययः । प्राणवायुमपिबत्पीतवती । वरयुगापदेशेन नरेन्द्रं निहतवतीत्यर्थः । 'पाघ्राध्मा-' इत्यादिना पिबादेशः । अतोऽमुष्याः कैकेय्याः । नगरादपसृत्यापनगरम् । अयोध्यानगरं वर्जयित्वेत्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावसमासः । 'अव्ययीभावश्च' इति नपुंसकत्वम् । वल्मीकवत्यां भुजगीनिवासोचितवामलूरप्रचुरायाम् । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः । क्वापि कस्यांचित्पितृवनवसुमत्यां श्मशानभुवि वर्तनमवस्थानं युक्तरूपं प्राशस्त्येन युक्तम् । 'प्रशंसायां रूपप्' इति रूपप् । दुराचारेयं नगरान्निर्वासनीयेत्यर्थः । अत्र वरयुगे रसनात्वरूपणात्कैकेय्या भुजगीत्वप्रतीतेः श्लेषसंकीर्णैकदेशवर्ति सावयवरूपकम् । यथा पूर्ववाक्यार्थस्योत्तरवाक्यार्थं प्रति हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमित्यनयोरङ्गाङ्गिभावेन संकरः ॥

एषा निकृष्टमतिरात्मगुणोचितेषु
वंशेषु सत्सु बहुधा पिशिताशनानाम् ।
माकन्दशालिनि वने विषवल्लरीव
हा हन्त केकयकुले कथमाविरासीत् ॥ ७० ॥

एषेति । निकृष्टमतिर्नीचबुद्धिरेषा कैकेयी आत्मगुणोचितेषु निजदुर्गुणानुगुणेषु पिशिताशनानां राक्षसानां वंशेषु बहुधा बहुप्रकारेण सत्सु विद्यमानेषु सत्सु । माकन्दैश्चूतवृक्षैः शालतेऽभीक्ष्णमिति माकन्दशाली । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । तस्मिन्वन उद्याने विषवल्लरी विषमञ्जरीव । 'वल्लरी मञ्जरी समे' इत्यमरः । केकयस्य राज्ञः कुले । सकललोकश्लाघ्ये महाराजवंश इत्यर्थः । कथं कुत आविरासीदुदिताभूत् । तादृङ्महाराजकुलेऽस्या उत्पत्तिरनुचितेत्यर्थः । उपमालंकारः । वसन्ततिलकावृत्तम् ॥

जननीतिविहीना मे जननीति स धर्मवित् ।
निरयान्निरयाद्वीरो निरयादिव सानुजः ॥ ७१ ॥

जननीतीति । वीरो देयदानादिषु वीर्यशाली धर्मविद्धर्मज्ञः स भरतो मे मम

जननी माता जनानां नीत्या मर्यादया विहीनेति। उक्त्वेति शेषः। सानुजः। सशत्रुघ्नः सन्नित्यर्थः। निरयात्। रलयोरभेदान्निलयात्। कैकेयीगृहान्निरयान्नरकादिव। 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः। निरयान्निरगात्। निःपूर्वादयगताविति धातोर्लङ्। उपमानुप्रासयोः संसृष्टिः॥

**तत्र[1] सामात्यः समुपेत्य[2] पत्युश्चिताधिरोहणम[3]भिलषन्तीं कौसल्यां भरतः शपथशतैर्निवार्य वसिष्ठादिष्टेन[4] पथा दशरथाय सदा याग-शीलाय[5] यायजूकाभिप्रेतं प्रेतकृत्यमकरोत्[6]।**

**तत्रेति।** तत्र तस्मिन्समये भरतः सामात्यः समन्त्रिवर्गः सन् समुपेत्य समीपमागत्य। कौसल्याया इति शेषः। पत्युर्भर्तुर्दशरथस्य चिताधिरोहणमनुगमनमभिलषन्तीं कामयमानाम्। 'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता॥' इति स्मृत्या तस्याः पतिव्रताधर्मत्वादिति भावः। कौसल्यां शपथशतैः। 'कृता शास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन। सत्यसंधः सतां श्रेष्ठो यस्यार्योऽनुमते गतः॥' इत्यादिश्रीरामायणोक्तानेकशपथैरित्यर्थः। निवार्य चिताधिरोहणाभिनिवेशान्निर्वर्त्य। वसिष्ठेन निजकुलाचार्येण महर्षिणादिष्टेन पथान्त्येष्टिमार्गेण सदा यागशीलाय दशरथाय। यायजूकोऽश्वमेधादिबहुयज्ञकर्ता। 'इज्याशीलो यायजूकः' इत्यमरः। 'यजजपदशां यङः' इति यजतेर्यङन्तादूकप्रत्ययः। तस्याभिप्रेतमभिमतं प्रेतकृत्यं दहनादिमृतसंस्कारमकरोत्। 'मृतः प्रेतः परासुश्च' इति वैजयन्ती॥

ततः किं जातमित्यत आह—

**ताते पितृवनं याते यातुं भ्रातृवनं तथा।**
**भरतः प्रार्थयामास प्राञ्जलिः प्रकृतीः कृती॥ ७२॥**

**तात इति।** कृतमनेन कृती कुशलः। कृतकृत्य इत्यर्थः। 'इष्टादिभ्यश्च' इतीनिप्रत्ययः। भरतस्ताते पितरि दशरथे पितृवनं श्मशानं याते गते सति। परलोकगामिनि सतीत्यर्थः। तथा तेन प्रकारेण स्वयं भ्रातृवनम्। श्रीरामाधिष्ठितं दण्डकावनमित्यर्थः। यातुं गन्तुं प्राञ्जलिः कृताञ्जलिः सन्। 'कुगतिप्रादयः' इति समासः। प्रकृतीरमात्यान्। 'प्रकृतिः सहजे योनावमात्ये परमात्मनि' इति विश्वः। प्रार्थयामास याचितवान्॥

तदनन्तरवृत्तान्तमाह—

**अथ[7] ताभ्यां सुमित्राकौसल्याभ्यामन्तःपुरजनेन च साकमनुनीतो भरतो भवनमभजत।**

**अथेति।** भरतोऽनुनीतो वसिष्ठसुमन्त्रादिभिः प्रार्थितः सन्। ताभ्यां[8] मातृत्वेन

---

१. 'ततः इति पाठः.' २. 'समुपेत्य' इति नास्ति क्वचित्. ३. 'चितारोहणम्' इति पाठः. ४. 'अधिष्ठितेन' इति पाठः. ५. 'सदा यागशीलाय' इति नास्ति क्वचित्. ६. 'प्रेतकृत्यमशेषम्' इति पाठः. ७. 'अथ' इति नास्ति क्वचित्. ८. 'सह भरतः' इति पाठः.

प्रसिद्धाभ्यां कौसल्यासुमित्राभ्याम् । कैकेय्या अनादराभिभूतत्वादिति भावः । तथा-न्तःपुरजनेनान्येन राजावरोधवधूजनेन च साकं भवनं गृहमभजत प्रविवेश ॥

**अथ यथाविधिविहितौर्ध्वदैहिकं गमितचतुर्दशदिवसं दिवसक-रकुलहितेन पुरोहितेन नगरवृद्धैः सार्धममात्याः समुपेत्य मुकुटस्य भरणाय प्रार्थयामासुः ।**

**अथेति** । अथ गृहप्रवेशानन्तरम् । विधिमनतिक्रम्य यथाविधि यथाशास्त्रम् । 'यथासादृश्ये' इत्यव्ययीभावः । ऊर्ध्वंदेहोद्भवमौर्ध्वदैहिकं परलोकक्रियाम् । 'मृतार्थं तदहर्दानं त्रिषु स्यादौर्ध्वदैहिकम्' इत्यमरः । 'ऊर्ध्वदेहाच्च' इति वक्तव्याट्ठञ् । अनु-शतिकादेराकृतिगणत्वादुभयपदवृद्धिः । विहितमाचरितमौर्ध्वदैहिकं येन तं तथोक्तम् । गमिता नीताश्चतुर्दशसंख्याका दिवसा येन तं भरतम् । अमा सह वसन्तीत्यमात्या मन्त्रिणः । 'अव्ययात्त्यप्' । दिवसकरकुलहितेन पुरोहितेन वसिष्ठेन तथा नगरे पट्टणे ये वृद्धा ज्ञानवृद्धा वयोवृद्धास्तैश्च सार्धं समुपेत्य समीपमागत्य मुकुटस्य राज-चिह्नस्य कोटीरस्य भरणाय प्रार्थयामासुर्याचितवन्तः । मूर्धाभिषिक्तो भूत्वा भुवं परिपालयेत्यनुनीतवन्त इत्यर्थः । ननु 'क्षत्रियस्य षोडशाहानि' इति षोडशाहाशौ-चसद्भावात्कथं चतुर्दशदिवसमित्युच्यत इति चेत्सत्यम् । 'क्षत्रियस्तु दशाहेन स्वक-र्मनिरतः शुचिः' इत्यादिविशेषशास्त्रानुसारेण दशाहेनाशौचनिवृत्तौ द्वादशेऽहनि श्राद्धं कृतवानिति मन्तव्यम् । चतुर्दशदिवसमिति तु वास्तवत्वादविरोधः । तथाच रामायणे—'ततो दशाहेऽपि गते कृताशौचो नृपात्मजः । द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥' तथा—'ततः प्रभातसमये दिवसेऽथ चतुर्दशे । समेत्य राज्यकर्तारो भरतं वाक्यमब्रुवन् ॥' इति । 'ततः प्रभातसमये दिवसेऽथ त्रयोदशे । विललाप महाबाहुर्भरतः शोकमूर्च्छितः ॥' इति त्रयोदशेऽह्नि भरतस्य शोकविह्वलत्वेन प्रसाधयितुमयुक्तत्वात् 'दिवसेऽथ चतुर्दशे' इति श्रीरामायण उक्तम् । अत्र तु ग-मितचतुर्दशदिवसमित्यनेन चतुर्दशस्याप्यह्नो गमितत्वात्पञ्चदशेऽह्नीत्यायातम् । तथाच श्रीरामायणविरोध इति चेत्, तर्हि यद्यपि विरोधो दुर्वारः, तथापि यथाकथंचिदुपा-न्त्यन्यायेन चतुर्दशदिवस एव परिणमयितव्यम् । यद्वा गमित इत्यत्र वर्तमानार्थे क्त-प्रत्यये क्रियमाणे गमितो गम्यमानः । नीयमान इति यावत् । चतुर्दशदिवसो येन तमिति चतुर्दशदिवस एव पर्यवस्यति तदा न कोऽपि विरोध इत्यलमतिसप्रङ्गेन ॥

**ततस्तान्निर्बध्नतः सोऽयं प्रत्यवादीत् ।**

**तत इति** । ततः प्रार्थनानन्तरं निर्बध्नतो मुकुटभरणार्थं निर्बन्धं कुर्वतस्तान-मात्यान्प्रत्यवादीदुवाच ॥

तदेवाह—

**बंधुभिरिह किमुक्तैस्त्यक्तसौमित्रिवृत्ति-**
**र्मुकुटमपि वहेयं युष्मदाज्ञा हि पूज्या ।**

---

१. 'हितकरैर्नगरवृद्धैः' इति पाठः. २. 'मुकुटाभरणाय भरतं प्रार्थयामासुः' इति पाठः. ३. 'वृत्ति' इति पाठः. ४. 'अथ' इति पाठः.

मम परमवकाशः पर्णशालानुकूलः
क्वचिदपि विपुलायां नास्ति चेद्दण्डकायाम् ॥ ७३ ॥

**बहुभिरिति ।** इहेदानीं बहुभिरनेकैरुक्तैरुक्तिभिः । भावे क्तः । किम् । न किंचिदपीत्यर्थः । वृथा कालक्षेपावहत्वादिति भावः । किंतु त्यक्त्वा विसृष्टा सौमित्रेर्लक्ष्मणस्य वृत्तिर्वर्तनं श्रीरामकैंकर्यरूपं येन स तथोक्तः सन् । मुकुटमपि वहेयं धारयेयम् । राज्याधिपत्यमङ्गीकुर्यामित्यर्थः । अपिशब्दः संभावनायाम् । कुतः । युष्माकमाप्तानां भवतामाज्ञा नियोगः पूज्या हि माननीया खलु । अवश्यकर्तव्येत्यर्थः । कथं चेद्विपुलायां विस्तृतायां दण्डकायां क्वचित्कुत्रचिदपि मम पर्णशालानुकूलः पर्णशालानिर्माणानुगुणः । तावन्मात्र इत्यर्थः । अवकाशोऽन्तरं परमत्यन्तं नास्ति चेत् । तथा वहेयमिति संबन्धः । अतो लक्ष्मणवच्छ्रीरामकैंकर्यतत्परेणैव मया भूयते किं मुकुटभरणादरेणेति तात्पर्यम् ॥

इत्युक्त्वा श्रीरामसेवोत्सुकमना निश्चक्राम ।

**इतीति ।** इत्यनेन प्रकारेणोक्त्वा श्रीरामसेवोत्सुकं श्रीरामकैंकर्योत्कण्ठितं मनश्चित्तं यस्य स तथोक्तः सन्निश्चक्राम निर्जगाम । गृहादिति शेषः ॥

तत्र ।

**तत्रेति ।** तत्र तस्मिन्भरतनिर्गमनसमये ॥

अनुपधि रचयित्वा सत्पथे पांसुलत्वं
सुजननयनसौख्यप्रातिकूल्यं च कृत्वा ।
नरपतिगृहमध्यात्तूर्णमुद्घूर्णमाना
कुटिलगतिरुदस्थान्मन्थरा नाम वात्या ॥ ७४ ॥

**अनुपधीति ।** अनुपध्यकपटम् । अगूढमिति यावत् । क्रियाविशेषणमेतत् । 'कपटोऽस्त्री व्याजदम्भोपधयः' इत्यमरः । सत्पथे श्रीरामाभिषेकाचरणरूपसाधुमार्गे । अन्यत्र सतां नक्षत्राणां पन्थास्तस्मिन्नाकाशे । 'ऋक्पूः—' इत्यादिना समासान्तः । पांसवो दोषा अस्याः सन्तीति पांसुला । 'स्वैरिणी पांसुला च स्यात्' इत्यमरः । सिध्मादित्वाल्लच्प्रत्ययः । तस्या भावस्तत्त्वम् । तद्विघातकरणरूपदोषकारित्वमित्यर्थः । 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावो वक्तव्यः । अन्यत्र पांसवः परागा अस्य सन्तीति पांसुलत्वम् । रचयित्वा प्रकटयित्वासाद्य च । अतएव सुजननयनसौख्यप्रातिकूल्यं सज्जननेत्रोत्सवविघातम्, अन्यत्र सुष्ठुजनानां नयनसौख्यस्य नेत्रसुखस्थितेः प्रातिकूल्यं विरोधं च कृत्वा । उद्घूर्णमाना परिभ्रममाणा । एकत्रोन्मत्तत्वात्, अन्यत्र स्वभरणाच्चेति भावः । कुटिलगतिर्वक्रगतिः । एकत्र कुब्जत्वात् अन्यत्र तादृक्चक्रचङ्क्रमणशीलत्वाच्चेति भावः । मन्थरा नाम मन्थरेति प्रसिद्धा वात्या वातसंहतिः । 'पाशादिभ्यो यः' इति यत्प्रत्ययः । नरपतिगृहमध्याद्राजभवनान्तरात् । तूर्णं क्षिप्रमुदस्थादुत्थितवती । निर्गतवतीत्यर्थः । 'उदोऽनूर्ध्वकर्मणि' इत्येतस्य प्रत्युदाहरणं-

---

१. 'राम-' इति पाठः, २. 'अनवधि' इति पाठः, ३. 'भुवन' इति पाठः.

मेतत्। अत्र प्रकृताप्रकृतगतः श्लेषालंकारः। 'प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम्। श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वयेनान्त्यः॥' इति लक्षणात्॥

**केशहस्तं स्वहस्तेन गृहीत्वा तद्वधोद्यतम्।**
**कौसल्या वारयामास क्रुद्धं रामानुजानुजम्॥ ७५॥**

केशहस्तमिति। ततस्तदनन्तरं क्रुद्धं तद्दर्शनात्कोपोद्रिक्तमतएव स्वहस्तेन निजकरेण केशहस्तं मन्थराकेशकलापम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः। गृहीत्वा तस्या मन्थराया वध उद्यतमुद्युक्तम्। ईदृक्पापिष्ठयावधे न स्त्रीहत्यादोषः प्रसज्येतेति तद्विध्वंसने विहिताग्रहमित्यर्थः। रामानुजस्य भरतस्य लक्ष्मणस्य वानुजं शत्रुघ्नं कौसल्या वारयामास। किमनेन क्षुद्रदासीनिग्रहेणेति तन्निर्बन्धाभिनिवेशान्निवारितवतीत्यर्थः। एतेनास्याः साध्वीजनोचितदयासौशील्यादिगुणसंपत्तिः सूचितेति मन्तव्यम्॥

**तत्र सान्तःपुर एव पुरान्निर्गत्य शिल्पिवर्गसमीकृतसरणिर्भरतः पुरतः[1] प्रसृतनरगजरथतुरगचरणक्षुण्णक्षोणीतलसमुत्कीर्णेन रेणुनिकुरुम्बेण जम्बालयन्नम्बरगङ्गां गङ्गां च सुमन्त्रभणितगुणनिवहगुहानुमत्या निस्तीर्य दूरादेवाश्रमद्वारे[2] निवेशितबलभारो भरद्वाजाभिवन्दनमकरोत्।**

तत्रेति। तत्र तस्मिन्समये भरतः सान्तःपुर एव कौसल्याद्यन्तःपुरस्त्रीसहितः सन्नेव शिल्पिवर्गेण खनकवर्धकीवृक्षतक्षकीप्रमुखशिल्पिनिवहेन समीकृता गर्तपाषाणगुल्मादिनिरसनेन ऋजूकृता सरणिर्मार्गो यस्य स तथोक्तः सन्। पुरतः पुरस्तात्प्रसृतानां प्रवृत्तानां नराणां गजानां रथानां तुरंगाणां च चरणैः पदैः क्षुण्णमवदारितं यत्क्षोणीतलं तस्मात्समुत्कीर्णेन समुत्थितेन रेणुनिकुरुम्बेण पांसुभरेणाम्बरगङ्गामाकाशगङ्गां जम्बालयञ्जम्बालवतीं कुर्वन् पङ्किलयन्नित्यसंबन्धे संबन्धरूपातिशयोक्तिः। 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः। जम्बाशब्दात् 'तत्करोति—' इति ण्यन्ताल्लटः शत्रादेशः। तथा सुमन्त्रेण भणितो वर्णितो गुणनिवहः सौशील्यसौहार्दादिसद्गुणसंपत्तिर्यस्य तथोक्तस्य गुहस्य निषादनाथस्यानुमत्याङ्गीकारेण गङ्गां भूतलवाहिनीं च निस्तीर्य तीर्त्वा। अस्माभिः क्रियमाणमतिथिसत्कारं परिगृह्य पुनर्गन्तव्यमिति प्रार्थयमानं गुहं सान्त्ववचनैः प्रसाद्य। तदनुमत्या तेन सहैव गङ्गां संतीर्येत्यर्थः। दूराद्दूरत एव विप्रकृष्टदेश एव। महर्षेरमर्षोदयभयादिति भावः। 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चकारात्पञ्चमी। आश्रमद्वारे तपोवनप्रतिहारप्रदेशे निवेशितबलभारः संस्थापितसेनानिवहः सन्। महर्ष्याश्रमपीडाभयात्कोशादेव विसृष्टसैन्य इत्यर्थः। तथा श्रीरामायणम्—'भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः। बलं सर्वमवस्थाप्य जगाम सपुरोहितः॥' इति। अथ भरद्वाजस्य मुनेरभिवन्दनं पादवन्दनमकरोत्॥

---

१. 'पुरतः' इति नास्ति क्वचित्. २. 'द्वारि' इति पाठः.

**सोऽयं प्रीतमना मुनिर्भरद्वाजो भरतं जननीजनमपि[1] प्रत्येकमालोक्य सेनामप्याहूय[2] यथोचितमातिथ्यमकुरुत ।**

स इति । सोऽयं मुनिर्मननशीलो भरद्वाजः प्रीतमनास्तदागमनात्संतुष्टान्तःकरणः सन् । भरतं जननीजनमपि कौसल्यादिभरतमातृजनं च प्रत्येकं विविक्तमालोक्य । दयादृष्ट्यानुगृह्येत्यर्थः । सेनां भरतचमूमप्याहूय आनीयतामितः सेनेति भरतमाज्ञाप्य । तद्भृत्यमुखेनाकारयित्वेत्यर्थः । यथोचितं यथार्हमातिथ्यमतिथिसत्कारमकुरुत कृतवान् ॥

तत्प्रकारमेव वर्णयति—

**तथातिथ्यं चक्रे भरतबलभाजां तनुभृतां**
**भरद्वाजः सोऽयं भ्रुकुटिभटकल्पाखिलसुरः ।**
**तपस्तप्त्वा घोरं दिवि सुमनसस्तत्फलभुजो**
**यथा तेषां तोषं क्षणमभिलषेयुर्मुनिकृतम् ॥ ७६ ॥**

तथेति । भ्रुकुट्या भ्रूभङ्गमात्रेणैव हेतुना ईषदसमाप्ता भटा भटकल्पाः । किंकरप्राया इति यावत् । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः । तेऽखिलसुरा अखिलदेवा यस्य स तथोक्तः । लोकत्रयेऽप्यस्यासाध्यं न किंचिदस्तीति भावः । अतएव सोऽयं भरद्वाजः । भरतस्य बलभाजां चमूचराणाम् । 'भजो ण्विः । तनुभृतां शरीरिणां तथा तेन प्रकारेणातिथ्यमभ्यञ्जनस्नानवासोगन्धमाल्यालंकारमृष्टान्नपानाद्यतिथिसत्कारं चक्रे चकार । 'अतिथेर्ञ्यः' इति तादर्थ्ये ञ्यप्रत्ययः । कथं चकारेत्यत आह—घोरं दुष्करं तपो व्रतोपवासादिरूपं तप्त्वा कृत्वा सुमनसो देवाः सन्तः । अतएव दिवि स्वर्गे तत्फलभुजस्तस्य तपसः फलभुजो रम्भासंभोगादिफलभोक्तारः पुरुषा मुनिकृतं भरद्वाजेन विहितं तेषां भरतचमूचराणां तोषमानन्दं क्षणं क्षणमात्रं यथाभिलषेयुः । क्षणमात्रमपीदृक्परितोषोऽस्माकं संभवेद्यदि तर्हि कृतार्था भवेमेति यथा वाञ्छेयुस्तथा चकारेत्यर्थः । सर्वेऽपि चमूचरा मुनिकृतातिथ्यवशात्स्वर्गसुखादप्यधिकं सुखमनुबभूवुरित्यर्थः । अत्र स्वर्गिणां तत्परितोषणाभिलाषणासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेदः । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् ॥

**इति तद्दिनं दिनशतकल्पं तत्र नीत्वा मुनेर्निदेशेन सर्वे[3] चित्रकूटवनोद्देशमविशन् ।**

इतीति । इत्यनेन प्रकारेण । तद्दिनं मुनिदर्शनदिनं दिनशतकल्पम् । श्रीरामदर्शनौत्सुक्याद्बहुदिनतुल्यमित्यर्थः । तत्र भरद्वाजाश्रमे नीत्वा गमयित्वा । अथ मुनेर्निदेशेन भरद्वाजाज्ञया सर्वे भरतादयश्चित्रकूटस्य पर्वतस्य वनोद्देशं वनप्रदेशमविशन्प्रविष्टवन्तः ॥

---

१. 'मुनिर्भरतं तज्जननी' इति पाठः. २. 'अस्याहूय' इति पाठः. ३. 'सर्वेऽपि' इति पाठः.

तत्र संन्यस्तसैन्यस्तत इतो गुहेन सह राममन्विष्यन्हव्यगन्धिना गन्धवहेन धूमगन्धेन च दूरादेव विभाव्यमानमचलमृगगणमदृश्यरूपाभिर्वनदेवताभिरवकीर्यमाणबलिकुसुममशेषपिशिताशनपिशाचोच्चाटनमन्त्रायमाणलक्ष्मणचापघोषश्रवणसमुचितसामीप्यप्रदेशं नूतनपरिकल्पितपर्णशालावास्तव्यवैखानसकुटुम्बिनिबिरीसभूभागमनोकहशाखावलम्बमानवल्कलाजिनममरतरुशाखापचितैरभिनवपल्लवभङ्गशबलैरम्बरचरपतिपूतनागणकरकिसलयविमुक्तैरविरलैः कुसुमनिकरैरभ्यर्च्यमानजानकीनिवासतरुमूलवेदिकमालक्ष्यमाणखड्गकार्मुकनिषङ्गमतिथिजनसपर्यापर्युत्सुकसौमित्रिसमाहृतकन्दमूलफलकल्पितैकदेशमविनाभूतजनकदुहितृचरणनलिनविन्यासमपहसितसाकेतरामणीयकं रामाश्रमं भरतः ससंभ्रममभजत।

तत्रेति। भरतस्तत्र वनोद्देश एव संन्यस्तसैन्यस्त्यक्तानीकः सन्। श्रीराममनस्यन्यथाप्रतीत्यनुदयार्थमिति भावः। तथा गुहेन सह गहनमार्गवेदिना निषादाधिपेन साकं तत इतः प्रदेशे राममन्विष्यन्मृगयन्। हूयत इति हव्यमाज्यादि तद्गन्धोऽस्यास्तीति तथोक्तेन हव्यगन्धिना गन्धवहेन वायुना धूमगन्धेन होमधूमसौरभ्येण च दूराद्विप्रकृष्टदेश एव विभाव्यमानमनुमीयमानमचला निर्भयदेशत्वादपलायमाना मृगगणा हरिणादिमृगयूथा यस्मिंस्तम्। अदृश्यरूपाभिरन्तर्हिताकाराभिर्वनदेवताभिर्वनाभिमानिनीभिर्देवताभिरवकीर्यमाणानि विक्षिप्यमाणानि बलिकुसुमानि पूजोपहारपुष्पाणि यस्मिंस्तम्। वनदेवतानामप्यर्चनीयमित्यर्थः। 'करोपहारयोः पुंसि बलिः' इत्यमरः। अशेषाः समस्ता ये पिशिताशनाः क्रव्यादास्त एव पिशाचा भूतग्रहविशेषास्तेषामुच्चाटनमन्त्रवदाचरन्नुच्चाटनमन्त्रायमाणो यो लक्ष्मणचापघोषः सौमित्रिधनुष्टंकारस्तच्छ्रवणस्य तदाकर्णनस्य समुचितो योग्यः सामीप्यप्रदेशः प्रान्तभूमिर्यस्य तम्। निरन्तरलक्ष्मणचापघोषघुमघुमायमानसमीपदेशमित्यर्थः। नूतनपरिकल्पिताः श्रीरामसहवासेन कृतार्थत्वं संपादयितुं प्रत्यग्रं निर्मिताः पर्णशालास्तासु वसन्तीति वास्तव्या वसन्तः। 'वसेस्तव्यत्कर्तरि णिच्च' इति कर्तरि तव्यत्प्रत्ययो वृद्धिश्च। वैखानसास्तपोविशेषलब्धसंज्ञास्तापसविशेषाः। यद्वा ब्रह्मणो नखजाता वैखानसाः। 'ये नखजास्ते वैखानसाः' इति श्रुतेः। यद्वा विखनसमुनिना प्रोक्तं सूत्रमधिकृत्य तन्मार्गानुसारिणो वैखानसाः। नूतनपरिकल्पितपर्णशालावास्तव्याश्च ते वैखानसकुटुम्बिनो वानप्रस्थसांसारिकाश्च तैर्निबिरीसो निबिडो भूभागो भूप्रदेशो यस्य तम्। 'निबिडं निबिरीसं च दृढं बाढं प्रचक्षते' इति वैजयन्ती। 'नेर्बिडज्बिरीसचौ' इति निशब्दाद्बिरीसच्प्रत्ययः। 'निबिडित' इति पाठे स्पष्टोऽर्थः। अनोक-

---

१. होमधूमेन इति पाठः. २. 'अचपलमृग' इति पाठः. ३. 'अशेषित' इति पाठः. ४. 'निबिडित' इति पाठः. ५. 'अमुं तरु' इति पाठः. ६. 'शाखारचितैः' इति पाठः. ७. 'सेना' इति पाठः. ८. 'अविरलैः' इति नास्ति क्वचित्. ९. 'साकेतम्' इति पाठः.

हानां वृक्षाणां शाखास्ववलम्बमानानि स्रंसमानानि संस्थानकानि वल्कलानि चीरवसनान्यजिनानि कृष्णाजिनानि च यस्मिंस्तम् । तथामरतरुशाखाभ्यः कल्पवृक्षशाखाभ्योऽपचितैर्लूनैरभिनवपल्लवभङ्गशबलैर्बालप्रवालशकलमिश्रणकर्बुरवर्णैः। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । अम्बरचरपतेः सिद्धगन्धर्वादिखेचराधीश्वरस्येन्द्रस्य यः पृतनागणः सैन्यनिवहस्तस्य करकिसलयविमुक्तैः पाणिपल्लवविकीर्णैरविरलैः सान्द्रैः कुसुमनिकरैः पुष्पनिकुरुम्बैरभ्यर्च्यमाना संपूज्यमाना जानकीनिवासतरुमूलवेदिका सीतानिकेतनवृक्षाधःप्रदेशवितर्दिका यस्मिंस्तम् । 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः । आलक्ष्यमाणं परिदृश्यमानं खड्गकार्मुकनिषङ्गं यस्मिंस्तम् । अतिथिजनानां सपर्यायां पर्युत्सुकेन प्रोत्साहेन सौमित्रिणा समाहृतैरानीतैः कन्दमूलफलैः कल्पितः समृद्ध एकदेशो यस्य तम् । कन्दा वर्तुलमूलपिण्डाः मूलानि दीर्घाकाराणि इति विवेकः। अविनाभूता निरन्तरानुवृत्ता जनकदुहितृचरणनलिनविन्यासा जानकीपादपद्ममुद्रा यस्मिंस्तम् । अपहसितं परिहसितम् । धिक्कृतमिति यावत् । साकेतरामणीयकमयोध्यापुरसौभाग्यं येन तम् । 'योपधाद्गुरूपोत्तमाद्वुञ्' । रामाश्रमं श्रीरामनिवासस्थानं संभ्रमेण संतोषजनितवेगेन सहितं यस्मिन्कर्मणि तद्यथा भवति तथा ससंभ्रममभजत प्राप । अत्र साकेतरामणीयकस्यापहसितत्वासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेदः ॥

अथावासं शान्तेरकृतसुकृतानामसुलभं
नवाम्भोदश्यामं नलिननयनं वल्कलधरम् ।
जटाजूटापीडं भुजगपतिभोगोपमभुजं
ददर्श श्रीमन्तं विपिनभुवि सीतासहचरम् ॥ ७७ ॥

**अथेति** । अथाश्रमभजनानन्तरं शान्तेरावासं शमैकनिकेतनम् । अकृतसुकृतानामनाचरितपुण्यकर्मणां जनानामसुलभं दुष्प्रापम् । नवाम्भोदश्यामं नीलमेघश्यामलाङ्गम् । नलिननयनं पुण्डरीकाक्षम् । वल्कलधरं वल्कलवस्त्रधारिणम् । जटाजूट एवापीडः शेखरो यस्य तम् । 'शिखास्वापीडशेखरौ' इत्यमरः । भुजगपतेरादिशेषस्य भोगः कायः स एवोपमा सादृश्यं ययोस्तौ तादृशौ भुजौ यस्य तम् । वृत्तायतपीवरबाहुमित्यर्थः । श्रीमन्तं सहजशोभासंपन्नम् । नित्ययोगे मतुप् । सीतासहचरं जानकीसमेतं श्रीरामं विपिनभुवि कान्तारसीम्नि ददर्श । एतदादि शिखरिणी वृत्तम् ॥

ततस्तस्योपान्ते जनकयजनाधीनजननां
ववन्दे वैदेहीं रजनिकररेखामिव नवाम् ।
अरण्यानां पुण्यात्पदकमलमुद्रापरिचया-
दयोध्यासध्रीचीमविकलमवस्थां विदधतीम् ॥ ७८ ॥

**तत इति** । ततः श्रीरामदर्शनानन्तरं तस्य श्रीरामस्योपान्ते पार्श्वदेशे नवां नूतनां रजनिकररेखां चन्द्रकलामिव स्थितामित्युत्प्रेक्षा । भूलोकगतायाश्चन्द्रकलाया अप्रसिद्धत्वान्नोपमा । जनकस्य राज्ञो यजनाधीनं यज्ञायत्तं जननं जन्म यस्यास्ताम् ।

हृल्मुखकृष्टजनकयज्ञक्षेत्रसमुत्पन्नामित्यर्थः। 'अधीनो निघ्न आयत्तः' इत्यमरः। तथा पुण्यात्पवित्रात्पदकमलमुद्रापरिचयान्निजपादपद्मविन्याससंस्थानाद्धेतोः। अरण्यानां विपिनानाम्। 'अटव्यरण्यं विपिनम्' इत्यमरः। अविकलं दृढं यथा तथा। अयोध्यासध्रीचीमयोध्यासहचरीम्। तत्सदृशीमित्यर्थः। अत एवोपमालंकारः। अवस्थां दशां विदधतीम्। संपादयन्तीमित्यर्थः। यत्र निजसंचारस्तस्यैवायोध्यापुरसब्रह्मचारित्वादिति भावः। दधातेः शतरि 'उगितश्च' इति ङीप्। 'नाभ्यस्ताच्छतुः' इति नुमभावः। वैदेहीं जानकीं ववन्दे नमश्चकार। श्रीरामस्य दर्शनं सीतायाश्च वन्दनमिति नैतच्चोद्यमुद्भावनीयम्। श्रीरामापेक्षयापि तत्पत्न्यां परमपतिव्रतायां तस्यानेवात्यन्तादरसंभवादिति भावः। सध्रीचीत्यत्र सहाञ्चतीति सध्रीची। 'ऋत्विक्–' इत्यादिना क्विन्प्रत्ययः। 'सहस्य सध्रिः' इति सहशब्दस्य सध्र्यादेशः। 'अनिदितां–' इत्यादिना नकारलोपः। 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः। अञ्चतेः 'उगितश्च' इति ङीप्। उक्तालंकारयोः परस्परनैरपेक्ष्यात्संसृष्टिः॥

स्वतःसिद्धं यस्मिन्नितरदुरवापं विजयते
सुमित्रापुत्रत्वादपि जगति रामानुजपदम्।
यदीयाक्षिद्वन्द्वप्रतिनिधि भवेदम्बुजयुगं
निशीथे निर्निद्रं यदि तमपि साक्षादकृत सः॥ ७९॥

स्वतःसिद्धमिति। इतरदुरवापं भ्रात्रन्तरदुष्प्रापम्। भिन्नोदरदुर्लभमित्यर्थः। रामानुज इति पदं शब्दो यस्मिंल्लक्ष्मणे। सुमित्रापुत्रत्वात्। सापत्नमातृजनितत्वेन भिन्नोदरत्वादपीत्यर्थः। कौसल्यागर्भसंभूतत्वाभावेऽपीत्यपिशब्दार्थः। तथात्वे रामानुजपदं स्वतःसिद्धत्वस्याविवाद एवेति भावः। यद्वा सुमित्राया आपुत्रत्वादीषत्पुत्रत्वादस्य सुमित्रागर्भसंभूतत्वमात्रमेव। पुत्रलाभफलस्य तु कौसल्यागामित्वादिति भावः। अत्रापिरवधारणार्थकः। अथवा सुमित्रमकृत्रिमसुहृत्। आपुत्रमीषत्पुत्रः पुत्रकल्प इत्यर्थः। 'पितृसमो ज्येष्ठः' इति न्यायस्यात्रैव प्रसिद्धत्वादिति भावः। सुमित्रश्चासौ आपुत्रश्चेति विशेषणसमासः। तस्य भावस्तत्त्वात्। अन्यस्यैतादृशत्वाभावादित्यपिशब्दार्थः। यद्वा सुमित्रापुत्रत्वात्सुमित्रापुत्रत्वं विहायेत्यर्थः। 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी। अत्रापिरेवकारार्थकः। स्वतःसिद्धं निसर्गसिद्धं सत् जगति लोके विजयते सर्वोत्कर्षेण वर्तते। 'पुण्यैर्यशो लभ्यते' इति न्यायादिति भावः। 'विपराभ्यं जेः' इत्यात्मनेपदम्। तथा अम्बुजयुगमरविन्दयुग्मम्। कर्तृ। निशीथेऽर्धरात्रे 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। निर्निद्रं यदि प्रफुल्लं चेत्। यस्य लक्ष्मणस्य संबन्धि यदीयम्। तच्च तदक्षिद्वन्द्वं नेत्रयुगलं च तस्य प्रतिनिध्युपमानं भवेत्स्यात् नास्योपमानं किंचित्पश्याम इति भावः। एतेन लक्ष्मणस्य सर्वत्र निद्राराहित्यं सूच्यते। तं लक्ष्मणमपि भरतः साक्षादकृत प्रत्यक्षीचकार। अपश्यदित्यर्थः। करोतेर्लुङि सिचः कित्वान्न गुणः। 'ह्रस्वादङ्गात्' इति सलोपः। अत्राम्बुजयुगस्य निर्निद्रनिशीथत्वासंबन्धेऽपि तत्संभावनया संबन्धकथनादतिशयोक्तिः। तदेतत् 'पुष्पं प्रवालोपहितं यदि स्यात्' इत्याद्युदाहृत्यालंकारसर्वस्वकारः स्पष्टीचकार॥

**तदनन्तरं मरुपथे पृथुतरग्रीष्मोष्मणि दैवात्कृतोपलम्भमम्भोरुहतटाकं सुधासारपूरितापं भूरितापः सतृष्ण इव कृष्णसारः सरभसं समुपेत्य पादयोर्निपत्य चिरं रुदन्दशरथकथां कथयित्वा मैथिलीसहिताय सलक्ष्मणाय रामाय शोकमूर्च्छां प्रायच्छत् ।**

**तदनन्तरमिति** । अत्र रामं भरत इति च पदद्वयमध्याहर्तव्यम् । तदनन्तरं श्रीरामसीतालक्ष्मणदर्शनानन्तरम् । पृथुतरोऽत्यन्तबहुलो ग्रीष्मोष्मा ग्रीष्मर्तुजनितसंतापो यस्मिंस्तस्मिन् । दुःसहसंतापकारिणीत्यर्थः । मरुपथ ऊषरस्थलवर्त्मनि। निर्जलदेश इति यावत् । 'ऋक्पूः—' इत्यादिना समासान्तः । दैवाद्भाग्यवशात् । 'दैवं दिष्टं भागधेयं भाग्यम्' इत्यमरः । कृतोपलम्भम् । उपलब्धिं प्राप्तमित्यर्थः । सुधाया अमृतस्य सार इव सार उत्कृष्टांशो यासां ताः पूरिताः परिपूर्णाश्च । कर्तरि क्तः । आपो यस्मिंस्तम् । अमृतप्रायपयःपरिपूर्णमित्यर्थः । 'ऋक्पूः—' इत्यादिना समासान्तः । अम्भोरुहतटाकं पद्मसरोविशेषम् । भूरितापो बहुलसंतापः । अतएव सतृष्णः पिपासातुरः कृष्णसारो हरिणविशेष इवेत्युपमा । भरतः सरभसं सवेगं यथा तथा । 'रभसो वेगहर्षयोः' इत्यमरः । रामं समुपेत्य प्राप्य पादयोर्निपत्य चिरं रुदन्रोदनं कुर्वन्दशरथस्य कथां परलोकयात्रारूपां वार्तां कथयित्वा मैथिलीसहिताय सलक्ष्मणाय च रामाय शोकेन या मूर्च्छा तां प्रायच्छद्दत्तवान् । भरतमुखाद्दशरथपरलोकयात्रां श्रुत्वा सीतारामलक्ष्मणाः शोकवशान्मूर्च्छां प्रापुरित्यर्थः । 'पाघ्राध्मा—' इत्यादिना दाणो यच्छादेशः ॥

ततः किमित्यत आह—

**वेलोल्लङ्घनमेतेषां शोकोदन्वति तन्वति ।**
**अगस्त्यायितमेतस्मिन्वसिष्ठेनात्मवेदिना ॥ ८० ॥**

**वेलेति** । एतेषां श्रीरामादीनां संबन्धिन्येतस्मिन्पूर्वोक्ते । शोक उदन्वानिवेत्युपमितसमासः । अगस्त्यायितमित्युपमालिङ्गात् । तस्मिञ्शोकोदन्वति दुःखसागरे । 'उदन्वानुदधौ च' इति निपातनात्साधुः । वेलोल्लङ्घनं कूलातिवर्तनं मर्यादातिक्रमणं च । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः । तन्वति कुर्वति । उद्वेले सतीत्यर्थः । आत्मवेदिना आत्मतत्त्वज्ञेन । शोकापनयकोविदेनेत्यर्थः । वसिष्ठेन महर्षिणा । अगस्त्येनेवाचरितमगस्त्यायितम् । कुम्भसंभवोऽम्भोधिमिव वसिष्ठस्तदीयशोकसंरम्भं स्तम्भितवानित्यर्थः । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः । ततो भावे क्तः । उपमालंकारः ॥

**ततः प्रतिपद्य संज्ञामनुज्ञया गुरोरमरसरिति विरचितसमुचितनिवापकृत्यं प्रणिपत्य रामं प्रतिनिवर्तयितुं भरतः प्रावर्तत ।**

---

१. 'प्रथिततर' इति पाठः. २. 'धारा' इति पाठः. ३. 'सरभसमुपेत्य' इति पाठः. ४. 'निपत्य पादयोश्चिरतरं' इति पाठः. ५. 'कथामपि' इति पाठः. ६. एतत्पूर्वं 'रामजननीजनोऽपि तत्र निपत्य सुचिरमरोदीत्' इति क्वचित्. ७. 'प्रपद्य' इति पाठः. ८. 'राममसकृत्प्रवर्तयितुम्' इति पाठः. ९. 'प्रार्थयत' इति पाठः.

तत इति । ततस्तदनन्तरं संज्ञां चेतनां प्रतिपद्य प्राप्य । प्रतिबुध्येत्यर्थः । 'संज्ञा-नामनि गायत्र्यां चेतनायां रविस्त्रियाम्' इति विश्वः । गुरोरनुज्ञया वसिष्ठनिर्देशेनामरसरिति गङ्गायां विरचितमारचितं समुचितं न्याय्यं तत्कालोचितं वा निवापकृत्यं पितृतर्पणकर्म येन तम् । 'इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् । यदन्नं पुरुषो भुङ्क्ते तदन्नास्तस्य देवताः ॥' इति श्रीरामायणोक्तरीत्या तदानीं संभवद्भिः पदार्थैर्निर्वर्तितपितृयज्ञमित्यर्थः । रामं प्रणिपत्य नमस्कृत्य भरतः प्रतिनिवर्तयितुं वनवासात्प्रत्यावर्तयितुं प्रावर्तत प्रवृत्तोऽभूत् । श्रीरामं प्रतिनिवर्तनार्थं विज्ञापयितुमुपाक्रमतेत्यर्थः ॥

तत्प्रकारमेव विवृणोति—

**विकर्तनकुलस्य यदनुकूलं गुणगणस्य यदनुगुणं यशोरूपस्य यदनुरूपं समाचारस्य यत्समुचितं प्राचीनभाग्यस्य यद्योग्यं लोकगर्हणाय यदनर्हं श्रुतस्य वा यत्सदृशं तादृशमाशयं प्रकाशयन्ती भरतोपज्ञा विज्ञापना ।**

विकर्तनेति । तत्रानुकूलादिशब्दानां प्रायशस्तावदेकार्थकत्वम् । तथापि किंचिद्व्याख्यायते—विकर्तनकुलस्यार्कवंशस्य । 'विकर्तनार्कमार्तण्ड—' इत्यमरः । यद्यादृगिति सर्वत्र यच्छब्दार्थः । अनुकूलं संमतम् । गुणगणस्य विद्याविनयादिसंपत्तेर्यदनुगुणमनुवृत्तम् । यशोरूपस्य प्रशस्तयशसः । 'प्रशंसायां रूपप्' । 'प्रशंसावचनैश्च' इति समासः । यदनुरूपमर्हम् । समाचारस्य सम्यगाचारस्य यत्समुचितं न्याय्यम् । प्राचीनभाग्यस्य पुरातनपुण्यस्य यद्योग्यं युक्तम् । लोकगर्हणाय लोकापवादाय यदनर्हमयोग्यम् । लोकनिन्दानिवर्तकं यादृगित्यर्थः । श्रुतस्य शास्त्रस्य यत्सदृशं समानम् । अविरुद्धमित्यर्थः । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । तादृशं तादृक्प्रकारमेव । विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । आशयमभिप्रायम् । 'आशयः स्यादभिप्राये मानसाधारयोरपि' इति विश्वः । प्रकाशयन्ती प्रकटयन्ती विज्ञापना प्रार्थना भरतस्य । उपज्ञायत इत्युपज्ञा । भरतेनैवादौ ज्ञातेत्यर्थः । 'आतश्चोपसर्गे' इति कर्मण्यण्प्रत्ययः । कर्तरि षष्ठ्या समासे 'उपज्ञोपक्रमम्—' इत्यादिना नपुंसकत्वेऽपि विधेयप्राधान्यात्स्त्रीलिङ्गता । 'उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने' इत्यमरः । महाकुलीनत्वादिगुणसंपन्नत्वस्य यथा युक्तं स्यात्तथा भरतो विज्ञापितवानिति फलितार्थः । श्रीरामप्रतिनिवर्तनार्थमनन्यसाधारणीं विज्ञापनां कृतवानिति तात्पर्यम् ॥

ततः किं जातमित्यत आह—

**तत्क्षणं क्षणप्रभाभङ्गुरलक्ष्मीसमावेशलक्ष्मणि क्षोणीपतिशतधृतोज्झिते मुकुटे विघटिताशं सादरं प्रणिपत्य मां पादुकाभ्यां परिष्कुरुतं**

१. 'गर्हणीयाय' इति पाठः. २. 'रामं प्रणिपत्य सादरम्' इति पाठः.

युवामिति रघुवरचरणौ स्वयमेव प्रार्थ्य प्रतिश्रयितुं[1] स्थण्डिलशायिचरणमिव[2][3] बभार भरतस्योत्तमाङ्गम् ।

तत्क्षणमिति । तस्मिन्नेव क्षणे तत्क्षणम् । 'अत्यन्तसंयोगे द्वितीया' । क्षणं प्रभा द्युतिर्यस्याः सा क्षणप्रभा विद्युत्तद्वद्भङ्गुरा भङ्गशीला । अतिचञ्चलेत्यर्थः । 'भञ्जभासमिदो घुरच्' । तस्या लक्ष्म्या राज्यश्रियः समावेशस्य संप्राप्तेर्लक्ष्मणि चिह्ने । तथा क्षोणीपतिशतैरनेकक्षोणीपतिभिर्धृतं च तदुज्झितं च त्यक्तं चेति स्नातानुलिप्तवत्पूर्वकालसमासः । तस्मिन् । विशेषणद्वयेनापि हेयत्वं सूच्यते । मुकुटे कोटीरे विघटिताशं त्यक्तस्पृहं भरतस्योत्तमाङ्गं शिरः । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । अतएव सादरं सगौरवं प्रणिपत्य नमस्कृत्य युवां पादुकाभ्यां भवदीयाभ्यां परिष्कुरुतं मामलंकुरुतम् । नहि मे तद्व्यतिरेकेण मुकुटमलंकार इति भावः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुट् । करोतेर्लोण्मध्यमपुरुषद्विवचनम् । इत्येवं रघुवरचरणौ रघुनायकपादौ स्वयमेवोत्तमाङ्गमेव प्रार्थ्य याचयित्वा प्रतिश्रयितुं निजप्रार्थनामङ्गीकर्तुम् । 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरः । स्थण्डिले भूतले शेते व्रतवशादिति स्थण्डिलशायी । 'यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ' इत्यमरः । 'स्थण्डिलाच्छयितरि व्रते' इति णिनिः । तस्य यच्चरणमाचरणं स्थण्डिलशायित्वरूपं तद्बभारेवेत्युत्प्रेक्षा । यथा कश्चिद्व्रती स्वेष्टदेवताया यावदनुग्रहमधःशयने व्रतनियमादितात्पर्येणावतिष्ठते, तथा भरतस्योत्तमाङ्गमपि श्रीरामचरणनिकटे पादुकादानरूपानुग्रहणपर्यन्तं निपत्यातिष्ठदित्युत्प्रेक्षार्थः ॥

ततः श्रीरामः किमकरोदित्यत आह—[4]

त्वया मया च कर्तव्यः[5] सत्यवाचः पितुर्विधिः[6] ।
इति प्रत्यादिशद्रामो भारतीमपि भारतीम् ॥ ८१ ॥

त्वयेति । सत्यवाचः सत्यवचनस्य पितुर्दशरथस्य विधिः । चतुर्दशवत्सरावधिकभूपरिपालनवनवासनियोग इत्यर्थः । त्वया मया च । पुत्राभ्यामावाभ्यामित्यर्थः । कर्तव्योऽवश्यं विधेयः । अन्यथा दोषस्मरणादिति भावः । इत्युक्त्वेति शेषः । भारतीं भरतसंबन्धिनीमपि भारतीं प्रार्थनावाचं रामः प्रत्यादिशत्प्रत्याख्यातवान् । पुत्रस्य पित्राज्ञोल्लङ्घनमनुचितमतोऽवश्यं मया नियतकालं वनं वस्तव्यम्, त्वया च प्रजापरिपालनतत्परेण भवितव्यमिति निराकृतवानित्यर्थः । तादृग्विनयादिसद्गुणसंपन्नस्य भरतस्यैव प्रार्थनां प्रत्याख्यातवान् । किमुतान्यस्येति किं वक्तव्यमस्य सत्यप्रतिज्ञापरिपालकत्वमपीत्यपिशब्दार्थः ॥

अथ किं तत्राह—

तत्र[7] जाबालिप्रार्थनायामपि व्यर्थायाम् ।

तत्रेति । तत्र तस्मिन्समये ॥ जाबालीति । अत्र रामायणम्—'आश्वासयन्तं

१. 'चरणद्वयम्' इति पाठः. २. 'परिरचयितुं' इति पाठः. ३. 'चरितम्' इति पाठः. ४. एतत्पूर्वम् 'तथाहि' इति क्वचित्. ५. 'कर्तव्यम्' इति पाठः. ६. 'वचः' इति पाठः. ७. 'तत्र' इति नास्ति क्वचित्.

भरतं जावालिर्ब्राह्मणोत्तमः । उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ साधु राघव माभूत्ते बुद्धिरेवं निरर्थका । प्राकृतस्य नरस्येव ह्यार्यबुद्धेस्तपस्विनः ॥ कः कस्य पुरुषो बन्धुः किमाप्तं कस्य केनचित् । यदेको जायते जन्तुरेक एव विनश्यति ॥ तस्मान्माता पिता चेति राम सज्येत यो नरः । उन्मत्त इति विज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥' इत्येवंभूतायां जावालेर्महर्षेः प्रार्थनायां याच्ञायामपि व्यर्थायामनङ्गीकृतायां सत्याम् । जावालिवचनेऽपि निराकृते सतीत्यर्थः । महर्षेरपि वचनं नाङ्गीकृतम् । किमुतान्यस्येत्यपिशब्दार्थः । भरतप्रार्थनानङ्गीकारसमुच्चयार्थको वा ॥

**भरतस्तदनु प्रार्थ्य लेभे लाभविदां वरः ।**
**काकुत्स्थपादुकाकारं महार्घं मुकुटद्वयम् ॥ ८२ ॥**

**भरत इति** । तदनु जावालिप्रार्थनानन्तरम् । लाभविदामधिकफलप्राप्तिव्यवहारपरिज्ञातॄणाम् । विदेर्ज्ञानार्थात्संपदादित्वात्क्विप् । वरः श्रेष्ठः । 'देवाद्वृते वरः श्रेष्ठे' इत्यमरः । भरतः । प्रार्थ्य । 'अधिरुह्यार्य पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥' इति रामायणोक्तरीत्या याचयित्वा । काकुत्स्थस्य श्रीरामस्य पादुकाकारं महार्घममूल्यम् । 'मूल्ये पूजाविधावर्घः' इत्यमरः । मुकुटद्वयं कोटीरयुगलं लेभे प्राप । किमेतेनापकर्षावहेन राजलक्षणकोटीरेणेति परिहृत्योत्कर्षावहं मस्तकालंकारोत्तमं पादुकाद्वयं स्वीकृतवानित्यर्थः । धर्मिष्ठं ज्येष्ठं परित्यज्य राज्यपरिपालनमपूज्यमिति मत्वा तदीयपादुकाद्वयपुरस्कारेण राज्यं कर्तुं तद्वयं संगृहीतवानिति भावः । अत्र लाभविद्वरपदार्थस्य विशेषणगत्या मुकुटद्वयप्राप्तिपदार्थहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥

अनन्तरवृत्तान्तमाह—

**स एष सानुजः प्रायादयोध्यां भ्रातृशासनात् ।**
**अटवीं पितृसंदेशाद्ययौ रामः सलक्ष्मणः ॥ ८३ ॥**

**स इति** । स एषः भरतः सानुजः सशत्रुघ्नः सन् भ्रातृशासनाच्छ्रीरामनियोगादयोध्यां प्रायात्प्रापत् । तथा रामः सलक्ष्मणः सन् पितृसंदेशात्पितृशासनादटवीं दण्डकारण्यं ययौ । यथा श्रीरामस्य पित्राज्ञा परिपालनत्वेन गरिष्ठा तथा भरतस्य भ्रात्राज्ञेत्यर्थः । एतेन भरतस्य पित्राज्ञापेक्षयापि भ्रात्राज्ञैव गरीयसीति सूच्यते ॥

**विलङ्घ्य विविधान्देशान्भरतो धृतवल्कलः ।**
**विषयं स्वमुपाश्रित्य विषये विमुखोऽभवत् ॥ ८४ ॥**

**विलङ्घ्येति** । भरतो धृतवल्कलः सन् । ज्येष्ठे धर्मिष्ठे वल्कलधारिणि सति मम समीचीनवस्त्रधारणमनुचितमिति परिधृतवल्कलवसन इत्यर्थः । विविधान्नानाविधान्देशान्, भरद्वाजाश्रमादिप्रदेशाञ्जनपदान्वा । विलङ्घ्यातिक्रम्य । ततः स्वं स्वकीयं विषयं कोसलदेशमुपाश्रित्य विषये राजार्हे भोगे विमुखो निरास्थोऽभवत् ।

---

१. 'महर्घम्' इति पाठः. २. 'समुपाश्रित्य' इति पाठः.

त्रातृवत्कन्दमूलफलाहारेण शरीरयात्रातत्परोऽभूदित्यर्थः । अत्रायं ध्वनिः परितो नाम कश्चन मुनिर्विविधांस्तिर्यङ्मनुष्यादिरूपेण बहुप्रकारान् दिश्यन्त इति देशान् शरीराणि विलङ्घ्य । तत्तत्कर्मानुसारेण तत्तच्छरीरोपाध्यवच्छिन्नतया यावत्कर्मानुभवं स्थित्वा तत्तत्कर्मक्षये तानि सर्वाण्यतिक्रम्येत्यर्थः । धृतवल्कलश्चरशरीरावच्छिन्नदशायां वैराग्याद्वल्कलधारी सन् । स्वं स्वहृदयाकाशान्तस्थविषयं ज्ञेयतया निर्दिष्टं चिदानन्दात्मकं ब्रह्मोपाश्रित्य कुतश्चिद्भाग्योदयाद्ध्यानगोचरं कृत्वा । विषये तुच्छे सांसारिकसुखे विमुखो विरक्तोऽभवत् । अत्राभिधायाः प्रकृतार्थनियन्त्रणादप्रकृतमुनिगोचरशब्दमूलोऽयं ध्वनिरिति संक्षेपः ॥

**ततश्चायं यावदार्यस्य प्रत्यागमनं तावदयोध्यां नाध्यास्ये । तस्मिन्नवधिमतिक्रम्य चिरायति यदि[१] सद्य एवाश्रयाशमाश्रित्यापि प्राणानन्दयिष्यामीति[२] नन्दिग्रामसंज्ञमाश्रममशिश्रयत् ।**

**तत इति ।** ततस्तदनन्तरमयं भरतः । यावद्यावत्पर्यन्तमार्यस्य श्रीरामस्य प्रत्यागमनं तावत्तावत्पर्यन्तमयोध्यां नगरीं नाध्यास्ये नाधितिष्ठामि । 'अधिशीङ्स्थासां कर्म' इत्यकर्मत्वम् । सति वनवासिनि ज्येष्ठे तत्र राज्यं कर्तुमनर्हत्वादिति भावः । तथा तस्मिञ्श्रीरामेऽवधिं चतुर्दशवत्सरात्मकमर्यादामतिक्रम्योल्लङ्घ्य चिरायति यदि । शीघ्रं नायाति चेदित्यर्थः । सद्योऽविलम्बेनैवाश्रयमश्नातीत्याश्रयाशमनलमाश्रित्यापि प्राणानन्दयिष्यामि संतोषयिष्यामि । तदनन्तरविरहस्याग्निप्रवेशादप्यत्यन्तदुःसहत्वादिति भावः । प्राणपरितोषकोपायान्तरात्यन्ताभावसूचकोऽयमपिशब्दः । इति । प्रतिज्ञायेति शेषः । नन्दिग्राम इति संज्ञा नामधेयं यस्य तमाश्रमं निवासमशिश्रयदाश्रितवान् । तत्रार्यपादुकयो राज्याभिषेकं कृत्वा तत्परतन्त्रतया राज्यं परिपालयन्नतिष्ठदित्यर्थः । श्रयतेर्लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङ् । 'चङि' इति द्वित्वम् । ननु 'असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥' इति श्रुतेरात्महन्तॄणां महानर्थश्रवणाद्धर्मशास्त्ररहस्याभिज्ञोऽयं भरतः कथमाश्रयाशाश्रयणरूपप्रतिज्ञां कृतवानिति चेत्, सत्यमेवं कथयति भगवती श्रुतिः । तथाप्यातुरस्य भरतस्यात्यन्तसौभ्रात्रप्रदर्शनार्थकत्वादित्थं प्रतिज्ञेति वेदितव्यम् ॥

**दाशरथिरपि शमधनजनकथितनिशिचरगणैरचित[३]कदनपरिहरणाय गहनजठरमवजगाहे ।**

**दाशरथिरिति ।** दाशरथिः श्रीरामोऽपि शमधनजनैर्महर्षिभिः कथितं निवेदितं निशिचरगणरचितं राक्षसनिवहकृतं यत्कदनमाश्रमोपप्लवरूपं तस्य परिहरणाय निरसनार्थम् । महोपद्रवकारिराक्षससंहरणेन महर्षीन्स्वस्थान्कर्तुमित्यर्थः । गहनजठरं कान्तारान्तरालमवजगाहे प्रविवेश ॥

---

१. 'यदि' इति नास्ति क्वचित्. २. 'प्राणानपि निन्दिष्यामीति' इति पाठः. ३. 'रचित' इति नास्ति क्वचित्.

विस्तीर्णाक्षैर्विपिनहरिणैर्वीतभीतिप्ररोहै-
र्दर्भग्रासेऽप्यकृतरुचिभिः सस्पृहं वीक्ष्यमाणः।
रामः प्राप्य प्रकृतिमहितं स्थानमत्रेर्महर्षे-
र्जग्राहस्य प्रमुदितधियः प्रेमपर्यां सपर्याम् ॥ ८५ ॥

विस्तीर्णेति। रामो वीतोऽपगतो भीतिप्ररोहो भयाविर्भावो येषां तैः। प्रसन्नत्वादिगुणदर्शनजनितविस्रम्भादनुत्पन्नभयैरित्यर्थः। अतएव विस्तीर्णान्यौत्सुक्याद्विस्तारितान्यक्षीणि येषां तैः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्'। तथा दर्भाणां ग्रासे कवलेऽप्यकृतरुचिभिरविहितादरैः। श्रीरामदिव्यमूर्तिदर्शनव्यासङ्गान्निजदेहयात्रायामप्यासक्तिरहितैरित्यर्थः। विपिनहरिणैररण्यमृगविशेषैः सस्पृहं साभिलाषं यथा तथा वीक्ष्यमाणोऽवलोक्यमानः सन्। श्रुति-भव-पद्मभवप्रमुखानामप्यगोचरो भगवान्सीतालक्ष्मणोपेतः श्रीरामः पङ्कूपरि गङ्गाप्रवाहवदस्माकं पुरतः प्रादुरासीदिति सकलजगन्मोहनदिव्यमङ्गलविग्रहदर्शनानन्दविच्छेदभयेन निमेषरहितैर्नेत्रैर्विशिष्टमृगादिभिरपि सविस्मयं परिदृश्यमान इत्यर्थः। तिरश्चामेवायं विलोकनीयः किमुतान्येषामिति भावः। प्रकृत्या स्वभावेन महितं पूज्यमत्रेरत्रिनाम्नो महर्षेः स्थानं प्राप्य प्रमुदितधियोऽस्य महर्षेः संबन्धिनीं प्रेमपर्यां प्रीतिपूर्विकां सपर्यामतिथिपूजां जग्राह स्वीकृतवान्। यथार्हातिथिसत्काराचरणतत्परेण महर्षिणा यावदुत्साहं संभावितां पूजां गृहीतवानित्यर्थः। 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः। सकललोकपूज्यस्यास्य भगवतो रघुनन्दनस्य महर्षिपूज्यत्वं युक्तमेवेति भावः॥

ततः किमत आह—

सीतामप्यनसूयाभिधानस्य पत्नी स्वभूषणैरतोषयत्।

सीतामिति। अनसूयेत्यभिधानमाख्या यस्याः सा तथोक्ता तस्य महर्षेरत्रेः पत्नी भार्या सीतां श्रीरामधर्मपत्नीमपि स्वभूषणैः स्वकीयालंकारैरतोषयदमोदयत्। वस्त्रमाल्यादिदानेन संभावयामासेत्यर्थः। साध्वीमणेः साध्वीमणितोषणं युक्तमिति भावः। तथा रामायणम्—'इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च। अङ्गरागं च वैदेहि महार्हं च विलेपनम्॥ मया दत्तमिदं सीते तव गात्राणि शोभय॥' इति॥

खण्डनाय वसुधावधूमनःपुण्डरीकतुहिनत्विषां द्विषाम्।
दण्डकावनमवाप राघवश्चण्डभानुरिव मेघमण्डलम्॥ ८६ ॥

इति विदर्भराजविरचिते चम्पूरामायणेऽयोध्याकाण्डः समाप्तः।

खण्डनायेति। राघवो रघुवंशोद्भवः श्रीरामः वसुधैव वधूर्भार्या। तत्त्वतस्तस्य श्रीमहाविष्णुत्वेन भूपतित्वादिति भावः। तस्या मन एव पुण्डरीकं सिताम्भोजम्। 'पुण्डरीकं सिताम्भोजम्' इत्यमरः। तस्य तुहिनत्विषां हिमकराणाम्। चन्द्राणामिति यावत्। चन्द्रवत्तदुल्लासनिरसनहेतुभूतानामित्यर्थः। अधर्माचरणतत्परत्वेन मनःसंतापकारित्वादिति भावः। न चानेकचन्द्रग्रहणं दोषाय। विशेष्याबाहुल्येनोपचरितत्वादित्युक्तं विद्यानाथेन—'प्रोद्यन्मुक्तौघताराप्रकरपरिवृतखर्वधूवक्त्रचन्द्रा' इति। द्विषां राक्षसानां खण्डनाय संहरणार्थम्। वस्तुतः स्वयं दुष्टराक्षस-

शिक्षणार्थमवतीर्णत्वात्तेषां चावश्यमुपलालनीयाया वसुधारूपनिजभार्याया मानसोल्लासनिरसनकृत्यकारित्वाच्चेति भावः । चण्डभानुः सूर्यो मेघमण्डलमभ्रवृन्दमिव दण्डकावनमवाप । तत्समीपं जगामेत्यर्थः । रूपकोपमयोः संसृष्टिः स्पष्टा । शब्दानुप्रासस्तु चमत्कारकारितया संप्रदायशुद्धिद्योतकतया च श्रीरामायणायोध्याकाण्डान्तिमश्लोकतुरीयपादान्तिमोपमामत्राप्यन्ते प्रयुक्तवानित्यनुसंधेयम् । तथा च श्रीरामायणम्—'इतीव तैः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतस्वस्त्ययनः परंतपः । वनं सभार्यः प्रविवेश राघवः सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ॥' इति । रथोद्धता वृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥

इति श्रीमत्परमयोगीन्द्रवृन्दमानसेन्दिन्दिरसंदोहामन्दानन्दलाभाभिनन्दितरघुनन्दनचरणारविन्दमकरन्दास्वादनकन्दलितसारस्वतेनाखण्डतपःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्य वचनान्वयसुधापारावारपारीणस्य धन्वन्तर्यवतारान्तरस्यायुर्वेदप्रमुखनिखिलविद्यासारसर्वज्ञसार्वभौमस्य कोण्डोपण्डितवर्यस्य तनूजेन गङ्गाम्बिकागर्भरत्नाकरसुधाकरेण श्रीरामचन्द्रबुधेन्द्रेण विरचितायां चम्पूरामायणव्याख्यायां साहित्यमञ्जूषिकासमाख्यायामयोध्याकाण्डः समाप्तः ॥

रामचन्द्रार्यरचिता रामचन्द्रपदार्पिता ।
अयोध्याकाण्डस्य व्याख्या पूर्णा मञ्जूषिकाभिधा ॥

---

# अरण्यकाण्डम्।

प्रविश्य विपिनं महत्तदनु मैथिलीवल्लभो
महाबलसमन्वितश्चलितनीलशैलच्छविः।
निशाचरदवानलप्रशमनं विधातुं शरै-
श्चचार सशरासनः सुरपथे तडित्वानिव ॥ १ ॥

**प्रविश्येति**। तदनु दण्डकावनसमीपप्राप्त्यनन्तरं महाबलसमन्वितः। अप्रमेयपराक्रमशालीत्यर्थः। एतेनाविसंवादितया सकलराक्षसशिक्षणदक्षत्वं सूच्यते। अन्यत्र महाबलो वायुस्तेन समन्वितः। तत्प्रेरित इत्यर्थः। चलितस्य संचलतो नीलशैलस्येन्द्रनीलाचलस्य च्छविरिव च्छविर्यस्य स तथोक्तः। सामान्यमेतत्। एतेनात्यन्ताश्चर्यकरत्वं महौन्नत्यं च सूच्यते। मैथिलीवल्लभः सीतापतिः श्रीरामो महद्विपुलं विपिनं दण्डकारण्यं प्रविश्य शरैर्बाणैर्नीरैश्च। 'शरो दध्याद्यप्रसारे बाणे काण्डे तृणान्तरे। शरं तु नीरे' इति नानार्थरत्नमाला। निशाचरा राक्षसा दवानला वनवह्नय इवेत्युपमितसमासः। तडित्वानिवेति स्पष्टोपमालिङ्गात् तेषां प्रशमनं विनाशमुपशमनं च विधातुं कर्तुं सशरासनो धनुर्धरः सन्। अन्यत्र सेन्द्रचापः। सुरपथ आकाशे। 'ऋक्पू-' इत्यादिना समासन्तः। तडितोस्य सन्तीति तडित्वान्मेघ इव। 'तसौ मत्वर्थे' इति भसंज्ञायां पदकार्यं (दकारः ?) न भवति। किंतु झयो मतुपो यकारस्य वकारः। 'तसौ मत्वर्थे' इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वान्न जश्त्वम्। चचार। विजहारेत्यर्थः। अत्रोत्तरार्धे श्लेषानुप्राणितोऽयमुपमालंकारः स्पष्टः। चलितनीलशैलेत्यत्र नीलशैलस्य चलनासंभवादियमभूतोपमेत्याचार्यदण्डिप्रभृतयो बभणुः। अतएवाप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालंकारिकाः सर्वे वर्णयन्ति। पक्षच्छेदात्पूर्वं यदि विवक्षा तदैवोपमेत्यलम्। पृथ्वीवृत्तम्। लक्षणमुक्तम्। अत्र श्रीरामायणारण्यकाण्डाद्यपद्याद्यपदं प्रयुक्तमित्यवगन्तव्यम्। तच्च 'प्रविश्य तु महारण्यम्' इति ॥

तदनु[1] कण्डूलवरशुण्डालकपोलकषणविषमितामितविटपसालषण्डनिर्यातनिर्यासगन्धानन्याप्तगन्धान्विदधानैराहुतिगन्धैरनुमीयमानानविनाभूतजलाशयानाश्रमभागानभितश्चरतोरातिथ्यशमितमार्गश्रमयो रामलक्ष्मणयोरध्वानं रुरोध विराधाभिधानो यातुधानः।

**तदन्विति**। कण्डूर्नाम, नखाद्युल्लेखनापनेयस्त्वग्रोगविशेषः। सा एषामस्तीति कण्डूलाः। सिध्मादित्वाल्लच्। शुण्डास्तुण्डा एषां सन्तीति शुण्डालाः। 'प्राणिस्थादातो

---

१ 'ततः' इति पाठः. २. 'कण्डूलापनयनपटुशुण्डाल' इति पाठः. ३. 'मितानमितविकटविटप' इति पाठः. ४. 'श्राहुति' इति पाठः. ५. 'गन्धैर्धूमस्तोमैः' इति पाठः. ६. 'श्रमित'; 'प्रश्रमित' इति पाठौ. ७ 'दाशरथ्योः' इति पाठः. ८. 'तरसा रुरोध'; 'सहसा रुरोध' इति पाठौ.

लजन्यतरस्याम्' इति मत्वर्थीयो लच्प्रत्ययः। रेफान्तपक्षे 'कुटीशमीशुण्डाभ्यो रः' इति रप्रत्ययः। कण्डूला ये वरशुण्डालकपोला मत्तेभगण्डस्थलानि तेषां कषणेन संघर्षणेन विषमिता विशकलीकृता अमिता असंख्याताश्च विटपाः शाखा यस्य स तथोक्तः। 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्भशाखयोः' इति विश्वः। तादृशो यः सालषण्डः सर्जतरुनिवहस्तस्मान्निर्यातो निर्गतो निर्यासगन्धो मज्जाविशेषामोदो येषां ते तथोक्तानप्यात्तगन्धान्पुनः स्वीकृतामोदान्। अभिभूतामोदानिति गम्यते। विदधानैः। निर्यासगन्धविधुरत्वेऽपि पुनः स्वाभिव्याप्त्या बहुलतरगन्धसंपन्नान्कुर्वाणैरित्यर्थः। 'साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः'। 'आत्तगन्धोऽभिभूतः स्यात्' इति चामरः। आहुतिगन्धैर्हूयमानहविराद्यामोदैर्हेतुभिः। 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः। अनुमीयमानानभ्यूह्यमानान्। दूरादेवेति शेषः। इमे ऋष्याश्रमा भवितुमर्हन्ति आहुतिगन्धवत्त्वात्संप्रतिपन्नाश्रमवदित्यनुमितिविषयीक्रियमाणानित्यर्थः। अविनाभूताः सर्वतः प्रतिपन्ना जलाशया ह्रदा येषु तान्। श्रमहारिण इत्यर्थः। आश्रमभागानभितस्तपोवनानां समन्तात्। 'अभितःपरित–' इत्यादिना द्वितीया। चरतोः संचारतत्परयोरातिथ्येन मुनिविरचितातिथिसत्कारेण। 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः शमितः शान्तिं गमितो मार्गश्रमोऽध्वगमनप्रयुक्तखेदो ययोस्तयोः। 'श्रमः खेदोऽध्वरत्यादेः' इति लक्षणम्। रामलक्ष्मणयोर्दाशरथ्योरध्वानं मार्गम्। विराध इत्यभिधानं नाम यस्य स तथोक्तो यातुधानो राक्षसो रुरोध निरुद्धवान्। 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' इत्यमरः॥

**स एष रोषभीषणवेषस्त्रिशिखशिखावतंसितविविधमृगशवशतहृदयः शतह्रदातनयः सीतामपजहार। व्याजहार च दाशरथी।**

स इति। रोषेण सहजामर्षेण भीषणो भयंकरो वेषो यस्य स तथोक्तः। नन्द्यादित्वाल्ल्युट्। त्रिशिखशिखया त्रिशूलाग्रेणावतंसितानि प्रोतानि विविधमृगशवशतहृदयानि शतसंख्याकसिंहादिनानाविधमृगमृतशरीरवक्षःप्रदेशा यस्य स तथोक्तः सन् भक्षणार्थं शूलाग्रप्रोतसिंहाद्यनेकमृगनिवह इत्यर्थः। तथा रामायणम्—'त्रीन्सिंहांश्चतुरो व्याघ्रान्द्वौ वृकौ पृषतां दश। सविषाणं वसादिग्धं गजस्य च शिरो महत्॥ अवसज्यायसे शूले निनदन्तं महास्वनम्' इति। शतह्रदायास्तनयः स एष सोऽयं विराधः सीतामपजहारापहृतवान्। दाशरथी रामलक्ष्मणौ प्रति च व्याजहारोवाच। 'व्याहार उक्तिर्लपितम्' इत्यमरः॥

व्याहारप्रकारमेवाह—

**कौ युवां युवानौ, कुतस्त्यौ, वामाचारवत्प्रतिभाति वामाचारः। चीरं वपुषि, जटाः शिरसि, करे च चण्डकोदण्डः। कथमाकल्पः, क्व च कल्पलताकल्पेयमनल्पाभरणा तरुणीति।**

---

१. 'भीषणस्त्रिलोकी' इति पाठः. २. 'शिखरावतंसित' इति पाठः. ३. 'शतः' इति पाठः. ४. 'प्रतिभाति मे' इति पाठः.

काविति। युवानौ तरुणौ युवां भवन्तौ कौ। कस्मिन्वंशे जातावित्यर्थः। कुतः कस्माद्देशादागतौ कुतस्त्यौ। 'अव्ययात्त्यप्'। वां युवयोः। 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ' इति वामादेशः। आचारः प्रवृत्तिर्वामाचारवद्वक्राचारवत्। अतिरम्याचारवदिति परमार्थः। 'वामस्तु वक्रो-रम्ये स्यात्सव्ये वामस्थितेऽपि च' इति शब्दार्णवे। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। प्रतिभाति परिस्फुरति। कुतः। वपुषि देहे चीरं वल्कलम्। शिरसि जटाः। करे च चण्डः प्रकाशमानः कोदण्डो धनुर्यस्य स तथोक्तः। अयं परिदृश्यमान आकल्पो जटावल्कलशरचापासिधारणरूपो वेषः। 'आकल्पवेषौ नेपथ्यम्' इत्यभिधानात्। क्व। कल्पलताकल्पा कल्पवल्लीसदृशी। सकलमनोरथपूरणीत्यर्थः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः। अनल्पाभरणा सकलाभरणभूषितेयमेषा तरुणी सुन्दरी। क्व च। मुनिवेषधारणस्त्रीसाहचर्ययोरत्यन्तविरुद्धत्वादिति भावः। इति व्याजहारेति संबन्धः॥

**दाशरथिरपि कथितनिजान्वयो विराधाङ्के वेपमानां विदेहदुहि[1]तरं विलोक्य सकोपः सौमित्रिणा साकं रक्षोवक्षसि शिलीमुखान्नि[2]चखान।**

दाशरथिरिति। दाशरथिः श्रीरामोऽपि कथित उक्तो निजान्वयो निजवंशो येन स तथोक्तः सन्। इक्ष्वाकुवंशप्रभवत्वादिनिजकथां कथयित्वेत्यर्थः। विराधस्याङ्के। कटिप्रदेश इति यावत्। वेपमानां भयसंभ्रान्ततया कम्पमानां विदेहदुहितरं वैदेहीं विलोक्य। अतएव सकोपः सामर्षः सन्सौमित्रिणा साकं लक्ष्मणेन सह रक्षोवक्षसि विराधोरःस्थले। शिली शल्यं मुखे येषां ते शिलीमुखा बाणास्तान्निचखान निखातवान्। सप्तभिर्बाणै रक्षोवक्षो विदारयामासेत्यर्थः। 'धनुषा ज्यागुणवता सप्तबाणान्मुमोच ह' इति श्रीरामायणे। 'अलिबाणौ शिलीमुखौ' इत्यमरः॥

ततः किं तत्राह—

**वि[3]शिखे विशिखे त[4]स्मिन्विधातृवरवर्मणि।**
**सीतां वि[5]क्षिप्य चिक्षेप शूलं रक्षो रघूद्वहे॥ २॥**

**विशिख इति।** विधातृवरो ब्रह्मवर एव वर्म कञ्चुकं यस्य तस्मिन्। अभेद्यकवच इत्यर्थः। 'तनुत्रं वर्म दंशनम्' इत्यमरः। अतएव तस्मिन्विराधे विषये विशिखे। रामबाणेष्वित्यर्थः। जातावेकवचनम्। अतएव शिलीमुखानिति न बहुवचनविरोधः। विगताः शिखा अग्राणि यस्य तस्मिन्। अकिंचित्करेषु सत्स्वित्यर्थः। रक्षो विराधः। सीतां विक्षिप्य विहाय रघूद्वहे रघुनायके विषये शूलं चिक्षेप प्रयुयोज॥

**तदनु शूलमखण्डयदञ्जसा शितशिखं रघुनायकसायकः।**
**नियतमेव विराधविरोधिनां हृदयशूलमपि त्रिदिवौकसाम्॥ ३॥**

**तदन्विति।** तदनु तदनन्तरं रघुनायकस्य सायको बाणः शितशिखं तीक्ष्णाग्रं

---

१. 'विदेहराज' इति पाठः. २. 'निजघान' इति पाठः. ३. एतत्पूर्वम् 'ततः' इति पाठः क्वचित्. ४. 'तत्र' इति पाठः. ५. 'निक्षिप्य' इति पाठः.

शूलं विराधप्रयुक्तं त्रिशूलमञ्जसा शीघ्रमखण्डयदच्छिनत् । तथा विराधविरोधिनाम् । विराधोपद्रुतानामित्यर्थः । त्रिदिवः स्वर्ग ओकः स्थानं येषां तेषां देवानां नियतं नित्यानुस्यूतम् । एवकारस्त्वयोगव्यवच्छेदार्थकः । हृदयशूलं हृच्छूलमप्यखण्डयत् । श्रीरामबाणखण्डितं विराधशूलं निरीक्ष्य देवा विशल्यान्तःकरणा बभूवुरित्यर्थः । अत्र द्वयोः शूलयोः प्रकृतयोरेव खण्डनक्रियारूपसाम्यादौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगिता । द्रुतविलम्बितम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥

**विराधोऽपि क्रुधा सरभसमभिपत्य स्कन्धे निधाय रामलक्ष्मणौ गतिनिरोधापराधपरिहाराय[1] हिमकराहिमकरौ[2] प्रस्थे वहन्विन्ध्य इव प्रतस्थे ।**

**विराध इति ।** विराधोऽपि क्रुधा शूलखण्डनजनितक्रोधेन सरभसं सवेगम् । 'रभसो वेगहर्षयोः' इति विश्वः । अभिपत्याभ्युपगम्य । गतिनिरोधापराधपरिहाराय निजागमनप्रतिबन्धनिराकरणार्थं रामलक्ष्मणौ स्कन्धे । अंसयोरित्यर्थः । निधायारोप्य हिमकराहिमकरौ चन्द्रसूर्यौ प्रस्थे सानौ । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । वहन्धारयमाणो विन्ध्यो विन्ध्याचल इव प्रतस्थे चचाल । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । अत्र विन्ध्यस्य मेरुस्पर्धया चन्द्रसूर्यगतिनिरोधकौशलसंभवेऽपि प्रस्थानासंभवादुत्प्रेक्षा ॥

**रामस्तत्र विराधवधोद्युक्तं सौमित्रिमेवमभिदधे ।**

**राम इति ।** तत्र तस्मिन्समये रामो विराधस्य वधे हिंसायामुद्युक्तं सन्नद्धं सौमित्रिमभिदध उवाच ॥

तदेवाह—

**या तु नः पदवी सैषा[3] यातुनश्चास्य लक्ष्मण ।**
**यातुकामं तयैवेदं यातु कामं न हन्यताम् ॥ ४ ॥**

**येति ।** हे लक्ष्मण, या तु यैव । तुशब्दस्त्ववधारणार्थकः । नोऽस्माकं संबन्धिनी पदवी मार्गः । अस्मज्जिगमिषिता पदवीत्यर्थः । सैषैवास्य यातुनो राक्षसस्य पदवी । 'नैर्ऋतो यातुरक्षसी' इत्यमरः । अस्त्वेव । किं तत्राह—इदं रक्षस्तया पदव्यैव । यातुं कामो यस्य तद्यातुकामं गन्तुकामम् । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । अतः कामं यथेच्छं यातु गच्छतु । यातेर्लोट् । न हन्यतां न वध्यताम् । दुर्गमेऽस्मिन्कान्तारमार्गेऽस्मद्वहनतात्पर्येणोपकारत्वादयं न हन्तव्य इत्यर्थः । नह्यस्माभिरस्मात्क्षुद्ररक्षःकीटकाद्भेतव्यम् । किंतु कतिपयोद्वहनेन सुखं गत्वानन्तरममुं निहन्वः । अतो यथेच्छं गच्छत्वित्यर्थः । एतेनास्यात्यन्तधैर्यसंपत्तिः सूच्यते । 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः । अत्र श्रीरामस्य कान्तारसुखसंचारे काकतालीयन्यायेनान्यस्यार्थस्य रक्षोवहनस्य कारणत्वकथनात्समाधिरलंकारः । 'कारणान्तरयोगात्कार्यस्य सुकरत्वं समाधिः' इति सूत्रम् ॥

---

१. 'परिहरणायैव' इति पाठः. २. 'मिहिरहिमकरौ' इति पाठः. ३. 'सेयं' इति पाठः.

**अयि कवलय मामम् विमुञ्चेत्यतिकरुणं रुदतीमवेक्ष्य सीताम्।**
**अरमरचयतामुभावसिभ्यां पिशितभुजं भुजभारहीनमेनम्॥ ५॥**

अयीति। अयि हे राक्षस, मां कवलय भक्षय। अमू रामलक्ष्मणौ विमुञ्च त्यज। 'शे मुचादीनाम्' इति नुम्। इत्युक्त्वेति शेषः। स्वापेक्षयापि तयोरत्यन्तप्रेमातिशयत्वस्य संभवादिति भावः। अतिकरुणमतिदीनं रुदतीं रोदनं कुर्वाणां सीतामवेक्ष्य दृष्ट्वा उभौ रामलक्ष्मणौ। अरं क्षिप्रम्। 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः। असिभ्यां खड्गाभ्यामेनं पिशितभुजं क्रव्यादं विराधम्। भुजावेव भारस्तेन हीनं रहितमरचयतामकुरुताम्। लक्ष्मणः सव्यबाहुं रामो दक्षिणं च चिच्छेदेत्यर्थः। तथा श्रीरामायणम्—'तस्य रौद्रस्य सौमित्रिः सव्यं बाहुं बभञ्ज ह। रामोऽपि दक्षिणं बाहुं तरसा तस्य रक्षसः॥' इति। पुष्पिताग्रा वृत्तम्। 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्॥

**ततस्तीक्ष्णतरप्रहरणगवाक्षितवक्षसा रक्षसा नपरित्यक्तेषु प्राणेषु पराक्रमाविषयपराक्रमौ प्राक्रमेतामेतौ तदङ्गगलितरुधिरधारासेकेन खननक्षमायां काननक्षमायां राक्षसशवोचितमवटमतिविशङ्कटमुत्पादयितुम्।**

तत इति। ततो भुजच्छेदानन्तरं तीक्ष्णतरप्रहरणेन गाढतरप्रहारेण गवाक्षवत्कृतं गवाक्षितं छिद्रितम्। 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः। वक्ष उरःस्थलं यस्य ते[illegible] तथोक्तेन। शैषिकस्य कपो वैभाषिकत्वान्न कप्। तेन रक्षसा विराधेन प्राणेषु नपरित्यक्तेषु सत्सु। तस्मिन्नमृते सतीत्यर्थः। नञर्थस्य नशब्दस्य 'सुप्सुपा' इति समासः। एतौ रामलक्ष्मणौ पराक्रमस्य भुजबलस्याविषयोऽगोचरः पराक्रमः काठिन्यं यस्याः सा तस्याम्। अशक्यायामित्यर्थः। तथा तस्य विराधस्याङ्गेभ्योऽवयवेभ्यो गलितया परिस्रवन्त्या रुधिरधारया रक्तप्रवाहेण यः सेक आप्लवस्तेन खननक्षमायामवदारणयोग्यायां काननक्षमायां कान्तारक्षित्याम्। 'क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः। राक्षसशवस्य राक्षसकुणपस्योचितमनुरूपम्। 'यादृशां तादृशी गतिः' इति वचनादिति भावः। राक्षसानां प्रेतानां गर्तप्रक्षेपणस्य धर्मत्वादिति भावः। तेनैवोक्तं श्रीरामायणे श्रीरामं प्रति—'रक्षसां गतसत्त्वानामेष धर्मः सनातनः। अवटे ये निधीयन्ते तेषां लोकाः सनातनाः॥' इति। अतिविशङ्कटमत्यन्तविशालम्। 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' इत्यमरः। अवटं गर्तम्। 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः। उत्पादयितुं रचयितुं प्राक्रमेतामुपक्रान्तवन्तौ॥

**तत्क्षणमेव क्षणदाचरोऽपि संजातप्रत्यभिज्ञो रामाय व्यजिज्ञपत्।**

तत्क्षणमेवेति। तत्क्षणमेव तस्मिन्नेव क्षणे। गर्तरचनासमय एवेत्यर्थः।

---

१. 'क्षुरप्रप्रहरण' इति पाठः. २. 'विकटमवटम्' इति पाठः. ३. 'प्रत्यभिज्ञः सन्सरामं' इति पाठः.

'अत्यन्तसंयोगे द्वितीया' । क्षणदाचरो विराधोऽपि संजाता स्मृत्यारूढा प्रत्यभिज्ञा पूर्वानुभूतस्ववृत्तान्तपरामर्शो यस्य तथोक्तः सन् । रामाय व्यजिज्ञपद्विज्ञापयामास । निजवृत्तान्तमिति शेषः । 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी ॥

तत्प्रकारमेव विवृणोति—

**आत्मनो गन्धर्वकुलसंभवं रम्भापरि[१]रम्भणारम्भसंरम्भं तच्छ्रवणकुपितवैश्रवणद[२]त्तां रक्षोरूपिणीं शापव्यापदं तस्यास्तथाविधमवसानं च ।**

**आत्मन इति ।** आत्मनः स्वस्येति सर्वत्र संबध्यते । गन्धर्वाणां देवयोनिविशेषाणां देवगायकानां कुले वंशे संभवमुत्पत्तिम् । तथा रम्भाया वैश्रवणस्नुषायाः परिरम्भणारम्भसंरम्भमालिङ्गनोद्योगसंभ्रमं च । तथा तच्छ्रवणेन रम्भापरिरम्भणारम्भसंरम्भाकर्णनेन कुपितः क्रुद्धो वैश्रवणः कुबेरस्तेनैव दत्तामतिसृष्टाम् । विश्रवसोऽपत्यं वैश्रवण इति विग्रहः । 'तस्यापत्यम्' इत्यण् । 'विश्रवसो विश्रवणरवणौ' इति प्रकृतेर्विश्रवणादेशः । 'किंनरेशो वैश्रवणः' इत्यमरः । रक्षोरूपिणीम् । राक्षसरूपदायिनीमित्यर्थः । शापव्यापदं शापरूपमहाविपत्तिं च तस्याः शापव्यापदस्तथाविधं तादृक्प्रकारम् । वनवाससंचारतत्परेण रामेण श्वभ्रप्रक्षेपणरूपमित्यर्थः । अवसानमन्तं च । व्यजिज्ञपदिति संबन्धः । अत्रेदं रामायणवचनम्—'अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुम् । तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन ह ॥ प्रसाद्यमानश्च मया सोऽब्रवीन्मां महायशाः । यदा दाशरथी रामस्त्वां वधिष्यति संयुगे ॥ तदा प्रकृतिमापन्नो भवान्स्वर्गं गमिष्यति । इति वैश्रवणो राजा रम्भासक्तमुवाच ह ॥' इति ॥

**रक्षोवधः प्रकृत इत्ययमेव शंसे-**
**त्स्वर्गाय गायकपदं गमितो विराधः ।**
**नागालयाय वपुरस्य वदेदितीव**
**श्वभ्रे तदक्षिपदिषुप्रहतं स रामः ॥ ६ ॥**

**रक्ष इति ।** रक्षोवधो राक्षससंहारः प्रकृतः प्रक्रान्तः । रामेणेति शेषः । इति । एतद्वचनमित्यर्थः । गायकपदं गन्धर्वस्थानं गमितः प्रापितोऽयं विराध एव स्वर्गाय । स्वर्गलोकवासिभ्य इत्यर्थः । शंसेत् । स्वर्गलोकगतममुं दृष्ट्वा देवाः प्रक्रान्तो राक्षसवध इति जानीयुरित्यर्थः । तथास्य विराधस्य वपुर्मृतशरीरं कर्तृ । नागालयाय । पाताललोकवासिभ्य इत्यर्थः । 'अधोभुवनपातालं बलिसद्म रसातलम् । नागलोकः' इत्यमरः । रक्षोवधः प्रवृत्त इति वदेत्कथयेत् । भूलोके तु प्रसिद्धमेवेति भावः । इति मत्वेति शेषः । स राम इषुभिर्बाणैः प्रहतं प्रकर्षेण हतं तद्विराधवपुः श्वभ्रे गर्तेऽक्षिपत् क्षिप्तवानिवेत्युत्प्रेक्षा । पातालपर्यन्तगम्भीरे गर्ते तद्वपुर्निपातितवानित्यर्थः ॥

---

१. 'परिरम्भ' इति पाठः. २. 'दत्तः' इति पाठः.

**तदनु नाकलोकभजनाय पुरुहूतेन समाहूतस्य भगवतः शरभङ्गस्याश्रमपदं रघुपतिरभजत।**

**तदन्विति।** तदनु विराधवधानन्तरं रघुपतिः श्रीरामो नाकलोकभजनाय स्वर्लोकनिवासार्थं पुरुहूतेनेन्द्रेण समाहूतस्य तावकं तपः फलितम्, अतः स्वर्लोकं भजेत्याकारितस्येत्यर्थः। समस्तमुनिजनसमभिलपणीयसांनिध्येनेन्द्रेण स्वयं समाहूतत्वात्किं तस्य माहात्म्यं कथनीयमिति भावः। भगवतः पूज्यस्य शरभङ्गस्य शरभङ्गनाम्नो मुनेराश्रमपदं तपोवनस्थानमभजत प्राप॥

**तत्र।**

**दशशतनयनेऽपि वीक्ष्यमाणे दशरथपुत्रसिषेविषैव जाता।**
**मनसिजशरभङ्गकारिवृत्तेर्मनसि मुनेः शरभङ्गनामभाजः॥ ७॥**

**तत्रेति।** तत्र तस्मिन्॥ **दशेति।** दशशतानि नयनानि यस्य तस्मिन्सहस्राक्षे वीक्ष्यमाणे दृश्यमाने सत्यपि। अलभ्यदर्शने देवेन्द्रे दृष्टे सत्यपीत्यपिशब्दार्थः। मनसिजशराणां मन्मथबाणानां भङ्गं करोतीति तद्भङ्गकारिणी वृत्तिर्वर्तनं यस्य तथोक्तस्य। जितेन्द्रियस्येत्यर्थः। भङ्गकारीत्यत्र 'स्त्रियाः पुंवत्–' इत्यादिना पुंवद्भावः। शरभङ्ग इति नाम भजतीति तथोक्तस्य मुनेः। 'निर्वृत्तः सर्वतत्त्वज्ञः कामक्रोधादिवर्जितः। ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः॥' इत्युक्तलक्षणस्य शरभङ्गमुनेर्मनसि दशरथपुत्रसिषेविषैव श्रीरामभजनेच्छैव। सेवतेः सन्नन्तात्स्त्रियामप्रत्यये टाप्। जाता समुत्पन्ना। निरतिशयनिर्मलनित्यानन्दस्वरूपस्य भक्तजनपारिजातस्य भगवतः श्रीरामस्य भजनानन्दं विहाय स्वर्लोके न किमपि भोक्तव्यमस्ति, अतस्तत्सेवां कृत्वा स्वर्लोकमागमिष्यामीतीन्द्रं प्रेषितवानित्यर्थः। अतएवेन्द्रवाक्यमुल्लङ्घ्यापि श्रीरामभजनमस्य युक्तमिति भावः। पुष्पिताग्रा वृत्तम्॥

**स मुनिराश्रमस्थं काकुत्स्थमातिथ्येन समाराध्य तत्सांनिध्याच्छुद्धां मन्त्रपूतामाहुतिमिवात्मतनुं अतनूष्मणि तनूनपाति पातयित्वा शाश्वतं पदं समाश्रितवान्।**

**स इति।** स मुनिः शरभङ्गः। आश्रमे तिष्ठतीत्याश्रमस्थम्। निजभाग्यवशादाश्रमं प्रत्यागतमित्यर्थः। 'सुपि स्थः' इति कप्रत्ययः। काकुत्स्थं ककुत्स्थान्वयेऽवतीर्णं श्रीराममातिथ्येनातिथिसत्कारेण समाराध्य सम्यक्पूजयित्वा। तस्य श्रीरामस्य सांनिध्यात्। संनिधानेन शुद्धां पवित्रामात्मतनुं निजशरीरं मन्त्रेण ऋग्यजुःसामादिना मन्त्रवादेन पूतां पवित्रामाहुतिमाज्याहुतिमिवेत्युपमा। अतनुरमन्द ऊष्मा यस्य तस्मिन्। जाज्वल्यमान इत्यर्थः। तनूनपाति जातवेदसि। 'जातवेदास्तनूनपात्' इत्यमरः। पातयित्वा निक्षिप्य। शाश्वतं पदं ब्रह्मस्थानं समाश्रितवान्। मुक्तोऽभूदित्यर्थः। 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुत्या परमात्मरूपश्रीरामदर्शनस्य मोक्षहेतुत्वान्मुक्तिर्युक्तैवेति भावः। 'वृद्धः

१. 'आहुतिम्' इति पाठः. २. 'आत्मनस्तनुं' इति पाठः.

शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥' इति वचनाच्छरभङ्गस्य न्याय्य एवाग्निप्रवेश इति मन्तव्यम् ॥

**ततस्तीक्ष्णतपसः सुतीक्ष्णस्य[१] निदेशेन[२] देशात्तस्मादुच्चलितः सलिलनिधिपानसंभावितजीवनाभावशङ्कया शरणाश्रयणाय लम्बमाननीलाम्बुदकुटुम्बसंदेहावहेन नानानोकहनिवहेन पिहिताभोगमगस्त्याश्रमं रामः ससंभ्रमम्[३]माससाद । अकथयच्च मैथिलीम् ।**

**तत इति ।** ततः शरभङ्गमोक्षानन्तरं रामस्तीक्ष्णं निशितं तपो व्रतोपवासादिरूपं यस्य तथोक्तस्य सुतीक्ष्णस्य मुनेर्निदेशेनाज्ञया । एतेन सुतीक्ष्णसंदर्शनमपि कृतमिति सूचितम् । तस्माद्देशात्सुतीक्ष्णाश्रमप्रदेशात् । 'पञ्चमी विभक्ते' इति पञ्चमी । उच्चलितः प्रस्थितः सन् । सलिलनिधिपातेन समुद्राचमनेन संभाविता संप्रतिपन्ना या जीवनाभावशङ्का जीवनस्योदकस्य । जीविकायाश्चेति गम्यते । अभावशङ्काभावोत्प्रेक्षा तया हेतुना । शरणाश्रयणाय । शरणं गन्तुमित्यर्थः । लम्बमानं स्रंसमानं यन्नीलाम्बुदकुटुम्बं नीलमेघनिकुरुम्बम् । तदिति संदेहावहेन संशयप्रदेन नानानोकहनिवहेन नानाविधवृक्षषण्डेन पिहिताभोगमाच्छादितदेशविस्तारम् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अगस्त्यमुनेराश्रमं ससंभ्रममाससाद प्राप ॥ **अकथयदिति ।** मैथिलीं प्रत्यकथयदुक्तवांश्च । मनोविनोदार्थमाख्यायिकाः कथयितुमारब्धवानिति भावः । अत्रानोकहनिवहविशिष्टनीलाम्बुदसंदेहवत्त्वोत्प्रेक्षणात्संदेहोज्जीविनी गुणनिमित्ता जातिस्वरूपोत्प्रेक्षेति संकरः । संदेहशब्दस्य भ्रान्तिपरत्वेन भ्रान्तिमदलंकार इति विवेकः ॥

कथनप्रकारमेवाह चतुर्भिः—

**तस्येदमाश्रमपदं सरसीरुहाक्षि[४]**
**संख्याविहीनमहिमैकनिकेतनस्य ।**
**भर्ता समस्तसरितां कुपितस्य यस्य**
**हस्तारविन्दमकरन्ददशामवाप ॥ ८ ॥**

**तस्येत्यादिना ।** हे सरसीरुहाक्षि पद्मलोचने मैथिलि, इदमेतत्परिदृश्यमानं संख्याविहीनमहिमैकनिकेतनस्यागणनीयमाहात्म्यमुख्यनिलयस्य तस्य मुनेराश्रमपदमाश्रमस्थानम् । यत्तदोर्नित्यसंबन्धात्तच्छब्दस्य यच्छब्दापेक्षायामाह—समस्तसरितां भर्ता समुद्रः कुपितस्य क्रुद्धस्य यस्य मुनेरगस्त्यस्य हस्त एवारविन्दं तत्र मकरन्ददशां पुष्परसावस्थामवाप । ईदृङ्माहात्म्यसंपन्नोऽयं मुनिरिति भावः । रूपकालंकारः । तथा परिच्छिन्ने मुनिहस्तेऽपरिच्छिन्नसमुद्रस्याधेयत्वकथनादधिकप्रभेदोऽलंकारः । 'आधाराधेययोरानुरूप्याभावेऽधिको मतः' इति लक्षणात् । वसन्ततिलकावृत्तम् ॥

---

१. 'सुतीक्ष्ण' इति पाठः. २. 'निदेशात्' इति पाठः. ३. 'रामः ससंभ्रमम्' इति नास्ति क्वचित्. ४. 'सरसीरुहाक्षी' इति पाठः.

इह समदगजेन्द्रन्यस्तहस्तातिभारा-
त्पथि नियमितशाखः सल्लकीवृक्ष एषः ।
अभिनयति निकामं संगतोच्छ्रायहानि-
र्मुनिवरकरपाताद्भुग्नविन्ध्याद्रिमुद्राम् ॥ ९ ॥

इहेति । इहास्मिन्पथ्याश्रममार्गे समदगजेन्द्रेण मत्तमहामतङ्गजेन न्यस्तो विश्रमार्थं पल्लवभक्षणार्थं वा निक्षिप्तो यो हस्तो निजशुण्डः स एवातिभारो भारातिशयस्तस्माद्धेतोः नियमितशाखो भुग्नशाखः । अतएव निकाममत्यन्तं संगता प्राप्ता उच्छ्रायहानिरौन्नत्यभङ्गो यस्य स तथोक्तः । उत्कृष्टः श्राय उच्छ्रायः । घञन्तेनोप्रसर्गस्य समानोपसृष्टाद्धञ्प्रत्ययः । 'श्रिणीभुवोऽनुपसर्गे' इति नियमात् । एषोऽयं परिदृश्यमानः । सल्लकी चासौ वृक्षश्चेति विशेषणसमासः । गजभक्ष्याख्यवृक्षविशेषः । अत्र वृक्षशब्दस्य सामान्यवाचकत्वान्न पौनरुक्त्यं चूतवृक्ष इत्यादिवत् । 'गन्धिनी गजभक्ष्या तु सुहवा सुरभीरसा । महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ॥' इत्यमरः । 'सल्लकी स्याद्गजप्रिया' इति हलायुधश्च । मुनिवरस्यागस्त्यस्य महामुनेः करपाताद्धस्तेन नियमनाद्धेतोः । भुग्नस्यावनतस्य विन्ध्याद्रेर्मुद्रां परिपाटीमभिनयति नाटयत्यनुकरोति । प्रकटयतीत्यर्थः । एतन्मुनिनियमितविन्ध्याद्रिमुद्रानुकरणमेतन्मुन्याश्रमस्थवृक्षस्य युक्तमिति भावः । पुरा किल मेरुस्पर्धया प्रवर्धमानं सूर्यमार्गविरोधिनं विन्ध्याचलं त्रिदशाभ्यर्थितोऽगस्त्यः स्वहस्तेन नियमितवानिति पौराणिकी कथा । अत्राभिनयतेः सादृश्यपर्यवसानादुपमा । तथा मुद्रामित्यत्र तत्सदृशीं मुद्रामिति सादृश्यस्यापेक्षादसंभवद्वस्तुसंबन्धरूपो निदर्शनालंकार इत्यनयोः संसृष्टिः । मालिनीवृत्तम् ॥

तस्मिन्महापथधिया वदनं विगाह्य
निर्गन्तुमक्षमतया जठरे लुठद्भिः ।
वन्यैर्गजैरजगराः पिशिताशनेभ्यो
वातापिदानवदशामुपदेशयन्ति ॥ १० ॥

तस्मिन्निति । तस्मिन्नाश्रमेऽजगरास्तिलित्सापरनामानो महाङ्गाः सर्पविशेषाः कर्तारः । 'तिलित्सः स्यादजगरः' इत्यमरः । महापथधिया महामार्ग इति भ्रान्त्या । अतएव भ्रान्तिमदलंकारः । वदनं निजवक्त्रकुहरं विगाह्य प्रविश्य । निर्गन्तुं पुनरागन्तुमक्षमतयासमर्थतया । संकटत्वादिति भावः । जठरे कुक्षिगोलके लुठद्भिर्वर्तमानैर्वनेभवैर्वन्यैर्गजैः पिशिताशनेभ्यः क्रव्यादेभ्यः । वातापिदानवदशां वातापिनामकदानवावस्थामुपदेशयन्त्युपदेशं कारयन्ति । उपमा । उपपूर्वाद्दिशतेर्ण्यन्ताल्लट् । पूर्वमसुष्य महात्मनोऽगस्त्यस्योदरे वातापिनाम्ना दानव एवमेव परिलुठञ्जीर्णोऽभूत् । अतो युष्माभिः कैतवाचरणैर्न भवितव्यमिति बोधयन्तीत्यर्थः । अत्रोक्तार्थासंबन्धेऽपि तत्संबन्धकथनादतिशयोक्तिभेदः । स च पूर्वोक्तभ्रान्तिमता सापेक्षितत्वात्संकीर्यते ।

---

१. 'विनमित' इति पाठः. २. 'अस्मिन्' इति पाठः.

अत्र श्रीरामायणवचनम्—'अगस्त्योऽपि तथा देवैः प्रार्थितोऽर्थं महर्षिभिः । अनुभूय किल श्राद्धे भक्षितः स महासुरः ॥' इति । वसन्ततिलकावृत्तम् ॥

आश्चर्यान्तरमपि विद्यत इत्याह—

**किंच ।**

**चुलुकगतसमुद्रास्वादने कुम्भयोने-**
**रितरकरनिरस्ता मक्षिकोत्सारलीला ।**
**गगनगतिविहीना ये घनाः पल्वलान्ते**
**विपिनमहिषवेषैः केवलं ते वलन्ते ॥ ११ ॥**

**किंचेति । चुलुकेति ।** ये घना मेघाश्चुलुकगतसमुद्रस्य दक्षिणकरतलस्थसागरस्यास्वादने । पानसमय इत्यर्थः । मक्षिकोत्सारलीला मक्षिकानिराकरणप्रक्रियया कुम्भयोनेरगस्त्यस्य । 'अगस्त्यः कुम्भसंभवः' इत्यमरः । इतरकरेण सव्यहस्तेन निरस्ता निराकृताः । जाता इति शेषः । ते घना गगनगतिविहीना निराकरणजनितदौर्बल्यान्नभोमार्गसंचरणसामर्थ्यरहिताः सन्तः । पल्वलान्तेऽल्पसरोमध्ये । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । विपिनमहिषवेषैररण्यलुलायभूमिकाभिः केवलमत्यन्तं वलन्ते संचलन्ते । वन्यमहिषव्याजेन परिलुठन्तीत्यर्थः । अत्र वेषशब्देन महिषत्वमपह्नुत्य विशिष्टघनत्वप्रतिपादनात्सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । मालिनीवृत्तम् ॥

**एवं विपिनविलोकनविस्मितमतिस्तदुटजनिकटमासाद्य रामः शिष्यैः प्रवेशितः सकललोकवन्द्यमानचरणारविन्दमरविन्दसंभवमिव वृन्दारकैर्मुनिवृन्दारकैश्च परिवृतं कोपहुंकारनिरहंकाराय नहुषाय भुजंगभावदूषिताय दत्तभुजंगभावं खगगतिनिरोधकल्यवैपुल्ययोर्दुरवगाहमहावनयोर्विन्ध्यशैलसिन्धुराजयोर्गाधतागाधतातस्करकरोदरैमुदरजातवेदोविरचितवातापिदानवावलेपलोपं लोपामुद्रावल्लभं सकलसरिद्वल्लभनिःशेषीकरणवाडवं वाडवप्रशस्तमपास्तसमस्ताशमप्युपगतदक्षिणाशं वृषैकतानजन्मानमपि कुम्भजन्मानं भगवन्तमगस्त्यमपश्यत् ।**

**एवमिति ।** एवमुक्तप्रकारेण विपिनविलोकनेन तपोवनदर्शनेन विस्मिता विस्मयं प्राप्ता मतिर्यस्य स तथोक्तो रामस्तस्यागस्त्यस्य मुनेरुटजनिकटं पर्णशालाभ्यर्णम् । 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः । आसाद्य प्राप्य । शिष्यैर्मुन्यन्तेवासिभिः श्रीरामोऽयं मुनिसंदर्शनाकाङ्क्षितया समागतस्तस्मै निवेदयन्त्विति लक्ष्मणवाक्येन मुनये निवेद्य तदनुमत्या पुनरागतैरित्यर्थः । प्रवेशितो मुनिसमीपं प्रापितः सन् । सकल-

---

१. 'तत्र' इति पाठः. २. 'चुलक' इति पाठः. ३. 'अरविन्दभवमिव वृन्दारकवृन्दैः' इति पाठः ४. 'उदरजातजातवेदो' इति पाठः. ५. 'जितवातापि' इति पाठः. ६. 'ब्राह्मणश्रेष्ठम्' इति पाठः.

लोकेनाशेषभुवनस्थजनेन वन्द्यमाने नमस्क्रियमाणे चरणारविन्दे पादपद्मे यस्य तम्। 'लोकस्तु भुवने जने' इत्यमरः। वृन्दारकैर्देवैस्तथा मुनिवृन्दारकैर्मुनिमुख्यैश्च परिवृतं परिवेष्टितम्। सकलमुनिसेव्यमित्यर्थः। 'वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्' 'वृन्दारकौ रूपिमुख्यौ' इत्युभयत्राप्यमरः। अतएवारविन्दसंभवं ब्रह्माणमिव स्थितमित्युपमा। तथा कोपहुंकारेण निजरोषजनितहुंकारेण निर्गतोऽहंकारो यस्य तस्मै। भुजंगभावेन शचीविटभावेन दूषितायावलिप्ताय नहुषाय ययातिजनकाय राज्ञे दत्तो भुजंगभावः सर्पत्वं येन तस्मै। 'भुजङ्गो विटसर्पयोः' इत्युभयत्राप्यभिधानात्। पुरा किल नहुषो राजा कुतश्चित्पुण्यवशात्सशरीरः स्वर्गं प्राप्य तत्रेन्द्रः सन् शचीजारणार्थं यानमधिरुह्य गच्छन्साहंकारः सर्प सर्पेति भगवन्तमाक्षिप्य कोपहुंकारकारिणा तेन सर्पो भवेति शप्त इति पौराणिकाः कथां कथयन्ति। खे गच्छन्तीति खगाः पक्षिणस्तेषामपि गतिनिरोधे गमनप्रतिबन्धे कल्यं समर्थं वैपुल्यं विशालत्वं ययोस्तयोर्दुरवगाहं दुष्प्रवेशं महावनं महाकाननमगाधजलं च ययोस्तयोः। 'वने सलिलकानने' इत्युभयत्राप्यमरः। विन्ध्यशैलसिन्धुराजयोर्विन्ध्याचलसमुद्रयोः संबन्धिन्यौ ये गाधतागाधते औन्नत्यगाम्भीर्ये तयोस्तस्करमवलोपकं करोदरं करो हस्त उदरं कुक्षिश्च यस्य तं तथोक्तम्। करतलनियमितविन्ध्यत्वात्कुक्षिनिक्षिप्तसमुद्रत्वाच्चेति भावः। असाधारणसामर्थ्यैकनिकेतनमित्यर्थः। अत्र विन्ध्यस्य गाधता समुद्रस्यागाधतेति च यथाक्रममन्वयाद्वनेत्यत्र श्लेषसंसृष्टो यथासंख्योऽलंकारः। तथोदरजातवेदसा जाठराग्निना विरचितो विहितो वातापिदानवावलेपलोपो वातापिनामकदानवगर्वनिवारणं येन तं तथोक्तम्। 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः। लोपामुद्राया वल्लभं दयितम्। 'मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी' इत्यमरः। 'वल्लभो दयितेऽध्यक्षे' इति विश्वः। सकलानामशेषाणां सरितां नदीनां वल्लभः पतिः समुद्रस्तस्य निःशेषीकरणे निरवशेषतापादने वाडवं वडवानलम्। पूर्वं निजोदरस्य सामर्थ्यवर्णनम्, इदानीं स्वस्येति न पौनरुक्त्यम्। अत्र मुनौ वाडवत्वरूपणाद्रूपकम्। तेन प्रसिद्धं वडवानलस्यैतच्छोषकत्वमित्यपूर्वरूपं वस्तु व्यज्यते। वाडवप्रशस्तं ब्राह्मणोत्तमम्। 'वाडवो वडवानलः', 'आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः' इति चामरः। अपास्तसमस्ताशं निरस्ताशेषतृष्णमप्युपगतदक्षिणाशं प्राप्तदक्षिणारूपद्रव्यातितृष्णमिति विरोधः, अधिष्ठितयाम्यदिशमिति परिहाराद्विरोधाभासोऽलंकारः। 'आशा दिगतितृष्णयोः' इत्युभयत्रापि वैजयन्ती। उक्तं च ब्रह्माण्डपुराणे—'अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः। वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः॥' इति। तथा वृषैकतानं सुकृतैकायनं जन्म यस्य तम्। सकलधर्मैकनिकेतनावतारतया महानुभावमित्यर्थः। वृषभायत्तजन्मानमिति च प्रतीयते। तथापि कुम्भजन्मानं क्षुद्रकुम्भोद्भवमिति विरोधः। उर्वशीदर्शनात्प्रस्कन्नस्य मित्रावरुणरेतसः कुम्भे निक्षिप्तत्वात्तत्संभवत्वेनास्य वस्तुगत्या परिहारात्पूर्ववदलंकारः। माहात्म्ये तावन्नोत्पत्तिस्थानं प्रयोजकमिति भावः। भगवन्तं षड्गुणैश्वर्यसंपन्नमगस्त्यमपश्यत्। 'सुकृते वृषभे वृषः', 'एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि' इति चामरः॥

ततः श्रीरामः किमकार्षीदित्याशङ्क्याह—

**प्रभामिवार्कीं तमसां निहन्त्रीं ब्राह्मीं दधानं नियमेन लक्ष्मीम् ।**
**तपोनिधिं शौर्यनिधिः प्रसन्नः स्वनाम संकीर्त्य ननाम रामः ॥ १२ ॥**

**प्रभामिति** । आर्कीमर्कसंबन्धिनीं प्रभां दीप्तिमिव तमसामज्ञानजनितमोहानामन्धकाराणां च निहन्त्रीं विध्वंसकारिणीम् । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । ब्राह्मीं लक्ष्मीं ब्रह्मतेजो नियमेन नैयत्येन निष्ठापारतन्त्र्येण समित्कुशाद्यागन्तुकसाधननिष्पाद्यकर्मविशेषेण वा हेतुना । दधानं धारयन्तम् । 'नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम्' इत्यमरः । तपसो व्रतोपवासादिसहितमेध्याशनरूपस्य निधिं निधानमगस्त्यं शौर्यनिधिर्महाशौर्यसंपन्नः । प्रसन्नो निर्मलान्तःकरण इति च । विशेषणद्वयेन दुष्टनिग्रहशिष्टानुग्रहसामर्थ्योक्तिः । रामः स्वनाम संकीर्त्य ननाम । 'श्रीरामवर्माहं भो अभिवादये' इति निजनामोच्चारणपूर्वकं नमश्चकारेत्यर्थः । ज्यायसां नमस्कारे तथा शास्त्राचारादिति भावः । 'अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् । असौनामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥' इति मनुस्मरणात् । अत्र श्लेषसंकीर्णोपमा । वृत्तमुपजातिः ॥

**अतः परमहर्षेण महर्षिणा प्रणीताभिराशीर्भिः सह मुरशासनशरासनं सरसिजासनास्त्रं सौत्रामणं तूणीरयुग्मं रुक्ममयकोशं खड्गं च प्रतिगृह्य तदाज्ञया गोदावरीतटनिकटप्रकटितां पञ्चवटीमसेवत ।**

**तत इति** । ततो नमस्कारानन्तरम् । राम इत्यध्याहारः । परमहर्षेण । साक्षात्परब्रह्मरूपोऽयं श्रीरामो मद्दर्शनापदेशेनागत्य स्वयं प्रत्यक्षोऽभूत्कृतनमस्कारश्चाभूदित्युत्पन्नामन्दानन्दतुन्दिलान्तःकरणेनेत्यर्थः । महर्षिणागस्त्येन । प्रणीताभिः स्वयं महर्षित्वात्तस्य च प्रीत्या राजपुत्रत्वाच्च विरचिताभिराशीर्भिः सहाशीर्वादैः साकम् । मुरशासनशरासनं वैष्णवचापम् । सरसिजासनास्त्रं ब्रह्मास्त्रम् । सुत्राम्ण इदं सौत्रामणमैन्द्रं तूणीरयुग्ममक्षयसायकतूणयुगलम् । तथा रुक्ममयकोशं हिरण्मयपिधानं खड्गं च प्रतिगृह्य स्वीकृत्य । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । तदाज्ञया तस्यागस्त्यस्य निदेशेन गोदावर्यास्तटनिकटे रोधःसमीपे प्रकटितां प्रसिद्धाम् । पञ्चानां वटानां समाहारः पञ्चवटी ताम् । तदुपलक्षितत्वात्तदाख्यया प्रख्यातं कंचिदाश्रममित्यर्थः । असेवत निवासार्थमभजत । पञ्चवटीत्यत्र 'तद्धितार्थ—' इत्यादिना समासः । 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा । 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भविष्यति' इति स्त्रीत्वम् । 'द्विगोः' इति ङीप् ॥

**तत्र विस्तृतपक्षद्वन्द्वमप्रतिद्वन्द्वं शौर्यावस्थाप्रत्ययं कृतापरोक्षमिव तार्क्ष्यं महामहीध्रकल्पं गृध्रराजमद्राक्षीत् ॥**

**तत्रेति** । तत्र पञ्चवट्यां श्रीरामो विस्तृतं विशालं पक्षद्वन्द्वं गरुद्युग्मं यस्य तम् ।

---

१. 'प्रपन्न' इति पाठः. २. 'प्रगृह्य' इति पाठः. ३. 'अप्रतिद्वन्द्वशौर्यं' इति पाठः. ४. 'प्रत्यय' इति पाठः.

'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति यादवः। अप्रतिद्वन्द्वमविद्यमानप्रतिभटम्। जगदेकवीरमित्यर्थः। अतः शौर्यावस्थाया महाशौर्यमर्यादायाः प्रत्ययमधीनम्। लोकोत्तरशौर्यसीमानमित्यर्थः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। 'अप्रतिद्वन्द्वशौर्यावस्थप्रत्ययम्' इति पाठेऽप्रतिद्वन्द्वाया निरुपमायाः शौर्यावस्थायाः प्रत्ययं कृतमपरोक्षमपरोक्षता येन तं प्रत्यक्षं तार्क्ष्यं गरुडमिव स्थितमित्युपमा। 'गरुत्मान्गरुडस्तार्क्ष्यः' इत्यमरः। महीं धरतीति महीध्रः। मूलविभुजादित्वात्कप्रत्ययः। यथाह वामनः—'महीध्रादयो मूलविभुजादौ तथा दर्शनात्' इति। महामहीध्रकल्पं महापर्वतसन्निभम्। ईषदसमाप्तौ कल्पप्प्रत्ययः। गृध्राणां राजानं गृध्रराजं जटायुषम्। 'राजाहःसखिभ्यष्टच्' इति टच्। अद्राक्षीदपश्यत्। दृशेर्लुङि सिचि वृद्धिः॥

पानेन हीनजलमब्धिमपास्य नूनं
मैनाक एष मुनिमाश्रयतीति जाताम्।
शङ्कामिमां रघुपतेः कथितात्मवंश-
स्त्वत्तातमित्रमहमित्यहरज्जटायुः॥ १२॥

पानेनेति। एषोऽयं मैनाकः पर्वतः। सिद्धवत्कृतनिर्देशोऽत्र तथा प्रतीयमानत्वादित्यवगन्तव्यम्। पानेन मुनिकर्तृकपानक्रियया हेतुना हीनजलं जलरहितम्। स्थलप्रायमित्यर्थः। अब्धिं समुद्रमपास्य त्यक्त्वा। पूर्वं पक्षच्छेदोद्यतपुरंदरभयात्तत्र निलीयमानत्वादिति भावः। यथाह कालिदासः—'मैनाकमम्भोनिधिबद्धसौख्यम्' इति। मुनिमगस्त्यमाश्रयत्यनुसरति। स्वाश्रयभङ्गकारिणः स्वस्याश्रयणीयत्वादिति भावः। नूनमित्युत्प्रेक्षायाम्। इत्येवंप्रकारेण जातामुत्पन्नामिमां रघुपतेः श्रीरामस्य शङ्कां वितर्कम्। 'शङ्का वितर्कभययोः' इति शाश्वतः। जटायुः कथितात्मवंशो विनतायां कश्यपाज्जातस्यारुणस्य गरुडाग्रजस्य तनयोऽहं श्येनीगर्भसंभवः संपातेरनुज इत्याद्युपवर्णितनिजान्वयवृत्तान्तः सन्। अहं त्वत्तातस्य दशरथस्य मित्रं सुहृत्। 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः। इत्युक्त्वेति शेषः। अहरत्परिहृतवान्। श्रीरामः मुक्तसंदेहरहितमकार्षीदित्यर्थः। तथा रामायणम्—'द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च। तस्माज्जातोऽहमरुणात्संपातिश्च ममाग्रजः। जटायुरिति मां विद्धि श्येनीपुत्रमरिंदम' इति। अत्र कविसंमतसादृश्यान्महोन्नते जटायुषि मैनाकसंदेहोदयात्तस्य च तेनैव परिहृतत्वान्निश्चयान्तः संदेहालंकारः। अत्र शङ्काशब्दस्य भ्रान्तिपरत्वे भ्रान्तिमदलंकारः। स चोत्प्रेक्षयाङ्गेन संकीर्यते। वसन्ततिलकावृत्तम्॥

**रामस्तु दशरथमिव तं पश्यन्काश्यपसंभूतं[1] संपातेरनुजमनुजरचितपर्णशालैः पञ्चवट्यां कंचित्कालं गमयामास।**

राम इति। रामस्तु रामोऽपि काश्यपसंभूतम्। कश्यपपौत्रमित्यर्थः। संपातेरनुजं तं जटायुषं दशरथमिव पश्यन्पितुरतिसुहृत्त्वात्तमिव बहुमन्यमानः सन्।

---

१. 'काश्यपकुलसंभूतम्' इति पाठः.

अनुजरचितपर्णशाले लक्ष्मणनिर्मितोटजः सन् पञ्चवट्यां कंचित्समयं कियन्तं कालं गमयामास यापयामास ॥

अथ शूर्पणखागमनं वक्तुं तत्कालोद्दीपकं हेमन्तं वर्णयति—

अथ कदाचिदुपचीयमानमनोभववैभवः पाककपिश[1]कलममञ्जरीपुञ्जपिञ्जरीभूतकेदारप्रपञ्चः पञ्च[2]बाणरणप्रयाणोचितवीरपाणवत्पत्रपुटपातदृश्यावश्यायबिन्दुसंदोहश्चन्द्रातपे निरानन्दतां चन्दनानुलेपने निर्लोलुपतां चन्द्रशालायां निराशतां [3]चन्द्रोपलस्थले निरास्थतां वातायनसेवने निरुत्सुकतां वापीकूपोपकण्ठे निरुत्कण्ठतां वासरावसानेऽनादरतां वारिविहारे निराकाङ्क्षतामुत्पलमालायामुपेक्ष्यतामुपवनभंजनेऽप्युद्विग्नतां [5]च जनानां जनयन्गम्भीराभोगगर्भगृहस्य च [6]घनेष्टकारचितभित्तेरश्लक्ष्णतिरस्करिणीपटलस्य च शशोदररोममृदुकम्बलस्य च कालागरुधूमस्य च काश्मीराङ्गरागस्य च निर्धूमाङ्गारभरितहसन्तिकायन्त्रस्य च सुभगंकरः [7]रेणुकणायमानतुषारधूलिधूसरवासरः सरसीरुह[8]दावपावकस्तुहिनव्रणित[9]लासिकाधरदलदूरीकृतदंशकृत्यः प्रक्षीणतारुण्यपण्याङ्गनाङ्गवत्प्रयातसौभाग्यप्रपासन्निवेशस्तालवृन्तविश्रान्ति[10]कालः कामिनीस्तनभरगिरिदुर्गसीम्नि निर्भयनिलीननिदाघभावो दिवाभीतव्रातस्याप्यनतिभयंकरदिवाकरश्चकोरनिकरस्याप्यनतिक्षेमं[11]करसुधाकरः कादम्बकदम्बस्याप्यनतिप्रियं[12]करकमलाकरः [13]कृतकरयुगलस्वस्तिकाबन्धनतया नीहारातङ्कशङ्कया हृदयकमलमिव गोपायन्तमश्रान्तदन्तवीणाव्यापारवेपमानाधरपुटतया शीतिकापिशाचिकानिर्हरणाय निपुणं मन्त्रजपमिव कुर्वन्तमविरलपुलकपालीककम्बलितकलेवरतया सकरुणविधिवितीर्णरोमकम्बलकृताङ्गरक्षमिव भिक्षामटन्तं दुर्गतवर्णं निर्घृणा कदाचिदपि कमला [14]नालोकितवतीति तस्यै सासूय इव तदीयावासताम[15]रसं सपत्रकोशं विनाशयन्गगनमतङ्गजकरपुष्करोत्थित[16]शीकरनिकराकारैरतिपरुषस्मरशर[17]तापप्रतप्तगगनाङ्गनाङ्गस्रवत्[18]स्वेदसदृक्षै[19]रक्षीणहिमप्रकरैरखगान्तःकरणानि सीमन्तयन्हेमन्तसमयः समुदजृम्भत ॥

---

१. 'कलममञ्जुमञ्जरी' इति पाठः. २. 'पञ्चबाणप्रयाणो' इति पाठः. ३. 'चन्द्रकान्तस्थले' इति पाठः. ४. 'निरादरताम्' इति पाठः. ५. 'च' इति नास्ति क्वचित्. ६. 'घनेष्टिकारचितभित्तिश्लक्ष्ण' इति पाठः. ७. 'करेणुकरनिकरवर्त्मकणायमान' इति पाठः. ८. 'गहनदाव' इति पाठः. ९. 'लासिकाधरदूरीकृतवंशकृत्यः' इति पाठः. १०. 'कर' इति पाठः. ११. 'निशाकर' इति पाठः. १२. 'प्रीतिकर' इति पाठः. १३. 'करयुगकृत' इति पाठः. १४. 'नालोकयतीति' इति पाठः. १५. 'तामरसकोशं नाशयन्नङ्गजमतंगज' इति पाठः. १६. 'शशिकर' इति पाठः. १७. 'जाततापं' इति पाठः. १८. 'स्वेदबिन्दु' इति पाठः. १९. 'अक्षीणमहिमहिमप्रसारैः' इति पाठः.

**अथेत्यादिना** । अथ पञ्चवट्यां कियत्कालयापनानन्तरम् । कदाचित्कस्मिंश्चित्समये । शरत्कालावसान इत्यर्थः । हेमन्तसमयः समुपजृम्भतेत्यन्वयः । कीदृशो हेमन्तसमय इत्याकाङ्क्षायां तमेव विशिनष्टि—उपचीयमानः प्रवर्धमानः । चिनोतेः कर्मणि शानच् । मनोभववैभवो मन्मथप्रभावः । कामोत्सवो वा यस्मिन्स तथोक्तः । उद्दीपकत्वादिति भावः । पाकेन पक्वावस्थया कपिशाः पिशङ्गो याः कलममञ्जर्यः शालिविशेषकणिशगुच्छास्तासां पुञ्जैः कदम्बकैः पिञ्जरीभूतः केदारप्रपञ्चो व्रीहिक्षेत्रविस्तारो यस्मिन्स तथोक्तः । तत्र तेषां पचेलिमत्वसंभवत्वादिति भावः । अपिञ्जरः पिञ्जरः संपद्यमानः पिञ्जरीभूतः । अभूततद्भावे च्विः । 'अस्य च्वौ' इति दीर्घः । 'कुगतिप्रादयः' इति समासः । 'शालयः कलमाद्याश्च', 'कणिशं सस्यमञ्जरी' इति चामरः । पञ्चबाणस्य मारमहावीरस्य रणप्रयाणे जैत्रयात्राप्रारम्भ उचितमनुरूपं यद्वीरपाणं वीराणामवश्यकर्तव्यं मधुपानम् । तेषां तथाचारादिति भावः । 'वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे' इत्यमरः । 'तेन तुल्यं' इति तद्धितगतार्थी उपमा । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा । पत्रपुटानि तरुपलाशसंपुटानि तान्येव पात्राणि चषका इति रूपकम् । तेषु दृश्यः संलक्ष्यमाणोऽवश्यायबिन्दुसंदोहो नीहारशीकरनिकुरुम्बो यस्मिन्स तथोक्तः । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इत्यमरः । तथा चन्द्रातपे चन्द्रिकायां निरानन्दतां प्रीतिराहित्यं चन्दनानुलेपने पटीरचर्चायां निर्लोलुपतां निरपेक्षताम् । चन्द्रशालायां शिरोगृहे । 'चन्द्रशाला शिरोगृहम्' इत्यमरः । निराशतामभिलाषराहित्यम् । चन्द्रोपलस्थले चन्द्रकान्तमणिकुट्टिमे । 'उपलः प्रस्तरे मणौ' इति विश्वः । निरास्थतामासक्तिरहितत्वम् । वातायनसेवने गवाक्षमार्गानुवर्तने । 'वातायनं गवाक्षः स्यात्' इत्यमरः । निरुत्सुकतामपरितोषताम् । वापीनां दीर्घिकाणां कूपानामुदपानानां चोपकण्ठेऽन्तिकसंचारे निरुत्कण्ठतां निरुल्लासताम् । वासरावसाने सायंकालेऽनादरतामतत्परताम् । वारिविहारे जलक्रीडायां निराकाङ्क्षतां निःस्पृहत्वम् । उत्पलमालायां कुवलयदाम्न्युपेक्ष्यतामुदासीनताम् । उपवनभजन उद्यानवनसेवनेऽप्युद्विग्नतां निरुत्साहताम् । जनानां जनयन्नुत्पादयन् । कालान्तरोपयोगिनां चन्द्रातपादिशीतलोपचाराणां तदानीमनुपयुक्तत्वेनानपेक्षत्वात्तेषु निरानन्दत्वादिजनक इत्यर्थः । अत्र चन्द्रातपनिरानन्दत्वादीनां केवलप्रकृतानामेवोत्पादनक्रियारूपधर्मसंबन्धेनौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगिता । तदुक्तम्—'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा स्मृता तुल्ययोगिता ॥' इति लक्षणात् । तथा—गम्भीरस्तुषारवातादिदुष्प्रवेशगाम्भीर्ययुक्त आभोगो विस्तारो यस्य तथोक्तं यद्गर्भगृहमान्तरागारम् । 'गर्भागारं वासगृहम्' इत्यमरः । तस्य च घनं नीरन्ध्रं यथा तथा इष्टकाभी रचिता या भित्तिः कुड्यम् । तस्याश्च शीतबाधानिवर्तकत्वेनोपयोगित्वादिति भावः । 'भित्तिः स्त्री कुड्यमेडूकम्' इत्यमरः । 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वः । अश्लक्ष्णोऽतनुः । सुघटित इति यावत् । तस्य तिरस्करिणीपटलस्य प्रतिसीरानिकरस्य । 'श्लक्ष्णं दभ्रं कृशं तनु', 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इति चामरः । 'तिरसोऽ-

न्यतरस्याम्' इति णत्वम् । शशस्य मृगविशेषस्योदरे कुक्षिप्रदेशे • यानि रोमाणि कोमलतनूरुहाणि तन्निर्मितं यन्मृदुकम्बलम् । अथवा तद्वन्मृदु यत्कम्बलं सुखसंस्पर्शकम्बलं तस्य च । 'शीतं नैव वितीर्यते प्रियतमैरालिङ्गनं कम्बलम्' इति चारुचर्यावचनादिति भावः । कालागरुधूमस्य कृष्णागरुधूमस्य च । काश्मीराङ्गरागस्य कुङ्कुमविलेपनस्य । 'काश्मीरपङ्केन कृतप्रलेपो हैमन्तकानाशु निहन्ति दोषान्' इति तस्य दोषनिवर्तकत्वेन तदानीमपेक्षितत्वादिति भावः । 'कुङ्कुमं घुसृणं पुण्यं प्रोक्तं लोहितचन्दनम् । काश्मीरजन्म विद्वद्भिः कालेयं जाङ्गलं स्मृतम् ॥' इति हलायुधः । निर्धूमाङ्गारैर्धूमरहिताङ्गारैर्भरितं पूर्णं हसन्तिकायन्त्रमङ्गारशकटीरूपयन्त्रं तस्य च । 'अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि' इत्यमरः । निर्धूमग्रहणं नेत्रयोरनुद्वेजकत्वार्थमित्यवगन्तव्यम् । सुभगं कुर्वन्त्यनेन सुभगंकरो भाग्यकरः । गर्भागारादीनां शैत्यक्लेशनिवर्तकत्वेनोपयोगित्वात्तज्जन्मसत्तासाफल्यसंपादक इत्यर्थः । 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति ख्युन्प्रत्ययः । 'अरुर्द्विषद्–' इत्यादिना मुमागमः । अत्रापि पूर्ववद्गर्भगृहादीनां प्रकृतानामेव सौभाग्यलाभरूपधर्मसंबन्धेनौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगिता तया रेणुकणायमाना रेणुकणवदाचरन्तः । अतिसूक्ष्माकारा इत्यर्थः । आचारक्यङन्ताल्लटः शानजादेशः । तादृशा ये तुषारा नीहारास्त एव धूलयः परागा इति रूपकम् । ताभिर्धूसरा धूम्रा वासरा दिवसा यस्य स तथोक्तः । सरसीरुहाणां दावपावको दावाग्निः तुषारतुषानलेन तद्ध्वंसकरत्वादिति भावः । 'वने च वनवह्नौ च दवो दावश्च कथ्यते' इति शाश्वतः । तुहिनेन व्रणितानि व्रणवत्कृतानि । स्फुटितानीत्यर्थः । व्रणशब्दात्करोतेर्ण्यन्तात्कर्मणि क्तः । तादृशानि यानि लासिकानां पण्यस्त्रीणामधरदलान्यधरोष्ठपल्लवानि तेषां दूरीकृतं दूरतोऽपास्तं दंशकृत्यं दन्तक्षतक्रिया यस्मिन्स तथोक्तः । स्वतः स्फुटितानां दंशकृत्यासहत्वादिति भावः । 'वंशकृत्य–' इति पाठे दूरीकृतं दूरतः परिहृतं वंशकृत्यं वेणुनादक्रिया यस्मिन् । स्फुटितानामधराणां वेणुपूरणासमर्थत्वादिति भावः । कुलवधूजनाधरपुटानां दंशकृत्यानौचित्याल्लासिकाग्रहणं द्रष्टव्यम् । 'नर्तकीलासिके समे' इत्यमरः । प्रक्षीणतारुण्यपण्याङ्गनाङ्गवद्वृद्धवेश्यावयववदित्युपमा । प्रयातसौभाग्योऽगतरामणीयकः प्रपासन्निवेशः पानीयशालिकासंस्थानं यस्मिन्स तथोक्तः । विटानां पान्थानां चानपेक्षितत्वात्प्रसाधनाभावेन वृद्धपण्याङ्गनाङ्गानां प्रपासन्निवेशानां चापगतरामणीयकं द्रष्टव्यम् । 'प्रपा पानीयशालिका' इत्यमरः । घञर्थे कविधानम् । तालवृन्तानां व्यजनानां विश्रान्तिकालो विश्रमसमयः । ग्रीष्मर्तौ वितस्ततो व्याधूननजनितानन्दसंभवादिति भावः । 'व्यजनं तालवृन्तकम्' इत्यमरः । कामिनीनां तरुणीनां स्तनभरः कुचभार एव गिरिदुर्गसीमा गिरिदुर्गस्थानं तत्र निर्भयं निरातङ्कं यथा तथा निलीनो निगूढतया प्रवर्तमानो निदाघभाव ऊष्मत्वं यस्मिन्स तथोक्तः । तदानीं कामिनीकुचभरेष्वत्यन्तौष्ण्यस्य विद्यमानत्वादियमुत्प्रेक्षागम्या रूपकसंकीर्णा । एतेन हेमन्तनिदाघयोर्जेतृजेतव्यभावो व्यज्यते । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इति विश्वप्रकाशामरौ ।

दिवाभीतव्रातस्य, दिवा अहनि भयशीलस्य घूकनिकरस्यापि । 'दिवान्धः कौशिको घूकः' इत्यमरः। अनतिभयंकरः मन्दप्रकाशत्वादीषद्भयंकरः सूर्यो यस्मिन्सः। 'मेघर्तिभयेषु कृञः' इति खचि 'अरुर्द्विषद्–' इत्यादिना मुमागमः । चकोरनिकरस्यापि चन्द्रिकापायिपक्षिविशेषनिवहस्यापि । 'चकोरश्चन्द्रिकापायी' इत्यभिधानात्। अनतिक्षेमंकरो नीहारावरणेन मन्दरश्मित्वादीषत्तृप्तिकरः सुधाकरश्चन्द्रो यस्मिन्सः। 'क्षेमप्रियमद्रेण्च' इति खचि मुमागमः । कादम्बकदम्बस्यापि कलहंसनिकुरुम्बस्यापि । 'कादम्बः कलहंसः स्यात्' इत्यमरः। अनतिप्रियंकराः पद्मोल्लासहान्या ईषत्प्रियजनकाः कमलाकराः सरांसि यस्मिन्सः। प्रियंकरेत्यत्र पूर्ववत्खच्प्रत्ययमुमागमौ। तथा करयुगलस्य हस्तयुग्मस्य स्वस्तिकं स्वस्तिकाकारः सन्निवेशविशेषो न्यस्यासस्थापकस्वस्तिकशब्दार्थस्तद्रूपो यो बन्धः स कुतः शीतबाधानिवर्तकवसनकम्बलाद्याच्छादनाभावादुरसि विरचितो येन स तथोक्तः। शीतबाधया व्यत्यस्तहस्ताच्छादितोरस्थल इत्यर्थः। तस्य भावस्तत्ता तया हेतुना। नीहारातङ्का दुर्दिनोपद्रवा या शङ्का भीतिस्तया। 'शङ्का वितर्कभययोः' इति यादवः । हृदयकमलं हृत्पद्मं गोपायन्तं रक्षन्तमिवेत्युत्प्रेक्षा। 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यायप्रत्ययः। दन्ता एव वीणा वल्लकी वाद्यविशेषः। शैत्यजनितकम्पवशेन ध्वननशीलत्वादश्रान्तं निरन्तरं यो दन्तवीणाव्यापारश्चलनरूपक्रियाविशेषस्तेन वेपमानाधरपुटतया कम्पमानाधरोष्ठतया हेतुना शीतिकायाः शैत्यबाधायाः पिशाचिकायाश्च निर्हरणाय तां निराकर्तुम्। उच्चाटयितुं चेत्यर्थः। निपुणं समर्थं मन्त्रजपं मन्त्रोच्चारणं कुर्वन्तमिति वेत्युत्प्रेक्षा। अविरलपुलकपाल्या सान्द्ररोमाञ्चप्रपञ्चेन कवलितं ग्रस्तम्। आच्छादितमिति यावत्। कलेवरं शरीरं यस्य तत्तया हेतुना। सकरुणेन दयालुना विधिना ब्रह्मणा वितीर्णं दत्तं यद्रोमकम्बलं तनूरुहरूपकम्बलं तेन कृताङ्गरक्षं विरचिताङ्गसंगोपनमिव स्थितमित्युत्प्रेक्षाणां तिसृणां संसृष्टिः। भिक्षामटन्तं भिक्षाचरणतत्परं दुर्गतवर्गं दरिद्रसमूहम्। 'दरिद्रो दुर्गतोऽपि सः' इत्यमरः। निर्घृणा निष्करुणा। 'कारुण्यं करुणा घृणा' इत्यमरः। कमलं लीलापद्ममस्या अस्तीति कमला लक्ष्मीः। अर्शआद्यच्प्रत्ययः। 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। नालोकितवती न दृष्टवती। करुणाकटाक्षवीक्षणेन तस्य धन्यतां नापादितवतीत्यर्थः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। अथवा आलोकितवती न भवतीत्यर्थः। 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति भाष्यकारवचनाद्भवन्तीति लटः पूर्वाचार्याणां संज्ञा। इति मत्वेति शेषः। तस्यै कमलायै। तस्यां कमलायामित्यर्थः। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी। सासूयः सेर्ष्यः सन्निवेत्युत्प्रेक्षा। सपत्रकोशं सपर्णकुड्मलं सहत्राहनार्थौघं च। 'पत्रं वाहनपर्णयोः', 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इति विश्वामरौ। तस्या इदं तदीयं कमलासंबन्धि यदावासतामरसं निवासपङ्केरुहम्। 'पङ्केरुहं तामरसम्' इत्यमरः। तद्विनाशयन्विध्वंसयन्। तत्रस्थायाः कमलायाः प्रतीकारस्य दुष्करत्वेन तदीयावासतामरसप्रतीकारकथनात्प्रत्यनीकालंकारः। तदुक्तम्—'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे। यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते ॥' इति। सा चोक्तोत्प्रेक्षोज्जीवितेति संकरः। सपत्रकोशमिति श्लेषस्तु विशेषः। तथा

गगनमेव मतङ्गजः कुञ्जरः। 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः। तस्य करपुष्करेण हस्ताग्रेणोत्थित उत्क्षिप्तो यः शीकरनिकरो जलबिन्दुसंदोहस्तदाकारैस्तद्रूपैः। इति रूपकसंकीर्णतद्रूप्योत्प्रेक्षागम्या। 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः। अत्र पुष्करशब्देनैव करप्रतीतेः पुनः करग्रहणं करलब्धकर्णावतंसादिवद्द्रष्टव्यम्। अतिपरुषस्मरशरतापेनात्यन्तकठोरमन्मथबाणकृतसंज्वरेण प्रतप्तं संतप्तं यद्गगनमेवाङ्गना तस्या अङ्गं शरीरं तस्मात्स्रवन्संस्रवमाणो यः स्वेदो घर्माम्बुकणगणस्तत्सदृक्षैस्तत्सदृशैरित्युत्प्रेक्षा। अभूतोपमा गगनस्याङ्गस्वेदयोरप्रसिद्धत्वादित्युक्तं प्राक्। 'दृक्षे च' इति समानस्य सः। अमूर्तस्य गगनस्यैव स्मरशरसंतप्तत्वं किमुतान्यस्येत्याश्चर्यमिति भावः। अक्षीणहिमप्रकरैरविच्छिन्नतुषारासारैरध्वगान्तःकरणानि पान्थहृदयानि सीमन्तयन्विदारयन्। हेमन्तसमयो हेमन्तकालः समुदजृम्भत विजृम्भितोऽभूत्॥

यत्र कान्ता न पश्यन्ति क्रान्ता विरहवह्निना।
निशावसानवेलां च वेलां च व्यसनाम्बुधेः॥ १४॥

यत्रेति। यत्र यस्मिन्हेमन्ते विरहवह्निना प्रियवियोगाग्निना क्रान्ता निपीडिताः कान्ताः स्त्रियो निशावसानवेलां रजनीविरामकालं व्यसनाम्बुधेर्दुःखसागरस्य वेलां कूलं च न पश्यन्ति। दुःसहविरहवेदनावशात्तयोस्तथानवधिकत्वेन प्रतीयमानत्वादिति भावः। 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः। अत्र वेलयोरुभयोरपि प्रकृतयोरेवादर्शनक्रियारूपधर्मसाम्येनौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगिता॥

तत्र पर्णशालामध्यमध्यासीनं लक्ष्मणाग्रजमुपससाद शूर्पणखा।

तत्रेति। तत्र हेमन्ते। शूर्पं शोणितभाजनम्। 'नखि विदूषणे' इति धातोः। शूर्पेण शोणितभाजनेन यज्ञादिसत्क्रिया नखीयति दूषयतीति शूर्पणखा। यद्वा शूर्पाकाराणि नखानि यस्याः सा शूर्पणखा नाम राक्षसी रावणस्वसा। 'पूर्वपदात्संज्ञायामगः' इति णत्वम्। 'नखमुखात्संज्ञायाम्' इति न ङीप्। पर्णशालामध्यम्। तन्मध्य इत्यर्थः। 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम्। अध्यासीनमधिष्ठितम्। 'ईदासः' इतीकारः। लक्ष्मणाग्रजं राममुपससाद प्राप। कामातुरतयेति भावः। भाविकार्यकरणदक्षत्वाल्लक्ष्मणग्रहणं द्रष्टव्यम्॥

तस्मिन्नुज्जृम्भितोष्णस्तनतटदयिताहीनसंहारकाले
काले प्रालेयधाराकवचितगगनाभोगदिक्चक्रवाले।
कामान्धा राक्षसी सा पतिमतिमतनोन्मैथिलीप्राणनाथे
लक्ष्मीलीलारविन्दे नखपिशितधियं तन्वती श्येनिकेव॥१५॥

तस्मिन्निति। प्रलयादागतं प्रालेयम्। 'तत आगतः' इत्यण्। 'केकयमित्रयुप्रलयानां यादेरियः' इति यशब्दस्येयादेशः। प्रालेयधाराभिर्नीहारासारैः कवचित

१ 'उपससर्प' इति पाठः।

आवेष्टितो गगनाभोगो गगनविस्तारो दिक्चक्रवालं दिङ्मण्डलं च येन तस्मिंस्तथोक्ते। 'चक्रवालं तु मण्डलम्' इत्यमरः। अतएवोज्जृम्भितोष्णं प्रवृद्धोष्म स्तनतटं कुचमण्डलं यासां ताभिर्दयिताभिर्वधूभिर्हीना विहीना वियुक्ता। विरहिण इत्यर्थः। तेषां संहारकाले प्रलयकाले। अथवा तेषां संहारे संहरणक्रियायां काले कृतान्तरूपे। 'कृतान्तानेहसोः कालः' इत्यमरः। 'हसन्तीं च हसन्तिं च हसन्तीं वामलोचनाम्। हेमन्ते ये न सेवन्ते ते नरा दैववञ्चिताः॥' इति वचनाद्विरहिजनमारक इत्यर्थः। तस्मिन्काले हेमन्तसमये। कामेनान्धा। विवेकदृष्टिशून्येत्यर्थः। सा पूर्वोक्ता राक्षसी शूर्पणखा। 'जातेरस्त्रीविषयादयोपधात्' इति ङीप्। लक्ष्म्या लीलारविन्दे विहारपद्मे, लीलया करधृतकमले वा। नवपिशितधियं नूतनमांसबुद्धिं तन्वैती कुर्वती। तादृग्भ्रान्तिं प्राप्नुवतीत्यर्थः। 'पिशितं तरसं मांसम्' इत्यमरः। नवग्रहणं जिघृक्षोत्पादनार्थमित्यवगन्तव्यम्। श्येनिकेव श्येनाङ्गनेव। वर्तमानेति शेषः। श्येनो गृध्रजातीयः कपिञ्जलादिक्षुद्रखगग्राही पक्षिविशेषः। 'जातेरस्त्री–' इत्यादिना ङीप्। ततः स्वार्थे कः। 'केण' इति ह्रस्वः। मैथिलीप्राणनाथे सीतावल्लभे श्रीरामे। एतेनास्य संभोगार्थं स्त्र्यन्तरात्यन्ताभावः सूच्यते। पतिमतिं पतिरयं मे भूयादिति बुद्धिमतनोदकरोत्। पतित्वेनावृणोदित्यर्थः। श्येनिका लीलारविन्दे मांसबुद्धिमिव शूर्पणखा श्रीरामे प्रियतमबुद्धिं चकारेत्यर्थः। अथवा राक्षसी श्येनिका लक्ष्मीलीलारविन्दे पिशितधियमिव मैथिलीप्राणनाथे पतिमतिं तन्वती विदधाना सती अतनोत्। नरमिति शेषः। त्वं मे पतिर्भवेति श्रीराममवृणोदित्यर्थः। उपमालंकारः। स चारविन्दे श्येनिकायाः पिशितभ्रान्त्युदयकथनाद्भ्रान्तिमताङ्गेन संकीर्यते। स्रग्धरावृत्तम्। लक्षणं तूक्तम्॥

**ततस्तेन जानकीजानिरिति जानीहि जनमिमं[1] ममानुजमतिमंजुजबलमबालमबलावियुक्तं[2] युक्तमाश्रयितुं तवेति रामेण प्रत्याख्याता सौमित्रिमुपेत्य यथामनीषितमभाषत।**

**तत इति।** ततः पतित्वेन वरणानन्तरम्। इममेनं जनम्। मामित्यर्थः। तस्याखण्डितमहिमातिशयद्योतनार्थमिदंशब्देन निर्देशः। जानकी जनकमहाराजपुत्री जाया यस्य जानकीजानिः सीतापतिः। 'जायाया निङ्' इति निङादेशः। ईदृक्सौभाग्यशालिनी महाकुलप्रसूतेयं सन्निहिता मम भार्या, निसर्गतोऽहं चैकपत्नीव्रतशीलः, तस्मान्मम त्वद्वरणमयुक्तमिति भावः। इति जानीहि। जानकीपतिमवबुध्यस्वेति प्रातीतिकोऽर्थः। परमार्थस्तु दशरथनन्दनरूपेण जननाज्जनम्। दुष्टनिग्रहशिष्टपरिपालनार्थं राजपुत्रत्वेनावतीर्णमित्यर्थः। इमं मां जानीहि सीतारूपिण्या लक्ष्म्याः पतिः श्रीमहाविष्णुः। तथाच राक्षससंहर्तुर्विष्णोर्न राक्षसीवरणं युक्तमिति भावः। इति जानीहि। ततः किमित्याशङ्क्याह—'गुरुणापि समं हास्यं कर्तव्यं कुटिलं विना' इत्यादिन्यायेन भ्रातृविषयमपि परिहासं प्रयोजयन्रामो लक्ष्मणविषयत्वेन प्रवृत्त्याभासद्योतकैस्तात्पर्येण निवृत्तिप्रतिपादकैः शिष्टशब्दैः, प्रलोभनार्थमुत्तरमनुभाषते—

---

१. 'जनममुम्' इति पाठः. २. 'बलमबला' इति पाठः.

ममेत्यादिना । ममानुजं सोदरम् । नतु यं कंचन । सौशील्यसौन्दर्यादिभिर्मत्तुल्यमित्यर्थः । मनुजानतिक्रान्तमतिमनुजम् । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । तद्भुजबलं यस्य तम् । अमानुषबाहुपराक्रमशालिनमित्यर्थः । अबालं तरुणम् । रतिक्षममिति यावत् । अबलावियुक्तमनूढभार्यमसन्निहितभार्यं वा । अतो भार्यापेक्षिणमित्यर्थः । सा च त्वमेव भविष्यसीति भावः । ईदृशं लक्ष्मणमाश्रयितुं भार्यात्वेनानुवर्तितुं तव युक्तमनुरूपमिति परिहासानुकूलः प्रातीतिकोऽर्थः । अन्तराशयस्तु—ममानुजं धर्मशीलत्वादिना मत्समं ब्रह्मचारिणमित्यर्थः । अतिमनुजः पुरुषोत्तमो विष्णुरिति यावत् । तस्यैव भुजबलं यस्य तम् । विष्णुतुल्यपराक्रममित्यर्थः । बालोऽविवेकी न भवतीत्यबालस्तम् । विवेकिनमित्यर्थः । अबलावियुक्तं परदारपरिग्रहादिशून्यम् । एकपत्नीव्रतमित्यर्थः । आश्रयितुं युक्तमिति काकुः । न युक्तमित्यर्थः । इत्यनेन प्रकारेण रामेण प्रत्याख्याता प्रत्युक्ता निराकृता वा सा शूर्पणखा सौमित्रिमुपेत्य । तात्पर्यानभिज्ञतया श्रीरामवचनं स्वानुकूलमेव मन्वाना मन्दबुद्धिरियं लक्ष्मणसमीपं गत्वेत्यर्थः । मनीषितमनतिक्रम्य यथामनीषितम् । यावदभिलाषमित्यर्थः । अभाषत मां परिगृहाणेत्यवोचत । 'यथासादृश्ये' इत्यव्ययीभावः । 'यथासादृश्यवीप्सार्थपदार्थानतिवृत्तिषु' इत्यभिधानात् ॥

ततः किं जातमित्यत आह—

**तेनापि भद्रे तस्यार्यस्य दासोऽहं दासभार्यापदमनार्यं नन्वार्यायाः कुलजातायास्तस्मात्तमेव भजेथाः ।**

तेनेति । भद्रे हे कल्याणि, आर्यस्य श्रेष्ठस्य तस्य श्रीरामस्य यस्त्वया प्रथमवृतस्तस्याहं दासो भृत्यः । अतः कुलजातायाः सत्कुलप्रसूतायाः[१] । आर्याया इति यावत् । नार्या वध्वाः । 'नारी सीमन्तिनी वधूः' इत्यमरः । दासभार्यापदं भृत्यभार्यास्थानम् । तथाभूतत्वमित्यर्थः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । अनार्यं नन्वयुक्तं खलु । दासभार्या भूत्वा दासीभावं गन्तुमसांप्रतमित्यर्थः । तस्मात्कारणात्तमार्यं श्रीराममेव भजेथाः प्राप्नुयाः । आर्याया आर्यभजनं युक्तमित्यक्षरार्थः । वास्तवार्थस्तु विरुद्धलक्षणया अपह्नवेन हे अमङ्गले । कुजवासरे अमङ्गले मङ्गलशब्दप्रयोगवत्, 'अभद्रे जाते सर्वभद्रं जातम्' इत्यादिप्रयोगवद्द्रष्टव्यम् । आर्यस्य श्रेष्ठस्य श्रीरामस्य भार्या त्वमेव भविष्यसीति भावः । ईदृशं लक्ष्मणमाश्रयितुं भार्यात्वेनानुवर्तितुं तव युक्तमनुरूपमिति परिहासानुकूलः प्रातीतिकोऽर्थः । सर्वेषुपर्वसार्वभौमस्य तस्य प्रसिद्धस्य श्रीरामस्य श्रीमहाविष्णुरूपिणोऽहं दासो भक्तः । श्रीविष्णुरूपश्रीरामभक्तत्वेनात्यन्तपावन इत्यर्थः । अतः कुलकान्ताया भवत्या नार्या दासस्य श्रीविष्णुभक्तस्य भार्याया यत्पदं तद्वरणमयुक्तम् । शून्यान्दोलिकारोहणकाङ्क्षितवदित्यर्थः । तस्मात्तं विष्णुरूपं राममेव भजेथाः शरणं गच्छेः[२] । यत ईदृगपकारिणी त्वं मुक्ता भविष्यसीत्यर्थः ॥

---

१. 'कुलसंभूतायाः' इति पाठः. २. एतदनन्तरम् 'किंच' इत्यधिकं क्वचित्.

**अक्रूरसत्त्वां भयानककाननसंचाराचतुरां विहाय वैदेहीं तत्रभवतीमिवासौ परिग्रहीष्यतीति लक्ष्मणेनाभिहिता वीतमतिः सा तदीयं वचनमनुमतममनुत।**

**अक्रूरेति**। अथ 'गुरुणापि समं हास्यम्' इत्यादिन्यायेन लक्ष्मणः श्रीरामे सीतायामपि परिहासं प्रयुङ्क्ते। किंतु। अक्रूरसत्त्वामदृढचित्तामतएव भयानके भयंकरे कानने संचाराचतुरां संचरणाशक्ताम्। यद्वा संचारेणाचतुरां विह्वलाम्। वनवासप्रतिबन्धभूतामित्यर्थः। वैदेहीं विदेहराजपुत्रीम्। न तु सदेहराजपुत्रीम्। अतएव कृशाङ्गीमित्यर्थः। 'अनुदरा कन्या, अलवणा यवागूः' इत्यादिभाष्यकारवचनादीषदर्थवाचिनञर्थकोऽयं विशब्दः। निपातनाव्ययानामनेकार्थत्वाद्विदेहशब्दोऽयं राजविशेषणं राजपुत्रीविशेषणं वा, त्वं तु नोक्तत्रयविशेषणविशिष्टेति भावः। ईदृशीं सीतामपहाय त्यक्त्वा। तत्रभवतीं त्वामेव। पूज्यामित्यर्थः। 'इतराभ्योऽपि दृश्यते' इति प्राग्दिशीयत्रल्प्रत्ययः। 'सुप्सुपा' इति समासः। 'उगितश्च' इति ङीप्। 'त्रिषु तत्रभवान्पूज्यस्तथैवात्रभवानपि' इति यादवः। असौ श्रीरामः परिग्रहीष्यति स्वीकरिष्यतीति प्रातीतिकोऽर्थः। वस्तुतस्तु अक्रूरसत्त्वां प्रसन्नहृदयां विशिष्टकाननसंचारेणाचतुरां पीडिताम्। सुकुमारीमित्यर्थः। यद्वा तत्संचारभीरुमित्यर्थः। भीरुत्वस्यैव कुलस्त्रीधर्मत्वादिति भावः। विदेहराजपुत्रीं जनकमहाराजकन्यकां महाकुलप्रसूतां विशिष्टदेहराजपुत्रीम्। अतएव तत्रभवतीं बहुमाननीयां सीताम्। एतादृशसकलगुणसंपन्नत्वेनापरित्यागार्हामित्यर्थः। विहाय कठोरहृदयां कुलवधूधर्मपरित्यागेनाततायितया काननस्वैरसंचारतत्परां राक्षसीत्वेनाकुलजातां विकृताकारां च। अतएव तत्रभवतीं विरुद्धलक्षणयाऽपूज्यां परित्यागार्हां त्वां परिग्रहीष्यतीति काकुः। न परिग्रहीष्यत्येवेत्यर्थः। इत्येवंप्रकारेण तेन लक्ष्मणेनाभिहिता प्रत्युक्ता सती। वीतमतिः परिहासाशयानभिज्ञतया नष्टबुद्धिः सा शूर्पणखा तदीयं लक्ष्मणोक्तं वचनमनुमतमनुकूलममनुतावुध्यत। तत्र वीतमतिपदार्थस्य विशेषणगत्या मननशब्दार्थं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः॥

ततः सा किमकरोदित्यत आह—

**दशरथात्मजयुग्मनिरीक्षणक्षणसमाकुलबुद्धिरियं दधौ।**
**उभयकूलसमस्थितशाद्वलभ्रमगतागतखिन्नगवीदशाम्॥ १६॥**

**दशरथेति**। दशरथात्मजयुग्मस्य रामलक्ष्मणयोर्निरीक्षणक्षणेन दर्शनोत्सवेन समाकुला ससंभ्रमा बुद्धिर्यस्याः सा अनयोः कतरं भजामीति दोलायमानमानसेत्यर्थः। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः। इयं शूर्पणखा। उभे च ते कूले च उभयकूले। अत्र 'उभादुदात्तो नित्यम्' इति पृथक्सूत्रग्रहणादेव नित्यत्वे सिद्धे पुनर्नित्यत्वग्रहणंसामर्थ्याद्वृत्तिविषय उभशब्दस्थान उभयशब्दप्रयोग एव

१. 'क्रूरसत्व' इति पाठः. २. 'निहितं हितमिति तदीयं' इति पाठः. ३. 'वचनममनुत' इति पाठः. ४. 'समुत्थित' इति पाठः.

साधुरित्यनुसंधेयम् । यथाह कैयटः—अत्र 'उभादुदात्तो नित्यम्' इति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषय उभशब्दप्रयोगो माभूत् । उभयशब्दस्यैव यथा स्यादित्युभयपुत्र इत्यादि भवति । एतद्व्याख्यातं मदीयशृङ्गारनाटके । तयोः पूर्वोत्तरनदीतीरयोः समं तुल्यं यथा तथा स्थितौ शाद्वलौ शष्पश्यामदेशौ । शादाः शष्पाण्यनयोर्देशयोः सन्तीति शाद्वलाविति विग्रहः । 'शाद्वलः शादहरिते' इत्यमरः । 'शादः कर्दमशष्पयोः' इति विश्वश्च । 'नडशादाड्ड्वलच्' इति वलच्प्रत्ययः । तयोर्या भ्रमः कुत्र वा गच्छामीति चित्तसंभ्रमस्तेन हेतुना गतागताभ्यां यातायाताभ्यां खिन्ना खेदं प्राप्ता या गवी गौर्धेनुः । 'गोरतद्धितलुकि' इति समासान्तष्टच् । टित्वान्ङीप् । तस्य दशामवस्थां दधौ धृतवती । 'दशा वर्तावस्थायाम्' इति विश्वः । रामलक्ष्मणयोरन्यतरप्राप्त्याशान्दोलनेन परमखिद्यतेत्यर्थः । अत्रान्यधर्मस्यान्यत्रासंभवात्तत्सदृशीं दशामिति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धरूपो निदर्शनालंकारः । तदुक्तम्—'असंभवद्वस्तुयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥' इति लक्षणात् ॥

**वृषस्यन्ती वृषस्कन्धं राघवं रावणानुजा ।**
**भूयः शूर्पणखा भेजे शूर्पकारातिबाधिता ॥ १७ ॥**

**वृषस्यन्तीति** । वृषः पुमान् । 'वृषः स्याद्वासवे धर्मे सौरभेये च शुक्रजे । पुंराशिभेदयोः शृङ्ग्यां मूषकश्रेष्ठयोरपि ॥' इति विश्वः । वृषं पुरुषमात्मन इच्छतीति वृषस्यन्ती कामुकी । 'वृषस्यन्ती तु कामुकी' इत्यमरः । 'सुप आत्मनः क्यच्' इति क्यच् । 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यसुगागमः । 'अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम्' इत्यर्थनियमः । ततः शतृप्रत्ययः । 'उगितश्च' इति ङीप् । रावणानुजा रावणस्वसा शूर्पणखा शूर्पकः शम्बरापरनामा कश्चिदसुरस्तस्यारातिस्तेन बाधिता पीडिता सती । जगन्मोहनदिव्यमङ्गलविग्रहश्रीरामदर्शनजनितमदनातुरा सतीत्यर्थः । वृषस्य वृषभस्य स्कन्धाविव स्कन्धौ भुजशीर्षे यस्य तम् । स्कन्धौन्नत्यस्य महापुरुषलक्षणत्वादिति भावः । राघवं श्रीरामं भूयः पुनरपि भेजे प्राप ॥

**तदनु जनकदुहितुरनितरयुवतियोग्यं भाग्यं रामस्य रूपरामणीयकं च निरूप्य पुनरेवमचिन्तयत् ।**

**तदन्विति** । तदनु भजनानन्तरमियं शूर्पणखा जनकदुहितुर्जानक्याः संबन्ध्यनितरयुवतियोग्यमनन्यवधूसाधारणं भाग्यं श्रीरामपत्नीत्वरूपं भागधेयम् । तथा रामस्य रूपरामणीयकमाकारसौन्दर्यं च 'रूपं स्वभावे सौन्दर्य आकारश्लोकयोरपि' इति विश्वः । 'योपधाद्गुरूपोत्तमाद्वुञ्' । यद्वा कुण्डलमुक्ताहारनूपुराङ्गदादिचतुर्विधभूषणाभावेऽपि भूषितवदवभासमान आकारविशेषो रूपम् । तदुक्तं भावप्रकाशे—'आवेध्यारोप्यनिक्षेप्य भूषणीयैरभूषितम् । यद्भूषितमिवाभाति तद्रूपमिति कथ्यते ॥' इति । 'अङ्गान्यभूषितान्येव प्रेक्षणीयैर्विभूषणैः । येन भूषणवद्भान्ति तद्रूपमिति कथ्यते ॥

१. 'युवती' इति पाठः. २. 'रामस्य रामणीयकं' इति पाठः. ३. 'च' इति नास्ति क्वचित्.

इति तस्य रामणीयकं रमणीयत्वं च निरूप्य निर्दिश्य। पुनःशब्दो वाक्यालंकारे। एवं वक्ष्यमाणप्रकारेणाचिन्तयच्चिन्तितवती॥

तत्प्रकारमेवाह—

लावण्याम्बुनिधेरमुष्य दयितामेनामिवैनं जनं
कस्मान्नासृजदस्मदन्वयगुरोरुत्पत्तिभूः पद्मभूः।
आस्तां तावदरण्यवासरसिके हा कष्टमस्मिन्निमां
कान्तिं काननचन्द्रिकासमदृशां किं निर्ममे निर्ममे॥ १८॥

लावण्यमिति। अस्मदन्वयगुरोरस्मत्कुलश्रेष्ठस्य। अस्मत्कुलकूटस्थस्य पुलस्त्यस्येत्यर्थः। 'गुरुस्तु गीष्पतौ श्रेष्ठे' इति विश्वः। उत्पत्तिभूर्जन्मस्थानम्। साक्षाज्जनक इति यावत्। तथा चास्मत्पितामहेनास्माकं हिताचरणतत्परेण भवितव्यमिति भावः। पद्मभूर्ब्रह्मा। लवण एव लावण्यं कान्तिविशेषः। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। 'लवणो रसरक्षोऽब्धिभेदेषु लवणादिषु' इति विश्वः। यद्वा 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥' इति भूपालः। तदम्बुनिधेः। अपरिच्छिन्नलावण्यसंपन्नस्येत्यर्थः। अमुष्य श्रीरामस्य दयितां भार्यामेनां सीतामिव। एनं जनम्। मामित्यर्थः। कस्माद्धेतोर्नासृजन्न सृष्टवान्। प्रपितामहसंबन्धत्वादित्थमेव स्रष्टव्या। तथा मामकाङ्क्षं न सृष्टवान्कुहको विधातेत्यर्थः। एवं चेदियमिवाहमप्यस्य लावण्याम्बुधेर्भार्या भूत्वा धन्यतां प्राप्नुयामिति भावः। किमनयाकाण्डचिन्तयेति स्वमनसि स्वयमेव निषेधति—आस्तामिति। एतत्सर्जनविषयकचिन्तनमास्तां तिष्ठतु। गतजलसेतुबन्धनप्रायेणानेन किमित्यर्थः। किंत्वरण्यवासरसिके वनवासतत्परे। राज्यस्त्रीसंभोगादिनिस्पृह इत्यर्थः। 'अत इनिठनौ' इति रसशब्दान्मत्वर्थीयष्ठन्प्रत्ययः। कुतो निर्ममे। ममेत्येतद्विभक्तिप्रतिरूपकमव्ययम्। ममत्वाद्वाञ्छिताद्रहितो निर्ममस्तस्मिन्। वैराग्यसंपन्न इत्यर्थः। 'अस्मिञ्श्रीरामे काननचन्द्रिकासमदृशामरण्यचन्द्रिकाप्रायाम्। उपभोगानुपयोगितया निष्फलामित्यर्थः। इमामेतादृशीं कान्तिं लावण्यसंपत्तिं किं किमर्थं निर्ममे निर्मितवान्। अरण्यचन्द्रिकावन्निरर्थकत्वादीदृक्कान्तिनिर्माणमयुक्तमित्यर्थः। प्रायश एतादृशानुपयुक्तनिर्मातैवायं विधातेति भावः। हेति खेदे। कष्टम्। ब्रह्मण एतादृशकान्तिनिर्माणप्रयासवैफल्यात्कृच्छ्रमित्यर्थः। अथेदृक्पुरुषालाभात्स्वस्याः कष्टमित्यर्थः। एवमचिन्तयदिति संबन्धः॥

ततः किं जातं तत्राह—

सीतामाहर्तुकामामसुलभविषयप्रार्थनोद्दामकामां
सौमित्रिः शस्त्रपाणिर्दशमुखभगिनीं तामनार्यां निवार्य।
कामक्रोधात्मिकानामहमहमिकया प्रेङ्खतामायतानां
तस्याः श्वासानिलानामकुरुत तरसा मार्गविस्तारकृत्यम्॥ १९॥

सीतामिति। सीतामाहर्तुं कामो यस्यास्ताम्। रामलक्ष्मणकृतावमानजनित-

१. 'एतत्' इति पाठः. २. 'अस्मिञ्जने' इति पाठः. ३. 'अधिकानाम्' इति पाठः.

क्रोधात्सीताग्रहणेच्छयाभ्युद्गच्छन्तीमित्यर्थः । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । असुलभो दुर्लभो यो विषयः श्रीरामसंभोगरूपार्थस्तस्य प्रार्थनायां तत्प्राप्तियाञ्चायामुद्दामो बहुलः कामोऽभिलाषो यस्यास्ताम् । मूर्खतयात्यन्तालभ्यलाभाकाङ्क्षिणीमित्यर्थः । 'कामोऽभिलाषस्तर्षश्च' इत्यमरः । अतएवानार्यां दुर्बुद्धिमतीं तां पूर्वोक्तां दशमुखभगिनीं रावणानुजां सौमित्रिर्लक्ष्मणः । शस्त्रं पाणौ यस्य सः शस्त्रपाणिः खड्गहस्तः सन् । 'सप्तम्युपमान—' इत्यादिना बहुव्रीहिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति वक्तव्यात्पाणिशब्दस्य परनिपातः । निवार्य निरुध्य । अलभ्यवस्तुवाञ्छाविशेषः कामः, तदभावान्मनःप्रज्वलनं क्रोधः, तदात्मकानामहमधिकोऽहमधिक इत्यन्योन्यं प्रति योऽभिमानोऽसावहमहमिका । 'अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः' इत्यमरः । अहमिति विभक्तिप्रतिरूपकमव्ययं निपातितम् । तस्य वीप्सायां द्विरुक्तिः । संज्ञायां कन्प्रत्ययः पृषोदरादित्वादिति सुभूतिचन्द्रः । तयाहमहमिकया हेतुना प्रेङ्खतां परिलुठताम् । नासाविवरयोः संकुचितत्वेन संकटत्वादिति भावः । आयतानां दीर्घाणां तस्याः शूर्पणखायाः श्वासानिलानां निश्वासमारुतानां तरसा बलेन रंहसा वा । 'तरसी बलरंहसी' इत्यभिधानात् । मार्गस्य विस्तारकृत्यं विस्तारक्रियामकुरुत कृतवान् । संकुचितमार्गे तद्विस्तारकृत्यस्य युक्तत्वादिति भावः । श्रीरामाज्ञया खड्गेन तन्नासिकां चिच्छेदेत्यर्थः । तस्यास्तथैव प्रायश्चित्तत्वादिति भावः । एतेन कर्णच्छेदोऽपि लक्ष्यते । तथाच श्रीरामायणम्—'इत्युक्त्वा लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः । उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥' इति । अत्र नासिकाच्छेदनरूपकारणप्रस्तुतेनैव मार्गविस्ताररूपस्वकार्येण गम्यत इति पर्यायोक्तिरलंकारः । 'कारणं गम्यते यत्र प्रस्तुतात्कार्यवर्णनात् । प्रस्तुतत्वेन संबन्धं तत्पर्यायोक्तिरिष्यते ॥' इति लक्षणात् ॥

**ततस्तस्या निकृत्तकर्णनासिकायाः कनीयस्याः परिभवं वदने वचने च दृष्ट्वा श्रुत्वा च जनस्थानवर्ती समरमुखमुखरः खरश्चतुर्दशसहस्रसंख्याकशाखं[1] चतुर्दशाध्यक्षरक्षितं रक्षोबलं रामलक्ष्मणौ जिघृक्षुः प्रेषयामास ।**

**तत इति ।** ततस्तदनन्तरम् । जनस्थानं नाम दण्डकारण्यमध्यभूप्रदेशस्तत्र वर्तितुं शीलमस्यास्तीति जनस्थानवर्ती । तदधिप इत्यर्थः । ताच्छील्ये णिनिप्रत्ययः । समरमुखे रणाग्रे मुखरः सिंहनादाडम्बरतत्परः । रणशूर इत्यर्थः । खरो नाम राक्षसाधिपतिः । निकृत्तं छिन्नं कर्णनासिकं यस्यास्तस्यास्तथाभूतायाः कनीयस्या अनुजायास्तस्याः शूर्पणखायाः परिभवं कर्णनासिकच्छेदनरूपं भङ्गं वदने वचने च दृष्ट्वा श्रुत्वा च । वदने दृष्ट्वा वचने श्रुत्वा इति यथाक्रममन्वयाद्यथासंख्यालंकारः । तदनन्तरमेव शूर्पणखया तत्समीपं गत्वा प्रत्यक्षं स्वमुखभङ्गं प्रदर्श्य श्रीरामलक्ष्मणकथायाः कथितत्वादिति भावः । वचन इत्यत्र अपादाने वक्तव्येऽप्यधिकरणविवक्षायां सप्तमी । रामलक्ष्मणौ जिघृक्षुर्ग्रहीतुमिच्छुः सन् । ग्रहेः सन्नन्तादुप्रत्ययः । चतुर्दशसहस्रसंख्याकाः

१. 'सहस्रसंख्य' इति पाठः.

शाखा व्यूहा यस्य तत्तथोक्तम् । स्वयं चतुर्दशसहस्रसंख्याकराक्षसाधिपतित्वादेकैकसहस्रकल्पितैकैकव्यूहमित्यर्थः । अतएव चतुर्दशाध्यक्षैश्चतुर्दशसंख्याकसेनानायकै रक्षितं परिपालितम् । एकैकव्यूहस्यैकैकनायकेन भाव्यत्वादिति भावः । रक्षोबलं राक्षससैन्यं प्रेषयामास प्रहितवान् ॥

**अथ दाशरथिर्निरीक्ष्य दिक्षु रक्षोगणमुपसर्पन्तमपसर्पभूतया[1] शूर्पणखया दर्शितसरणिर्[2]मरणिरिव[3] मन्थनात्पूर्व[4]मनाविष्कृततेजःप्रसरः[5] सीतारक्षणे लक्ष्मणमादिश्य यातुधानवधं तथाविधमकरोत्[6] ।**

**अथेति** । अथानन्तरं दाशरथिः श्रीरामः । अपसर्पभूतया चरसमया । अवस्थानं प्राप्तयेत्यर्थः । 'अपसर्पश्चरः स्पशः' । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इति चामरः । शूर्पणखया दर्शिता निवेदिता सरणिर्मार्गो यस्य तम् । अतएवोपसर्पन्तं समीपं प्रत्यागच्छन्तं रक्षोगणं राक्षससैन्यं निरीक्ष्य । मन्थनात्पूर्वमरणिरग्निनिर्मन्थनदार्विव । 'यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । अनाविष्कृतोऽप्रकटितस्तेजःप्रसरः प्रभावस्फूर्तिरनलप्रकाशश्च यस्य सः । निर्मन्थनदारुण्यग्निवन्निगूढप्रताप इत्यर्थः । श्लेषसंकीर्णेयमुपमा । 'तेजोऽनले प्रभावेऽह्नि ज्योतिष्यर्चिषि रेतसि' इति वैजयन्ती । लक्ष्मणं सीतारक्षण आदिश्याज्ञाप्य । स्वयमसहायशूरत्वात्तादृक्संकटे वधूनां रक्षणीयत्वाच्चेति भावः । तथाविधं तादृक्प्रकारं यातुधानवधं राक्षससंहारमकरोत् । 'यातुधानः पुण्यजनः' इत्यमरः ॥

कीदृग्विधं राक्षसवधमकरोदित्यत आह—

**यथा[7] तपोधननिधनकरकरनिकुरुम्बमिदं[8] परुषभाषणस्पृहयालुतालुजातमिदं परदारनिरीक्षणनिरपत्रपनेत्रवृन्दमिदं तापसावसथचारणचतुरं चरणयुगलमिदमिति[9] निशिततरनिजं[10]शरशकलीकृत[11]निशिचरशरीरावयवानाहत्याहत्य[12] प्रत्युटजं प्रदर्शयद्भिस्तपोधनाध्व[13]शुद्धिं विधध्वमिति गृध्रराजनिदेशादिव देशान्तरादापतद्भिः[14] कङ्ककाकप्राचीकप्रायैः[15] पतद्भिरनवकाशमभूदाकाशम्[16] ।**

**यथेति** । यथा येन प्रकारेणेदमेतत्तपोधननिधनं मुनिहिंसां करोतीति तथोक्तं करनिकुरुम्बं हस्तकदम्बकम् । 'निकुरुम्बं कदम्बकम्' इत्यमरः । इदं परुषभाषणाय कठोरवचनाय स्पृहयालु स्पृहावत् । स्पृहयतेरदन्ताच्चुरादिणिचि 'स्पृहिगृहि—'

---

१. 'भूतया तया' इति पाठः. २. 'निदर्शित' इति पाठः. ३. 'अरणिमिव' इति पाठः. ४. 'प्राक्' इति पाठः. ५. 'प्रसरं' इति पाठः. ६. 'अतनुत' इति पाठः. ७. 'यथा' इति नास्ति क्वचित्. ८. 'निकुरम्ब' इति पाठः. ९. 'तापसावसथचारणचतुरं चरणयुगलमिदं' इति नास्ति क्वचित्. १०. 'निज' इति नास्ति क्वचित्. ११. 'शरशतशकलित' इति पाठः. १२. 'निशिचरावयवान्' इति पाठः. १३. 'दर्शयद्भिः' इति पाठः. १४. 'आपतद्भिः पतद्भिः' इति पाठः. १५. 'काक' इति नास्ति क्वचित्. १६. 'पतद्भिः' इति नास्ति क्वचित्

इत्यादिनाल्लुच्प्रत्ययः । अतोलोपस्य स्थानिवत्त्वान्न लघूपधगुणः । तालुजातं काकुद-निवहः । 'तालु तु काकुदम्' इत्यमरः । इदं परदाराणां परस्त्रीणां निरीक्षणे सस्पृहा-वलोकने निरपत्रपं निर्लज्जम् । 'लज्जा सापत्रपान्यतः' इत्यमरः । नेत्रवृन्दं नयनस-मूहः । इदं तापसावसथेषु तपस्विनिवासेषु चारणे संचारे चतुरं निपुणं चरणयुगलम् । इत्येवंप्रकारेण निशिततरैरतितीक्ष्णैर्निजशरैः स्वकीयबाणैः शकलीकृतानि खण्डितानि यानि निशिचरशरीराणि राक्षसकलेवराणि तेषामवयवान्पूर्वोक्तकरप्रभृत्यङ्गान्याहृत्य प्र-त्युटजं प्रतिपर्णशालम् । 'अव्ययं विभक्ति—' इत्यादिना वीप्सायामव्ययीभावः । 'पर्ण-शालोटजोऽस्त्रियाम्' इत्यमरः । प्रदर्शयाद्भिः प्रत्यक्षीकुर्वद्भिः । तेषामानन्दार्थमिति भावः । व्यञ्जकाभावाद्गम्योत्प्रेक्षा । तपोधनाध्वशुद्धिमाश्रममार्गशोधनं विधध्वं राक्ष-सशतभक्षणेन कुरुध्वमित्येवंभूताद्गृध्रराजस्य जटायुषो निदेशादाज्ञावचनादिवेति हेतूत्प्रेक्षा । अन्यो देशो देशान्तरम् । तस्मात्तद्विषयेभ्य इत्यर्थः । 'सुप्सुपा' इति समासः । 'नीवृज्जनपदो देशविषयौ' इत्यमरः । आपतद्भिरागच्छद्भिः कङ्ककाक-प्राचीकप्रायैः । कङ्का लोहपृष्ठापरनामकाः पक्षिविशेषाः । 'लोहपृष्ठस्तु कङ्कः स्यात्' इत्यमरः । 'कङ्को गृध्रो लोहपृष्ठः' इति वैजयन्ती च । काका ध्वाङ्क्षाः प्राचीका मांस-भुजः पक्षिविशेषाः, तत्प्रायैस्तद्भूयिष्ठैस्तद्रूपैर्वा । 'प्रायो भूयोमृत्युतुल्यबाहुल्यानशनेषु च' इत्येकाक्षरः । प्राचीकशब्दः पक्षिवाचको निघण्ट्वन्तरेषु मृग्यः । यद्वा 'प्राचिकोल्का पिपीलिका' इति स्त्रीलिङ्गविशेषेऽप्यमरः । तत्र मधुमक्षिकाः प्राचिका इति तद्व्या-ख्यातारः । तथा कङ्ककाकाः प्राचिका इव नीरन्ध्रत्वसाम्यात्तत्प्रायैस्तत्प्रचुरैः पतद्भि-रण्डजैः । 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः' इत्यमरः । आकाशमन्तरिक्षमनवका-शमवकाशरहितम् । नीरन्ध्रमिति यावत् । अभूत् । तथाविधं यातुधानवधमकरो-दिति संबन्धः ॥

**ततो निकृत्तशिरसि त्रिशिरसि विस्रगन्धिना शरीरस्रुतवसास्रो-तसा प्रेत्यापि क्रियमाणाश्रमदूषणे दूषणे च[2] रोषभीषणवीक्षणखरः खरो राघवमाहवायाह्वयत ॥**

**तत इति ।** ततो राक्षसबलवधानन्तरं त्रिशिरसि त्रिशिरोनामराक्षससेनानायके निकृत्तं रामबाणच्छिन्नं शिरो यस्य तस्मिंस्तथोक्ते सति । तथा दूषणे दूषणाख्यसेना-पतौ प्रेत्य मृत्वापि । जीवनदशायां किं वक्तव्यमिति भावः । विस्रगन्धोऽस्यास्तीति विस्रगन्धिनामगन्धिना 'विस्रं स्यादामगन्धि यत्' इत्यमरः । 'अत इनिठनौ' इति मत्वर्थीय इनिप्रत्ययः । अथवा विस्रमामगन्धिवस्तु तस्येव गन्धो यस्य तत्तथोक्तेने-त्युपमानपूर्वपदो बहुव्रीहिः । 'उपमानाच्च' इति गन्धस्येकारोऽन्तादेशः । शरीराच्छ-रविदलितनिजगात्रात्स्रुतेन स्रवता वसास्रोतसा हृन्मेदःप्रवाहेण । 'हृन्मेदस्तु वपा वसा' इत्यमरः । क्रियमाणमाश्रमदूषणं तपोवनबीभत्सं येन तस्मिंस्तथोक्ते । तस्मिन्नपि निहते सतीत्यर्थः । रोषभीषणाभ्यां क्रोधावेशभयंकराभ्यां वीक्षणाभ्यां नेत्राभ्यां खरस्तीक्ष्णः । दुर्दर्श इत्यर्थः । 'तिग्मं तीक्ष्णं खरं तद्वत्' इत्यमरः । खरो राक्षस आ-

१. 'तत्र' इति पाठः. २. 'च' नास्ति क्वचित्.

ह्वायाह्वार्थम्। योद्धुमित्यर्थः। राघवं श्रीराममाह्वयत स्पर्धयाहूतवान्। निहतैरेभी राक्षसैः का श्लाघा। मां जित्वा खलु तव कृतकृत्यतेत्यात्मनोऽसहायशूरत्वगर्वोदा-कारितवानित्यर्थः। ह्वयतेर्लुङि 'स्पर्धायामाङः' इत्यात्मनेपदम्। 'लिपिसिचिह्वश्च' 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङादेशः। तत्रायं परमार्थः स्फुरति। तत्प्रकार-मेवाह—श्रीरामोऽयं साक्षाद्विष्णववतारः। तदेतेन निहतानां निश्चिता ननु परम-पदप्राप्तिः। एवं च सत्येतावतो राक्षसान्निहत्य हतशेषमेकममुं किं हनिष्यामीति यद्युपेक्षेत तदेतन्ममानिष्टं स्यात्। तस्मात् 'आहूतो न निवर्तेत द्यूतादपि रणादपि' इति क्षत्रियधर्मत्वेनाह्वाने सति पुनर्न निवर्तेत, तथा च ममेष्टसिद्धिः स्यादिति म-त्वाहूतवानिति ॥

**तत्र विपश्चिद्भिरप्यनिश्चीयमानजयापजयमनिमेषैरप्यननुसंधीय-माननशरसंधानमोक्षमभूदभूतपूर्वं द्वंद्वयुद्धम्।**

**तत्रेति**। तत्र तस्मिन्समये विपश्चितो विद्वांसः। संदिग्धार्थनिर्धारका इति यावत्। तैरपि। किमुतान्यैरिति भावः। अनिश्चीयमानावनिर्धार्यमाणौ जयापजयावन्यतर-विषयौ यस्मिंस्तत्तथोक्तम्। अन्योन्यं तुल्यबलतया निर्धारितुमशक्यत्वादिति भावः। न विद्यते निमेषो येषां तैरनिमेषैः। सुरैरिति यावत्। तैरपि। किमुतान्यैः सनिमे-षैरिति भावः। अननुसंधीयमानावविभाव्यमानौ शराणां रामखरबाणानां संधानमोक्षौ मौर्वीयोजनविसर्गौ यस्मिंस्तत्तथोक्तम्। तथा क्षिप्रहस्तत्वादिति भावः। पूर्वं भूतं भूतपूर्वम्। 'सुप्सुपा' इति समासः। ततो नञ्समासः। निरुपममित्यर्थः। द्वंद्वस्या-सहायशूरयोर्द्वन्द्वं युद्धमभूत्। श्रीरामखरयोरिति भावः। अत्र जयपराजययोर्निश्चय-संबन्धेऽपि तथा शरसंधानमोक्षयोरनुसंधीयमानत्वसंबन्धेऽप्यसंबन्धाभिधानात्संब न्धेऽसंबन्धरूपातिशयोक्त्योश्च परस्परनैरपेक्ष्यात्संसृष्टिः ॥

**ततः खरो गृहीतकोदण्डः सकृदनुभूयमाननमनोन्नमनायासः समरसमापनचतुरं चतुराननास्त्रसंधानदशार्हं दाशार्हशरासनं ग्राहयितुकाम इव रामहस्तात्प्राक्तनं चापं शरैरपजहार।**

**तत इति**। ततो द्वन्द्वयुद्धानन्तरं गृहीतकोदण्डश्चापपाणिः खरः सकृदेकवारम-नुभूयमानोऽनुभवगोचरीक्रियमाणो नमनोन्नमनायासो ज्याकर्षणप्रयासः शरसंधान-मोक्षप्रयासो वा येन स तथोक्तः सन्। असकृच्छरसंधानमोक्षप्रयासेऽपि क्षिप्रहस्त-त्वात्तथाभूत इव प्रतीयमान इति वेगातिशयोक्तिः। समरसमापने रणसमाप्तिकरणे चतुरं निपुणम्। क्षिप्रमेव रिपुमारकत्वादिति भावः। चतुराननास्त्रसंधानदशार्हं ब्रह्मास्त्रसंधानक्रियायोग्यम्। तेनैव स्वशिरस्सश्छेत्स्यमानत्वादिति भावः। दशार्हस्य संबन्धि दाशार्हं वैष्णवं पूर्वमगस्त्यदत्तं शरासनं चापं ग्राहयितुं ग्रहणं कारयितुं कामो यस्य स तथोक्त इवेति फलोत्प्रेक्षा। रामेणेति शेषः। उत्तरत्र तस्यैव ग्रही-

१. 'अनिमिषैः' इति पाठः. २. 'तत्र' इति पाठः. ३. 'त्वसकृत्' इति पाठः. ४. 'चतुर' इति पाठः. ५. 'संधानार्हं' इति पाठः.

ध्यमाणत्वादिति भावः । प्रहेर्ण्यन्तात्तुमुन् । ततः 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । रामहस्तात्सकाशात् । प्राक्तनं पुरातनम् । पूर्वं धृतमित्यर्थः । 'सायंचिरं–' इत्यादिना ट्युल्प्रत्ययस्तुडागमश्च । चापं शरैरपजहारापहृतवान् । निजहस्तलाघवं प्रदर्शयञ्श्रीरामचापं मुष्टिप्रदेशेऽखण्डयदित्यर्थः । तथाच रामायणे—'ततोऽस्य सशरं चापं मुष्टिदेशे महात्मनः । खरश्चिच्छेद रामस्य दर्शयन्हस्तलाघवम्' इति ॥

**सोऽपि कोपपावकेन यावकिताननः कुम्भसंभवदत्तं धनुराधत्त ।**

**स इति** । स श्रीरामोऽपि कोपपावकेन चापखण्डनजनितकोपाग्निना यावकवत्कृतं यावकितम् । शोणीकृतमित्यर्थः । 'तत्करोति–' इति ण्यन्तात्कर्मणि क्तः । तदाननं यस्य स तथोक्तः सन् । कुम्भसंभवदत्तमगस्त्यमुनिदत्तं धनुर्वैष्णवं चापमाधत्त गृहीतवान् । 'अगस्त्यः कुम्भसंभवः' इत्यमरः ॥

**खरपरुषि शरासने गृहीते खरकिरणान्वयशेखरेण तेन ।**
**खररघुवरयो रणं समाप्तं खरनखरायुधयोरिव क्षणेन ॥ २० ॥**

**खरेति** । खरकिरणान्वयशेखरेण सूर्यवंशावतंसेन । यद्वा खरकिरणान्वयानां सूर्यवंशजराजन्यानां शेखरेण शिखामणिना । 'शिखास्वापीडशेखरौ' इत्यमरः । तेन श्रीरामेण खराणि निबिडानि परूंषि पर्वाणि यस्य तस्मिन् । दुष्प्रधर्षण इत्यर्थः । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः । शरासने वैष्णवधनुषि गृहीते स्वीकृते सति । खररघुवरयोः खरासुरश्रीरामयोः खरनखरायुधयोः रासभसिंहयोरिव । 'रासभा गर्दभाः खराः' इत्यमरः । क्षणेनाल्पकालेन रणं समरम् । 'अस्त्रियां समरानीकरणाः' इत्यमरः । समाप्तम् । अभूदिति शेषः । गर्दभसिंहयोर्यावदन्तरं तावत्खरराघवयोरपीत्युपमार्थः । श्रीरामेण वैष्णवधनुर्गृहीत्वा तत्रेन्द्रदत्तमहास्त्रसंधानेन क्षिप्रमेव खरवधोऽपि कृत इत्यर्थः । स च प्रकृतप्रकृतेनैव स्वकार्येण गम्यत इति पर्यायोक्तमुक्तोपमया संसृज्यते । इन्द्रशरेण खरवधे रामायणवचनम्—'धनुर्दत्तं मघवता सुरज्येष्ठेन धीमता । संदधे च स धर्मात्मा मुमोच च खरं प्रति ॥ स वृत्र इव वज्रेण फेनेन नमुचिर्यथा । बलो वेन्द्राशनिहतो निपपात हतः खरः ॥' इति । केचित्तु खरनखरायुधयोरिवेत्यत्र 'कुक्कुटश्चरणायुधः' इत्यभिधानात्तीक्ष्णकुक्कुटयोरिवेति कथयन्ति तदत्यन्तारमणीयम् । श्रीरामे हीनोपमादिदोषप्रसङ्गादित्यलम् ॥

**खरवधपरिशुद्धे दण्डकारण्यभागे**
**मुनिभिरभिहितानामाशिषां तादृशीनाम् ।**
**स्वयमचरमपात्रं स्वैर्गुणैर्मन्थराभू-**
**त्तदनु मनुकुलेन्दुः सानुजः शौर्यराशिः ॥ २१ ॥**

**खरेति** । दण्डकारण्यभागे दण्डकावनप्रदेशे खरवधेन खरासुरसंहारेण परिशुद्धे परिपूते । निर्बाधे सतीत्यर्थः । अतएव मुनिभिस्तद्विषयवासिभिस्तापसैरभिहितानां निर्बाधस्थितिलाभजनितानन्दातिरेकेणोक्तानां तादृशीनां तथाविधानाम् । अमोघानामित्यर्थः । आशिषां स्वस्तिवचसाम् । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरः । मन्थरा

१. 'पावकयावकिताननः' इति पाठः.

कैकेयीदासी। स्वै: स्वकीयैर्गुणैः कैकेयीदुर्मन्त्रबोधनश्रीरामराज्याभिषेकविघातकत्व-वनवासप्रेरकत्वादिभिः स्वयमचरमपात्रमाद्यभाजनमभूत्। 'दैवानुकूल्ये किं नाम न शिवाय प्रवर्तते' इति न्यायेन दैवानुकूल्येऽगुणमपि सगुणं भवति, यतो विरुद्धाचरण-तत्परापि मन्थरा मुन्याशीर्वादानामपात्रं नाभूत्, किंतु प्रथमपात्रमित्येतच्चित्रमि-त्यर्थः। तस्या एवोक्तरीत्या मुनिविरोधिराक्षसनाशनिदानत्वादिति भावः। 'योग्यभा-जनयोः पात्रम्' इत्यमरः। तदनु तदनन्तरं शौर्यराशिः। अतिशौर्यशालीत्यर्थः। सानुजः सलक्ष्मणः। मनुकुलेन्दुर्वैवस्वतमनुसंतानाह्लादकरः श्रीरामः स्वैर्गुणैः शौर्यौ-दार्यमुनिजनक्षेमंकरत्वादिभिरचरमपात्रमभूदिति संबन्धः। मन्थरामूलेनायं समागत्या-स्माकं निरुपद्रवं चकारेति सानन्दं मुनयः श्रीरामस्याशिषं प्रयुञ्जते स्मेत्यर्थः। अत्र शौर्यराशिरिति शौर्यतद्वतोरभेदोक्तेर्भेदेऽभेदरूपातिशयोक्तिः। तथा मन्थराया अचर-मपात्रत्वासंबन्धेऽपि तत्संबन्धोक्तेरसंबन्धे संबन्धरूपातिशयोक्तिरित्यनयोः संसृष्टिः॥

ननु साक्षाद्राक्षसहन्तारं सकलसद्गुणाभिरामं विहायामान्याया मन्थरायाः कथं मुनिजनाशीर्वादाचरमपात्रमिति कविराशङ्क्य नैतावद्राक्षससंहार एवेयं मूलम्, किंतु त्रिलोककण्टकरावणादिसंहारेऽपि चेति मनसि कृत्वा तद्युक्तमेवेत्याह—

**तथाहि।**

**प्राग्मन्थरेति महिषीति वरद्वयीति**
**धर्मव्ययव्यथितभूपतिभारतीति।**
**काकुत्स्थकाननकथेति च सन्ति संज्ञाः**
**पौलस्त्यहीनभुवनत्रयभाग्यपङ्क्तेः॥ २२॥**

**तथाहीति**। तदेव विवृणोति॥ **प्रागिति**। प्राक्प्रथमं मन्थरेति। ततो महिषी कैकेयीति। तदनु वरद्वयी पूर्वदत्तवरद्वयमिति। अनन्तरं धर्मव्ययव्यथितस्य धर्मच्युतिनिपीडितस्य भूपतेर्दशरथस्य भारती रामवनवासप्रेरकवाक्यमिति। काकु-त्स्थकाननकथा श्रीरामवनवासवार्तेति च। एवं पूर्वस्योत्तरोत्तरप्रेरकत्वेन प्रसिद्धा मन्थरादय इत्यर्थः। पौलस्त्येन लोककण्टकेन रावणेन हीनं रहितं यद्भुवनत्रयं त्रै-लोक्यं तस्य भाग्यपङ्क्तेर्निर्बाधस्थितिहेतुभूतभागधेयश्रेण्याः संज्ञा नामधेयानि वर्तन्ते। अतो मन्थराया अचरमपात्रत्वं युक्तमिति भावः। वसन्ततिलकावृत्तम्॥

अथ शूर्पणखाया लङ्कागमनवृत्तान्तमाह—

**अथ शूर्पणखा लङ्कामपि जनस्थानमिव विजनस्थानं काकुत्स्थेन कारयितुं दशकण्ठोपकण्ठे कृत्येव निपत्य रामलक्ष्मणयोर्याथातथ्यं वैदेह्या देहसौन्दर्यं खरप्रमुखैः साकमनीकस्य चतुर्दशसहस्रसंख्या-कस्य पञ्चताकरणकारणभूतामात्मावज्ञां च विज्ञापयामास।**

**अथेति**। अथ खरप्रमुखराक्षससंहारानन्तरं शूर्पणखा लङ्कापुरं रावणराज-धानीमपि जनस्थानं खरासुरदेशमिव विजनं जनरहितं स्थानं यस्य तत्तथोक्तम्। शून्यमित्यर्थः। काकुत्स्थेन श्रीरामेण कारयितुम्। विध्वंसयितुमित्येवेत्यर्थः। अतएव

१. 'श्रीर्' इति पाठः। २. 'संख्याकस्य' इति पाठः।

फलोत्प्रेक्षागम्योपमयाङ्गेन संकीर्णा । सीताहरणोपदेशादिना तथा भविष्यमाणत्वादिति भावः । करोतेर्ण्यन्तात्तुमुन् । 'हृक्रोरन्यतरस्याम्' इत्यणि कर्तुः कर्मत्वविकल्पात् 'कर्तृकरणयोस्तृतीया' इति तृतीया । दशकण्ठोपकण्ठे रावणसमीपे कृत्येव मरणाधिदेवतेव । 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः' इत्यमरः । 'क्यङ् च' इति चकारात्क्यङ् । निपत्य भुवि पतित्वा । रामलक्ष्मणयोर्याथातथ्यम् । यथातथाभावमनतिक्रम्य यथातथम् । यथारूपमिति यावत् । 'यथार्थं तु यथातथम्' इत्यमरः । यथार्थेऽव्ययीभावः । 'स नपुंसकम्' इति नपुंसकत्वम् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । तस्य भावो याथातथ्यम् । ब्राह्मणादित्वाद्भावे ष्यञ्प्रत्ययः । ञित्त्वादादिवृद्धिः । 'दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः । कन्दर्पसमरूपश्च रामो दशरथात्मजः ॥' इत्यादि श्रीरामलक्ष्मणतत्त्वस्वरूपमित्यर्थः । तथा वैदेह्या देहसौन्दर्यम् । अन्यूनानतिरिक्तावयवसंनिवेशप्रयुक्तजगन्मोहनदिव्यमङ्गलविग्रहरामणीयकमित्यर्थः । तदुक्तम्—'अङ्गप्रत्यङ्गकानां यः संनिवेशो यथोचितम् । संश्लिष्टसंधिबन्धं यत्सौन्दर्यमिति चोच्यते ॥' इति । तथा खरप्रमुखैः साकं खरदूषणत्रिशिरःप्रभृतिभिः सह । 'साकं सत्रा समं सह' इत्यमरः । चतुरधिका दश चतुर्दश सहस्राणि यस्यां सा तथोक्ता संख्या यस्य तत्तथोक्तस्य । अनीकस्य राक्षससैन्यस्य । 'अनीकं तु रणे सैन्ये' इति विश्वः । पञ्चताकरणे मरणकर्मणि कारणभूतां कारणत्वेन पर्यवसिताम् । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥' इत्यमरः । आत्मावज्ञां कर्णनासिकाच्छेदनरूपनिजावमाननां च विज्ञापयामास विज्ञापितवती । सीतारामकथाकथनेन रावणस्य कामक्रोधावुद्दीपयामासेत्यर्थः । 'रीढावमाननावज्ञा' इत्यमरः ॥

ततो रावणः किं कृतवानित्यत आह—

**स दण्डकायां कृतदण्डकायां स्वसारमेनां प्रथितस्वसारः ।**
**निशाम्य रामस्य निशम्य वृत्तं चक्रे रुषं राक्षसचक्रवर्ती ॥ २३ ॥**

**स इति ।** प्रथितः सकललोकप्रख्यातः स्वसारः स्वकीयभुजबलं यस्य स तथोक्तः । 'सारो बले स्थिरांशे च' इत्यमरः । राक्षसचक्रवर्ती राक्षससार्वभौमः स रावणो दण्डकायां दण्डकारण्ये कृतो लक्ष्मणविरचितो दण्डः कर्णनासिकाच्छेदनरूपशासनं यस्य स तथोक्तः कायो देहो यस्यास्तामिति बहुव्रीहिः । 'दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडेऽपि च । मर्यादायां सैन्यभेदे' इति वैजयन्ती । 'कायो देहः क्लीबपुंसोः' इत्यमरः । एनां स्वसारं भगिनीं शूर्पणखां निशाम्य दृष्ट्वा । 'शमोऽदर्शने' इत्यत्र शमोऽदर्शनार्थेऽमित्वाद्ध्रस्वादेशाभावः । तथा रामस्य वृत्तं पूर्वोक्तरूपचरितं निशम्य श्रुत्वा । तन्मुखादेवेति शेषः । 'निशम्यतीति श्रवणे तथा निशिमयत्यपि' इति भट्टमल्लः । अत्र निशाम्यतेरिदं रूपमन्यथा निशमय्येति स्यात् । अतएवाह वामनः—'निशम्यनिशमय्यशब्दौ प्रकृतिभेदौ' इति । रुषं चक्रे । मत्पराक्रमानभिज्ञतया वनगोचरोऽयं रामः कियत्कार्यं कृतवानिति चुकोपेत्यर्थः । वृत्तमुपजातिः । उपेन्द्रवज्रा ॥

**ततः प्रस्थाप्य जनस्थाने राक्षसानष्टनीतिरयं ताटकेयं हाटकमृगं पुरस्कृत्य सीताह्वां हरिणीं गृहीतुं तस्यावसथमाससाद।**

**तत इति।** ततो रोषानन्तरं जनस्थाने खरालयेऽष्टराक्षसान्प्रस्थाप्य तत्परिपालनार्थं प्रेषयित्वा नष्टनीतिर्हतनयः। अमार्गवर्तीत्यर्थः। अयं रावणः। ताटकाया अपत्यं ताटकेयो मारीचः। 'स्त्रीभ्यो ढक्' इति ढक्येयादेशः। तद्रूपो हाटकमृगो मायाकल्पितहिरण्मयहरिणः। 'हिरण्यं हेम हाटकम्' इत्यमरः। हाटकस्य हाटकमयो वा मृगो हाटकमृग इति विग्रहः। षष्ठ्या विवक्षितार्थलाभे सति मयडादिग्रहणाभावेऽप्यदोषः। तं पुरस्कृत्य पुरोधाय सीताह्वां सीताभिधानां हरिणीं मृगीं गृहीतुम्। विचार्येति शेषः। यथा लोके लुब्धकः कंचन मृगं पुरस्कृत्य वनं गत्वा तद्विप्रलब्धं मृगान्तरं गृहीतुमिच्छति तद्वदित्यर्थः। तस्य मारीचस्यावसथं स्थानमाससादाविवेश। 'स्थानावसथवास्तु च' इत्यमरः। अत्रैवं जनस्थानं प्रति राक्षसप्रेरणं सीतापहरणात्पूर्वमुक्तम्। श्रीरामायणे तु तदनन्तरम्। इत्येवं पौर्वापर्यविपर्ययनिबन्धनो विरोधः पुराणान्तरात्समाधेयः। ताटकेयं हाटकमृगमित्यत्र रूपकशङ्का न कार्या। तस्यारूपहेतुत्वान्मारीचे तु हाटकमृगत्वस्यागमसिद्धेरनारोप्यमाणत्वादिति॥

**मारीचोऽप्याकर्णितरावणमतः प्रयत्नशतैरप्यनिवार्यमाणे तस्मिन्सुबाहुमेव बहुमन्यमानो गत्यन्तराभावात्तदभ्यर्थनामङ्गीकृत्य जातरूपमयमृगरूपं गृहीत्वा सीतां वञ्चयितुं पञ्चवटीमवगाहत।**

**मारीच इति।** मारीचोऽप्याकर्णितं श्रुतं रावणस्य मतं सीतापहरणरूपं चिकीर्षितं येन स तथोक्तः सन्। तस्मिन्रावणे प्रयत्नशतैरपि। 'अपि रामो न संक्रुद्धः कुर्याल्लोकानराक्षसान्। अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा॥' इत्यादि श्रीरामायणोक्तबहुप्रयत्नैरित्यर्थः। अनिवार्यमाणे निवारयितुमशक्ये सति। तद्विनाशकालस्य प्रत्यासन्नत्वादिति भावः। सुबाहुं सुबाहुनामानं स्वभ्रातरमेव। यो हि विश्वामित्राध्वरे श्रीरामेण निहत इति भावः। बहु भूयिष्ठं मन्यमानः। सुबाहुवत्पूर्वमेवात्मनो मरण इदानीमेतादृशनिर्बन्धो न स्यात्, अतः स एव धन्य इत्यवबुध्यमानः सन्नित्यर्थः। गत्यन्तराभावात्तद्विपरीतबुद्धिनिवर्तन आत्मनो विमोचने वोपायान्तराभावात्। 'देशोपायगमे गतिः' इति वैजयन्ती। अभ्यर्थनामङ्गीकृत्य ततो जातरूपमयः काञ्चनविकारः। विकारार्थे मयट्। यो मृगस्तद्रूपं तदाकारं गृहीत्वा स्वीकृत्य। राक्षसानां कामरूपत्वान्मायाकनकमृगभूमिकां धृत्वेत्यर्थः। 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः। सीतां वञ्चयितुं प्रलोभयितुं पञ्चवटीमवगाहतासेवत। प्रविवेशेत्यर्थः॥

**दशमुखोऽपि जलधरपथस्थापितरथो दाशरथिविघट्टने कृतास्थस्तस्थौ।**

---

१. 'नष्टमतिः' इति पाठः. २. 'सीताह्वयां' इति पाठः. ३. 'मतिः' इति पाठः. ४. 'तस्मिन्रावणे' इति पाठः. ५. 'अभ्युपेत्य' इति पाठः. ६. 'अगाहत' इति पाठः.

**दशमुख इति ।** दशमुखो रावणो जलधराणां मेघानां पन्था जलधरपथोऽन्तरिक्षम् । 'ऋक्पूः–' इत्यादिना समासान्तः । 'तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम्' इत्यमरः । तत्र स्थापितो निक्षिप्तो रथो येन स तथोक्तः । निजकपटाप्रकाशार्थमिति भावः । दाशरथिविघट्टने रामलक्ष्मणवियोजने कृतास्थो विहितादरः । तदेकाग्रचित्तः सन्नित्यर्थः । तस्थौ स्थितवान् ॥

विपिनमवजगाहे राक्षसानां करोटी-
रसकृदसकृदाविर्बाष्पमालोक्य शोचन् ।
कृतरुचिरिव वर्त्मन्यङ्कुशानां कुशानां
पथिकचरणलाविन्यङ्कुरे न्यङ्कुरेषः ॥ २४ ॥

**विपिनमिति ।** अथानन्तरमेष न्यङ्कुः कनकमृगरूपो मारीचः । 'न्यङ्कुर्गुरुकुलस्थायां शिष्ये मीने मुनौ मृगे' इति नानार्थरत्नमाला । 'कृष्णसाररुरुन्यङ्कुः' इत्यमरश्च । राक्षसानां खरादीनां करोटीः शिरोस्थीनि । कपालानीति यावत् । 'शिरोस्थनि करोटिः स्त्री', 'कपालः कर्परः समौ' इत्यमरवैजयन्त्यौ । असकृदसकृत्पुनः पुनः । बहुवारमित्यर्थः । वीप्सायां द्विर्भावः । आविर्बाष्पं प्रादुर्भवदश्रुजलं यथा तथा । 'बाष्पोऽश्रुण्यम्बुधूमयोः' इति वैजयन्ती । आलोक्य दृष्ट्वा । शोचन् । 'हा कष्टम् । जनस्थानवासिना रामेण खलु निहताः सर्वेऽपि बान्धवाः । तदेषामिमाः करोट्यः परिलुठन्त्यो दृश्यन्ते । स्वात्मनोऽप्यस्मिन्देशे मरणं निश्चितम्' इति मनसि विषीदन्सन्नित्यर्थः । तथा वर्त्मनि विपिनमार्गेऽङ्कुशानां नैशित्यसाम्यात्सृणिप्रायाणाम् । 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इत्यमरः । कुशानां दर्भाणां संबन्धीनि । 'अस्त्री कुशं कुथो दर्भः' इत्यमरः । अतएव पथिकानां पान्थानां चरणान्पादतलानि लुनातीति पथिकचरणलावी । 'कर्मण्यण्' । अङ्कुरे । अङ्कुरेष्वित्यर्थः । कृतरुचिः कृताभिलाष इव । पश्यतां स्वकपटाप्रकाशनार्थं मृगजातिधर्ममनुवर्तमान इवेत्यर्थः । वस्तुतस्तु न तथेति भावः । विपिनं पञ्चवटीनिकटारण्यमवजगाहे प्रविवेश । वैदेह्या लोचनगोचरीभवदिति भावः । मालिनीवृत्तम् ॥

तदनु जनकपुत्रीयाञ्चया तं[१] जिघृक्षु-
र्हरिणमनुजगाहे चापमादाय रामः ।
समय इति च भेजे वक्त्रमातत्य मृत्युः
कुशिकसुतमखाजौ भ्रष्टमेनं[२] जिघांसुः ॥ २५ ॥

**तदन्विति ।** तदनु मृगप्रवेशानन्तरं रामो जनकपुत्र्या जानक्या याञ्चया 'आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः । आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥' इत्यादि प्रार्थनया हेतुना तं हरिणं मायाकनकमृगं जिघृक्षुर्गृहीतुमिच्छुः सन् । ग्रहेः सन्नन्तादुप्रत्ययः । न लोकाव्यय–' इत्यादिना षष्ठीप्रतिषेधः । चापमादायानुजगाहेऽनुसृत्य जगाम । तथा मृत्युरन्तकश्च । समयोऽयमेव कवलनावसर इति मत्वेति शेषः । वक्त्रमातत्य व्यादाय कुशिकसुतमखाजौ विश्वामित्राध्वरसमय-

१. 'तज्जिघृक्षुः' इति पाठः. २. 'पाशम्' इति पाठः.

प्रवृत्तयुद्धे । 'समित्याजिसमिद्युधः' इत्यमरः । भ्रष्टं गलितम् । श्रीरामबाणेन समुद्रमध्ये जीवत एव तस्य प्रवेशितत्वादिति भावः । एनं मारीचं मायामृगं जिघांसुर्हन्तुमिच्छुः सन् । हन्तेः सन्नन्तादुप्रत्ययः, पूर्ववत्षष्ठीप्रतिषेधः । भेजे । तदन्तिकं प्रापेत्यर्थः । श्रीरामजिघृक्षितस्य तस्यावश्यंभाविमरणकत्वादिति भावः । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुकत्वात्काव्यलिङ्गभेदः । वृत्तं पूर्ववत् ॥

आकृष्य दूरमुटजादथ दर्शिताशः
क्रव्याश एष रघुनाथशरेण विद्धः ।
कार्तस्वरैणतनुतां विजहौ हतोस्मी-
त्यार्तस्वरेण सह रामवचोनिभेन ॥ २६ ॥

आकृष्येति । अथानन्तरमेष पूर्वोक्तः । क्रव्यं मांसमश्नातीति क्रव्याशो मायामृगरूपो मारीचः । 'कर्मण्यण्' । 'पललं क्रव्यमामिषम्' इत्यमरः । दर्शिता उत्पादिता आशा ग्रहणाकाङ्क्षा येन स तथोक्तः सन् । हस्तलभ्यवत्पुनः पुनर्मायया सन्निहितत्वादिति भावः । श्रीरामस्य उटजात्पर्णशालायाः सकाशाद्दूरं विप्रकृष्टमाकृष्य । उत्तरोत्तराशोत्पादनेन दूरं नीत्वेत्यर्थः । 'प्रलोभयित्वा वैदेहीं यथेष्टं गन्तुमर्हसि' इति रावणस्य कृतसंकेतस्य तथाभूतत्वादिति भावः । अथ रघुनाथस्य श्रीरामस्य शरेण बाणेन विद्धः प्रलोभेन दूराकर्षणजनितकोपात्संप्रहृतः सन् । हतोस्मि मृतो भवामीत्येवंरूपेण रामवचसा सदृशेन रामवचोनिभेन । नित्यसमासत्वादस्वपदविग्रहः । अतएव 'स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः ॥' इत्यमरः । आर्तस्वरेण सह 'हा सीते, हा लक्ष्मण' इति दीनाक्रन्दनेन साकम् । एवं चेत्सीता रामं प्रति लक्ष्मणं प्रेषयेत् । तच्छून्ये पर्णशालाभ्यन्तरे सीतां रावणोऽपहरेदिति कपटोपायादिति भावः । कार्तस्वरमयी हिरण्मय्येणतनुर्मृगशरीरं यस्य कार्तस्वरैणतनुस्तस्या भावस्तत्ता तां विजहौ तत्याज । 'हिरण्यं हेम हाटकम् । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥' इत्यमरः । दीनाक्रन्दनपूर्वकं कृत्रिममृगशरीरं परित्यज्य पूर्वरूपं धृतवानित्यर्थः । तथाच रामायणे—'म्रियमाणस्तु मारीचो जहौ तां कृत्रिमां तनुम् । श्रुत्वा तुच्छमती रक्षो दध्यौ येन तु लक्ष्मणम् ॥ इह प्रस्थापयेत्सीता शून्ये तां रावणो हरेत् । संप्राप्तकालमाज्ञाय चकार च ततः स्वरम् ॥ सदृशं राघवस्यैव हा सीते लक्ष्मणेति च । मृगरूपं तु तत्त्यक्त्वा राक्षसं रूपमात्मनः ॥ चक्रे स सुमहाकायो मारीचो जीवितं त्यजन् ॥' इति । अत्रार्तस्वरेण सह देहत्यागकथनात्सहोक्तिरलंकारः । तदुक्तं काव्यप्रकाशे—'सहोक्तिस्तु सहार्थस्य बलादेकार्थवाचकः' इति ॥

**एतदाकर्ण्य विदीर्णहृदया हृदयदयितप्रेम्णा कर्तव्याकर्तव्यमजानाना जानकी जानीहि भ्रातरमिति सौमित्रिमादिदेश ।**

**एतदिति ।** एतच्छ्रीरामवचनसदृशमार्तवचनं जानक्याकर्ण्य श्रुत्वा हृदयदयिते

१. 'दर्शिताङ्गः' इति पाठः. २. 'क्रव्यादः' इति पाठः.

मनोवल्लभे । प्राणेश्वर इति यावत् । श्रीरामे प्रेम्णा स्नेहेन हेतुना । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । विदीर्णहृदया विदलितान्तरङ्गा । अतएव कर्तव्याकर्तव्यं विधेयाविधेयं कृत्यमजानानानवबुध्यमाना । इतिकर्तव्यताशून्या सतीत्यर्थः । 'ज्ञा अवबोधने' इत्यस्माच्छानच् । 'ज्ञाजनोर्जा' इति जादेशः । भ्रातरं श्रीरामं जानीहि परामृशेत्येवंप्रकारेण सौमित्रिमादिदेश । राक्षसेभ्यो रामस्य विपत्तिमाशङ्क्येत्थमाज्ञापयामासेत्यर्थः । तथा रामायणम्—'आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने । उवाच वचनं सीता गच्छ जानीहि राघवम् ॥' इत्यादि ॥

**ततश्चार्ये, न कार्यमिदमादिष्टम् । दिष्टदोषान्मिथ्याप्रतीतिः परिभवति भवतीं परम् ।**

**तत इति** । ततश्च निदेशानन्तरं च । हे आर्ये पूज्ये जानकि, इदमादिष्टमयमादेशः । भावे क्तः । न कार्यं न कर्तव्यम् । भ्रातरं जानीहीत्येवमाज्ञप्तुं न युक्तमित्यर्थः । कुतः । दिष्टदोषात्कालविपर्यासात् । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः । अथवा दिष्टदोषाद्दैवप्रातिकूल्यात् । 'दैवं दिष्टं भागधेयम्' इत्यमरः । मिथ्याप्रतीतिर्विपर्ययज्ञानम् । अरामसंबन्धिन्यार्तस्वरे तत्संबन्धित्वेन भ्रान्तिरित्यर्थः । भवतीं त्वां परमधिकं परिभवति तिरस्करोति । लोके चाकचक्यदोषाच्छुक्तौ रजतभ्रान्तिप्रतिपत्तिवत्तवापि अतस्मिंस्तद्ग्रहणमुत्पन्नमभूत् । अतः परं भ्रान्तासीत्यर्थः ॥

ननु त्वयाप्ययमार्तस्वरः प्रत्यक्षमनुभूतः । स च रामस्य विपत्तिमन्तरा नोपपद्यते । अतः कथं मम भ्रान्तत्वमित्याशङ्क्य नैतद्विश्वसितुं योग्यमित्याह—

**त्रिभुवनैकधनुर्धरस्य शौर्यराशेरार्यस्य[2] कः श्रद्दधीत कोणप[3]घुणनिमित्तां विपत्तिमिति प्रणिपत्य प्रत्याचक्षाणं लक्ष्मणं[4] हृदयतोदकारिण्या वाण्या मोहविह्वला सा बह्वतर्जयत् ।**

**त्रिभुवनेति** । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । 'तद्धितार्थ—' इत्यादिना समाहारसमासः । 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति स्त्रीलिङ्गताप्रतिषेधः । 'पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः' इत्यमरः । तत्रैकधनुर्धरस्य जगदेकधानुष्कस्येत्यनेनास्त्रबलसंपन्नत्वोक्तिः । शौर्यराशेर्महाशौर्यसंपन्नस्येति शारीरबलसंपन्नत्वोक्तिः । एवंविधस्यार्यस्य महात्मनः श्रीरामस्य कोणपा राक्षसास्ते घुणाः कीटविशेषा इव तन्निमित्तां तन्मूलाम् । यद्वा मृगभूमिकया प्रच्छन्नमप्यमुं निजबुद्ध्या राक्षसं निश्चित्याह—कोणपो राक्षसो मारीचः स घुणस्तन्निमित्तां तन्मूलाम् । 'राक्षसः कोणपः क्रव्यात्' इत्यमरः । विपत्तिं प्राणसंकटं को विवेकी श्रद्दधीत विश्वसेत् । न श्रद्दधीतैवेत्यर्थः । 'पन्नगासुरगन्धर्वदेवदानवराक्षसैः । अशक्यस्तव वैदेहि भर्ता जेतुं न संशयः ॥' इति श्रीरामायणेऽप्युक्तत्वादिति भावः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्या' इति श्रच्छब्दस्य पूर्वनिपातः । इत्येवंप्रकारेण प्रणिपत्य नम-

१. 'पराभवति' इति पाठः. २. 'रामार्यस्य' इति पाठः. ३. 'कौणप' इति पाठः. ४. 'लक्ष्मणं' इति नास्ति क्वचित्.

स्कृत्य प्रत्याचक्षाणं प्रत्यालपन्तं लक्ष्मणं हृदयतोदकारिण्या मनोव्यथोत्पादिकया वाण्या वाचा। 'अनार्याकरुणारम्भ नृशंस कुलपांसन। अहं तव प्रियं मन्ये रामस्य व्यसनं महत्॥' इत्याद्यारभ्य 'न त्वहं राघवादन्यं पदापि पुरुषं स्पृशे' इत्यन्तया श्रीरामायणोक्तप्रकारयेत्यर्थः। मोहेन प्रियविपत्त्याशङ्काजनितचित्तवैकल्येन विह्वला विक्लवा सती सा जानकी वहु भूयिष्ठमतर्जयदभर्त्सयत्। अनिन्दयदिति यावत्। तर्जयतेः परस्मैपदं कविप्रयोगात्सिद्धम्। तर्जयतेरनुदात्तत्वेऽपि तस्यानुदात्तत्वश्च क्षिङो ङित्करणेनानुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति। अत-एव 'तर्जयति भर्त्सयति चेत्यपि दृश्यते' इति भट्टमल्लः॥

तामेतां सीतावाणीमसहमानो लक्ष्मणः पुनरुवाचेत्याह—

**भूयोऽपि लक्ष्मणः प्रजावतीं परुषभाषिणीमेवमभाषत।**

**भूय इति।** भूयः पुनरपि लक्ष्मणः परुषभाषिणीं कर्णकठोरालापिनीं प्रजावतीं भ्रातृभार्यां सीतामेवं वक्ष्यमाणरीत्याभाषतावोचत। 'प्रजावती भ्रातृजाया' इत्यमरः॥

लक्ष्मणवाक्यमेव विवृणोति—

**सुमुखि मम सुमित्रा सत्यमम्बा यदासी-**
**स्तदभजमवितर्कं मातृसंपर्कसौख्यम्।**
**अहह विधिविपाकाद्व्याहरन्ती दुरुक्तिं**
**त्वमसि विपिनमध्ये मध्यमाम्बा हि जाता॥ २७॥**

**सुमुखीति।** हे सुमुखि मधुरभाषिणि जानकि। 'स्वाङ्गात्–' इत्यादिना ङीप्। यत् यस्मात्कारणात्त्वं मम सत्यं यथार्थम्। अकपटमिति यावत्। सुमित्रा सुमित्रा-रूपिण्यम्बा मातासीरभूः। सुवचनोपलालनादिना निजजननी जातासीरित्यर्थः। तत्तस्मात्कारणादवितर्कं निःशङ्कं मातृसंपर्केण मातृसांनिध्येन यत्सौख्यमानन्दस्त-दभजं प्राप्नवम्। अन्वभूवमित्यर्थः। एतावत्पर्यन्तमिति शेषः। मातृत्वे तव त्वत्स-हवाससौख्यानुभवस्य युक्तत्वादिति भावः। सपदीदानीं तु विधिविपाकाद्दैवप्रातिकू-ल्याद्धेतोः। 'विधिर्विधाने दैवेऽपि' इत्यमरः। विपिनमध्येऽरण्यमध्ये त्वं दुरुक्तिं कर्णकठोरवचनं व्याहरन्ती आलपन्ती सती। 'व्याहार उक्तिर्लपितम्' इत्यमरः। मध्यमाम्बा कैकेय्यपि जातासि। न केवलं सुवचनेन सुमित्रैव, किंतु दुर्वचनेन कै-केय्यपि जातेति कृत्वोभयथापि त्वं ममाम्बैव भवसि। अतः पुत्रे मयि काप्यन्य-शङ्का न कार्येति भावः। मध्यमाम्बाशब्दो व्याख्यातः। मालिनीवृत्तम्॥

**इत्युक्त्वा भ्रातृसमीपगामिनि लक्ष्मणे तत्क्षणमेव रन्ध्रान्वेषी दशक-न्धरः स्यन्दनं विहाय विहायःस्थलादवतीर्य निजान्तःकरणेऽप्यमान्तं रागं बहिः प्रकटयन्निव कैपटसंन्यासिवेषः पर्णशालाभ्यर्णमासदत्।**

१. 'परुषभाषणभाषिणीं प्रजावतीं' इति पाठः. २. 'आसीत्' इति पाठः. ३. 'भ्रातृजायां भ्रातृ' इति पाठः. ४. 'धृतकाषायपटसंन्यासवेषः' इति पाठः. ५. 'पर्णशालामाससाद' इति पाठः.

**इतीति ।** इत्येवमुक्त्वा लक्ष्मणे भ्रातृसमीपं श्रीरामनिकटं प्रतिगच्छतीति तद्गामिनि सति । तत्क्षणमेव तस्मिन्नेव क्षणे । विलम्बे कार्यविघातादिति भावः । अत्यन्तसंयोगे द्वितीया । रन्ध्रमपहरणोचितसमयमन्विषत्याकाङ्क्षत इति रन्ध्रान्वेषी । दशकन्धरो रावणः स्यन्दनं शताङ्गम् । 'शताङ्गः स्यन्दनो रथः' इत्यमरः । विहाय त्यक्त्वा । विहायःस्थलादाकाशमण्डलादवतीर्यावरुह्य । 'पुंस्याकाशविहायसी' इत्यमरः । 'निजान्तःकरणे निजमानसेऽप्यमान्तम् । अत्युत्कटत्वान्निर्गच्छन्तमित्यर्थः । रागमनुरागं लौहित्यं च । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इति विश्वः । बहिर्बाह्येऽपि प्रकटयन्प्रकाशयन्निव स्थित इत्युत्प्रेक्षा । सा च रागयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितेति संकरः । कपटसंन्यासिवेषो मायाभिक्षुवेषधारी सन् । सद्य एव तस्या अनुद्वेगार्थमिति भावः । पर्णशालाभ्यर्णं सीतानिवासपर्णशालोपकण्ठमासदत्प्राप । सदेर्लुङि पुषादित्वाच्च्लेरङादेशः । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः ॥

> रामाश्रमाद्विगतलक्ष्मणसन्निधाना-
> स्सीतां जहार चपलः पिशिताशनेन्द्रः ।
> मालां नवोत्पलमयीं[1] पललभ्रमेण
> देवालयादिव निरस्तजनादलर्कः ॥ २८ ॥

**रामेति ।** चपलश्चञ्चलः । अनियतचित्त इत्यर्थः । पिशिताशनेन्द्रो राक्षसचक्रवर्ती रावणो विगतं लक्ष्मणस्य सन्निधानं सान्निध्यं यस्य तस्मात् । लक्ष्मणरहितादित्यर्थः । रामाश्रमाच्छ्रीरामनिवासात् । 'ध्रुवमपायेऽपादानम्' इत्यपादानत्वात्पञ्चमी । सीतां जहारापहृतवान् । साधारणवधूभ्रान्त्येति भावः । कथमिव । निरस्तजनादर्चकादिजनशून्याद्देवालयाद्देवतायतनात् । पूर्ववत्पञ्चमी । नवोत्पलमयीं नूतनेन्दीवरविकाराम् । तद्ग्रथितामित्यर्थः । नवग्रहणमम्लानतायोतनार्थम् । विकारार्थे मयटि ङीप् । मालां स्रजं पललभ्रमेण सकालखण्डान्त्रभ्रान्त्या । अन्यथा पललशब्दस्य केवलमांसपरत्वे तस्य रक्तवर्णत्वेन नीलोत्पलमालायां तद्भ्रान्त्यनुदयात् । अलर्कः सापस्मारशुनक इवेत्युपमा । अलर्कस्य मालापहरणे यो लाभः स एव सीतापहर्तू रावणस्यापीत्युपमार्थः । 'शुनको भषकः श्वा स्यादलर्कस्तु स योगितः' इत्यमरः । अत्र कश्चिद्रहस्योपदेशः कथितः श्रीरामायणव्याख्यातृभिः—यद्यपि लक्ष्मीरूपा सीता, विष्णुरूपरामस्य मृगान्वेषणसमये राम एव तिरोहिता, तथापि तस्मिन्समये देवैः स्वकार्यार्थं श्रीरामानुमत्या मायया निर्मिता सीता तत्र स्थापिता, तां रावणो जहारेति । अन्यथा रामस्य वियोगाङ्गीकारेण क्षणमात्रमपि विश्लेषाभावप्रतिपादकं 'विष्णोरेषानपायिनी' इति वाक्यमप्रमाणं स्यात् । ननु क्षणमात्रविश्लेषस्यानङ्गीकारे विवाहात्पूर्वं संबन्धाभावः कथमिति चेन्न । सर्वदा स्वस्मिन्विद्यमानाया एव सीताया लोकव्यवहारमनुसरञ्जनकस्य गृह आविर्भावं परिकल्प्य विवाहादिलीला-

१. 'महोत्पल' इति पाठः.

करणात्। अन्वेषणविलापनाद्यनुकरणमात्रं तच्च स्त्रीसङ्गिनामियमवस्थेति प्रख्यापनार्थम्। अत एवोक्तं श्रीभागवते—'स्त्रीसङ्गिनामिति गतिं प्रथयंश्चचार' इति। रावणकुम्भकर्णयोः पूर्वं वरप्रदानादेव स्ववध्यत्वे सिद्धे यद्यपि प्रकारान्तरेणापि तयोर्वधः संभवति तथापि मायारूपसीतां कल्पयित्वा तदपहरणापराधेन रावणहननादिकथाप्रवर्तनेन लोकं पवित्रीकर्तुं परदारापहर्तुरेवं विनाश इति ज्ञापनार्थं चेत्यलमतिकथया। वसन्ततिलकावृत्तम्॥

ततः किं जातमित्यत आह—

हा नाथ क्व चिरायसीति बहुशो व्याक्रुश्य बाष्पाविलं
चक्षुर्दिक्षु विमुञ्चतीं दशरथस्याद्यामवेक्ष्य स्नुषाम्।
रे रे राक्षस मा वधूं प्ररुदतीं मुञ्चेति गृध्राधिपो
रुद्ध्वाध्वानमनल्पकोपमकरोदग्रेवणं रावणम्॥ २९॥

हेति। हेति खेदे। नाथ प्राणेश्वर श्रीराम, क्व कुत्र चिरायसि विलम्बसे। येनैतादृश्यवस्था संप्राप्तेति भावः। इत्यनेन प्रकारेण बहुशो बहुवारम्। 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति शस्प्रत्ययः। व्याक्रुश्योच्चैराक्रन्द्य बाष्पाविलमश्रुकलुषं चक्षुर्दिक्षु दिगन्तरेषु विमुञ्चतीं प्रसारयन्तीम्। श्रीरामागमनाशयेति भावः। दशरथस्याद्यां स्नुषां ज्येष्ठपुत्रकलत्रत्वाज्ज्येष्ठस्नुषामवेक्ष्य दृष्ट्वा। रे रे इति प्रकृते भर्त्सने चापलाद्विरुक्तोऽयं शब्दो हीनसंबोधनवाची। 'हीनसंबोधने तु रे' इत्यमरः। 'चापले द्वे भवतः' इति द्विरुक्तिः। 'संभ्रमेण प्रवृत्तिश्चापलम्' इति काशिकोपदेशाच्च संभ्रमः। तत्र 'स्वरितमाम्रेडिते—' इत्यादिना प्राप्तस्य प्लुतस्य स्वरः प्लुतः। 'साहसमनिच्छता विभाषा वक्तव्या' इति पाक्षिकः प्रतिषेधः। 'शास्त्रत्यागः साहसम्' इति हरदत्तः। राक्षसेति तस्य नामाप्युच्चरितुमनुचितमित्यामन्त्रितमिति मन्तव्यम्। सीतापहरणसाहसं मा कुर्वित्यर्थः। प्ररुदतीं प्रकर्षेण क्रोशन्तीं वधूं स्नुषां मुञ्च त्यज। 'मा प्रतिरुधः' इति वा पाठः। तत्पक्षे निरोधं मा कुर्वित्यर्थः। 'समाः स्नुषाजनीवध्वः' इत्यमरः। अत्र दशरथस्यात्मप्रियसुहृद्भावेन भ्रातृत्वात्तत्स्नुषाया अपि स्वस्नुषात्वाद्वधूग्रहणं द्रष्टव्यम्। इति। उक्त्वेति शेषः। गृध्राधिपो जटायुरग्रेवणम्। वनपुरोभाग इत्यर्थः। 'वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः' इति वननकारस्य णत्वम्। अध्वानं मार्गं रुद्ध्वा निरुध्य सवणं प्रत्यनल्पकोपमधिकक्रोधमकरोत्। अनुचितकारिणं रावणं विजित्य सीतां मोचयितुमुद्युक्तवानित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥

समभूत्समये तस्मिन्समरं समरंहसोः।
मिथोमथनसंक्रुद्धगृध्रराक्षसराजयोः॥ ३०॥

समभूदिति। तस्मिन्समये सीताहरणकाले समरंहसोस्तुल्यवेगयोः। अत-

१. 'रावण' इति पाठः। २. 'प्रति रुधः' इति पाठः।

एव मिथोमथनेन परस्परप्रहारेण संक्रुद्धौ सम्यक्कुपितौ यौ गृध्रराक्षसराजौ जटायु-रावणौ तयोः समरं युद्धं समभूत् । सम्यक्प्रवृत्तमित्यर्थः ॥

ततः किं तत्राह—

दशमुखरथमाशु ध्वस्तरथ्यं विसूतं
शिथिलतरवरूथं शीर्णचक्रं स चक्रे ।
गरुदभिहतशक्तिप्रासबाणासखड्ग-
त्रिशिखविशिखतूणीपाशकुन्तः शकुन्तः ॥ ३१ ॥

दशमुखेति । स शकुन्तः पक्षी जटायुः । 'शकुन्तपक्षिशकुनि—' इत्यमरः । शक्तय आयुधविशेषाः । प्रास्यन्त इति प्रासाः कुन्तापरपर्यायाः क्षेपणीया आयुधविशेषाः । तदुक्तं वृत्तिकारेण—'अकर्तरि च कारके संज्ञायाम्' इत्यत्र प्रास्यन्त इति प्रासा इति । बाणा इषवोऽस्यन्तेऽनेनेति बाणासः कार्मुकम् । 'कर्मण्यण्' । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासः' इत्यमरः । खड्गश्चन्द्रहासः । 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः । त्रिशिखं त्रिशूलम् । विशिखा बाणाः । 'पृषत्कबाणविशिखाः' इत्यमरः । तूण्यौ तूणीरौ । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । तूण्याम्' इत्यमरः । पाशा रज्ज्वपरपर्याया आकर्षणसाधनायुधविशेषाः । कुन्ताः प्रासाः प्रसिद्धाः । 'प्रासस्तु कुन्तः' इत्यमरः । एते रावणप्रयुक्ता आयुधविशेषा गरुद्भ्यां पक्षाभ्यामभिहताः पराहता यस्य स तथोक्तः सन् । 'गरुत्पक्षच्छदाः पत्रम्' इत्यमरः । दशमुखरथं रावणस्यन्दनमाशु क्षिप्रं ध्वस्ता विनाशिता रथ्या रथवोढारोऽश्वा यस्य तम् । 'रथ्यो वोढा रथस्य यः' इत्यमरः । 'तद्वहति रथयुगप्रासङ्गम्' इति यत्प्रत्ययः । विगतः सूतः सारथिर्यस्य विसूतम् । 'सूतः क्षत्ता च सारथिः' इत्यमरः । शिथिलतरोऽत्यन्तविश्लिष्टो वरूथो रथगुप्तिर्यस्य तम् । 'रथगुप्तिर्वरूथो ना' इत्यमरः । शीर्णे विच्छिन्ने चक्रे रथाङ्गे यस्य तम् । तथोक्तं चक्रे कृतवान् । सीताविमोचनाभिनिवेशतया यावच्छक्ति बीभत्सं चकारेत्यर्थः । मालिनीवृत्तम् ॥

ततः किं तत्राह—

राक्षसासिक्षतः क्षिप्रं पपात पततां वरः ।
मैथिलीपक्षपातेन पक्षपातमवाप्य सः ॥ ३२ ॥

राक्षसेति । स पततां वरोऽण्डजमण्डलेश्वरो जटायुर्मैथिल्यां पक्षपातेनासक्तिविशेषेण हेतुना । राक्षसासिक्षतो रावणचन्द्रहासविदलितः सन् । पक्षपातं गरुद्भङ्गमवाप्य क्षिप्रं पपात । पक्षपातततपराणां पक्षपातप्राप्तिर्युक्तैवेति भावः । असिनिर्भिन्नपक्षो भुवि न्यपतदित्यर्थः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । तथा रामायणम्—'स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा । निपपात हतो गृध्रो धरण्यामल्पजीवितः ॥' इति ॥

---

१. 'बाणासि' इति पाठः. २. 'अवाप' इति पाठः.

**तत्क्षणमन्यरथाधिरूढेन रावणेन भूयोऽपि नीयमाना जानकी शृङ्गसंगतप्लवंगपञ्चके पञ्चचूड इव क्ष्माधरकुमारे कस्मिंश्चित्सुग्रीवसात्कृतदशग्रीवप्रतापानलसदृशं वालिविनाशपिशुनं महोल्कापातप्रतिमं रामसाहाय्यकप्रोत्साहनाय पुत्रमभिपतत्पतङ्गबिम्बशङ्कावहं कनकपिशङ्गकौशेयमयोत्तरीयान्तरितमाभरणजालमपातयत् ।**

तत्क्षणमिति । तत्क्षणं तस्मिन्नेव क्षणे । जटायुनिपातानन्तरक्षण इत्यर्थः । अन्यरथाधिरूढेन रथान्तराधिष्ठितेन । पूर्वरथस्य जटायुषा विध्वस्तत्वादिति भावः । रावणेन भूयः पुनरपि नीयमानापह्रियमाणा जानकी शृङ्गसंगतं शिखरोपविष्टं प्लवंगानां सुग्रीवादिकपीनां पञ्चकं यस्य तस्मिंस्तथोक्ते । 'कपिप्लवंगप्लवगशाखामृगवलीमुखाः' इत्यमरः । अतएव पञ्च चूडाः शिखा यस्य तस्मिन् । 'शिखा चूडा केशपाशः' इत्यमरः । क्ष्माधरकुमारे राजकुमार इव स्थित इत्युत्प्रेक्षा । राजकुमारस्य पञ्चचूडत्वासंभवाद्यद्युपनयनकालीनत्वविवक्षा तदोपमैवेति विवेकः । कस्मिंश्चित्क्ष्माधरे पर्वते । ऋष्यमूक इत्यर्थः । सुग्रीवसात्कृतो ब्रह्मणा सुग्रीवाधीनः कृतः । 'देये त्रा च' इत्यत्र चकारात्सातिप्रत्ययः । तथाभूतो यो दशग्रीवप्रतापानलो रावणप्रतापाग्निस्तत्सदृशं तत्तुल्यम् । अत्र रावणप्रतापानलस्य सुग्रीवसात्कृतत्वेन स्वतःसिद्धत्वसंदेहादुपमोत्प्रेक्षयोः संदेहः संकरः । वालिविनाशस्य पिशुनः सूचको यो महोल्कापातस्तत्प्रतिमं तत्सदृशमित्यादि पूर्ववत्संदेहात्संकरः । उत्तरत्र एतत्प्रत्यक्षीकरणतत्परसुग्रीवप्रत्यायितेन श्रीरामेण तथा करिष्यमाणत्वादिति भावः । 'कर्णेजपः सूचकः स्यात्पिशुनः' इत्यमरः । रामस्य यत्साहाय्यकं सहायकर्म । 'योपधाद्गुरूपोत्तमाद्वुञ्' । तत्र प्रोत्साहनाय प्रेरणार्थं पुत्रं सुग्रीवं प्रत्यभिपततोऽभ्यागच्छतः पतङ्गस्य सूर्यस्य यद्बिम्बं मण्डलम् । 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । तच्छङ्कावहं तत्संदेहजनकं तद्भ्रान्तिजनकं वा । अतस्तावेवालंकारौ । तथा पतङ्गबिम्बस्य पतनासंभवात् अभूतोपमोत्प्रेक्षा वा मतभेदादित्युक्तं तदेतदुज्जीवितमुक्तालंकारद्वयमिति संकरः । कनकेन कनकवद्वा पिशङ्गं कपिशं यत्कौशेयम् । 'कौशेयं कृमिकोशोत्थम्' इत्यमरः । तन्मयं तद्रूपं यदुत्तरीयं संव्यानं तेनान्तरितं निबद्धम् । 'संव्यानमुत्तरीयं च' इत्यमरः । आभरणजालं हारनूपुराद्याभरणकलापमपातयत् । रावणेन नीयमानां मामिमे वानराः श्रीरामाय कथयेयुरिति मत्वा पातयामासेत्यर्थः ॥

**तत्पतनमपि स्वतेजःपतनमिव नालक्षयंल्लङ्कालंकारभूतामशोकवनिकां मैथिलीमनयंदनयाभिज्ञो दशग्रीवः ।**

तदिति । तत्पतनमपि तस्याभरणजालस्य पतनमपि स्वतेजःपतनमिव निजप्रतापनिपातमिव नालक्षयन्न पर्यालोचयन् । 'न कलयन्' इति पाठेऽप्ययमेवार्थः ।

---

१. 'ऋष्यमूकशृङ्ग' इति पाठः. २. 'पञ्चचूडाधर इव' इति पाठः. ३ 'क्ष्माधरे' इति पाठः. ४. 'कपिश' इति पाठः. ५. 'भारम्' इति पाठः. ६. 'न पश्यन्' इति पाठः. ७. 'अनयत' इति पाठः.

कामान्धत्वादिति भावः । नञर्थस्य नशब्दस्य 'सुप्सुपा' इति समासः । नयाभिज्ञो नीतिनिपुणः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । स न भवतीत्यनयाभिज्ञः । दुर्विनीत इत्यर्थः । 'अनयज्ञः' इति पाठे नयं जानातीति नयज्ञः स न भवतीत्यनयज्ञः । अत्र 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । न तु 'इगुपध–' इत्यादिना कप्रत्ययः । अतएवाह भगवान्कात्यायनः—'अकारादनुपसर्गात्कर्मोपपदो भवति' इति 'प्रतिषेधे च' इति वार्तिकव्याख्याने भाष्यकारेणार्थज्ञशब्दमुदाहृत्याप्यर्थस्य समर्थनात्ततो नञ्समासः । अनयज्ञः । नीतिशास्त्राचारशून्य इत्यर्थः । दशग्रीवो रावणो मैथिलीं सीतां लङ्कायाः अलंकारभूतां लङ्कालंकारभूतामलंकारोपमिताम् । तत्प्रायामित्यर्थः । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः । अशोकवनिकां निजविहारोचितोद्यानवनिकामनयत् । तत्र निक्षिप्तवानित्यर्थः । दुहादित्वान्नयतेर्द्विकर्मकत्वम् । अत्र रामायणम्—'ह्रियमाणा तु वैदेही कंचिन्नाथमपश्यती । ददर्श गिरिशृङ्गस्थान्पञ्चवानरयूथपान् ॥ तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् । उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ मुमोच यदि रामाय शंसेयुरिति भामिनी । वस्त्रमुत्सृज्य तन्मध्ये विनिक्षिप्तं सुभूषणम् । संभ्रान्तस्तु दशग्रीवस्तत्कर्म च न बुद्धवान् ॥' इत्यादि ॥

**अशोकवनिका लेभे राक्षसीपरिवेष्टिताम् ।**
**सीतां मारुतिवालाग्निस्तम्भनार्हामिवौषधिम् ॥ ३३ ॥**

**अशोकेति ।** अशोकवनिका कर्त्री राक्षसीभिर्निगूढत्वेन संगोपनार्थं रावणनियुक्तराक्षसस्त्रीभिः परिवेष्टितां परिवृतां सीताम् । मारुतस्यापत्यं पुमान्मारुतिर्हनूमान् । 'अत इञ्' इतीञ् । तस्य वाले लाङ्गूले योऽग्निः सुन्दरकाण्डे वक्ष्यमाणरूपस्तस्य स्तम्भने निरोधनेऽर्हां योग्याम् । शक्तामित्यर्थः । ओषधिं लताविशेषमिव । लेभे प्रापेवेत्युत्प्रेक्षा । सीतान्वेषणसमये लङ्कां प्रविष्टो हनूमान्सीतामालोक्य निजागमनज्ञापनार्थमशोकवनिकां भङ्क्त्वा पितृनियुक्तेनेन्द्रजिता निबध्यानीतो वाले वस्त्रैः संवेष्ट्याग्निना प्रज्वालितो वैदेहीनिवासतयैकामशोकवनिकामन्तरेण कृत्स्नां लङ्कां ददाहेति सुन्दरकाण्डे वक्ष्यति ॥

अनन्तरवृत्तान्तमाह—

**काकुत्स्थोऽप्यथ रक्षसामधिपतेर्वाग्वागुरावेष्टिते**
**कृत्वा हाटकताटकेयहरिणे शार्दूलविक्रीडितम् ।**
**आगच्छन्ननुजेन तत्र गदितामाकर्ण्य वार्तां ततः**
**सीतासंगमलालसस्तदुटजं रामः प्रतस्थे द्रुतम् ॥ ३४ ॥**

**काकुत्स्थ इति ।** काकुत्स्थो रघुनायकोऽपि रक्षसामधिपते रावणस्य वाक्प्रेरणवचनं सैव वागुरा मृगबन्धिनी । रज्जुनिर्मितजालविशेष इति यावत् । तया आवेष्टिते आवृते । नियमित इत्यर्थः । 'वागुरा मृगबन्धिनी' इत्यमरः । हाटकस्य विकारो हाटकमयो यस्ताटकेयो मारीचस्तस्मिन्नेव हरिणे मृगे । शार्दूलविक्रीडितं शार्दूलो व्याघ्रः । 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । तस्य विक्रीडितवद्विक्रीडितं

कृत्वा । शार्दूलवृत्तं निहत्येत्यर्थः । अथानन्तरमागच्छन् तत्रागमनसमयेऽनुजेन लक्ष्मणेन गदितामुक्तां वार्ताम् । दीनाक्रन्दश्रवणविषण्णसीतानिष्ठुरवचनप्रेरितोऽहमागतोऽस्मीत्येवंरूपवृत्तान्तमित्यर्थः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । आकर्ण्य श्रुत्वा ततस्तदनन्तरं सीतायाः संगमे समागमे लालसोऽत्यन्ताभिलाषः सन् । विजने वने तद्विपत्तेरवश्यंभावित्वादिति भावः । तदुटजं तस्याः सीताया उटजं पर्णशालां प्रति । तद् इति वा च्छेदः । रामो द्रुतं शीघ्रं प्रतस्थे चचाल । अत्र भिन्नवाक्यस्थत्वात्काकुत्स्थरामशब्दयोर्न पौनरुक्त्यम् । यद्वा काकुत्स्थः ककुत्स्थवंशोद्भव इति विशेषणत्वेन वा योजना । अत्र वाक्ताटकेययोर्वागुराहरिणरूपणेन काकुत्स्थे मृगयुत्वप्रतीतेरेकदेशवर्तिरूपकम् । तच्च शार्दूलविक्रीडितमित्यत्र तत्सदृशं विक्रीडितमिति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धरूपनिदर्शनया सापेक्षितत्वात्संकीर्यते । शार्दूलविक्रीडितमित्यत्रास्यापि वृत्तस्य शार्दूलविक्रीडितत्वात्कवेश्चातुर्यमनुसंधेयम् । 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥

**अयं कथं स्यादिति बाष्पगर्भमालोक्यमानो वनदेवताभिः ।**
**विलोकयन्केवलपर्णशालां विनष्टचेता[1] विललाप रामः ॥ ३५ ॥**

**अयमिति** । अयं श्रीरामः कथं कथंभूतः स्याद्भवेत् । प्रियतमारहितपर्णशालां दृष्ट्वेति शेषः । इति मत्वेत्यर्थः । बाष्पाण्यश्रूणि गर्भे यस्मिन्कर्मणि तद्यथा भवति तथा वनदेवताभिरालोक्यमानो दृश्यमानः सन् । तासामपि शोचनीय इति भावः । रामः केवलां सीताराहित्येन शून्यां पर्णशालामुटजं विलोकयन् । अतएव विनष्टचेता भग्नोत्साहः सन् । विललाप परिदेवयामास । 'विलापः परिदेवनम्' इत्यमरः । 'महात्मगुरुदेवानामश्रुपातः क्षितौ यदि । देशभ्रंशो महद्दुःखं मरणं च भवेद्ध्रुवम् ॥' इति क्षितौ देवताश्रुपातनिषेधदर्शनाच्छ्रीरामस्य क्षिप्रमेव महद्दुःखप्राप्तिसूचनार्थं बाष्पगर्भमित्युक्तम् । वृत्तमुपजातिः ॥

विलापप्रकारमेवाह पञ्चभिः—

**हा कष्टमत्र नहि सा किमिदं प्रवृत्त-**
**मालोकयामि चटुलामिह पादमुद्राम् ।**
**मां वीक्ष्य नूनमगृहीतमृगं मुहूर्त-**
**मन्तर्हिता तरुषु रोषवतीव सीता ॥ ३६ ॥**

**हा कष्टमिति** । हेति खेदे । कष्टं कृच्छ्रम् । प्राप्तमिति शेषः । कुतः । अत्रास्यां पर्णशालायां सा सीता नहि नास्ति खलु । 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति भाष्यकारवचनाद्भवतीति लटः पूर्वाचार्याणां संज्ञा । इदमेतत्सीताभावरूपं कार्यं किं प्रवृत्तम् । केन कारणेन संजातमित्यर्थः । तथेहास्मिन्प्रदेशे चटुलां पादमुद्राम् । विकलितान्पादविन्यासानित्यर्थः । आलोकयामि पश्यामि । किमेतदित्यर्थः । इत्येवमुक्त्वा स्वयं कथंचिदन्यथोत्प्रेक्षते—मामिति । अगृहीतमृगमनाहृतहिरण्मयहरिणं

१. 'विलीनचेताः' इति पाठः.

मां वीक्ष्य सीता रोषवती कुपितेव । वस्तुतस्तु न तथा । परमप्रेमास्पदे मयि रोषाभावादिति भावः । तरुषु वृक्षेषु मुहूर्तं क्षणमात्रं घटिकाद्वितयं वा । 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति विश्वः । अन्तर्हितान्तर्धानं गता । नूनमित्युत्प्रेक्षा । लोके हि कान्ताः कान्ते स्वाभिमतार्थासंग्रहीतरि सति रोषविडम्बनया कुत्रचिन्निगूढतया कंचित्कालं रमयन्ति तद्वदित्यर्थः । वसन्ततिलकावृत्तम् ॥

एवं सामान्याकारेण विलप्य संप्रति सीतामामन्त्र्य विलपति—

त्वदभिलषितपूर्त्या[1] वञ्चितः पञ्चवट्या-
मचरमचरमोऽहं मोहभाजां प्रजानाम् ।
तदिह सरलबुद्धे नैष रोषस्य कालः
सुमुखि मम मुखं किं सोढसीतावियोगम् ॥ ३७ ॥

**त्वदिति** । हे सरलबुद्धे ऋजुबुद्धे सुमुखि सुन्दरानने जानकीति संबोधनद्वयेनैवं विप्रलम्भस्त्वया कर्तुं नोचित इति सूच्यते । त्वदभिलषितपूर्त्या तवाभिलषितमरण्येऽपि सहसंचाररूपो मनोरथः । चित्रमृगाहरणरूपो मनोरथो वा । तस्य पूर्त्या पूरणेन हेतुना वञ्चितो विप्रलब्धः प्रतारितः व्यामोहित इति यावत् । अहं मोहभाजाम् । स्त्रैणानामित्यर्थः । प्रजानां जनानाम् । 'प्रजा स्यात्संततौ जने' इत्यमरः । चरमोऽन्तिमो न भवतीत्यचरम आद्यः । अग्रेसरः सन्नित्यर्थः । पञ्चवट्यामचरं संचरितवानस्मि । एतावत्पर्यन्तं त्वत्साहचर्यात्त्वन्मनोरथपरिपूरणतत्परतया व्यवहृतवानस्मीत्यर्थः । तत्तस्मात्कारणादिह महारण्ये रोषस्यैव कालो न । रोषं कर्तुमयं समयो न भवतीत्यर्थः । सत्यपि रोषहेतावीदृग्वनवाससंकटे मनःसमाधायानुकूल्येनैव वर्तितव्यत्वादिति भावः । अस्तु वायं रोषकालः । मम विरहासहिष्णुत्वाद्वा त्वयैवं कर्तुमयुक्तमित्याह—हे सुमुखि, मम मुखं च यत्त्वत्सहवासेनैव सोल्लासमिति भावः । सोढः क्षान्तः सीतायास्तव वियोगो विरहो येन तत्तथोक्तं किं सीताविरहसहिष्णु भवति किम् । न भवत्येवेत्यर्थः । अतः सर्वथा रोषं परित्यज्य सन्निधेयमिति भावः । अत्र सीतेत्यन्यापदेशग्रहणमखण्डितप्रेमास्पदत्वद्योतनार्थम् । मालिनीवृत्तम् ॥

तथाप्यपूर्वमृगाहरणे यदि तवाभिलाषस्तदानेन तुच्छेन मायामृगेण किम् । इतोऽप्यत्यन्तं श्लाघ्यमानेष्यामीत्याह—

यद्यस्ति कौतुकमपूर्वमृगे मृगाक्षि
चान्द्रं हरामि हरिणं मम सन्निधेहि ।
यावन्न मुञ्चसि मया हृतमेणमेनं
तावद्दधातु तव वक्त्रतुलां मृगाङ्कः ॥ ३८ ॥

**यदीति** । हे मृगाक्षि कुरङ्गनयने जानकि, अपूर्वमृगेऽसाधारणमृगे कौतुकं कुतूहलम् । अभिलाष इति यावत् । 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः । अस्ति यदि वर्तते चेत् । तवेति शेषः । तर्हि चन्द्रस्यायं चान्द्रः । चन्द्रनिष्ठ

---

1. 'पूर्त्यै' इति पाठः.

इत्यर्थः। 'तस्येदम्' इत्यण्। तं हरिणं हराम्यानयामि। यद्वा हरिष्यामीत्यर्थः। वर्तमानसामीप्ये वर्तमानप्रत्ययः। अतो मम सन्निधेहि सन्निहिता भव। मत्समीपं प्रत्यागच्छेत्यर्थः। अतो मया हृतमानीतमेनं चान्द्रमेणं हरिणं यावद्यावत्पर्यन्तं न मुञ्चसि न त्यजसि। कौतुकादिति भावः। तावन्मृगोऽङ्कश्चिह्नं यस्य मृगाङ्कश्चन्द्रस्तव वक्त्रेण निष्कलङ्केन त्वदीयवदनेन तुलां सादृश्यं दधातु धारयतु। संभावनायां लोट्। तदनन्तरमिदानीं वा वक्त्रसादृश्यधारणकथैव नास्तीत्यर्थः। अत्र तुलां दधात्विति संभावितार्थोपमानया चोपमानादुपमेयस्याधिक्यप्रतिपादनरूपो व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः। लोकोत्तरलावण्यसंपन्नभवन्मुखावलोकनाभावे मम कथं निर्वाह इति फलितार्थः। वक्त्रतुलामित्यत्र 'तुल्यार्थैरतुलोपमाभ्याम्' इत्यत्रासादृश्यपर्यायस्यैव तुलाशब्दस्य प्रतिषेधादत्र सादृश्यवाचित्वात्तद्योगेऽपि तृतीयासमासः। वसन्ततिलकावृत्तम्॥

इत्थं विलापेऽप्यसन्निहितायास्तस्या मृतिं निश्चिनोति—

**सप्राणा चेज्जनकतनया किं न तिष्ठेत मह्यं**
**हिंस्रैः सत्त्वैर्न खलु निहता रक्तसिक्ता न पृथ्वी।**
**गोदावर्या पुलिनविहृतिं रामशून्या न कुर्या-**
**द्युक्तं नक्तंचरकवलनात्संस्थिता सर्वथा सा॥ ३९॥**

**सप्राणेति**। जनकस्य तनया जानकी। विशिष्टपितृजन्यत्वात्परमसाध्वीत्यर्थः। सप्राणा चेत्सजीविता यदि। मह्यम्। अत्यन्तविरहासहिष्णव इति भावः। न तिष्ठेत किमात्मानं प्रकाशयन्ती न वर्तेत किम्। वर्तेतैवेत्यर्थः। अतो न प्राणसहितेति। तिष्ठतेर्लिङि 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम्। तर्हि व्याघ्रादिभिर्भक्षिता किम्। नेत्याह—हिंस्रैः सत्त्वैर्व्याघ्रादिघातुकजन्तुभिः। 'शरारुर्घातुको हिंस्रः' इत्यमरः। न निहता खलु न हिंसिता खलु। कुतः। पृथ्वी भू रक्तसिक्ता रुधिरक्लिन्ना न भवतीत्यर्थः। तथा चेद्रक्तसिक्ता भवेदेवेति शेषः। तर्हि गोदावरीतीरे विहर्तुं गतवती किम्। तथाभूतापि न भवतीत्याह—गोदावर्याम्। लक्षणया गोदावरीतीर इत्यर्थः। 'गोदावर्याः' इति षष्ठ्यन्तपाठे तस्याः पुलिनेषु सैकतेषु विहृतिं विहारम्। 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः। रामेण प्रियतमेन मया शून्या विरहिता सती न कुर्यान्न विदध्यात्। युक्तम्। प्रियतमविरहितविहारस्य पतिव्रतानामधर्मत्वादिति भावः। किंतु सा जानकी सर्वथा सर्वप्रकारेण। 'प्रकारवचने थाल्'। नक्तंचरकवलनाद्राक्षसकर्तृकभक्षणाद्धेतोः संस्थिता नष्टा। युक्तम्। एतद्विचारणं संगतमित्यर्थः। 'संस्था स्थितौ व्यवस्थायां नाशे' इति विश्वः। अत्रैवं बहुधा संदिह्य निश्चयपर्यवसानकथनान्निश्चयान्तःसंदेहालंकारः। मन्दाक्रान्ता॥

**लोकान्तरप्रणयिनं श्वशुरं प्रणन्तु-**
**माशप्तकालमतिलङ्घ्य यदि प्रयासि।**

१. 'किल' इति पाठः. २. 'भूमिः' इति पाठः. ३. 'गोदावर्याः' इति पाठः.

विज्ञाप्य मामपि समाह्वय साध्वि तस्मै
सौमित्रिरेव भरते निदधातु राज्यम् ॥ ४० ॥

**लोकान्तरेति** । हे जानकि, लोकान्तरप्रणयिनं स्वर्गस्थं श्वशुरं पत्युः पितरं दशरथं प्रणन्तुं नमस्कर्तुम् । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । आज्ञप्तश्चतुर्दशवत्सरात्मकतया नियुक्तो यः कालस्तमतिलङ्घ्योल्लङ्घ्य । तावन्तं कालमयापयित्वैवेत्यर्थः । तदानीं साग्रैव वर्षस्यावशिष्टत्वादिति भावः । 'अविलङ्घ्य' इति पाठे स्पष्टार्थः । प्रयासि यदि गच्छसि चेत् । यद्यपि परमपतिव्रतायास्तव मां पतिमुत्सृज्य पुरस्ताद्गमनमनुचितम्, तथापि श्वशुरप्रणामौत्सुक्येन गच्छसि चेदित्यर्थः । तर्हि हे साध्वि पतिव्रते । अतो मद्विरहं न सहिष्यसीति भावः । 'सती साध्वी पतिव्रता' इत्यमरः । तस्मै श्वशुराय विज्ञाप्य प्रियवियुक्ताहं स्थातुं न शक्नोमीति निवेद्य मामपि समाह्वयाकारय । प्रवेशयेत्यर्थः । 'हूतिराकारणाह्वानम्' इत्यमरः । त्वद्विनाशादात्मनोऽपि विनाशो निश्चित इति भावः । तर्हि राज्यस्य का गतिरित्याह—सौमित्रिर्लक्ष्मण एव भरते राज्यं निदधातु निक्षिपतु । स्वर्लोकयात्रातत्परेण श्रीरामेणाहं कर्तव्यतायां नियुक्त इति भरतं मदाज्ञापरिपालनतत्परं साम्राज्येऽभिषेक्ष्यत्विति भावः । वसन्ततिलकावृत्तम् ॥

कवेर्वाक्यम्—

इत्थं विलप्य दयितां विपिने विचिन्व-
न्रामो न तत्र धृतिमान्न च लक्ष्मणोऽपि ।
तादृग्विधामपि कथां कथयन्स्ववाचा
वल्मीकजन्ममुनिरेव कठोरचेताः ॥ ४१ ॥

**इत्थमिति** । इत्थमनेन प्रकारेण विलप्य परिदेवनं कृत्वा रामस्तत्र तस्मिन्विपिनेऽरण्ये दयितां प्रेयसीं सीतां विचिन्वन्मृगयन्धृतिमान्धैर्यवान्नाभूत् । किंतु सीताविरहवेदनया विषण्णहृदयोऽभूदित्यर्थः । तथा लक्ष्मणश्च धृतिमान्न च । नाभूदेवेत्यर्थः । तद्दुःखस्यैतद्दुःखत्वादिति भावः । किंतु तादृशी विधा प्रकारो यस्यास्ताम् । इत्थमिति वक्तुं श्रोतुं वाशक्यामित्यर्थः । तथाभूतामपि कथां श्रीरामविलापप्रकारवाक्यप्रबन्धं स्ववाचा निजकण्ठोक्त्या कथयन्पुनःपुनर्वर्णयन्कठोरचेताः कठिनहृदयः । निर्दय इति यावत् । वल्मीकाज्जन्म यस्य स तथोक्तः । स चासौ मुनिश्च स एव वाल्मीकिरेव धृतिमानभूत् । सकललोकानन्दकरसमस्तसद्गुणाभिरामस्य तत्रभवतः श्रीरामस्य तादृग्विषादवैक्लव्याभिव्यञ्जकविलापकथाकथनादनिर्विण्णचित्ततया स एवातिधैर्यसंपन्नोऽभूदित्यर्थः । पेलवचित्तानामस्माकं कथं धृतिमत्त्वमिति भावः । वृत्तं पूर्ववत् ॥

**ततः प्रारभमाणप्रयाणान्प्राणानवष्टभ्य जटायुस्ततो इतः क्रियमाणसीतान्वेषणं सलक्ष्मणं राममालक्षयन्नवोचत ॥**

१. 'दशाम्' इति पाठः. २. 'तत्र' इति पाठः. ३. 'तत इतः' इति क्वचिन्नास्ति.

तत इति । ततस्तदनन्तरं प्रारभमाणमुपक्रम्यमाणं प्रयाणं परलोकयात्रा यैस्तान् उत्क्रमणशीलानित्यर्थः । प्राणाञ्जटायुरवष्टभ्य संस्तभ्य । निरुध्येत्यर्थः । श्रीरामाय वार्ताकथनार्थमिति भावः । तत इतः प्रदेशेषु क्रियमाणसीतान्वेषणम् । सीतामन्विष्यन्तमित्यर्थः । सलक्ष्मणं सौमित्रिसहितं राममालक्षयन्पश्यन्नेवमवोचतोक्तवान् । ब्रूञो वचेर्वा लुङि 'वच उम्' इत्युमागमे गुणः ॥

किमित्यवोचतेत्यत आह—

**आयुष्मन्, मां खड्गविक्षतपक्षतिं क्षितितले निक्षिप्य क्षिप्रमपजहार मैथिलीं रावण इति ॥**

**आयुष्मन्निति** । हे आयुष्मन् । प्रशंसायां मतुप् । सकललोकहिताचरणतत्परतया सफलजीवनेत्यर्थः । खड्गविक्षतपक्षतिं चन्द्रहासविदलितपक्षमूलम् । 'स्त्री-पक्षतिः पक्षमूलम्' इत्यमरः । मां क्षितितले निक्षिप्य । परिश्रान्तं मां पक्षविच्छेदपूर्वकं भूमौ पातयित्वेत्यर्थः । रावणः क्षिप्रं द्रुतं मैथिलीं जानकीमपजहारापहृतवान् । इत्यवोचतेति पूर्वेण संबन्धः । तथाच रामायणम्—'परिश्रान्तस्य मे पक्षौ छित्त्वा खड्गेन रावणः । सीतामादाय वैदेहीमुत्पपात विहायसम् ॥' इति ॥

ततः किं जातं तत्राह—

**स्वयमपि शरभङ्गस्वीकृतां भङ्गहीनां**
**सपदि गतिमवाप्तः संहृतायुर्जटायुः ।**
**नयनसलिलमिश्रं रामहस्तेन दत्तं**
**दशरथदुरवापं प्राप नैवापमम्भः ॥ ४२ ॥**

**स्वयमिति** । जटायुः सपदि सद्य एव । श्रीरामस्य सीतापहरणवार्ताकथनसमय एवेत्यर्थः । संहृतायुस्त्यक्तजीवितः सन् । स्वयमपि शरभङ्गेण मुनिना स्वीकृतां प्राप्तां भङ्गहीनामक्षताम् । शाश्वतीमित्यर्थः । गतिं वैकुण्ठं स्थानमवाप्तः प्राप्तः सन् । निजभाग्योदयेन परब्रह्मरूपस्य श्रीरामस्य दिव्यमङ्गलविग्रहसाक्षात्काराच्छरभङ्गवन्मुक्तः सन्नित्यर्थः । नयनसलिलमिश्रं बाष्पोदकमिश्रितम् । पितृसखित्वेन तस्य पितृवद्रोदनार्हत्वादिति भावः । रामहस्तेन दत्तं दशरथस्य दुरवापं दुर्लभम् । असान्निध्यादिति भावः । नैवापं पितृतर्पणसंबन्धि । 'पितृदानं निवापः स्यात्' इत्यमरः । अम्भः प्राप । पितृनिर्विशेषं तस्यौर्ध्वदैहिकं रामश्चकारेत्यर्थः । उक्तंच रामायणे—'ततो गोदावरीं गत्वा नदीं नरवरात्मजौ । उदकं चक्रतुस्तस्मै गृध्रराजाय तावुभौ ॥' इति । ननु तिरश्चां कर्मानधिकारादग्निसंस्कारानर्हत्वाच्चोत्तमलोकाभावेन कथमस्य मुक्तियुक्तत्वमिति चेन्न । 'मया त्वं समनुज्ञातः शाश्वतीं मुक्तिमाप्नुहि' इति श्रीरामायणोक्तत्वादस्त्येवास्य मुक्तिः । तदुक्तं नृसिंहपुराणे—'मत्कृते मरणं यस्मात्त्वया प्राप्तं द्विजोत्तम । तस्मान्मम प्रसादेन विष्णुलोकमवाप्स्यसि ॥' इति । 'सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः' इति

---

१. 'क्षिप्रतरम्' इति पाठः।

मुक्तमध्यपरिगणनाज्जटायुषो मुक्तिप्राप्तिः सिद्धेत्यवगम्यत इत्युपरम्यते । मालिनीवृत्तम् ॥

**अथ दक्षिणारण्यानीं प्रति प्रस्थिते काकुत्स्थे राक्षसी काचिदयोमुखीनाम सौमित्रिमभिभूय तदीयेन शस्त्रेण शूर्पणखासिद्धिमभजत ॥**

**अथेति** । अथ जटायुमुक्त्यनन्तरम् । काकुत्स्थे श्रीरामे । महदरण्यमरण्यानी । 'महारण्यमरण्यानी' इत्यमरः । 'इन्द्रवरुण—' इत्यादिना ङीप् । आनुगागमश्च । दक्षिणा दक्षिणदिगवस्थिता सा च सारण्यानी च । तां प्रति प्रस्थिते चलिते सति । जटायुषा तद्दिगवस्थितेन रावणेन सीतापहरणस्योक्तत्वादिति भावः । अयोमुखीनामायोमुखीति नाम्ना प्रसिद्धा काचिद्राक्षसी सौमित्रिं लक्ष्मणमभिभूय 'एहि रंस्यावहे' इत्युक्त्वा 'समालम्बितलक्ष्मणाम्' इत्याद्युक्तप्रकारेणाक्षिप्य तदीयेन सौमित्रिसंबन्धिना शस्त्रेण खड्गेन शूर्पणखाया रावणभगिन्या या सिद्धिर्मुखभङ्गरूपनिष्पत्तिस्तत्सदृशीं सिद्धिमिति निदर्शना । अलभत प्राप । शूर्पणखेव लक्ष्मणखड्गनिकृत्तकर्णनासिका बभूवेत्यर्थः । उपलक्षणमेतत् । विकृत्तस्तना च बभूव । तथा चोक्तं श्रीरामायणे—'एवमुक्तस्तु कुपितः खड्गमुद्यम्य लक्ष्मणः । कर्णनासे स्तनौ तस्या विचकर्तारिसूदनः ॥' इति ॥

**ततः क्रौञ्चारण्यसरण्या प्रयातावेतौ महर्षेः स्थूलशिरसः शापात्कोणपतां प्रपन्नः पन्नगपतिभोगभीषणाभ्यां भुजाभ्यां बबन्ध यथार्थनामा कबन्धः ॥**

**तत इति** । ततोऽयोमुखीकर्णनासिकास्तनच्छेदानन्तरम् । क्रौञ्चारण्यस्य सरण्या मार्गेण । 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः । सरणिः' इत्यमरः । अत्र तृतीयोपपत्तिर्व्याख्याता । प्रयातौ प्रस्थितावेतौ रामलक्ष्मणौ कर्म । स्थूलशिरसस्तन्नाम्नो महर्षेर्ऋषिश्रेष्ठस्य शापात्कोणपतां राक्षसत्वं प्रपन्नः प्राप्तो यथार्थनामान्वर्थाभिधानः कबन्धो राक्षसः पन्नगपतेः कुण्डलीश्वरस्य भोगः कायस्तद्वद्भीषणाभ्यां भयंकराभ्यां भुजाभ्यां बबन्ध । रुरोधेत्यर्थः । वस्तुतस्तु श्रीरामस्य साक्षाद्विष्णोः शेषाङ्कशायित्वाल्लक्ष्मणस्य शेषावतारत्वाच्च तयोर्नायं बन्धो न दुःखहेतुश्चेति ज्ञापयितुं पन्नगपतिभोगभीषणाभ्यामिति भुजविशेषणमुक्तमित्यनुसंधेयम् । कबन्ध इत्यत्र विरुद्धलक्षणया कस्य शिरसो बन्धोऽस्यास्तीति कबन्ध इति विग्रहः । अपमूर्धकलेवरं इत्यर्थः । 'कबन्धं सलिले प्रोक्तमपमूर्धकलेवरम्', 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इति विश्वामरौ । प्रकृतेऽपीन्द्रवज्राभिघाताद्वक्षोविभुग्नशिरस्कतया कबन्धत्वाद्यथार्थनामत्वमस्येति भावः । तथाच रामायणे लक्ष्मणं प्रति कबन्धवाक्यम्—'पुरा मम महाबाहो महाबलपराक्रम । रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥ ततः स्थूलशिरा नाम महर्षिः कुपितो मया । विचिन्वन्विविधं वन्यं रूपेणानेन धर्षितः ॥ तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना । एतदेव नृशंसं ते रूपमस्त्वतिगर्हितम् ॥ इन्द्रकोपादिदं रूपं प्राप्तमेव रणाजिरे ॥' इति ॥

---

१. 'प्रति' इति नास्ति क्वचित्. २. 'तदनु' इति पाठः.

तदनन्तरमनश्रुपात्रेषु राक्षसीनेत्रेषु सदोत्पादिततरवारिभ्यां रामलक्ष्मणयोस्तरवारिभ्यां कबन्धबाहुयुगलं कदलीलावमलूयत ॥

तदनन्तरमिति । तदनन्तरं निरोधानन्तरम् । अनश्रुपात्रेष्वबाष्पयोग्येषु । निजभर्तृमहिम्ना कदापि शोकाद्युपहत्यभावादनाघ्राताश्रुगन्धेष्वित्यर्थः । 'योग्यभाजनयोः पात्रम्' इत्यमरः । राक्षसीनेत्रेषु राक्षसाङ्गनानयनेषु । सदा सर्वदोत्पादिततराण्यतिशयेनोत्पादितानि । 'द्विवचनविभज्य–' इत्यादिना तरप्प्रत्ययः । तानि वारीणि बाष्पोदकानि याभ्यां तौ ताभ्याम् । राक्षसखण्डनेन शोकोत्पादकत्वान्निरन्तरराक्षसीनेत्रजलोत्पादकाभ्यामित्यर्थः । रामलक्ष्मणयोस्तरवारिभ्यां खड्गाभ्याम् । 'तरवारिर्मण्डलाग्रः खड्गकौक्षेयकौ समौ' इत्यमरः । कबन्धबाहुयुगलं कदलीमिव लूला कदलीलावमलूयताच्छिद्यत । कदलीकाण्डमिवानायासेनाखण्ड्यतेत्यर्थः । 'कदलीलाववत्' इत्यपपाठः । 'उपमाने कर्मणि च' इति णमुल्प्रत्ययः । 'कषादिषु यथाविध्यनुप्रयोगः' इति लूञोऽनुप्रयोगः । निर्बन्धकुपितौ श्रीरामलक्ष्मणौ निजासिभ्यां कबन्धस्य दक्षिणसव्यबाहू चिच्छिदतुरित्यर्थः । अत्र करणयोरपि तरवार्योः कर्तृत्वव्यपदेशस्तयोरखण्डितत्वद्योतनार्थम् । तथाच रामायणम्—'दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः । चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥' इति ॥

तदनु दनुकबन्धेनादरादर्थितौ तौ
गिरितटभुवि देहं देहतुस्तस्य भीमम् ।
अकथयदथ शापापायतुष्टः स रामं
तपनतनयमैत्र्या मैथिलीं प्राप्नुहीति ॥ ४३ ॥

तदन्विति । तदनु बाहुच्छेदानन्तरं दनुवंशोद्भवत्वाद्दनुः स चासौ कबन्धश्चेति विशेषणसमासः । यद्वा दनुरित्यस्य पूर्वनाम । तथा श्रीरामायणेऽरण्यकाण्डे—'एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम्' इति । 'दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः' इति शबरीं प्रति वाक्यं च । तथा 'दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः' इति किष्किन्धाकाण्डे चोक्तत्वात् । तथाच दनुनामो चासौ कबन्धश्च दनुकबन्ध इति शाकपार्थिवादित्वान्मध्यमपदलोपीसमासः । शाकपार्थिवादिराकृतिगणः । तेन दनुकबन्धेनादराद्गौरवादर्थितौ । 'मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना' इति याचितौ तौ रामलक्ष्मणौ गिरितटभुवि गिरिप्रदरसीम्नि । 'गिरिप्रदरमासाद्य पावकं विससर्जतुः' इति रामायणात् । भीमं भयंकरं तस्य कबन्धस्य देहं कलेवरं देहतुर्भस्मीचक्रतुः । 'दह भस्मीकरणे' इति धातोर्लिट् । 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ । अथ दहनानन्तरम् । शापापायेन मुनिप्रयुक्तशापान्तेन तुष्टस्तोषं गतः सन् । कबन्धो रामं प्रत्यकथयदवोचत् । किमिति । तपनतनयमैत्र्या सुग्रीवस्नेहेन मैथिलीं सीतां प्राप्नुहि लभस्वेति । उक्तंच श्रीरामायणे—'श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः' इत्यारभ्य 'स ते सहायो मित्रं च सीतायाः परिमार्गणे' इत्यन्तेन । मैत्र्येत्यत्र ब्राह्मणादित्वात् 'गुणवचन—' इत्यादिना ष्यञ्प्रत्ययः ।

---

१. 'सदोत्पादितवारिभ्यां तरवारिभ्यां रामलक्ष्मणयोः' इति पाठः. २. 'लावमिव' इति पाठः.

'षिद्गौरादिभ्यश्च' इति ङीष् । स च 'मातरि षिच्च' इति षित्त्वादेव सिद्धे मातामहशब्दस्य गौरादिपाठेनानित्यत्वज्ञापनाद्वैकल्पिकः । अतएवाह वामनः—'ष्यञः षित्करणादीकारो बहुलम्' इति । 'स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ्क्वचिच्च वुञ् । औचित्यमौचिती मैत्री मैत्र्यं वुञ्प्रागुदाहृतः ॥' इत्यमरः । मालिनीवृत्तम् ॥

**तस्मिन्नृष्यमूकमार्गमुपदिश्य स्वर्गं गते मतङ्गाश्रमवासिन्या तपस्विन्या[1] शबर्या कृतां सपर्यां परिगृह्य रामस्तदनुज्ञया[2] मनोज्ञविविधविहगकूजितं[3] मृगगणविहरण[4]मनोहरं गहनपदमवगाह्य व्याकोश[5]कुशेशयपरिचयकषायैर्वनदेवतालतादोलानुकूलैः कूलायतलीलापरवशवशावल्लभमदाम्बुचुम्बिभिः शम्बरारातिशरधिसदृशैस्तटरुहसह[6]कारशिखरविसरदासवासारसीकरशेखरैर्विविधलतालासिकालास्योपदेशदेशिकायमानैः कायमानसमानाभोगलतागृहकेलिलुब्धलुब्धकपुरंध्रीशिथिलधम्मिल्लमल्लिकागन्धमांसलैर्मल्लिकाक्षपक्षविक्षोभक्षोदीभूतपाथःपाथेयैस्तटवनपवनैरनुकम्प्यमानः पम्पामभजत् ॥ इति श्रीमद्विदर्भराजविरचिते चम्पूरामायणे श्रीमदरण्यकाण्डः समाप्तः ॥**

**तस्मिन्निति** । तस्मिन्कबन्धे ऋष्यमूकमार्गं सुग्रीवाधिष्ठितऋष्यमूकाख्यपर्वतवर्त्मोपदिश्य निवेद्य स्वर्गं गते सति मतङ्गस्य महर्षेराश्रमे वसति ताच्छील्येनेति मतङ्गाश्रमवासिन्या । ताच्छील्ये णिनिः । तपस्विन्या व्रतोपवासादितपोनिष्ठया । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । शबर्या शबरस्त्रिया मतङ्गशिष्यया कयाचिद्विरक्तरमण्या कृतां विहितां सपर्यामर्घ्यपाद्यादिरूपपूजाम् । 'पूजा नमस्यापचितिः सपर्याचार्हणाः समाः' इत्यमरः । रामः परिगृह्य स्वीकृत्य निरन्तरभक्तिपरतन्त्रत्वाच्छबर्यास्तद्विरचिताया अपि पूजाया महात्मनो भक्तवत्सलस्य श्रीरामस्य ग्राह्यत्वादिति भावः । ततस्तदनुज्ञया तस्याः शबर्या नियोगेन मनोज्ञानि मनोहराणि विविधान्यनेकप्रकाराणि विहगकूजितानि शुकसारिकादिपक्षिरुतानि यस्मिंस्तत्तथोक्तं मृगगणानां हरिणचमरदुर्वारमृगयूथानां विहरणेन स्वैरसंचारेण मनोहरं हृदयानन्दकरं गहनपदमरण्यस्थानमवगाह्य प्रविश्य । अथ व्याकोशकुशेशयपरिचयेन संफुल्लकमलपरिशीलनेन कषायैः सौरभ्यसंपन्नैः । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इति चामरः । 'रागद्रव्ये कषायोऽस्त्री निर्यासे सौरभे रसे' इति यादवः । वनदेवतानां या लतादोला लतारूपप्रेङ्खोलिकास्तासामनुकूलैरनुगुणैः स्वप्रयत्नं विनैव ततस्तच्चालनहेतुत्वादिति भावः । कूले पम्पारोधस्यायतलीलापरवशा अविच्छिन्नक्रीडापरतन्त्राः । तिर्यग्दन्तप्रहाररूपव्यापारतत्परा इत्यर्थः । ये वशानां करिणीनां वल्लभा मत्तमतङ्गजास्तेषां मदाम्बु दानोदकं चुम्बन्त्य-

---

१. 'तपस्विन्या' इति नास्ति क्वचित्. २. 'रामः परिगृह्य' इति पाठः. ३. 'मनोज्ञकूजितविहंगमृग' इति पाठः. ४. 'विहार' इति पाठः. ५. 'व्याकोच' इति पाठः. ६. 'तटरुहाकार' इति पाठः.

वबध्नन्तीति तथोक्तैः। मन्दगन्धसंबन्धबन्धुरैरित्यर्थः। 'वशा स्त्री करिणी वन्ध्या' इत्यमरः। शम्बरारातिशरधिसदृशानि पञ्चबाणतूणीरसरूपाणीत्युपमा। यानि तटरुहसहकारशिखराणि तीररुहातिसौरभरसालाग्रमञ्जर्यः। अत्र शिखरशब्देन तद्गतमञ्जर्यो लक्ष्यन्ते। 'शिखरं शैलवृक्षाग्रशिखापुलककोटिषु' इति विश्वः। तेभ्यो विसरन्स्रंसमानो य आसवासारो मकरन्दधारासंपातस्तस्य शीकरकणा एव शेखरा अवतंसा येषां तैस्तथोक्तैः। माकन्दमकरन्दविन्दुसंदोहसुन्दरैरित्यर्थः। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः', 'शीकरोऽम्बुकणाः स्मृताः' इति चामरः। विविधा नानाप्रकारा लता मल्लिकामालत्यादिस्तवकास्ता एव लासिका नर्तक्य इति रूपकम्। तासां लास्योपदेशे नाट्यक्रियासंशिक्षणे देशिका गुरव इवाचरन्तो देशिकायमानास्तैः। नाट्यविद्याचार्या इव तासां नर्तनप्रवर्तकैरित्यर्थः। आचारक्यजन्ताल्लटः शानजादेशः। अत्र विचित्रलताचलनेन मारुतानां देशिकायमानत्वोत्प्रेक्षणात्क्रियानिमित्ता जातिस्वरूपोत्प्रेक्षा। 'नर्तकीलासिके समे', 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने' इति चामरः। कायं मितं मानं प्रमाणं यस्य स कायमानोऽङ्गणादौ स्तम्भादिनिर्मितपुरुषप्रमाणोन्नतो मण्डपविशेषस्तत्समानस्तत्सदृश आभोगो विस्तारो येषां तेषु लतागृहेषु लतावितानमयनिकेतनेषु केलिलुब्धानां क्रीडागृध्नूनां लुब्धकपुरंध्रीणां पुलिन्दसुन्दरीणां ये शिथिलधम्मिल्ला विश्लथकचभारास्तेषु या मल्लिकास्तृणशूल्यकुसुमानि तासां गन्धेन सौरभ्येण मांसलैः परिपूर्णैः। 'कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः' इत्यमरः। 'मल्ली तु मृत्पात्रतृणशूल्ययोः' इति रत्नमालायाम्। मल्लिकाक्षा मलिनचञ्चुचरणा हंसविशेषाः। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाक्षाः' इत्यमरः। तेषां पक्षविक्षोभेन गरुदभिघातेन क्षोदीभूतं चूर्णीभूतम्। नीहाराकारेण शकलीकृतमित्यर्थः। तादृशं यत्पाथ उदकं तदेव पाथेयं केवलं येषां तैः। तत्सहकृतैरित्यर्थः। 'कबन्धमुदकं पाथः' इत्यमरः। 'क्षोदीभूतम्' इत्यत्राक्षोदः क्षोदः संपद्यमानः क्षोदीभूत इति विग्रहः। अभूततद्भावे च्विः। 'कुगतिप्रादयः' इति समासः। पाथेयमित्यत्र पथि साधु पाथेयम्। 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ्प्रत्ययः। एवं शैत्यमान्द्यसौरभ्यसंपन्नैस्तटवनपवनैस्तीरकान्तारमारुतैरनुकम्प्यमानो दोधूयमानः सन्। विरहिणां वेदनोद्दीपकत्वादिति भावः। पम्पां नाम पुष्करिणीमभजत। तत्तीरं प्रापेत्यर्थः॥

इति श्रीमत्परमयोगीन्द्रवृन्दमानसेन्दीवरसंदोहामन्दानन्दलाभाभिवन्दितरघुनन्दनचरणारविन्दमकरन्दास्वादनकन्दलितसारस्वतेनाखण्डतपःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्य वञ्चनान्वयसुधापारावारपारिजातस्य धन्वन्तर्यवतारान्तरस्यायुर्वेदप्रमुखनिखिलविद्यासारसर्वज्ञसार्वभौमस्य कोण्डोपण्डितवर्यस्य तनूजेन गङ्गाम्बिकागर्भरत्नाकरसुधाकरेण रामचन्द्रबुधेन्द्रेण विरचितायां चम्पूरामायणव्याख्यायां साहित्यमञ्जूषिकाख्यायामरण्यकाण्डः समाप्तः॥

रामचन्द्रार्यरचिता रामचन्द्रपदार्पिता।
अरण्यकाण्डव्याख्यासौ पूर्णा मञ्जूषिकाभिधा॥

---

# किष्किन्धाकाण्डम् ।

अथ किष्किन्धाकाण्डो व्याख्यायते—

स तां सतां बुद्धिमिव प्रसन्नां पम्पां वियोगज्वरजातकम्पः ।
विलोकयंल्लोकनिविष्टकीर्तिरार्तिं रघूणां प्रवरः प्रपेदे ॥ १ ॥

स तामिति । स विराधखरत्रिशिरोदूषणकबन्धादीनामयत्नसंहरणेन प्रसिद्धपराक्रमयुक्तः । अतएव लोकनिविष्टकीर्तिर्जगद्विख्यातयशःसंपन्नो रघूणां प्रवरो रघुनायकः सतां साधूनां बुद्धिं चित्तवृत्तिमिव प्रसन्नां निर्मलाम् । एकत्र स्वाभाव्यादन्यत्र रागाद्यनुपहतत्वाच्चेति भावः । तां चिकीर्षितरावणवधोपयोगिसुग्रीवाधिष्ठितामृष्यमूकसमीपवर्तिनीं पम्पां विलोकयन्पश्यन् । अतएवं वियोगेन सीताविरहशोकातिशयेन यो ज्वरः संतापः । इन्द्रियक्षोभ इति यावत् । तेन जात उत्पन्नः कम्पो गात्रवेपथुर्यस्य स तथोक्तः सन् । आर्तिं मदनपीडां प्रपेदे प्राप । तस्याः प्रसन्नत्वेऽपि विरहिणामुद्दीपकत्वात्परामयं व्यथामनुबभूवेत्यर्थः । 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः । अत्र बुद्धिमिवेत्येकं पदम् । 'इवेन सह नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति वक्तव्यात् । अतएव समासगा श्रौती पूर्णोपमा । वृत्तमुपजातिः । अत्रादौ 'स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् । रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥' इति श्रीरामायणकिष्किन्धाकाण्डाद्यपद्यादिमपदप्रयोगेण चातुर्यं दर्शितं कविनेत्यनुसंधेयम् ॥

ततस्तस्यास्तटवने नानानोकहनिवहपरिष्कृते निभृतेतरभ्रमणपरभृतव्रातचञ्चूमयविपञ्चीसमुदञ्चितपञ्चमाञ्चिता संततकुञ्चितपञ्चशरशरासनवञ्चितपथिकजनसंचारप्रपञ्चा प्रमदचञ्चलचञ्चरीककुलकञ्चुकितमाधवीमाधवीभूतिरुदजृम्भत ॥

तत इति । ततस्तदनन्तरं नानाविधानामनोकहानां चूतचाम्पेयादितरुविशेषाणां निवहेन निकुरुम्बेन परिष्कृते भूषिते । 'संपरिभ्यां करोतौ भूषणे' इति सुडागमः । तस्याः पम्पायास्तटवने परिसरवर्तिकानने निभृतेतरमनिभृतमतिचपलं भ्रमणमौत्सुक्यप्रयुक्तसंभ्रमो यस्य तथोक्तो यः परभृतव्रातः पिकनिकरः । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः । तस्य चञ्चूमयी त्रोटीरूपा । चञ्चूशब्देन कण्ठोऽपि लक्ष्यते । तत्रैव स्वराविर्भावात् । 'चञ्चूस्त्रोटिरुभे स्त्रियाम्' इत्यमरः । तद्रूप्ये मयट् । 'स्त्रियाः पुंवत्–' इत्यादिना पुंवद्भावः । तादृशी या विपञ्ची वीणा । 'विपञ्ची वल्लकी वीणा' इति वैजयन्ती । 'वीणा तु वल्लकी । विपञ्ची' इत्यमरश्च । तस्याः सकाशात्समुदञ्चिता समुत्पन्ना ये पञ्चमाख्याः स्वरविशेषाः । 'पिकः कूजति पञ्चमम्' इत्यभिधानात् । तैरञ्चिता मनोज्ञा । 'अञ्चेः पूजायाम्' इतीडागमः । तथा संततं निरन्तर-

१. 'परिभ्रमण' इति पाठः. २. 'शरासनशरासारवञ्चितसंचरपथिकप्रपञ्चा' इति पाठः.

माकुञ्चितं शरसंधानार्थमवनमितं पञ्चशरशरासनं मन्मथकार्मुकं तेन वञ्चितो निवारितः पथिकजनानां विरहिणां संचारप्रपञ्चो यातायातप्रचारो यस्यां सा। तथा प्रमदं मकरन्दलाभात्प्रमत्तं यच्चञ्चरीककुलं रोलम्बनिकुरम्बं तेन कञ्चुकिता कञ्चुकवत्कृताः। आवेष्टिता इत्यर्थः। 'तत्करोति—'इति ण्यन्तात्कर्मणि क्तः। ता माधव्योऽतिमुक्तलता यस्याः सा। 'इन्दिन्दिरश्चञ्चरीको रोलम्बो बम्भरश्च सः', 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' इति चामरः। यद्वा मधोर्वसन्तस्येयं माधवी। 'मधुर्वसन्ते चैत्रेऽथ' इति विश्वः। 'तस्येदम्' इत्यण्। 'टिड्ढाणञ्'इत्यादिना ङीप्। भूतिः संपदुदजृम्भतोज्जृम्भितवती। 'भूतिर्भस्मनि संपदि' इत्यमरः॥

यत्र कान्तैर्वियुक्तानां युक्तानामपि सुभ्रुवाम्।
दोलाकर्म वितन्वन्ति मनांसि च वपूंषि च॥ २॥

यत्रेति। यत्र यस्मिन्वसन्तसमये कान्तैः प्रियतमैर्वियुक्तानां कान्तैर्युक्तानामपि सुभ्रुवां सुन्दरीणां मनांसि हृदयानि च वपूंषि शरीराणि च दोलाकर्म दोलालीलां वितन्वन्ति कुर्वन्ति। विरहिणां मनांसि प्रियवियोगवेदनया दोलायमानानि भवन्ति। प्रियसंगतानां वपूंषि तु वसन्तोत्सवे प्रियैः साकं दोलाखेलनलाभात्तादृशखेलनजनितसुखमनुभवन्तीत्यर्थः। अतएव यथाक्रममन्वयात्क्रमापरनामा यथासंख्यालंकारः। तथा मनसां वपुषां वर्ण्यतया प्रकृतानामेव दोलाकर्मवितन्वनक्रियारूपधर्मसंबन्धेनौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगितेयं चोक्तालंकारेणाङ्गेन संकीर्यते॥

करतलैरपचायमथेक्षणैरपचयं च वनेषु जनेषु च।
सुमनसां मनसामपि यद्दिने विरचयन्ति विलोलविलोचनाः॥३॥

करतलैरिति। यद्दिने। यस्य वसन्तस्य दिनेष्वित्यर्थः। विलोलविलोचनाश्चञ्चलाक्ष्यः करतलैर्निजहस्तप्रदेशैर्वनेषूद्यानवनेषु। सुमनसां पुष्पाणाम्। 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः। अपचीयत इत्यपचायं लवनम्। उपसृष्टाद्धञ्[1]। अथेति वाक्यारम्भे। ईक्षणैर्दृष्टिभिर्जनेषु मनसाम्। अपचीयत इत्यपचयमपहारम्। आकर्षणमिति यावत्। 'अपहारस्त्वपचयः' इत्यमरः। विरचयन्ति वितन्वन्ति। अलंकारौ पूर्ववदुन्नेयौ। द्रुतविलम्बितवृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्॥

तस्मिन्नसमशरसमरसमये पम्पां समया पर्यटन्पर्याकुलहृदयो हृदयदयितां हृदि लक्षयंल्लक्ष्मणमिदमभाषत॥

तस्मिन्निति। तस्मिन्नसमशरसमरसमये पञ्चबाणरणकाले। वसन्तसमय इत्यर्थः। पम्पां समया पम्पायाः समीपे। 'समयानिकषाशब्दौ सामीप्येऽप्यव्यये मतौ' इति हलायुधः। 'अभितःपरितःसमयानिकषाहाप्रतियोगेष्वपि दृश्यते' इति द्वितीया। पर्यटन्संचरन्[2]। पर्याकुलहृदयो व्याकुलान्तःकरणः श्रीरामो हृदयदयितां

---

१. 'उपचार' इति पाठः. २. 'समन्तात्' इति पाठः.

सीतां हृदि लक्ष्यन्निरन्तरभावनया हृदये विलोकयन् । लक्ष्मणं प्रतीदमनेन प्रकारेणाभाषतावोचत् ॥

तत्प्रकारमेवाह—

आधौ सिद्धौषधिरिव हिता केलिकाले वयस्या
पत्नी त्रेतायजनसमये क्षत्रियाण्येव युद्धे ।
शिष्या देवद्विजपितृसमाराधने बन्धुरार्तौ
सीता सा मे शिशिरितमहाकानने का न जाता ॥ ४ ॥

आधाविति । अत्र यत्तदोर्नित्यसंबन्धादुत्तरवाक्ये तच्छब्दस्य विद्यमानत्वाद्यच्छब्दोऽध्याहार्यः । या सीता मे ममाधौ मानसव्यथायां सत्याम् । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । आधिग्रहणेन तज्जन्यशारीरामयो लक्ष्यते । सिद्धौषधिरिव संजीविन्याद्यौषधिविशेष इव । हिता पथ्या । आरोग्यकरीत्यर्थः । तादात्विकोपचाराचरणहितोपदेशादिनाधिं निरस्य तज्जनितव्याधेरपि निवर्तकत्वादिति भावः । तदुक्तं ज्ञानवासिष्ठे—'आधिजा व्याधयस्तत्र द्रव्यमन्त्रशुभकर्मैः । चिकित्सनादिशास्त्रोक्तैर्नश्यन्ति त्वं च वेत्सि तत् ॥' इति । केलिकाले क्रीडासमये वयस्या सखी । अनपायिनीत्यर्थः । 'आलिः सखी वयस्या च' इत्यमरः । तथा त्रेतायजनसमये त्रेताया आहवनीयाद्यग्नित्रयस्य यजनसमये हविरादिद्रव्यदानपूजाकाले । 'त्रेता त्वग्नित्रये युगे' इत्यमरः । त्रेताशब्दो व्याख्यातो बालकाण्डे 'त्रयस्त्रेताग्नितेजसः' इत्यत्र । पत्नी सहधर्मिणी । पत्युरनया यज्ञः संपद्यत इति पत्नीति विग्रहः । 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी' इत्यमरः । युद्धे क्षत्रियाण्येव क्षत्रियकुलोद्भवैव । क्षात्रयुक्तधर्मोपदेशतत्परैवेत्यर्थः । पलायनाद्युपदेशव्यवच्छेदकोऽयमेवकारः । 'अर्यक्षत्रियाभ्यां च' इति स्वार्थे ङीप् । आनुगागमश्च । तथा देवानामिष्टदेवानाम्, द्विजानां वसिष्ठादिब्राह्मणानाम्, पितॄणां दशरथकौसल्यादीनां च समाराधने पूजायां विषये शिष्या अन्तेवासिनी । भयभक्तिश्रद्धापूर्वकमुचितोपचारकरणतत्परेत्यर्थः । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । तथा आर्तावागन्तुकपीडायां सत्यां बन्धुः प्रियसुहृत् । हितोपायोपदेशादिना तन्निरसननिपुणेत्यर्थः । जातेति सर्वत्रानुषज्यते । सा सीता मे मम शिशिरितं स्वसाहचर्येण पूर्वं शिशिरीकृतं यन्महाकाननं महारण्यं तस्मिन्का न जाता कापि नाभूत् । आध्यादिषु पूर्वं तत्तदानुगुण्येन तथा तथा जाता, इदानीं तस्मिन्महारण्ये न कापि जातेति महत्कष्टमापन्नमित्यर्थः । ईदृग्गुणगणशालिन्याः सीताया विरहे कथं मम निर्वाह इति भावः । सिद्धौषधिरिवेत्युपमा स्पष्टा । अन्यत्र रूपकमित्यनयोः संसृष्टिः । मन्दाक्रान्तावृत्तम् ॥

मलयगिरिचरोऽयं मन्मथाधोरणाग्र-
मथितपथिकवर्गो मारुतव्यालहस्ती[1] ।
विरचयति मदीये शैत्यसौरभ्यमान्द्यै-
स्त्रिविधमदसमृद्धो मानसे वप्रलीलाम् ॥ ५ ॥

---

१. 'व्याजहस्ती' इति पाठः.

मलयेति । मलयगिरिचरो मलयाचलवर्ती । एकत्र दाक्षिणात्यत्वादन्यत्र तद्भवत्वाच्चेति भावः । तदुक्तम्—'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः' इति । तथा मन्मथ एवाधोरणो हस्तिपकस्तस्याज्ञया नियोगेन मथितो व्याकुलितो मर्दितश्च पथिकवर्गः पान्थनिवहो येन स तथोक्तः । एकत्रोद्दीपकत्वादन्यत्र निरङ्कुशत्वाच्चेति भावः । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । अयं प्रवर्तमानो मारुत एव व्यालहस्ती दुष्टगजः । 'व्यालो दुष्टगजे सर्पे' इत्यभिधानात् । व्यालशब्देनैव हस्तिप्रतीतौ पुनर्हस्तिग्रहणं करिकलभकर्णावतंसावित्र द्रष्टव्यम् । शैत्यसौरभ्यमान्द्यैस्त्रिविधस्त्रिप्रकारो यो मदो दानोदकं परप्रहरणहेतुभूतदर्पो वा तेन समृद्धः संपूर्णः सन् । शैत्यादिगुणत्रितयरूपमदोन्मत्त इत्यर्थः । मदीये मानसे वप्रलीलामुत्खातकेलिं विरचयति तनोति । अत्यन्तवैकल्यापादकवेदनोत्पादनेन मन्मनोविदारणं करोतीत्यर्थः । 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवे । हस्तिमात्रस्यैव वप्रक्रीडा दुःसहा । तस्य तु पुनराधोरणाज्ञप्तत्वं दुष्टत्वं त्रिविधमदसमृद्धत्वं च यदि तदा किमु वक्तव्यमिति भावः । मारुते शैत्यादिगुणवर्णनं कविसमयसिद्धत्वादिति द्रष्टव्यम् । अत्र मारुते व्यालहस्तित्वरूपणान्मन्मथस्याधोरणरूपणं गम्यत इत्येकदेशवर्ति सावयवरूपकम् । मालिनीवृत्तम् ॥

**ततो दुःसहविरहकृशानुभावं कृशानुभावं भावसंधुक्षणविचक्षणलक्ष्मणवचनधार्यमाणधैर्यं राघवमग्रतः सुग्रीवो विलोक्य वालिप्रहितापसर्पधिया सुदूरमपससर्प ॥**

तत इति । ततो भीषणानन्तरं दुःसहः सोढुमशक्यो यो विरहकृशानोर्विरहानलस्य भावश्चेष्टा । व्यापार इति यावत् । तेन कृशः क्षीणोऽनुभावः सामर्थ्यं चित्तस्वास्थ्यं यस्य तं तथोक्तम् । 'कृशानुः पावकोऽनलः' इत्यमरः । अनुगतो भावोऽनुभाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टाद्धञ्प्रत्ययः । 'श्रिणीभुवोऽनुपसर्गे' इत्यनुपसर्गाद्भवतेर्घञ्विधानात् । अतएव काशिकायाम्—'कथं प्रभावो राज्ञां प्रकृष्टो भाव इति प्रादिसमासे' इति चोद्यपरिहारौ । भावसंधुक्षणं स्वभावानुसंधानम् । पुनः प्रकृतिप्रापणमिति यावत् । धुक्षेर्ल्युट् । तत्र विचक्षणानि निपुणानि लक्ष्मणवचनानि तैर्धार्यमाणं धारणविषयीक्रियमाणं धैर्यं चित्तस्थैर्यं येन तं तथोक्तम् । 'संस्तम्भ राम भद्रं ते मा शुचः पुरुषर्षभ । नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ॥' इति श्रीरामायणे लक्ष्मणोक्तवचनालम्बितधैर्यमित्यर्थः । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । राघवं श्रीराममग्रतः पुरोभागे सुग्रीवो विलोक्य दृष्ट्वा वालिना प्रहितो वृत्तान्तपरिज्ञानार्थं प्रेषितो योऽपसर्पो गूढचारः स इति धिया । तद्भ्रान्त्येत्यर्थः । 'अपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः' इत्यमरः । सुदूरमतिविप्रकृष्टमपससर्पापसृतवान् । पूर्वाधिष्ठितस्थलं परित्यज्य स्थलान्तरं जगामेत्यर्थः ॥

---

१. 'एवम्' इति पाठः. २. 'सावम्' इति नास्ति क्वचित्. ३. 'प्रणिहिता' इति पाठः.

**स तु संमन्त्र्य मन्त्रिभिस्तयोराशयमवजिगमिषुः प्रभञ्जनात्मजं प्राहिणोत् ॥**

**स इति ।** स तु सोऽपि सुग्रीवः । षाड्गुण्यचिन्तनं मन्त्रः स एषामस्तीति मन्त्रिणः । तैरमात्यैः सह । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । अत्र सहादिशब्दाप्रयोगेऽपि तदर्थगम्यतायां 'वृद्धो यूना' इति ज्ञापनात्तृतीया । संमन्त्र्य सम्यग्विचार्य तयो रामलक्ष्मणयोराशयमभिप्रायमवजिगमिषुरवगन्तुमिच्छुः । जिज्ञासुः सन्नित्यर्थः । अवपूर्वाद्गमेः सन्नन्तादुप्रत्ययः । प्रभञ्जनात्मजं पवमानतनयं हनूमन्तं प्राहिणोत्प्रेषितवान् । तत्समीपमिति शेषः । तस्यैव महाबुद्धिसंपन्नत्वेन दूत्ये प्रेषणीयत्वादिति भावः ॥

सोऽपि श्रीरामं प्रति जगामेत्याह—

**तपनपवनयोर्यः प्राप्तवान्पुत्रभावं**
**शतमखकृतपालिर्विद्यया जन्मना च ।**
**स तु दशमुखकीर्तिस्तोमसोमस्य पक्ष-**
**श्चरम इव तनूमान्प्राप रामं हनूमान् ॥ ६ ॥**

**तपनेति ।** यो हनूमान्विद्यया सकलशास्त्राभ्यासेन जन्मनोत्पत्त्या च हेतुना तपनपवनयोः सूर्यपवमानयोः पुत्रभावं पुत्रत्वं प्राप्तवान्गतवान् । 'मार्तण्डस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः । तेजसोऽस्य मदीयस्य ददामि शतिकां कलाम् ॥ यदा च शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति । तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥ भविता त्रिषु लोकेषु न कश्चिच्छास्त्रदर्शनः ॥' इत्युत्तरकाण्डे भगवतः सूर्याल्लब्धवरत्वकथनात्तत्सकाशात्सकलशास्त्राध्ययनेन सूर्यपुत्रत्वं प्राप्तवान् । शिष्यस्योपाध्यायपुत्रत्वं चोक्तं श्रीरामायणे वालिनं प्रति श्रीरामवाक्यम्—'ज्येष्ठभ्राता पिता वापि यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्म्ये च पथि वर्तिनः ॥' इति । 'धर्मश्चेदत्र कारणम्' इति पाठान्तरम् । 'जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥' इति । तथा 'तत्र राजा प्रशस्तश्च केसरी नाम वै पिता । तस्य भार्या बभूवैषा ह्यञ्जनेति परिश्रुता ॥ जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥'इति तत्रैवोक्तत्वाज्जन्मना वायुपुत्रत्वं च प्राप्तवानित्यनुसंधेयम् । अतएव यथाक्रममन्वयाद्यथासंख्यालंकारः । तथा शतमखेनेन्द्रेण कृता विरचिता पालिरङ्को वामहनुभङ्गरूपो यस्य स तथोक्तः । बाल्ये क्षुधार्तस्य फलमोहात्सूर्यं ग्रहीतुकामस्यास्येन्द्रवज्राभिघातेन गिरिपतनस्यैव हनुभङ्गस्य जातत्वादिति भावः । 'पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु' इत्यमरः । एतेन बाल्य एवेन्द्रवज्रप्रहारसहनशक्तस्यास्य किं वक्तव्यं शक्तिसंपन्नत्वमिति सूच्यते । तथा चोक्तगुणविशिष्टतयास्यैव दूतत्वं युक्तमित्यवगम्यते । यथाह कामन्दकः—'प्रगल्भः स्मृतिमान्वाग्मी[2] शस्त्रे शास्त्रे च निष्ठितः । अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥' इति । दशमुखस्य रावणस्य कीर्तिस्तोमो

---

१. 'अवजिगमिषुराञ्जनेयं प्रभञ्जनसंजातम्' इति पाठः. २. 'वाणी' इति पाठः.

यशोमण्डलं स एव सोमश्चन्द्रस्तस्य तनूमान्मूर्तिमान्। 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। चरमः भक्षः कृष्णपक्ष इवेत्युत्प्रेक्षा । कालक्रमेणास्य तत्क्षयकरत्वादिति भावः। स तु सोऽपि हनूमान्। 'शरादीनां च' इति दीर्घः। रामं प्राप। उक्तालंकारयोः संसृष्टिः। मालिनीवृत्तम्॥

**स एव स्वीकृतभिक्षुवेषः सविनयमेतावावभाषे॥**

स इति। स्वीकृतभिक्षुवेषः स्वीकृतसंन्यासिवेषः स एव हनूमान्। चाराणां तथैवाचारादिति भावः। 'भिक्षुरूपं ततो भेजे चारबुद्धितया कपिः' इति श्रीमद्रामायणे सविनयं सप्रश्रयम्। एतौ रामलक्ष्मणावावभाष उवाच। अत्र महापुण्यस्य परमभागवताग्रगण्यस्य हनूमतोऽपि रूपान्तरस्वीकरणे किमुतातिक्रूरस्य दुर्विनीतस्य रावणस्य सीतापहरणसमस्य इत्यनुसंधेयम्॥

आपणप्रकारमेवाह—

**भवन्तौ कान्ताकारौ कान्तारं कथमिदमवातरताम्॥**

भवन्ताविति। कान्ताकारौ मनोहररूपौ। 'कान्तं मनोहरं रुच्यम्' इत्यमरः। भवन्ताविदमेतत्। दुष्प्रवेशमित्यर्थः। कान्तारं काननम्। 'गहनं काननं वनम्। कान्तारम्' इत्यमरः। कथं केन हेतुनावातरतामवतीर्णवन्तौ। प्रविष्टवन्तावित्यर्थः॥

**विचित्रतरजिष्णुकोदण्डमण्डितावपि दिनस्यास्य सुदिनत्वाद्भवन्तौ न जीमूतौ॥**

विचित्रतरेति। किंच विचित्रतराभ्यामत्यन्ताश्चर्यकराभ्यां जिष्णुकोदण्डाभ्यां जैत्रचापाभ्याम्, तथा विचित्रतरेण नानावर्णसंपूर्णत्वादतिचित्रेण जिष्णुकोदण्डेनेन्द्रधनुषा च मण्डितौ। 'मडि भूषायाम्' इति धातोः कर्मणि क्तः। 'जिष्णुः शक्रे धनंजये जैत्रे च' इति विश्वः। तथाप्यस्य दिनस्य सुदिनत्वाद्युष्मद्दर्शनात्, मेघच्छन्नत्वाभावेन च सुदिनत्वाद्धेतोः। भवन्तौ युवां जीमूतौ मेघौ न भवत इत्यर्थः। तथा चेत्। 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यभिधानाद्दुर्दिनत्वमेव स्यादिति भावः। 'जीमूतौ मेघपर्वतौ' इत्यमरः। जीमूतशब्दो व्याख्यातः॥

**जटावल्कलयुतावपि जङ्गमत्वाद्भवन्तौ न कल्पवृक्षौ॥**

जटेति। किंच जटावल्कलैर्ग्रथितकवचवल्कलवसनैः शिखात्वग्भिश्च युतौ सहितावपि। 'शाखाशाले शिफाजटे', 'त्वक्स्त्री वल्कं वल्कलमस्त्रियाम्' इति चामरः। जङ्गमत्वात्संचारशीलत्वाद्भवन्तौ कल्पवृक्षौ न भवतः। तथात्वे स्थावरत्वं स्यादिति भावः॥

**तमोपहालोकैकलितावपि यौगपद्यभास्वरसांनिध्याद्भवन्तौ न पुष्पवन्तौ॥**

---

१. 'भिक्षुक' इति पाठः. २. 'भवन्तौ कतरौ' इति पाठः. ३. 'ललितौ' इति पाठः. ४. 'भास्वरतेजःसांनिध्यात्' इति पाठः.

तमोपहेति । किंच तमोपहालोकेनाज्ञाननिरासकदर्शनेन तुल्ध्वान्तविध्वंसकद्योतनेन कलितौ युक्तौ । 'राहौ ध्वान्ते गुणे तमः', 'आलोकौ दर्शनोद्योतौ' इति चामरः। तथापि यौगपद्यभास्वरयोर्युगपत्प्रकाशनशीलयोर्युवयोः सांनिध्यात्संनिधानाद्धेतोः । भवन्तौ पुष्पवन्तौ दिवाकरनिशाकरौ न भवतः । तथात्वे यौगपद्यभास्वरसांनिध्यमेव न स्यादिति भावः । अतः कौ युवामिति वाक्यशेषः । 'स्थेशभासपिसकसो वरच्' इति वरच् । पुष्पं विकासोऽनयोरस्तीति पुष्पवन्ताविति विग्रहः । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः । अत्र स्थानत्रयेऽपि श्लेषभङ्ग्या जीमूतत्वादिना संदिह्य सुदिनादिहेतुभिर्निषेधेऽपि निश्चयपर्यवसानाभावाच्छेषसमाहितविरोधानुप्राणितशुद्धविषयः संदेहालंकारः । 'विषयो विषयी यत्र सादृश्यात्कविसमतौ । संदेहगोचरौ स्यातां संदेहालंकृतिस्त्रिधा ॥' इति लक्षणात् ॥

कुशस्तम्भेऽपि संभूतं सौरभ्यमिव भासते ।
तपोवेषेऽपि सौन्दर्यं युवयोर्युवयोगिनोः ॥ ७ ॥

कुशेति । कुशस्तम्भे दर्भकाण्डे । अपिशब्दो विरोधसूचकः । तत्र यदाकदापि सौरभ्यानुदयादिति भावः । संभूतं समुत्पन्नं सौरभ्यमामोद इव । तपोवेषे । जटावल्कलधारणरूपतपस्विवेषसमुचितवेषेऽपीत्यर्थः । युवानौ च तौ योगिनौ च तयोर्युवयोगिनोस्तरुणतपस्विनोर्युवयोर्भवतोः सौन्दर्यं रामणीयकं भासते प्रकाशते । भवतोरिव तपस्विषु सौन्दर्यावभासनं न कुत्रचिदपि दृष्टचरम् । अतो युवामपूर्वतपस्विनावित्याशयः । अत्र कुशस्तम्भस्य पवित्रत्वादिधर्मैः प्रशस्तत्वेऽपि हेम्न इव तस्य कदापि सौरभ्यासंभवादभूतोपमेयम् । तया च परमपवित्रत्वनिरुपमसौन्दर्यसंपन्नत्वादिवस्तु व्यज्यते ॥

अथ महतां निकटे कपटमनुचितमिति मत्वा स्वाशयं प्रकाशयन्नाह—

युष्मद्वार्तासुधास्वादलुब्धयोः श्रोत्रयोः सुखम् ।
स्वयमेव ग्रहीतुं मे जिह्वा प्रह्वा प्रवर्तते ॥ ८ ॥

युष्मदिति । युष्मद्वार्ता युष्मद्वृत्तान्तः सैव सुधामृतं तस्यास्वादे लुब्धयोर्गृध्न्वोः । युष्मन्मुखाद्भवदीयवार्ताकर्णनलोलुपयोरित्यर्थः । श्रोत्रयोर्मदीयकर्णयोः सुखमानन्दं कर्म मे मम जिह्वा रसना । 'रसज्ञा रसना जिह्वा' इत्यमरः । स्वयमेव ग्रहीतुमनुभवितुं प्रह्वा नम्रा सती प्रवर्तते । युष्मच्छ्रीमुखाद्भवदीयवार्तामनाकर्ण्यैव महत्संदर्शनजनितप्रभाववशादहमेव त्वां वक्तुं प्रवृत्तोऽस्मीत्यर्थः ॥

कश्चिदस्ति समस्तवानरपतिः सुग्रीव इति ॥

कश्चिदिति । सुग्रीव इति नाम्ना प्रसिद्धः कश्चित्समस्तवानरपतिः सर्वकपीश्वरोऽस्ति वर्तते ॥

अस्तु । ततः किं तत्राह—

तेन भ्रातृभयादृष्यमूकमुपाश्रितेन युवाभ्यां समं सख्यमिच्छता

१. 'सह' इति पाठः.

**प्रेषितं हनूमदभिधानं भिक्षुरूपच्छन्नं वानरमिमं जनमाञ्जनेयं प्रभञ्जनसंजातं जानीतमिति ॥**

**तेनेति**। भ्रातुर्वालिनो भयाद्धेतोर्ऋष्यमूकं ऋष्यमूकाख्यं गिरिमुपाश्रितेनाधिष्ठितेन। मतङ्गशापात्तस्य तत्रागन्तुमशक्यत्वादिति भावः। अतएव युवाभ्यां समं भवद्भ्यां साकं सख्यं मैत्रीमिच्छता काङ्क्षता तेन सुग्रीवेण प्रेषितं वृत्तान्तपरिज्ञानार्थं प्रहितम्। अतएव भिक्षुरूपेण संन्यासिवेषेण छन्नं गुप्तमिममेनं जनमाञ्जनेयमञ्जनागर्भसंभूतम्। 'स्त्रीभ्यो ढक्'। प्रभञ्जनाद्बीजनिषेक्तुः पवनात्संजातं समुत्पन्नम्। 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः। हनूमानित्यभिधानं यस्य तं तथोक्तं हनूमदभिधानं वानरं जानीतमवधारयतमित्याबभाष इति संबन्धः॥

**ततस्तदीयं वचनमाकर्ण्य कर्णयुगलसुधावर्षि देवर्षिप्रतिमो दाशरथिस्तमुपाश्लिष्य तद्दर्शितेन पथा विरचितभुवनसौख्यं सख्यं तपनतनयेन साकमग्निसाक्षिकमकरोत् ॥**

**तत इति**। ततस्तदनन्तरम्। कर्णयुगलसुधावर्षि। स्वाभिलषितार्थवेदकत्वाच्छ्रवणानन्दकरमित्यर्थः। तदीयं हनूमत्संबन्धि वचनमाकर्ण्य। देवर्षिप्रतिमः स्वमाहात्म्याद्देवर्षिसदृशः। महानुभाव इत्यर्थः। दाशरथिः श्रीरामः। सानुज इति शेषः। तं हनूमन्तमुपाश्लिष्य। आरुह्येत्यर्थः। 'पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः' इति श्रीरामायणवचनादिति भावः। तद्दर्शितेन हनूमन्निर्दिष्टेन पथा मार्गेण। गत्वेति शेषः। तपनतनयेन साकं सुग्रीवेण सह विरचितभुवनसौख्यमुत्पादितनिखिललोकानन्दम्। तस्य सकललोककण्टकरूपरावणसंहारमूलत्वादिति भावः। सख्यं मैत्रीम्। 'सख्युर्यः' इति यप्रत्ययः। अग्निः साक्षी साक्षाद्द्रष्टा यस्मिन्कर्मणि तद्यथा तथा अग्निसाक्षिकमकरोत्। 'साक्षाद्द्रष्टरि संज्ञायाम्' इति साक्षाच्छब्दादिनिप्रत्ययः। ततः शैषिकः कप्प्रत्ययः। 'स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षणे' इति न्यायेनान्योन्यारुचिर्न जाता। अवश्यंभाविनः कार्यस्य ब्रह्मणापि निवर्तयितुमशक्यत्वादिति भावः। तथाच रामायणम्—'ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम्। सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥' इति ॥

**योगं वितन्वति हनूमति राघवस्य**<br>
**वैवस्वतेन हरिणा समवर्तिना च।**<br>
**मेने विधिर्घटयितुं कपिमिन्द्रपुत्रं**<br>
**वैवस्वतेन हरिणा समवर्तिना च ॥ ९ ॥**

**योगमिति**। हनूमत्याञ्जनेये राघवस्य विवस्वतः सूर्यस्यापत्येन वैवस्वतेन। 'तस्यापत्यम्' इत्यण्। समं वर्तितुं शीलमस्यास्तीति समवर्तिना। सर्वदापि साम्येनैव वर्तनशीलेनेत्यर्थः। ताच्छील्ये णिनिः। हरिणा कपिना सुग्रीवेण योगं संगतिं

---

१. 'हनुमदभिधानं दधानम्' इति पाठः. २. 'प्रतिच्छन्नम्' इति पाठः. ३.'इमं जनम्' इति नास्ति क्वचित्. ४. 'हरिम्' इति पाठः.

वितन्वति कुर्वति सति । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । विधिर्दैवं च । 'विधिर्विधाने दैवेऽपि' इत्यमरः । इन्द्रपुत्रं कपिम् । वालिनमित्यर्थः । वैवस्वतेन सूर्यतनयेन समवर्तिना । प्राणिनां कर्मानुरूपदण्डप्रवर्तनशीलनेत्यर्थः । हरिणा यमेन घटयितुं मेने । श्रीरामसुग्रीवसख्यान्मृत्युः प्रत्यासन्नो वालिन इति फलितार्थः। 'श्राद्धदेवो वैवस्वतोऽन्तकः', 'समवर्ती परेतराट्', 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' इति चामरः । अत्र विधेरीदृग्घननासंबन्धेऽपि तत्संबन्धकथनादतिशयोक्तिभेदः । तथा द्वितीयपादस्य चतुर्थे संयमनात्संदष्टयमकः शब्दालंकारः । वसन्ततिलकावृत्तम् ॥

**ततस्तत्क्षणसंभूतविस्रम्भाय प्रतिश्रुतवालिवधाय कथितनिजमन्मथदशाय दाशरथये सुग्रीवो दशग्रीवनीयमानसीतापातितानि कानिचिदाभरणान्यदर्शयत् ॥**

**तत इति** । ततस्तदनन्तरम् । तत्क्षणसंभूतः सख्यकरणक्षण एव संजातः विस्रम्भो विश्वासो यस्य तस्मै । तत्समागमस्य सद्य एव प्रत्ययजनकत्वादिति भावः । 'समौ विस्रम्भविश्वासौ' इत्यमरः । प्रतिश्रुतः प्रतिज्ञातो वालिवधो येन तस्मै । भवद्वेषिणं वालिनं हत्वा तारया सह तत्साम्राज्यं तुभ्यं दास्यामीति कृतप्रतिज्ञायेत्यर्थः । 'अङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः । कथिता उक्ता निजा स्वीया मन्मथदशा सीताविरहप्रयुक्तमन्मथावस्था येन तस्मै । प्रियतमावियोगेनाहमेवं विषण्णो जातः, त्वयावश्यं तदन्वेषणार्थं प्रयत्नः कर्तव्य इत्यावेदितात्मीयवेदनायेत्यर्थः । 'दशा वर्तावस्थायाम्' इति विश्वः । दाशरथये श्रीरामाय । सुग्रीवः । दशग्रीवेण रावणेन नीयमानया ह्रियमाणया सीतया पातितानि त्यक्तानि कानिचित्कियन्त्यप्याभरणानि भूषणान्यदर्शयद्दर्शयामास ॥

**प्रत्यर्पितानां कपिपुंगवेन रामः स्वकान्ताधृतभूषणानाम् ।**
**संस्कारहान्या परिधूसराणां प्रक्षालनं वाष्पजलैश्चकार ॥१०॥**

**प्रत्यर्पितानामिति** । रामः कपिपुंगवेन कपिश्रेष्ठेन सुग्रीवेण प्रत्यर्पितानाम् । तथा संस्कारहान्या अक्षालनेन शोधनाभावात्परिधूसराणां परितो मलिनानां स्वकान्ताधृतभूषणानां बाष्पजलैर्निजनेत्राम्बुभिः प्रक्षालनं परिशोधनम् । निर्मलभावमिति यावत् । चकार । तानीमानि खलु तदीयानि भूषणानीति पुनः पुनः पश्यन्नश्रूणि मुमोचेत्यर्थः । अत्र क्षालनकरणासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । तथाच तस्य तादृशी प्रियतमाविषयप्रेमातिभूमिरिति वस्तु व्यज्यते । इन्द्रवज्रावृत्तम् ॥

**ततः सौमित्रिफणितनिर्बन्धसंधुक्षितधैर्येण रामेणानुयुक्तो वालिवैरकारणं भानुसूनुरित्थमकथयत् ॥**

**तत इति** । ततो भूषणदर्शनजनितशोकानन्तरं सौमित्रिफणितैर्महात्मनस्तव नैवं शोकलालसत्वं युक्तमित्याद्युपलालनवाक्यैर्यो निर्बन्धस्तेन संधुक्षितं संदानितं

१. 'मन्मथ' इति नास्ति क्वचित्. २. 'हान्याप' इति पाठः.

धैर्यं यस्य तेन । लक्ष्मणवाक्यवशात्पुनः प्रकृतिमापन्नेनेत्यर्थः । रामेण । भानुसूनुः सुग्रीवः । वालिवैरकारणमनुयुक्तः पृष्टः सन् । अनुपूर्वाद्युजेः कर्मणि क्तः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । अतएव दुहादित्वाद्द्विकर्मकत्वम् । इत्थमकथयत्कथयामास ॥

तत्प्रकारमेव विवृणोति—

**पुरा खलु निखिलरिपुकुलतिमिरनिचयमरीचिमालिनं वालिनं मायावी नाम दानवः कश्चन दुन्दुभेर्भ्राता युद्धाय रुद्ध्वा तद्बलचलितधृतिरुरगनगरकुहरमगाहत ॥**

पुरेति । पुरा पूर्वकाले । खलुशब्दो वाक्यालंकारे । निखिलरिपुकुलमशेषशत्रुमण्डलमेव तिमिरनिचयोऽन्धकारपटलं तस्य मरीचिमालिनं सूर्यम् । सकलशत्रुकुलसंहारिणमित्यर्थः । वालिनम् । दुन्दुभेर्भ्राता ज्येष्ठः । मायावीति यथार्थनाम्ना प्रसिद्धः । 'अस्मायामेधास्रजो विनिः' इति मत्वर्थीयो विनिप्रत्ययः । कश्चन कोऽपि दानवः । युद्धाय युद्धं कर्तुम् । रुद्ध्वा निरुध्य । तस्य वालिनो बलेन पराक्रमेण चलिता भ्रष्टा धृतिर्धैर्यं यस्य स तथोक्तः सन् उरगनगरकुहरं पातालगुहामगाहत प्राविशत् ॥

**तदनु गुहां गाहमानेन मानशालिना हेममालिना वालिना विलमुखपालनाय निहितस्तस्योत्थानवेलां परिपालयन्नहं चिरकाले व्यतीते फेनस्त्यानं मांसविसृतमसृक्पूरमवेक्ष्य भ्राता मे निहत इति निश्चिनवम् ॥**

तदन्विति । तदनु तदनन्तरं गुहां दानवप्रविष्टकुहरं गाहमानेन प्रविशता । कुतः । मानशालिना परविदारणाभिमानधनेन । नतु यथाकथंचिज्जीवनतत्परेणेत्यर्थः । हेममाला इन्द्रदत्तकनकमालिकास्यास्तीति हेममालिना । व्रीह्यादित्वादिनिः । वालिना । विलमुखपालनाय गुहाद्वारसंरक्षणाय । दानवान्तराप्रवेशार्थमित्यर्थः । निहितो नियुक्तः । अहमिति शेषः । तस्य वालिन उत्थानवेलां पुनरागमनसमयं परिपालयन् । तदा चिरकाले व्यतीते । साग्रसंवत्सरेऽतीते सतीत्यर्थः । 'तस्य प्रविष्टस्य विलं साग्रः संवत्सरो गतः' इति रामायणात् । ततः फेनेन सूक्ष्मतरबुद्बुदमण्डलेन स्त्यानं घनीभूतं यन्मांसं पिशितं तेन विसृतं व्याप्तमसृक्पूरं रक्तप्रवाहमवेक्ष्य दृष्ट्वा मे मम भ्राता वाली निहत इति निश्चिनवं निरधारयम् । तादृगसृग्दर्शनेन तथा भ्रान्तोऽस्मीत्यर्थः ॥

**तदनु विपुलोपलपटलपिहितविलमुखस्तस्मै दत्त्वा स्वयमुदश्रुरुदकं नैवापमवापं शोकान्धः किष्किन्धाम् ॥**

---

१. 'चकित' इति पाठः. २. 'अवगाहत' इति पाठः. ३. 'गुहाम्' इति नास्ति क्वचित्. ४. 'हेममालिना' इति नास्ति क्वचित्. ५. 'प्रतिपालयन्' इति पाठः. ६. 'अप्यतीते' इति पाठः. ७. 'निःसृत' इति पाठः. ८. एतदनन्तरम् 'स वलीमुखबलः' इत्यधिकं क्वचित्.

तदन्विति । तदनु निर्धारणानन्तरं विपुलोपलपटलेन विस्तृतशिलाफलकेन महत्तरशिलानिकरेण वा । पिहितमाच्छादितं बिलमुखं गुहाद्वारं येन स तथोक्तः सन् । दानवस्य पुनर्निर्गमनाभावार्थमिति भावः । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । स्वयमुदश्रुरुद्गतबाष्पः सन् । तस्मै वालिने नैवापमुदकं पितृतर्पणजलं दत्त्वा । शोकेन भ्रातृनिधनजनितविषादेनान्ध इतिकर्तव्यतामूढः सन् । किष्किन्धां वालिपालितनगरीमवापं प्राप्नवम् । प्रविष्टवानस्मीत्यर्थः ॥

**अथ विदितवृत्तान्तैरमात्यैरभिषेचिते मयि वाली[1] मायाविनं निहत्य खरतरभुजपरिघविघट्टितबिलवदनपिधानस्तरसा रसातलात्पुरं प्रविष्टोऽतीव रुष्टः प्रभ्रष्टाशयं बहुशः प्रणिपतन्तं प्रतिपादितयाथातथ्यममुं जनं निरागसमपि नगरान्निरकासयत्[2] ॥**

अथेति । अथानन्तरं विदितो विज्ञातो वृत्तान्तो वालिविनाशरूपवार्ता येषां तैरमात्यैर्मन्त्रिभिर्मय्यभिषेचिते राज्याभिषिक्ते सति । स वाली मायाविनं दानवं निहत्य संहत्य खरतराभ्यामतिशयेन कठिनाभ्यां भुजपरिघाभ्यां निजभुजार्गलाभ्यां विघट्टितं विदारितं बिलवदनपिधानं गुहाद्वाराच्छादनशिलाफलकं यस्य स तथोक्तः सन् । तरसा रंहसा रसातलात्पातालकुहरात्पुरं किष्किन्धानगरीं प्रविष्टस्तदातिरुष्टः । बिलमध्येऽयं दानवेन निहतः स्यादिति तन्मुखमाच्छाद्य स्वयमजानन्निवागत्य राज्यसुखमनुभवत्येष द्रोहीत्यत्यन्तरोषाक्रान्तचित्तः सन्नित्यर्थः । प्रभ्रष्टाशयमेतद्दर्शनाद्विनष्टबुद्धिम् । इतिकर्तव्यताशून्यमित्यर्थः । अतएव बहुशो बहुवारं प्रणिपतन्तम् । अज्ञानादेवं कृतम्, अतो मदपराधं क्षमस्वेति पुनः पुनः पादयोर्निपतन्तमित्यर्थः । तथा प्रतिपादितं सम्यक्कथितं याथातथ्यं याथार्थ्यं येन तं तथोक्तम् । रक्तप्रवाहदर्शनेन त्वदीयनिधनमाशङ्क्य दानवोऽयं पुनर्निर्गमनाक्षमतया बिलमध्ये म्रियतामिति तन्मुखमाच्छाद्यागतोऽस्मि, नतु द्रोहेणेति कथितवस्तुगतिमित्यर्थः । याथातथ्यमरण्यकाण्डे व्याख्यातम् 'रामलक्ष्मणयोर्याथातथ्यम्' इत्यत्र । निरागसं वस्तुतो निरपराधमपि । 'आगोऽपराधो मन्तुश्च' इत्यमरः । अमुं जनम् । मामित्यर्थः । नगरात्किष्किन्धानगरान्निरकासयन्निष्कासितवान् । 'निरासयत्' इति पाठेऽप्ययमेवार्थः ॥

**तदनु तदनुधावनात्कांदिशीकस्य मम पर्वतेऽस्मिन्नकुतोभयसंचारकारणमाकर्ण्यताम् ॥**

तदन्विति । तदनु निष्कासनानन्तरं तदनुधावनात्तस्य वालिनः कर्तुः अनुधावनादनुसृत्य धावनात् । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी । कांदिशीकस्य भयद्रुतस्य । 'कांदिशीको भयद्रुतः' इत्यमरः । ममास्मिन्पर्वते ऋष्यमूके । नास्ति कुतो भयमत्रेत्यकुतोभयः । वालिभयशङ्काशून्य इत्यर्थः । मयूरव्यंसका-

---

१. 'वाली' इति नास्ति क्वचित्. २. 'याथातथ्यं मां नगरान्निरागसमपि' इति पाठः.

दिषु 'अचोच्चनीचोच्चपराचोचावचावाचाकुतोभयात्' इति तत्पुरुषे निपातनात्साधुः। स चासौ संचारश्च तस्य कारणं हेतुमाकर्ण्यतां श्रूयताम् ॥

तदेव विवृणोति—

**पुरैकदा वालिनमतनुभुजबलमखिलकुलाचलचलनचतुरं चतुरर्णवलङ्घनजङ्घालं दुन्दुभिर्नाम वृन्दारकारिर्लुलायकायः परिभूय समरे समतिष्ठत ॥**

पुरेति । पुरा पूर्वकाले । एकदा एकस्मिन्दिने । अतनुभुजबलमनल्पबाहुपराक्रमशालिनम् । अतएवाखिलकुलाचलानां महेन्द्रादिसप्तकुलपर्वतानां चलने विलोलतापादने चतुरम् । अतिशक्तमित्यर्थः । 'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इत्यादि विष्णुपुराणवचनम् । तथा चतुर्णामर्णवानां लङ्घनमतिक्रमणमित्युत्तरपदसमासः । तत्र जङ्घालं जङ्घावेगवन्तम् । अतिजवमित्यर्थः । 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः । 'प्राणिस्थादातो लजन्यतरस्याम्' इति मत्वर्थीयो लच्प्रत्ययः । वालिनं लुलायकायो महिषाकृतिः । 'लुलायो महिषो वाहद्विषत्' इत्यमरः । दुन्दुभिर्नाम दुन्दुभिरिति प्रसिद्धो वृन्दारकारिः सुररिपुः । कश्चिद्दानव इत्यर्थः । परिभूय तिरस्कृत्य । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । समरे युधि समतिष्ठत संस्थितः मृतः । वालिना निहतोऽभूदित्यर्थः । 'संस्थाचारे स्थितौ मृतौ' इत्यमरः । संपूर्वात्तिष्ठतेर्मरणार्थाल्लुङ् । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥

**तदनु निहतस्य तस्य शरीरं वाली बलावलेपेन सकललोकविलयविलोलललितातुलबलपवनचलितलघुतूललीलया मतङ्गाश्रमक्षितौ क्षिप्रमक्षिपत् ॥**

तदन्विति । तदनु निहतस्य मृतस्य तस्य दुन्दुभेः शरीरं वाली बलावलेपेन निजभुजबलगर्वेण हेतुना । 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः । सकललोकविलये जगत्प्रलये विलोलो विशेषेण चञ्चलः । 'लोलश्चलसतृष्णयोः' इत्यमरः । ललितो विकसितः । व्यापनशील इति यावत् । 'लल विकासे' इति धातोः कर्तरि क्तः । अतुलबलो निरुपमशक्तिश्च यः पवनः । प्रलयकालप्रचण्डमारुत इत्यर्थः । तेन चलितमुद्धूतं यल्लघुतूलं तस्य लीलया तत्सदृशलीलयेति निदर्शना । मतङ्गस्य महर्षेराश्रमक्षितौ तपोवनसीम्नि । क्षिप्रं द्रुतमक्षिपत्प्रेरयामास । निपातयामासेत्यर्थः ॥

**तत्र वालिकरक्षुण्णनिष्पतद्दुन्दुभिप्रभवरक्तबिन्दुभिः ।**
**पाटलं तदभवन्मुनेर्वनं तस्य वक्त्रमपि रोषपाटलम् ॥ ११ ॥**

---

१. 'अतुल' इति पाठः. २. 'तदनु' इति नास्ति क्वचित्. ३. 'शवं बाहुबलावलेपेन वाली सकलं' इति पाठः. ४. 'विलोलदनिलबलचलित' इति' पाठः. ५ 'प्रसृत इति पाठः. ६. 'रोषदूषितम्', 'रोषरूषितम्' इति पाठौ.

तत्रेति । तत्र तस्मिन्क्षेपणसमये वालिनः कराभ्यां नुन्नः प्रेरितः । 'नुदविद–' इत्यादिना निष्ठातकारस्य नकारः । अतएव निष्पतन्निर्गच्छन्यो दुन्दुभिर्दुन्दुभिकायस्तत्प्रभवैस्तदुत्पन्नैः रक्तबिन्दुभिः शोणितपृषतैः मुनेर्मतङ्गस्य संबन्धि तत्प्रसिद्धं वनं तपोवनं पाटलं रक्तवर्णमभूत् । तथा तस्य मुनेर्वक्त्रं वदनमपि रोषेण निजतपोवनमलिनीकरणजनितकोपेन रूषितमवलिप्तं सत्पाटलमभवत् । कोऽयं मदीयतपोवनस्य कालुष्यमापादितवानिति मुनिर्भृशमाग्रहाविष्टोऽभूदित्यर्थः । अत्र मुनिवदनरक्तयोः प्रकृतयोरेव पाटलितत्वसंबन्धादौपम्यस्य गम्यत्वाच्च केवलप्रकृतगोचरा तुल्ययोगिता । रथोद्धतावृत्तम् ॥

**ततो मतङ्गशापबलाद्वालिवश्यमृष्यमूकं विमृश्यास्मिन्विस्मृतपुरनिवाससुखे मयि सुचिरं निवसति सति ॥**

तत इति । ततस्तदनन्तरं मतङ्गस्य वालिनैव तत्कृतमिति निजतपोबलेन विज्ञातवतो मतङ्गमहामुनेः शापबलात् । 'इहानेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत्' इत्येवंरूपरामायणोक्तशापवशादित्यर्थः । ऋष्यमूकमवालिवश्यम् । वालिनः प्रवेष्टुमशक्यमित्यर्थः । विमृश्यालोच्य । अस्मिन्नृष्यमूके मयि पुरनिवासेन पट्टणनिवासेन यत्सुखं जातं तद्विस्मृतं येन तस्मिंस्तथोक्त इति विधेयविशेषणम् । राज्यसुखादप्यधिकसुखानुभवितरीत्यर्थः । सुचिरं बहुकालं निवसति वर्तमाने सति ॥

**अयमसुखयदेवं देव धीमान्हनूमा-**
**न्रिपुरिति भवतोऽपि त्रस्तमस्तौजसं माम् ।**
**दवहुतवहधूमस्तोम इत्यम्बुवाहा-**
**च्चकितमिव मयूरं मारुतो वारिशीतः ॥ १२ ॥**

अयमिति । हे देव स्वामिन्, ऊहापोहार्थविज्ञानेन तत्त्वनिर्धारणं धीः । सा नित्यमस्यास्तीति धीमान् । नित्ययोगे मतुप् । अयमिति हस्तनिर्देशः । हनूमान् । रिपुर्वालिप्रहितोऽयं यः कश्चन शत्रुरिति । मत्वेति शेषः । भवतस्त्वत्तोऽपि । मत्सख्यार्थं समागतादपीत्यपिशब्दार्थः । त्रस्तं भीतमस्तौजसं नष्टतेजस्कं मामेवमनेन प्रकारेण । युष्मत्प्रवृत्तिपरामर्शपूर्वकसख्यानुसंधानरूपेणेत्यर्थः । असुखयदतोषयत् । कथमिव । वारिशीतः सलिलसंपर्कैशीतो मारुतो वायुर्दवहुतवहस्य दावानलस्य धूमस्तोमो धूमपटलमिति मत्वा । अम्बुवाहाज्जलधरात् । आत्मोल्लासकरादेवेति भावः । चकितं भयसंभ्रान्तम् । मह्यामतिशयेन रातीति मयूरं बर्हिणमिव । 'मयूरो बर्हिणो बर्ही' इत्यमरः । पृषोदरादित्वात्साधुः । अत्र श्रौती पूर्णोपमा । साचाम्बुवाहे धूमस्तोमभ्रमाद्भ्रान्तिमताङ्गेन संकीर्यते । वृत्तं मालिनी ॥

**श्रुत्वाथ रामः शोकोदग्रां सुग्रीवगिरम्, यद्येवं महाभाग, मा भैषीः । मम शिलीमुख एव वलीमुखस्य तस्यासून्कालक्षेपमपास्य**

---

१. 'सुचिरं निवसति सति मयि' इति पाठः.

पास्यति' इत्युक्त्वा तत्प्रत्ययार्थं पादाङ्गुष्ठेन प्रेरितदुन्दुभिकलेवरभरस्तत्कर्मणाप्यतृप्तस्य सुग्रीवस्य प्रार्थनया सप्तभुवनस्तम्भसंभावनया किल सप्तधा धात्रा प्रवर्ध्यमानपरिणाहारोहान्सप्तसालानविधेययातुधानकुलवधविधायकेन सायकेन विव्याध ॥

श्रुत्वेति। अथानन्तरं रामः शोकोदग्रां शोकबहुलां सुग्रीवगिरं श्रुत्वा। हे महाभाग प्लवगमण्डलसार्वभौम, यद्येवम्। त्वदुक्तप्रकार एव निश्चितश्चेदित्यर्थः। मा भैषीर्भयपरवशो मा भूः। कुतः। मम शिलीमुख एव। 'अलिबाणौ शिलीमुखौ' इत्यमरः। तस्य वलीमुखस्य कपेर्वालिनः। 'कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः' इत्यमरः। असून्प्राणान्। 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः। कालक्षेपं कालविलम्बमपास्य त्यक्त्वा। क्षिप्रमेवेत्यर्थः। पास्यति हरिष्यति। इत्येवमुक्त्वा तत्प्रत्ययार्थं विश्वासोत्पादनार्थम्। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। पादाङ्गुष्ठेन प्रेरितो दशयोजनपर्यन्तं क्षिप्तो दुन्दुभिकलेवरमेव भरो येन स तथोक्तः सन्। पूर्वं वाली निजभुजाभ्यां यावद्बलमुद्भ्राम्येदं कलेवरमुत्क्षिप्तवान्, तदेतत्पादाङ्गुष्ठेन निक्षिप्तं चेत्तस्मादप्यधिकबलोऽयमिति मयि विश्वासोऽस्य भवेदित्याशयेन तथा कृतवानित्यर्थः। ततस्तत्कर्मणा पादाङ्गुष्ठेन दुन्दुभिकलेवरप्रेरणरूपकृत्येनाप्यतृप्तस्य। पूर्वं मेदोमांसादिनातिभारवदिदमिदानीं तु केवलास्थिप्रायम्, अतएव तत्प्रेरणेन कथं मम विश्वासो भवेदित्यपरितुष्टस्येत्यर्थः। सुग्रीवस्य प्रार्थनया याच्ञया हेतुना। सप्तानां भुवनानां लोकानां स्तम्भसंभावनयाधारस्तम्भकरणेच्छया। किलेत्यलीके। वस्तुतस्तु स्वभाव एवेति भावः। अतएवोत्प्रेक्षा। सप्तधा सप्तप्रकारैः। 'प्रकारवचने थाल्'। धात्रा ब्रह्मणा प्रवर्ध्यमानावुपचीयमानौ परिणाहारोहौ विशालतोच्छ्रायौ येषां तान्। अतिविशालानभ्रंकषांश्चेति भावः। 'परिणाहो विशालता', 'नगाद्यारोह उच्छ्रायः' इति चामरः। सप्त सप्तसंख्याकान्सालान्सर्जकतरूनविधेययातुधानकुलवधविधायकेन दुर्विनीतराक्षसकुलगर्वविनाशकेन सायकेन बाणेन विव्याध। बिभेदेत्यर्थः ॥

सोऽयं सायको निकटगिरिकटकमपि पाटयामास ॥

स इति। सोऽयं सायकः। येन सालान्बिभेद सोऽयमित्यर्थः। निकटगिरिकटकं समीपस्थपर्वतनितम्बमपि पाटयामास। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। दुन्दुभिकायप्रेरणमात्रेणायं मां न विश्वसितवान्, किंतु निजवानरस्वाभाव्येन मत्प्रभावं ज्ञातुमशक्नुवन्नेव सप्तसालनिर्भेदनं याचितवान्, तथाच तावन्मात्रभेदने मम कियद्धस्तलाघवमित्यभिनिवेशवता श्रीरामेण तस्य तथा प्रयुक्तत्वादिति भावः। तथाच श्रीरामायणम्—'स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः। भित्त्वा सालान्गिरिप्रस्थं सप्त भूमिं विवेश ह ॥' इति ॥

---

१. 'भर' इति नास्ति क्वचित्. २. 'तस्य सुग्रीवस्य' इति पाठः. ३. 'भुवनभवन' इति पाठः. ४. 'धात्र्या वर्धमान' इति पाठः. ५. 'अप्यविधेय' इति पाठः. ६. 'विविधवध' इति पाठः.

निर्भिन्नसालकटकोऽस्मि यथा तथा त्वं
पौलस्त्यसालकटकं युधि पाटयेति।
ऊचे शिलादलनजातरवेण नूनं
तस्मै वलीमुखवराय शिलीमुखः सः॥ १३॥

**निर्भिन्नेति**। यथा येन प्रकारेणाहं निर्भिन्ना विदारिताः सालकटकाः सप्तसालगिरिनितम्बा येन स तथोक्तोऽस्मि। तथा तेन प्रकारेण त्वं पौलस्त्यस्य रावणस्य सालकटकं पुरप्राकारनितम्बप्रदेशम्। 'प्राकारवृक्षयोः सालः सालः सर्जतरुः स्मृतः' 'कटकं वलये सानौ राजधानीनितम्बयोः' इत्युभयत्रापि विश्वः। युधि युद्धे पाटय विदारय। इत्येवंप्रकारेण स शिलीमुखो रामबाणः शिलादलनजातरवेण पाषाणविदारणजनितध्वनिना तस्मै वलीमुखवराय सुग्रीवायोचे उक्तवान्। नूनमित्युत्प्रेक्षायाम्। तादृग्रामबाणसामर्थ्यं निरीक्ष्य सुग्रीवो वालिनं निहनिष्यत्ययमिति विश्वसितवानित्यर्थः। वसन्ततिलकावृत्तम्॥

ततस्तत्प्रत्ययादाहूतेन[1] पुरुहूततनयेन[2] सार्धं तस्य तलातलयुद्धे[3] प्रवृद्धे सुजनदुर्जनयोर्भेदं रूपतोऽपि विवेक्तुमक्षमतया सदसि[4] वाचंयमतामुपेत इव वाग्मी तयोरप्येकवेषकर्मणोर्भेदमनवगच्छन्नमुक्तशरोऽभूद्दाशरथिः।

**तत इति**। ततः सालविदारणानन्तरं तत्प्रत्ययात्सालविदलनरूपविश्वासादाहूतेन युद्धार्थमाकारितेन पुरुहूततनयेन सार्धं वालिना सह तस्य सुग्रीवस्य। तलैश्च तलैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति तलातलम्। 'तत्र तेनेदमिति सरूपे' इति समासः। 'अन्येषामपि दृश्यते' इति दीर्घः। समासान्तविधेरनित्यत्वात् 'इच्कर्मव्यतिहारे' इति नेत्वम्। तच्च तद्युद्धं च तस्मिन्। मुष्टियुद्ध इत्यर्थः। प्रवृद्धे बहुले सति। सुजनदुर्जनयोर्भेदमन्तरं रूपत आकृतिवशाद्विवेक्तुं विविच्य वक्तुमक्षमतयाऽसमर्थतया हेतुना सदसि सभायाम्। वाचं यच्छतीति वाचंयमो मौनी। 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः' इत्यमरः। 'वाचि यमो व्रते' इति खच्प्रत्ययः। 'वाचंयमपुरंदरौ च' इति निपातनान्मुमागमः। तस्य भावस्तत्ता ताम्। निर्वचस्त्वमित्यर्थः। उपेतः प्राप्तः। वाचोऽस्य सन्तीति वाग्मी वावदूकः। 'वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरः। 'वाचो ग्मिनिः' इति ग्मिनिप्रत्ययः। स इवेत्युपमा। दाशरथिः श्रीरामः। तयोर्वालिसुग्रीवयोरपि संबन्धिनोर्वेषकर्मणोर्हाराद्याभरणजनितशोभाचेष्टितयोर्भेदमन्तरमनवगच्छन्नजानन्। अमुक्तशरोऽप्रयुक्तबाणोऽभूत्। यथा वाग्मी तुल्यरूपत्वात्सुजनदुर्जनयोर्भेदमजानन्नयमेष इति वक्तुं न शक्नोति, तथा श्रीरामोऽपि तयोस्तुल्यवेषकर्मत्वात्तत्स्वरूपभेदमजानानो मूलघातभयाच्छरं प्रयोक्तुमशक्नुवंस्तूष्णीमुदास्ते स्मेत्यर्थः॥

१. 'प्रत्याहूतेन' इति पाठः. २. 'तनुजेन' इति पाठः. ३. 'तलातलियुद्धे प्रवृत्ते सति सज्जन' इति पाठः. ४. 'मनसि विचारयन्सदसि' इति पाठः.

ततः किमित्यत आह—

**सुग्रीवस्तु वालिबलासंहतया लब्धदैन्यो वदान्य इव राममार्गणापातमार्गे चक्षुर्विक्षिपन्नपगतधृतिः सुदूरमपासरत् ॥**

**सुग्रीव इति।** सुग्रीवस्तु। तुशब्दोऽप्यर्थकः। न सहत इत्यसहः। पचाद्यच्। वालिबलस्य वालिपराक्रमस्यासहतयाक्षमतया लब्धदैन्यः प्राप्तदीनभावः। विह्वलः सन्नित्यर्थः। वदान्यो बहुप्रद इव। 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः। राममार्गणापातमार्गे श्रीरामसायकागमनमार्गे। अर्थिजनागमनमार्गे चेति श्लेषसंकीर्णेयमुपमा। 'मार्गणौ सायकार्थिनौ' इति निघण्टुः। चक्षुर्विक्षिपन्दृष्टिं प्रसारयन्। तदागमनाशयेनेति भावः। ततोऽपगतधृतिर्निरस्तधैर्यः सन्। सुदूरमतिविप्रकृष्टदेशमपासरदपसृतवान्। पलायितवानित्यर्थः ॥

ततः किमत आह—

**तमेनमृष्यमूके मूकवत्त्रपया निषण्णं विषण्णहृदयं दयालुरालोक्य त्रैलोक्यैकधन्वी रामस्तद्भेदमवगन्तुकामः काम्प्यभिज्ञानमालां सुग्रीवग्रीवायां बाणनिवारणनिपुणां सिद्धौषधिमिव बद्ध्वा भूयोऽपि वालिनमाहवायाह्वयेति तमादिदेश ॥**

**तमिति।** त्रपया पराजितलज्जया हेतुना ऋष्यमूके ऋष्यमूकगिरौ भाषणश्रवणाशिक्षितो मूकस्तेन तुल्यं तद्वत्। निर्वच इवेत्यर्थः। 'मूकस्तु वक्तुं श्रोतुमशिक्षिते' इत्यमरः। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। निषण्णमुपविष्टं विषण्णहृदयं विषादाक्रान्तचित्तम्। 'विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः' इति लक्षणात्। तमेनं सुग्रीवमालोक्य विलोक्य दयालुः कारुणिकः। परदुःखप्रहाणेच्छुरित्यर्थः। 'स्याद्दयालुः कारुणिकः' इत्यमरः। तथा त्रयो लोकास्त्रैलोक्यम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। तत्रैकधन्वी। जगदेकधानुष्क इत्यर्थः। 'धन्वी धनुष्मान्धानुष्कः' इत्यमरः। व्रीह्यादित्वादिनिः। विशेषणद्वयेनाप्यस्य कार्यनिर्वहणदक्षत्वं सूच्यते। स रामस्तद्भेदं वालिसुग्रीवयोर्भेदमन्तरमवगन्तुकामो ज्ञातुमिच्छुः सन्। 'तुं काममनसोरपि' इति तुमुनो मकारलोपः। कामपि कांचित्। अभिज्ञायत इत्यभिज्ञानं लक्षणं तथाभूता च सा माला च तामभिज्ञानमालाम्। भेदप्रत्यायकगजपुष्पमालामित्यर्थः। गजपुष्पी नागपुष्पीनाम लता। उक्तंच श्रीरामायणे— 'ततो गिरितटे जातामुत्पाट्य कुसुमायिताम्। लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ॥' इति। न चैवं श्रीरामस्यात्र कर्तृत्वविरोधः प्रयोजककर्तरि तथात्वोपचारादिति। सुग्रीवग्रीवायां बाणनिवारणे शरनिपातनिवर्तने निपुणां समर्थां सिद्धौषधिमिवेत्युत्प्रेक्षा। बध्वासज्य भूयः पुनरपि वालिनमाहवायाहवं कर्तुमाह्वयाकारयेति तं सुग्रीवमादिदेशाज्ञप्तवान् ॥

---

१. 'सहनतया' इति पाठः. २. 'राम' इति नास्ति क्वचित्. ३. 'सदा चक्षुः' इति पाठः. ४. 'अतिदूरम्' इति पाठः. ५. 'हृदयालुः' इति पाठः.

पुनरप्यवाप्य किष्किन्धां पर्जन्य इव गर्जति तस्मिन्सुत्रामपुत्रस्ताराभिहितां हितोक्तिमतिक्रम्य दुरतिक्रमतया नियतेः समारब्धसमरो दाशरथे[1]र्निशिततरशरशकलितनिजविशालवक्षःस्थलः क्षितितले नि[2]पपात ॥

पुनरिति । तस्मिन्सुग्रीवे पुनर्भूयोऽपि किष्किन्धामवाप्य पर्जन्यो मेघ इव गर्जति गर्जनं कुर्वति सति । सुत्रामपुत्रो वाली तारया निजभार्ययाभिहितामुक्तां हितोक्तिं हितवचनम् । 'ससहायमहं मन्ये सुग्रीवं तमुपागतम् । अवष्टब्धसहायश्च यमाश्रित्य स गर्जति ॥' इत्यादि श्रीरामायणोक्तरूपामित्यर्थः । अतिक्रम्योल्लङ्घ्य । नियतेर्दैवस्य । 'नियतिर्नियमे दैवे' इति शाश्वतः । दुरतिक्रमतया दुर्विलङ्घ्यतया हेतुना । अतिक्रमणस्य कर्तुमशक्यतयेत्यर्थः । समारब्धसमरः प्रक्रान्तयुद्धः सन् । तथा दाशरथेः श्रीरामस्य निशिततरोऽतितीक्ष्णः स चासौ शरश्च तेन शकलितं विदलितं निजं स्वीयं विशालं पृथुलं वक्षःस्थलमुरःप्रदेशो यस्य स तथोक्तः सन् । क्षितितले भुवि निपपात । न्यपतदित्यर्थः ॥

अथ विदितवृत्तान्ता संत[3]ताश्रुनिष्यन्दकलुषिततरतारा तारा न[4]गरान्निर्गत्य वारिवारितं वारणयूथपतिमिव नि[5]र्भयनिरीक्ष्यमाणं सुग्रीवमुद्गतग्रीवमुत्थातुमक्षमतया क्ष्मातलार्पितकूर्परयुगलं ग[6]लदसृक्प्रसरसारशरीरं शरासनशिखरन्[7]यस्तहस्तेन संनिकर्षस्थितेन काकुत्स्थेन कृतसंलापमपेताम्बरमिवाम्[8]बुनिधिमस्तोन्मुखमिव मयूखमालिनं वालिनमालिङ्ग्य स्वाङ्कोत्तंसिततदुत्तमाङ्गा रघुनाथमित्थमकथयत् ॥

अथेति । अथ पतनानन्तरम् । विदितो विज्ञापितो वृत्तान्तो वालिवधरूपवार्ता यस्याः सा तथोक्ता । अतएव संतताश्रुनिष्यन्देन निरन्तरबाष्पसंपातेन कलुषिततरे अत्यन्तरूषिते तारे कनीनिके यस्याः सा । 'तारकाक्ष्णः कनीनिका' इत्यमरः । तारा वालिपत्नी नगरादन्तःपुरान्निर्गत्य वार्या गजबन्धनस्थाने । 'वारी तु गजबन्धिनी' इत्यमरः । वारितं निबद्धं वारणयूथपतिं गजयूथनाथमिव स्थितमित्यर्थः । उपमालंकारः । 'यूथनाथस्तु यूथपः' इत्यमरः । अतएव निर्भयं भयरहितं यथा तथा निरीक्ष्यमाणोऽवलोक्यमानः सुग्रीवो यस्य तम् । उद्गतग्रीवमात्मप्रहर्तृप्रतीक्षणार्थमुन्नमितकन्धरम् तथाप्युत्थातुमक्षममसमर्थम् । दृढप्रहारवेदनयेन्द्रियपाटवाभावादिति भावः । अतएव क्ष्मातलेऽर्पितं निक्षिप्तं कूर्परयुगलं कफोणिप्रदेशयुग्मं यस्य तं तथोक्तम् । तदवष्टम्भेन स्थितमित्यर्थः । 'स्यात्कफोणिस्तु कूर्परः' इत्यमरः ।

१. 'दाशरथिशरशकलीकृतवक्षःस्थलः' इति पाठः. २. 'सहसा पपात' इति पाठः. ३. 'संतत' इति नास्ति क्वचित्. ४. 'तारा तारान्तरात्' इति पाठः. ५. 'सुग्रीवं निर्भयनिरीक्ष्यमाणं' इति पाठः. ६. 'गलगलदसृक्पूर' इति पाठः. ७. 'विन्यस्त' इति पाठः. ८. 'अम्बुधिम्' इति पाठः.

गलदसृक्प्रसरेण स्यन्दमानशोणिताभिव्याप्त्या शारं कृष्णरक्तसितवर्णयुक्तं शरीरं यस्य तम् । 'कृष्णरक्तसिते शारः' इति यादवः । अथवा शारं संपृक्तं शरीरं यस्य तम् । 'शरभः करभः शारः संपृक्तः खचितः समाः' इति हलायुधः । तथा शरासनशिखरे चापकोट्यां न्यस्तो निक्षिप्तो हस्तो यस्य तेन तथोक्तेन । धानुष्काणां तथाचारादिति भावः । संनिकर्षस्थितेन समीपवर्तिना काकुत्स्थेन श्रीरामेण सह कृतसंलापं विहितसंभाषणम् । 'पराङ्मुखवधं कृत्वा कोऽनु प्राप्तस्त्वया गुणः । यदहं युद्धसंरब्धस्त्वत्कृते निधनं गतः ॥' इत्यादि रामायणोक्तसंभाषणतत्परमित्यर्थः । 'संलापो भाषणं मिथः' इत्यमरः । तथापेताडम्बरमपगतसंरम्भम् । कल्लोलाद्यभावेन स्तिमितमित्यर्थः । 'आडम्बरोऽस्त्री संरम्भः' इत्यमरः । आडम्बरशब्दो व्याख्यातः 'अम्बुरुहडम्बरचौर्यनिघ्नम्–' इत्यत्र । अम्बुनिधिं समुद्रमिव । तथा–अस्तोन्मुखम् । अस्तं गच्छन्तमित्यर्थः । मयूखमालिनं सूर्यमिव स्थितमित्युपमाद्वयम् । वालिनमालिङ्ग्याश्लिष्य स्वाङ्कोत्तंसितं निजोत्सङ्गनिक्षिप्तं तस्य वालिन उत्तमाङ्गं शिरो यस्याः सा तथोक्ता । सती 'उत्सङ्गचिह्नयोरङ्कः', 'उत्तमाङ्गं शिरः शीर्षम्' इति चामरः । रघुनाथं श्रीरामं प्रतीत्थं वक्ष्यमाणप्रकारेणाकथयदवोचत् ॥

तत्प्रकारमेवाह श्लोकषट्केन—

कारुण्यं निरवधि यत्तव प्रसिद्धं
शीतांशोः सहजमिवार्तिहारि शैत्यम् ।
तत्सर्वं मनुकुलनाथ रम्यकीर्ते
मत्पापात्कथय कथं त्वया निरस्तम् ॥ १४ ॥

कारुण्यमिति । हे मनुकुलनाथ मनुवंशनायक । महाकुलीनेत्यर्थः । तादृशस्यापि मनुवंशस्य त्वयैव सनाथत्वम् । अतस्त्वन्माहात्म्यं किं वर्णनीयमिति भावः । तथा हे रम्यकीर्ते रमणीयकीर्तिसंपन्न श्रीराम, शीतांशोश्चन्द्रस्य सहजं नैसर्गिकमार्तिहारि परोपतापशान्तिकरम् । विशेषणद्वयमेतत्कारुण्येऽपि योज्यम् । शैत्यं शिशिरत्वमिव तव निरवधि निर्मर्यादम् । इयत्तावच्छिन्नपरिमाणशून्यमित्यर्थः । यत्कारुण्यं करुणा । स्वार्थे ष्यञ् । प्रसिद्धं लोकविख्यातम् । अभूदिति शेषः । 'कारुण्यं करुणा घृणा' इत्यमरः । सर्वं समग्रं तत्कारुण्यं मत्पापान्मदीयदुष्कृताद्धेतोः । पतिविपत्तेः पत्नीदुरदृष्टहेतुकत्वादिति भावः । त्वया कथं कुतः निरस्तं त्यक्तम् । कथयाभिधेहि । निरपराधोऽयं मत्प्राणेश्वरस्त्वयाकारुणिकेनेव कथं निष्कारणं निहत इति भावः । प्रहर्षिणीवृत्तम् ॥

एवं साधारण्येनोपालभ्य संप्रति स्वस्या अप्युपहतिं प्रार्थयते—

एवंविधे प्रियतमेऽप्यनपेतजीवां
मां राक्षसीति रघुपुंगव साधु बद्ध्वा ।
बाणं विमुञ्च मयि संप्रति ताटकारे
श्रेयो भवेद्दयितसंगमकारिणस्ते ॥ १५ ॥

एवंविध इति । हे ताटकारे ताटकान्तक, रघुपुङ्गव रघुश्रेष्ठ श्रीराम, प्रियतमे

प्राणेश्वरे । एवंविध ईदृक्प्रकारे । मृते सत्यपीत्यर्थः । अनपेतजीवाम्निर्गतप्राणां मां राक्षसीति राक्षसीप्रायेति साधु सम्यग्बुद्ध्वा ज्ञात्वा । प्रियतमविपत्तिसहनत्वस्य राक्षसीलक्षणत्वादिति भावः । मय्युक्तप्रकारेण राक्षस्यां संप्रतीदानीं बाणं विमुञ्च । मां प्रहरेत्यर्थः । ताटकान्तकस्य तव राक्षसीसंहरणमुचितमेवेति भावः । ननु ताटकासंहनने परोपद्रवशान्तिरूपं फलं लब्धम् । त्वत्प्रहारात्किं फलमित्यत आह— श्रेय इति । दयितेन सह संगमं करोतीति दयितसंगमकारिणः । प्राणेश्वरेण मां योजयत इत्यर्थः । ते तव महच्छ्रेयो महानभ्युदयः पुण्यं वा । भविष्यतीति शेषः । 'मृते म्रियेत या नारी सा विज्ञेया पतिव्रता' इति स्मरणान्ममायं धर्म एव । तथाच तादृशधर्मप्रवर्तकस्य तव सुकृतं किं वर्णनीयमिति भावः । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । एतदारभ्य श्लोकचतुष्टयपर्यन्तं वसन्ततिलकावृत्तम् ॥

ननु तथापि हिंसा मह्यं न रोचत इत्याशङ्क्य तत्रोपपत्तिमाह—

**साधारणी क्षितिभुजां मृगयेति पूर्व-**
**मुक्ता त्वयैव जनसंसदि सत्यवादिन् ।**
**शाखामृगीं तदिह मारय मां शरेण**
**को नाम राम मृगयुर्दयते मृगीणाम् ॥ १६ ॥**

**साधारणीति** । हे सत्यवादिन् यथार्थभाषणशील । अतस्त्वया सत्यमेव सर्वथा परिपालनीयमिति भावः । ताच्छील्ये णिनिः । क्षितिभृतां राज्ञां मृगयाखेटः । 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इत्यमरः । साधारणी सकलसंमता । 'मृगयाघाय न भूभृतां घ्नताम्' इति तस्या न्याय्यत्वादिति भावः । 'अग्नीन्द्रसाधारणादञ्वक्तव्यः' इति विकल्पात्पक्षे ङीप् । इत्येवं पूर्वं पुरा त्वयैव त्वन्मुखेनैव जनसंसदि जनसमाजे । न त्वसाक्षिकमित्यर्थः । उक्ता । 'यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः' इति कथितेत्यर्थः । तत्तस्मात्कारणादिहेदानीं शाखामृगीं वानरीम् । 'जातेरस्त्रीविषयादयोपधात्' इति ङीप् । मां शरेण बाणेन मारय विदारय । प्राणैर्वियोजयेत्यर्थः । युक्तं चैतदित्यर्थान्तरं न्यस्यति—हे राम, को नाम को वा । मृगान्यातीति मृगयुर्मृगसंहरणशीलः । 'मृगय्वादयश्च' इत्यौणादिकः कुप्रत्ययान्तो निपातः । मृगीणां मृगाङ्गनानां दयते दयां कुरुते । दयया मृगाङ्गनाः को वा मृगयुरुपेक्षत, इत्यर्थः । अतस्त्वं सत्यवचनानुसारेणावश्यं मां प्रहरेति भावः । दयाक्रियां प्रति कर्मत्वेऽपि 'अनुकरोति भगवतो नारायणस्य' 'तस्य वानुकरोति' इत्यादिवत्संबन्धमात्रविवक्षायां मृगीणामिति षष्ठी न विरुध्यते । यथाह भारविः— 'सा लक्ष्मीरुपकुरुते यया परेषाम्' इति । तथा श्रीहर्षेण च–'साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् । सकुतूहलि तस्य मनश्चलितं चरितं महात्मनां श्रोतुम् ॥' इति ॥

संप्रति वालिप्रहरणप्रयुक्ताभिमानोऽपि न कार्य इत्याह—

**संत्रस्य पूर्वममुतस्तव बन्धुरेष**
**भेजे यथाद्रिमकुतोभयमृष्यमूकम् ।**

१. 'क्षितिभृताम्' इति पाठः. २. 'उक्तम्' इति पाठः.

भर्ता ममायमपि राम शरैरभेद्यं
प्राप्तो मदीयहृदयच्छलमद्रिदुर्गम् ॥ १७ ॥

संत्रस्येति। हे राम, एषोऽयं तव बन्धुः सुहृत्सुग्रीवः । पूर्वममुतोऽमुष्माद्वालिनः। 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चम्यास्तसिः । संत्रस्य संत्रासं प्राप्य यथा येन प्रकारेण। नास्ति कुतोऽपि भयमत्रेत्यकुतोभयम्। वालिभयशङ्काशून्यमित्यर्थः। मयूरव्यंसकादिषु निपातनात्साधुरित्युक्तम्। ऋश्यमूकमद्रिम्। गिरिदुर्गमित्यर्थः। भेजे प्राप। तथायं मम भर्ता प्राणेश्वरो वाल्यपि अमुतोऽमुष्मात्त्वत्तः सुग्रीवाद्वा। संत्रस्य शरैस्तावकबाणैरभेद्यं भेत्तुमशक्यमिति काठिन्यातिशयोक्तिः। अकुतोभयमित्यर्थः । मदीयहृदयं मामकमानसमिति छलं कपटं यस्य तत्तथोक्तमद्रिदुर्गं प्राप्तः प्रविष्टः। अतो मद्धृदयप्रहरणे तद्गतस्यापि प्रहरणसंभवात्तवायमभिमानो युज्यत इति भावः। मृतोऽपि मद्धृदयादनपेतो मत्प्राणेश्वर इति फलितोऽर्थः। अत्र छलशब्देन हृदयमपह्नुत्याद्रिदुर्गत्वेनासत्यत्वप्रतिपादनादपह्नवालंकारः। 'छलादिशब्दैरसत्यत्वप्रतिपादनमपह्नवः' इति सर्वस्वसूत्रम् ॥

किंच तत्प्रहरणाभावे तव धन्वित्वप्रसिद्धिरपि न सिद्ध्येदित्याह—

नाहं सुकेतुतनया न च सप्तसाली
वाली न च त्रिभुवनप्रथितप्रभावः।
तारास्मि वज्रहृदया विशिखैरभेद्या
धन्वी कथं भवसि राघव मामविद्ध्वा ॥ १८ ॥

नेति। अहं सुकेतुतनया ताटका न। न भवामीत्यर्थः। 'यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम्' इत्युक्तं बालकाण्डे। तथा सप्तानां सालानां समाहारः सप्तसाली। सालतरुश्रेणिश्च न न भवामि। अत्र पञ्चवटीवत्प्रक्रिया। तथा त्रिभुवनप्रथितप्रभावः। सकललोकविख्यातप्रतापशालीत्यर्थः। वाली च न न भवामि। यद्येवं तर्हि त्वयाहमपि प्रहृता स्यामिति भावः। अत्र वालिनो विशेषेणोपादानान्नायुक्तग्रहणदोषः। तस्य महत्त्वप्रतिपादनाय स्वभावोक्त्यर्थत्वात्। तदुक्तं रसाकरे—'ध्वन्यत्वादे रसोत्कर्षे भावोक्तौ दोषवारणे। विशेषणं विशेष्यस्य नास्त्ययुक्तगुणग्रहः॥' इति गुणो विशेषणम्। किंतु वज्रहृदया वज्रवत्कठोरहृदया अतएव विशिखैर्बाणैरभेद्या भेत्तुमशक्या तारास्मि । अतः हे राघव, मामेतादृशीमविद्ध्वा असंहृत्य धन्वी धानुष्कः कथं भवसि। न भवस्येवेत्यर्थः। वेध्यवेधने कः समर्थो भवेत्। अतो मामवेध्यां विद्ध्वा आत्मनो धन्वित्वप्रथां दृढीकुर्ष्वेत्यर्थः ॥

इत्थमुपालम्भेऽपि तूर्ष्णीं तिष्ठन्तमुद्वीक्ष्योत्प्रेक्षते—

क्षितिपतितनयानां हन्त गर्भेश्वराणां
किमु निरवधि मौग्ध्यं शौर्यवज्जन्मसिद्धम्।

---

१. 'सलम्' इति पाठः.

१५-च.

मम हृदि निरपाये वर्तमाने कपीन्द्रे
रघुवर यदमुष्मै तिष्ठसे चापपाणिः ॥ १९ ॥

**क्षितिपतीति**। गर्भेश्वराणां गर्भमारभ्यैश्वराणाम्। जन्मप्रभृत्यैश्वर्यसंपन्नानामित्यर्थः। क्षितिपतितनयानां राजकुमाराणां निरवधि निर्मर्यादम्। महत्तरमित्यर्थः। मौग्ध्यं विचारमूढत्वम्। 'मुग्धः सुन्दरमूढयोः' इति विश्वः। शौर्येण तुल्यं शौर्यवदित्युपमा। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। जन्मसिद्धं किमु स्वभावसिद्धं किम्। हन्तेति विषादे। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः। कुतः। यद्यस्मात्कारणात् हे रघुवर रघुनायक, निरपाये निरातङ्के इति हृदयविशेषणं कपीन्द्रविशेषणं वा। मम हृदि हृदयदेशे कपीन्द्रे वालिनि वर्तमाने तिष्ठति सति। अमुष्मै कपीन्द्राय चापं पाणौ यस्य स चापपाणिः सन्। पुनः पुनः प्रहर्तुमिति भावः। 'सप्तम्युपमान–' इत्यादिना बहुव्रीहिः। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति वक्तव्यात्पाणिशब्दस्योत्तरनिपातः। तिष्ठसे। आत्मानं प्रकाशयन्वर्तस इत्यर्थः। तस्मादसाध्यसाधने प्रवृत्तत्वात्तवापि राजपुत्रस्य शौर्यवन्मौग्ध्यमाजन्मसिद्धमिति भावः। सर्वथा मदीयहृदयविदारणं कर्तव्यमिति प्रलापवाक्यसमुदायार्थः। तिष्ठतेर्लट्। 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम्। अत्र स्वाभाविकश्रीरामावस्थानस्य निजहृदयस्थवालिप्रहरणत्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारः। मालिनीवृत्तम् ॥

एवं विलपन्त्या हारायिताश्रुधारायास्तारायाः परिदेवनरवैर्बाष्पाम्बुकणाभ्युक्षणैरक्षीणैर्निश्वासानिलैश्च कृताश्वास इव लब्धसंज्ञो वाली निजनन्दनं रघुनन्दने समर्प्याङ्गदमङ्गसङ्गिनीं कांचन काञ्चनस्रजं शोकावनतग्रीवाय सुग्रीवाय दत्वा निजभुजबलप्रशान्तासुरोऽयं प्रशान्तासुरभूत् ॥

**एवमिति**। एवमुक्तप्रकारेण विलपन्त्याः परिदेवयन्त्या हारा इवाचरन्त्यो हारायिता अश्रुधारा बाष्पसंपाता यस्यास्तस्याः। सप्रलापं रुदन्त्या इत्यर्थः। तारायाः संबन्धिभिरक्षीणैरविच्छिन्नैरिति सर्वत्र संबध्यते। परिदेवनरवैर्विलापाक्रन्दैर्बाष्पाम्बुकणाभ्युक्षणैरश्रुबिन्दुसेकैर्निश्वासानिलैर्निश्वासमारुतैश्च। मूर्च्छितोज्जीविकोपचारप्रायैरिति भावः। कृताश्वासः पुनरुज्जीवित इवेत्युत्प्रेक्षा। लब्धसंज्ञः उक्तविवेकशाली वाली निजनन्दनमात्मजमङ्गदं रघुनन्दने श्रीरामाय। अधिकरणविवक्षायां सप्तमी। समर्प्य। बालोऽयं त्वया रक्षणीय इति तदधीनं कृत्वेत्यर्थः। तथा रामायणम्— 'बालश्चाकृतबुद्धिश्च ह्येकपुत्रश्च मे प्रियः। तारेयो राम भवता रक्षणीयो महाबलः ॥ सुग्रीवे चाङ्गदे चैव निधत्स्व मतिमुत्तमाम् ॥' इति। तथाङ्गसङ्गिनीं कण्ठप्रालम्बिनीं कांचन कामपि काञ्चनस्रजं हेममालाम्। इन्द्रदत्तामित्यर्थः। शोकावनतग्रीवाय

१. 'अक्षीणश्वासानिलैः' इति पाठः. २. 'इक्ष्वाकुनन्दने' इति पाठः. ३. 'मालाम्' इति पाठः. ४. 'अयम्' इति नास्ति क्वचित्.

भ्रातृनिधनकारित्वप्रयुक्तशोकावनतकंधराय सुग्रीवाय दत्वा । तत्कंधरायामासज्येत्यर्थः । 'इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीम्' इत्यादि रामायणे । निजभुजबलेन स्वकीयबाहुपराक्रमेण प्रशान्ता विनिहता असुरा यस्य तथोक्तः । महावीर इत्यर्थः । अयं वाली प्रशान्तासुरुत्क्रान्तप्राणोऽभूत् । मृतोऽभवदित्यर्थः ॥

**तत्र हा सकलभुवनबहुमतबाहुबल गोलभगन्धर्वसिन्धुरपञ्चताकरणपञ्चानन दशमुखभुजभुजङ्गभोगनिरोधाहितुण्डिकायितबालवलय वालिन्, कथं गतोऽसीति बाष्पाविलमुखा वलीमुखास्तस्य रामाज्ञया यथाभिप्रेतं प्रेतकृत्यं सर्वं निर्वर्तयामासुः ॥**

तत्रेति । तत्र तस्मिन्वालिमरणसमये । हेति खेदे । 'अहहेत्यद्भुते खेदे' इत्यमरः । सकलभुवनबहुमतबाहुबल अशेषलोकश्लाघनीयभुजशक्तिसंपन्न । तथा गोलभनामा यो गन्धर्वो देवयोनिविशेषः स एव सिन्धुरो गजस्तस्य पञ्चताकरणपञ्चानन निधनविधानसिंह इति श्लिष्टपरम्परितरूपकम् । तद्विनाशकेत्यर्थः । 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः । तथा दशमुखभुजा रावणबाहव एव भुजङ्गभोगाः सर्पकायाः । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । तेषां निरोधे नियन्त्रणे अहितुण्डिको व्यालग्राही तद्वदाचरितमहितुण्डिकायितं बालवलयं लाङ्गूलमण्डलं यस्य स तथोक्तेति संबोधनत्रयम् । अत्र रूपकोपमयोः संकरः । 'विषवैद्यो जाङ्गलिको व्यालग्राह्यहितुण्डिकः' इत्यमरः । कथं गतोऽसि एतादृशवीर्यसंपन्न कुतो मृतोऽसीति बाष्पाविलमुखा अश्रुपरिवृताननाः वलीमुखा वानरा रामाज्ञया तस्य वालिनः । अभिप्रेतमनतिक्रम्य यथाभिप्रेतम् । यथार्हमित्यर्थः । प्रेतकृत्यं दहनादिप्रेतसंस्कारं सर्वं निर्वर्तयामासुः । चक्रुरित्यर्थः ॥

**ततो जाम्बवत्प्रमुखा वलीमुखगणा दाशरथिनिदेशात्सुग्रीवं काञ्चनकलशोदकैरभ्यषिञ्चन् ॥**

तत इति । ततस्तदनन्तरं जाम्बवत्प्रमुखा जाम्बवदादयो वलीमुखगणा वानरसङ्घा दाशरथिनिदेशाच्छ्रीरामाज्ञावचनात्सुग्रीवं काञ्चनकलशोदकैः शातकुम्भसंभृततीर्थजलैरभ्यषिञ्चन् । वानरसाम्राज्याभिषिक्तं चक्रुरित्यर्थः ॥

**अभिषिक्ते तु सुग्रीवे रामश्यामपयोमुचा ।**
**अभिषेक्तुं स्थिता मेघास्तन्महीं महिषीमिव ॥ २० ॥**

अभिषिक्त इति । सुग्रीवे । तुशब्दोऽवधारणार्थकः । सुग्रीव एवेत्यर्थः । 'तु स्याद्भेदेऽवधारणे' इत्यमरः । राम एव श्यामपयोमुक् नीलमेघस्तेनाभिषिक्ते सति । मेघा जलदास्तन्महीं तस्य सुग्रीवस्य महीं महिषीं राज्ञीमिव । अभिषेक्तुं स्थिताः प्रवृत्ताः । श्रीरामजलदेन केवलसुग्रीवाभिषेके कृते जलदानां तन्महिष्यभिषेकप्रवृत्तिर्युक्तैवेति भावः । वर्षासमयः संप्राप्त इति फलितार्थः । रूपकोत्प्रेक्षयोः संकरः ॥

---

१. 'बलानलशलभायिताहितबलललितगन्धर्व' इति पाठः. २. 'निरोधायाहि' इति पाठः. ३. 'विलयं कथं' इति पाठः. ४. 'सर्वे' इति पाठः. ५. 'ततः' इत्यादि. ६. 'अभ्यषिञ्चन्' इत्यन्तं क्वचिन्नास्ति.

आर्यार्यान्वेषणा कार्या शरदीत्युक्तसंविदा ।
कपीन्द्रेणार्थितो रामः किष्किन्धावर्तनं प्रति ॥ २१ ॥

आर्येति । हे आर्य स्वामिन् श्रीराम, शरदि शरत्काले । आर्यायाः सीताया अन्वेषणा गवेषणा कार्या कर्तव्या । तदानीं कार्यसौकर्यादिति भावः । इत्येवमुक्तसंविदा विज्ञप्तप्रतिज्ञानेन । 'संविदागूः प्रतिज्ञानम्' इत्यमरः । कपीन्द्रेण सुग्रीवेण कारुणिकः श्रीरामः किष्किन्धावर्तनं प्रति किष्किन्धाप्रवेशमुद्दिश्यार्थितो याचितः ॥

ततः किं तत्राह—

न योग्या नगरप्राप्तिरित्युक्तवति राघवे ।
सुग्रीवप्रार्थनाप्यासीद्भरतप्रार्थनासमा ॥ २२ ॥

नेति । नगरप्राप्तिः पट्टणप्रवेशः योग्या अर्हा न न भवति । पितृनिदेशपरिपालनार्थं वनवासिनो मम पट्टणप्रवेशानर्हत्वादिति भावः । तथाच श्रीरामायणम् —'चतुर्दश समाः सौम्य ग्रामं वा यदि वा पुरम् । न प्रवेक्ष्यामि हनुमन्पितुर्निर्देशपालकः ॥' इति । इत्येवं राघव उक्तवति सति । सुग्रीवप्रार्थनापि भरतप्रार्थनया समा सदृश्यभूत् । यथा भरतप्रार्थनया श्रीरामोऽयोध्यां न प्रविष्टवान्, तथा सुग्रीवप्रार्थनया किष्किन्धामपि न प्रविष्टवानित्यर्थः । उपमालंकारः । तथाच भरतस्य सुग्रीवौपम्यं श्रीरामस्य दृढव्रतत्वं च गम्यते ॥

अथ वर्षर्तुं वर्णयति—

दत्तार्जुनविकासेन धार्तराष्ट्रान्निरस्यता ।
तेन जीमूतकालेन देवकीनन्दनायितम् ॥ २३ ॥

दत्तेति । दत्तोऽर्जुनविकासः पार्थमानसोल्लासः । अन्यत्र ककुभतरुपुष्पविकसनं च येन तथोक्तेन । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः' इत्यमरः । धार्तराष्ट्रान्नीलचञ्चुचरणहंसविशेषान् । अन्यत्र धृतराष्ट्रापत्यानि दुर्योधनादीन् । निरस्यता निराकुर्वता । 'राजहंसास्तु ते चञ्चूचरणैर्लोहितैः सिताः । मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ॥' इत्यमरः । तेन प्रक्रान्तेन प्रसिद्धेन वा । जीमूतकालेन वर्षासमयेन देवकीनन्दनेन श्रीकृष्णेनेवाचरित देवकीनन्दनायितम् । उक्तरीत्या श्रीकृष्णकल्पो वर्षासमयः प्रवृत्त इत्यर्थः । 'कर्तुः क्यङ् सलोपश्च' । 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः । अतो भावे क्तः । जीमूतशब्दो व्याख्यातः । श्लिष्टविशेषणेयमुपमा श्लेषो वा मतभेदात् ॥

अस्माकं रूपलक्ष्मीमसकृदपहसत्यात्मकान्त्या तदास्तां
भर्तारं नः सुरेन्द्रं किमपि न गणयन्वालिनं द्राग्जघान ।
इत्थं मत्वैव वैरं झटिति घनघटा राघवस्याहवोत्थामाशामाशाश्च रुद्ध्वा स्तनितमिषमहासिंहनादान्वितेनुः ॥ २४ ॥

अस्माकमिति । अस्माकं रूपलक्ष्मीमाकारशोभामात्मकान्त्या निजदेहभासा ।

१. 'तत्र आस्माकीम्' इति पाठः. २. 'नादं ततान' इति पाठः.

इन्द्रनीलसच्छाययेति भावः । असकृद्बहुवारमपहसत्यपहासं करोति । तदपहसनमास्तां तिष्ठतु । किंतु नोऽस्माकं भर्तारं स्वामिनं सुरेन्द्रं देवराजं किमपि किंचिदपि न गणयन् । न लक्षीकुर्वन्निति भावः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । वालिनम् । तत्पुत्रमिति भावः । द्राक् द्रुतम् । अविचार्येत्यर्थः । जघान हिंसितवान् । 'द्राङ् मङ्क्षु सपदि द्रुतम्' इत्यमरः । इत्थमनेन प्रकारेण वैरं विरोधं मत्वा झटिति शीघ्रं घनघटा मेघवृन्दानि आहवोत्थां युद्धसमुत्थितां राघवस्याशां वाञ्छाम् । उत्साहमिति यावत् । आशा दिशश्च । 'आशा दिगतितृष्णयोः' इति रत्नमाला । रुद्ध्वा निरुध्य । वर्षासमये जैत्रयात्राया अनुपयुक्तत्वादिति भावः । स्तनितमिषेण । गर्जितव्याजेन महासिंहनादान्वितेनुश्चक्रुः । इति सापह्नवोत्प्रेक्षा । स्रग्धरावृत्तम् । लक्षणं तूक्तम् ॥

तत्र तस्मिन्समये—

**उपचितजीवनधारा सत्पथभाजो निरस्तसंतापाः ।**
**भूपा इव नवमेघाः पौरस्त्यमहाबलाकुलिताः ॥ २५ ॥**

**उपचितेति** । उपचितजीवनधाराः प्रवृद्धोदकसंपाताः । अन्यत्र उपचिता जीवनधारा दानोदकधारा यैस्ते तथोक्ताः । निरन्तरदानशीलाः । 'सर्वाण्युदकपूर्वाणि दानानि' इत्युदकधारापूर्वकत्वात्सर्वेषां दानानामिति भावः । अथवा उपचिता धर्माचरणादिना वर्धिता जीवनधारा आयुर्दैर्घ्यं यैस्ते तथोक्ताः । तथा सत्पथभाज आकाशमार्गसंचारिणः । अन्यत्र सन्मार्गवर्तिनः । निरस्तसंतापा निर्वासितपरितापाः । अन्यत्र निरस्ताश्रितजनमनःपरितापाः । तथा पौरस्त्यमहाबलाकुलिताः पौरस्त्यः पूर्वदिग्भवः प्राच्यः । अग्रत उत्पन्न इत्यर्थः । 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक्प्रत्ययः । तादृशो यो महाबलो वायुस्तेनाकुलिता उद्धताः । अन्यत्र रलयोरभेदात्पौलस्त्यस्य रावणस्य महाबलेन प्रभूतबाहुपराक्रमेणाकुलिता विह्वलीकृताः । नवमेघाः नूतनजलधराः । दिव्याकाशे भूपा राजान इव जाता इति शेषः । श्लेषसंकीर्णेयमुपमा । आर्यावृत्तम् ॥

**तेन किल रघुपतिरतिमात्रप्रवृद्धमन्युः शतमन्युशरासनशारतरतारापथां घनरवमुखरितहरिन्मुखाभोगां कदम्बवनपवनाकम्पनिराडम्बरकादम्बकुटुम्बामम्बुदकवलिताम्बरां शिलीन्ध्रसंबन्धबन्धुरवसुंधरां विकचकुटजनिचयकवचितमहारण्यां प्रावृषेण्यां प्रक्रियां प्रेक्षमाणो लक्ष्मणमिदमभाषत ॥**

**तेनेति** । तेन जीमूतकालेन हेतुना । किलेति संभावनायाम् । संभावितेन जीमूतकालेनेत्यर्थः । 'वार्तासंभाव्ययोः किल' इत्यमरः । रघुपतिः श्रीरामोऽतिमात्रं निर्भरं प्रवृद्धो वृद्धिं गतो मन्युः क्रोधो यस्य तथोक्तः सन् । उर्वीवकलाजैत्रयात्राप्रतिबन्धकत्वाच्च क्रुद्धः सन्नित्यर्थः । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । शतम-

---

१. 'घनतरघनरव' इति पाठः. २. 'कम्पन' इति पाठः.

न्युशरासनेनेन्द्रधनुषा शारतरोऽत्यन्तशबलवर्णस्तारापथ आकाशो यस्यां तां तथोक्ताम् । घनरवैर्घनगर्जितैर्मुखरिताः प्रतिध्वनिता हरिन्मुखाभोगा दिगन्तकुहरा यस्यां तां तथोक्ताम् । कदम्बवनपवनाकम्पेन नीपवनवायुसंचारेण निराडम्वराणि विहाराडम्वरविधुराणि कादम्वकुटुम्वानि कलहंसमिथुनानि यस्यास्ताम् । 'तूलं च नीपप्रियकदम्वाश्च हलिप्रिये', 'कादम्वः कलहंसः स्यात्' इति चामरः । अम्बुदकदम्वेन मेघवृन्देन कवलितं निगीर्णम् । आच्छादितमिति यावत् । अम्वरमाकाशं यस्यां ताम् । शिलीन्ध्रसंबन्धेन कन्दलीकुसुमसंगत्या वन्धुरा मनोहरा वसुंधरा भूर्यस्यां ताम् । वसूनि धारयतीति वसुंधरा । 'संज्ञायां भृतॄवृजि–' इत्यादिना खच्प्रत्यये मुमागमः । 'कन्दल्या च शिलीन्ध्रः स्यात्' इति शब्दार्णवे । विकचकुटजनिचयैर्विकसितगिरिमल्लिकाकुसुमनिकुरुम्बैः कवचितान्याच्छादितानि महारण्यानि यस्यां ताम् । 'कुटजो गिरिमल्लिका' इति हलायुधः । प्रावृषि भवां प्रावृषेण्याम् । 'प्रावृष एण्यः' इति एण्यप्रत्ययः । प्रक्रियां परिपाटीं प्रेक्षमाणः सन् लक्ष्मणमिदं वक्ष्यमाणवचनमभाषतावोचत् ॥

तत्प्रकारमेव विवृणोति । अयमित्यादिश्लोकषट्केन–

अयं कालः कालप्रमथनगलाभैरभिनवै-
रहंयूनां यूनामपहरति धैर्यं जलधरैः ।
स्मराधारा धारापरिचितजडा वान्ति सहसा
नभस्वन्तः स्वन्तः कथमिव वियोगः परिणमेत् ॥ २६ ॥

**अयमिति** । अयं वर्तमानः कालो वर्षासमयः कालप्रमथनगलाभैः मृत्युंजयकण्ठसच्छायैः । वारिपूरितत्वादतिनीलैरित्यर्थः । 'कालो मृत्यौ महाकाये समये यमकृष्णयोः' इति विश्वः । कुतः । अभिनवैर्नूतनैर्जलधरैः करणैः । अहंयूनामहंकारिणाम् । तारुण्यमदगर्वेणाजेयंमन्यानामित्यर्थः । 'अहंयुः स्यादहंकारी' इत्यमरः । 'अहंशुभमोर्युस्' इति युस्प्रत्ययः । यूनां तरुणानां धैर्यं धीरत्वम् । निर्विकारचित्तत्वमिति यावत् । अपहरति विलोपयति । तरुणीप्रवणान्तःकरणान्करोतीत्यर्थः । 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः । तथा स्मराधाराः । मन्मथोद्दीपका इत्यर्थः । धारापरिचयजडा[1] वारिसंपर्कशीतलाः । नभस्वन्तः प्रावृड्वाताः । 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः । सहसा अकस्मात् । अतिवेगेनेत्यर्थः । 'सहसेत्याकस्मिकाविमर्शयोः' इति गणव्याख्याने । 'स्वरादिपाठादव्ययत्वम्' इति शाकटायनः । वान्ति प्रसरन्ति । अतः स्वन्तः सुखरूपः । अतिदृढ इति यावत् । 'अन्तोऽस्त्र्यपि सिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती । अथवा स्वन्तो दुरन्तः । क्षयोन्मुख इति यावत् । वियोगो विरहखेदः । कथमिव कुतो वा । इवशब्दो वाक्यालंकारे । परिणमेत्परिपाकं गच्छेत् । अतिक्रान्तो भवेदिति यावत् । न परिणमेदेवेत्यर्थः । सत्त्वामुद्दीपनसामग्र्यां तस्य दुस्तरत्वादिति भावः । छेकानुप्रासोऽलंकारः । 'भवेद-

१. 'परिचय' इति पाठः.

व्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः आवृत्तिर्यत्र स बुधैश्छेकानुप्रास इष्यते ॥' इति लक्षणात्। शिखरिणीवृत्तम् ॥

**महासमरसूचकः प्रतिदिशं मनोजन्मनो**
**मयूरगलकाहलीकलकलः समुज्जृम्भते।**
**पयोदमलिने दिने परुषविप्रयोगव्यथां**
**नरेषु वनितासु वा दधति हन्त के का इति ॥ २७ ॥**

**महासमरेति।** प्रतिदिशं दिशि दिशि मनोजन्मनो मन्मथस्य। जगदेकवीरस्येति भावः। महासमरसूचको महारणज्ञापको मयूरगलकाहलीकलकलो मयूरगलाः नीलकण्ठकण्ठा एव काहल्यो वाद्यविशेषास्तासां कलकलः कोलाहलः। केकारवाडम्बर इति यावत्। समुज्जृम्भते विजृम्भितो भवति। 'काहलं भृशशुष्कयोः। वाद्यभाण्डविशेषे तु काहलिः काहलः कलः ॥' इति विश्वः। 'कोलाहलः कलकलः' इत्यमरश्च। किमिति समुज्जृम्भित इत्यत आह—पयोदमलिने दिने। वार्षिकवासरेष्वित्यर्थः। परुषविप्रयोगव्यथां दुःसहविरहवेदनां नरेषु पुरुषेषु मध्ये वनितासु स्त्रीषु वा मध्ये के नराः का वा वनिता दधति धारयन्ति। हन्तेति विषादे। तेषां तासां च संहारकालस्य संप्राप्तत्वाद्विषाद इत्यर्थः। इत्येवं समुज्जृम्भत इति संबन्धः। के मूर्ध्नि कायति कूजतीति केका मयूरवाणी। यथाहामरसिंहः—'केका वाणी मयूरस्य' इति। तादृशीं वाणीं पदशो विभज्य नरवनितावाचकत्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारः। स च नरेषु के वनितासु का इति च यथाक्रममन्वयाद्यथासंख्यालंकारेणाङ्गेन संकीर्यते। पृथ्वीवृत्तम् ॥

**अम्भोधरोदरविनिर्गतवारिधारा-**
**संमर्दमांसलसमीरसमीर्यमाणैः।**
**आमोदवीचिनिचयैः कुटजप्रसूनै-**
**राकाशमेतदवकाशविहीनमासीत् ॥ २८ ॥**

**अम्भोधरेति।** अम्भोधरोदरेभ्यो जलधरगर्भगह्वरेभ्यो विनिर्गता विनिःसृताः या वारिधारास्ताभिः सह संमर्दे संग्रामकरणे मांसलो बलवान्। वारिधाराविभेदकतया प्रवृत्त इत्यर्थः। मांसं बलमस्यास्तीति मांसल इति विग्रहः। सिध्मादित्वान्मत्वर्थीयो लच्प्रत्ययः। 'बलवान्मांसलोंऽसलः' इति वृत्तिकारः। 'बलवान्मांसलोंऽसलः' इत्यमरश्च। तेन समीरेण वायुना समीर्यमाणैरामोदवीचीनां गन्धपरम्पराणां निचयः समुदायो येषां तैः। अविच्छिन्नगन्धबन्धुरैरित्यर्थः। 'आमोदो गन्धहर्षयोः' इति विश्वः। कुटजप्रसूनैर्गिरिमल्लिकाकुसुमैः। 'जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका' इत्यमरः। एतत्परिदृश्यमानमिव स्थितमाकाशं नभोऽवकाशविहीनं नीरन्ध्रमासीत्। अत्राकाशस्यावकाशविहीनत्वासंबन्धेऽपि तत्संबन्धकथनादतिशयोक्तिभेदः। वसन्ततिलकावृत्तम् ॥

**घनश्यामलपत्रस्य व्योमन्यग्रोधशाखिनः।**
**प्ररोहा इव लक्ष्यन्ते वारिधारा धरां गताः ॥ २९ ॥**

घनेति । धरां भुवं गताः प्राप्ता वारिधाराः रोदोन्तराले दण्डायमानतया प्रवृत्ता उदकधाराः, घना मेघा एव श्यामलपत्राणि नीलपलाशानि यस्य तस्य । अन्यत्र घनवच्छ्यामलानि अथवा घनानि सान्द्राणि श्यामलानि च पत्राणि यस्य तत्तथोक्तस्य व्योम्न आकाशस्येव न्यग्रोधशाखिनो वटवृक्षस्य । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । प्ररोहा जटा इव लक्ष्यन्ते दृश्यन्ते । तथा वारिधाराणां प्रवृत्तत्वात्प्ररोहत्वोत्प्रेक्षा रूपकानुप्राणितेति संकरः । अत्र इवशब्द उत्प्रेक्षायाम् । 'इवेतीषदर्थोपमोत्प्रेक्षावाक्यालंकारेषु' इति गणव्याख्याने ॥

अम्भःपूरसुसंपूर्णास्तटस्थतरुपुष्पिणीः ।
नदीः पश्येह सौमित्रे प्रवृद्धाश्च दिने दिने ॥ ३० ॥

अम्भ इति । हे सौमित्रे लक्ष्मण, इह प्रावृट्काले अम्भःपूरेण पयःप्रवाहेण सुष्ठु संपूर्णाः सुसंपूर्णाः । तटे तिष्ठन्तीति तटस्थानां तीररुहाणां तरूणां कदम्बकुटजादिवृक्षाणां पुष्पाण्यासु सन्तीति तटस्थतरुपुष्पिणीः । वायुवशान्निपतितपुष्पव्याप्ता इत्यर्थः । तथा दिने दिने प्रतिदिनम् । वीप्सायां द्विर्भावः । प्रवृद्धाः प्रवृद्धिं गता नदीश्च पश्य । अत्रायं ध्वनिः—अम्भःपूरसुसंपूर्णाः । मदनरसातिरेकवतीरित्यर्थः । तटशब्देनात्र निकटं प्रतीयते । तटस्था निकटस्थाः । अनपायिन इति यावत् । ते तरवस्तरुवत्स्थिताः प्रिया यासां तास्तथोक्ताः । अतएव पुष्पिणीः विकासवतीरिति बहुव्रीहिगर्भितविशेषणसमासः । अतः प्रवृद्धाः केलिलाभाद्वृद्धिं गता नदीः स्त्रियः पश्येति ॥

अम्भोधिपाने सलिलेन साकमापीतमौर्वाग्निशिखाकलापम् ।
तप्तोदरा वारिधरा वमन्ति विद्युल्लतोन्मेषमिषेण नूनम् ॥ ३१ ॥

अम्भोधीति । अम्भोधिपाने समुद्रजलपानसमये सलिलेन साकमापीतं निपीयमानमौर्वाग्निशिखाकलापं वडवानलज्वालाजालं कर्म । 'और्वस्तु वाडवो वडवानलः' इत्यमरः । वारिधरा मेघास्तप्तोदराः संतप्तकुक्षिकुहराः सन्तः । विद्युल्लतोन्मेषमिषेण तडिल्लतास्फुरणव्याजेन वमन्त्युद्गिरन्ति । बहिर्निर्गमयन्तीत्यर्थः । अत्र लालादिनिरसनवाचिना वमनशब्देनोपचारान्निर्गमनमात्रमुच्यत इति चारुत्वातिशयः । तदुक्तं दण्डिना—'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति । नूनमित्युत्प्रेक्षायाम् । सा च मिषशब्देन विद्युल्लतोन्मेषमपह्नुत्यासत्यत्वप्रतिपादनात्सापह्नवोत्प्रेक्षेति संकरः ॥

अथ जैत्रयात्रोपयोगी शरत्कालः संप्राप्त इति वक्तुं वर्षापगमं वर्णयति—

इत्थं प्रवृत्तेषु घनदिनेषु दाशरथिना कथमपि नीतेषु तदाकारकान्तिं गमितमिव शनैःशनैर्मेघमण्डलं पाण्डुरमभूत् ॥

इत्थमिति । इत्थमुक्तप्रकारेण प्रवृत्तेषु घनदिनेषु मेघाकुलितदिवसेषु । वार्षिकवासरेष्वित्यर्थः । दाशरथिना श्रीरामेण कथमपि गरीयसा प्रयत्नेन । अत्यन्त-

---

१. 'अयं श्लोकः क्वचिन्न दृश्यते'. २. 'कान्तिविजितमिव' इति पाठः.

प्रयासेनेत्यर्थः। नीतेषु गमितेषु सत्सु। अतएव तदाकारकान्तिं तस्य श्रीरामस्याकारकान्तिं शरीरशोभाम्। विरहजनितपाण्डुरप्रभामित्यर्थः। गमितं प्रापितमिवेत्युत्प्रेक्षा। 'संसर्गजा दोषगुणा भवन्ति' इति न्यायादिति भावः। शनैः शनैर्दिनक्रमेण। वीप्सायां द्विर्भावः। मेघमण्डलं पाण्डुरं धवलवर्णमभूत्। 'वलक्षो धवलोऽर्जुनः। हरिणः पाण्डुरः पाण्डुः' इत्यमरः॥

**तस्य चापव्यापारवेलायां न संनिधातव्यमित्यन्तरिक्षादन्तर्हितं किल पाकशासनशरासनम्॥**

तस्येति। तदा तस्य श्रीरामस्य चापव्यापारवेलायां शरासनोद्योगकाले न संनिधातव्यं संनिधौ न स्थातव्यम्। न प्रत्यक्षे भवितव्यमिति यावत्। महद्व्यापारकाले स्वव्यापारस्यायुक्तत्वादिति भावः। इति किल। इति मत्वेत्यर्थः। कीलेत्यलीके। वस्तुतस्तु न तथेति भावः। एवमुत्तरत्रापि व्याख्येयम्। अतएवोत्प्रेक्षा। अन्तरिक्षादाकाशात्तत्सकाशात्पाकशासनशरासनमिन्द्रधनुरन्तर्हितमपगतम्। अदृश्यतां गतमित्यर्थः॥

**रघुपतिचापघोषसमयो भवितेति किल**
**व्युपरतमुद्भटं घनघटाजनितं स्तनितम्।**
**श्वसितमरुद्भिरस्य विजितः किल शान्तिमगा-**
**त्परिचितकेतकीकुटजनीपवनः पवनः॥ ३२॥**

रघुपतीति। रघुपतिचापघोषस्य श्रीरामधनुष्टंकारस्य समयः कालो भविता भविष्यति। प्रत्यासन्न इत्यर्थः। भुवो लुट्। इति किल। एवं मत्वेत्युत्प्रेक्षा। उद्भटमुज्जृम्भितं घनघटाजनितं मेघवृन्दसमुद्भूतं स्तनितं गर्जितं व्युपरतं विनिवृत्तम्। प्रशान्तमभूदित्यर्थः। तथास्य विरहिणः श्रीरामस्य श्वसितमरुद्भिर्निश्वासमारुतैः। अविच्छिन्नतया प्रवर्तमानैरिति शेषः। विजितः किल निर्जित इवेत्युत्प्रेक्षा। परिचितानि परिशीलितानि केतकीकुटजनीपवनानि केतकीनां कुटजानां गिरिमल्लिकानां नीपानां कदम्बानां च वनानि येन स तथोक्तः। पवनो वायुश्च शान्तिमगादुपरतोऽभूत्। वृत्तमुक्तेयम्॥

**तापोपशान्तिनटनात्कृतलोकहर्षा**
**वर्षानटी गगनरङ्गतलात्प्रयाता।**
**अम्भोदवाद्यमचिरेण शशाम सर्वं**
**निर्वापिताश्च सहसैव तडित्प्रदीपाः॥ ३३॥**

तापेति। वर्षाः प्रावृडेव नटी नर्तकी। 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः। तापोपशान्तिः संतापोपशमनमेव नटनं नाट्यं तस्माद्धेतोः। 'ताण्डवं नटनं नाट्यम्' इत्यमरः। कृत उत्पादितो लोकानां जनानां प्रेक्षकाणां च हर्ष आनन्दो यया सा तथोक्ता सती। रज्यन्तेऽस्मिन्नटा इति रङ्गो नाट्यस्थानम्।

---

१. 'चापस' इति पाठः. २. 'अन्तरिक्षान्तरात्' इति पाठः. ३. 'भिया व्युपरत' इति पाठः. ४. 'अत्र' इति पाठः.

'रङ्गौ तु स्थानरागौ च' इति वैजयन्ती । तस्य तलं प्रदेशः । गगनमेव रङ्गतलं तस्मात्प्रयातापगता । अभूदिति शेषः । तथा सर्वमशेषमम्भोद एव वाद्यं वीणावेणुमृदङ्गादि । सर्वाण्यप्यम्भोदवाद्यानीत्यर्थः । अचिरेण सहसा शशाम शान्तिं जगाम । तथा तडितो विद्युत एव प्रदीपा दीपज्वालाश्च सहसा क्षिप्रमेव निर्वापिताः । प्रशान्ता इत्यर्थः । एवं समस्तवस्तुवर्ति सावयवरूपकम् । वस्तुतस्तु रूपकोपमयोः साधकबाधकप्रमाणाभावात्संदेहालंकारः । वसन्ततिलकावृत्तम् ॥

**क्रमेण वाहिनीजातं सकलं भाविनीं वानरवाहिनीपूर्तिमसहमानमिव तनिमानमभजत ॥**

**क्रमेणेति ।** सकलमशेषं वाहिनीजातं नदीव्यूहः कर्तृ । सर्वा अपि नद्य इत्यर्थः । भाविनीं भविष्यन्तीम् । 'भविष्यति गम्यादयः' इति भविष्यदर्थे णिनिः । वानरवाहिनीपूर्तिं कपिसेनानदीपूरणमसहमानममृष्यमाणमिवेत्युत्प्रेक्षा । वाहिनीजातस्य । वाहिन्यन्तरपूर्त्यसहनं युक्तमेवेति भावः । क्रमेण दिनक्रमेण तनिमानं तनुत्वमभजत । 'सेनानद्योश्च वाहिनी' इति वैजयन्ती ॥

**तथा[1] दुर्दिनापाये लङ्कायामपि राजहंसनिःशङ्कसंचारो भविष्य[2]तीति मत्वा किल भूम्यामपि समजनि राजहंसनिःशङ्कसंचारः ॥**

**तथेति ।** तथा दुर्दिनानां मेघच्छन्नदिवसानां रावणकृतान्तकदुष्टदिवसानां चापायेऽपगमे सति । एकत्र शरदागमवशात्, अन्यत्र श्रीरामविक्रान्तिवशाच्चेति भावः । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः । लङ्कायां रावणपुर्यामपि । सातङ्कसंचारयोग्यायामपीति भावः । राजहंसयोश्चन्द्रसूर्ययोः । तथा राजहंसानां श्रीरामादिराजश्रेष्ठानां कलहंसानां चेति गम्यते । निःशङ्कसंचारो निर्भयप्रवृत्तिर्निरातङ्कविहारश्च । 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः', 'भानुर्हंसः सहस्रांशुः' इति विश्वप्रकाशामरौ । 'राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः' इत्यन्यत्र विश्वः । भविष्यतीति मत्वा । किलेत्युत्प्रेक्षा । भूम्यामपि राजहंसनिःशङ्कसंचारः कलहंसनिरातङ्कविहारो राजश्रेष्ठनिराधारजैत्रयात्रा च समजनि संजातः । जनेः कर्तरि लुङ् । 'दीपजन–' इत्यादिना च्लेश्चिणादेशः ॥

**एवं प्रोषितायामपि प्रोषितजनशेमुषीमुषि प्रावृषि ।**

**एवमिति ।** एवमुक्तप्रकारेण प्रोषितजनानां प्रवसितनराणाम् । विरहिणामिति यावत् । शेमुषीं प्रज्ञां धैर्यं मुष्णाति विलोपयतीति प्रोषितजनशेमुषीमुषि । 'मुष स्तेये' क्विप् । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । प्रावृषि वर्षर्तौ प्रोषितायामपगतायां सत्यामपि ॥

ततः किं तत्राह—

**कामक्षिप्तपृषत्कभिन्नहृदयच्छिद्रप्रणालीगल-**
**न्मैत्रीसारलवौ प्रतिश्रव[3]भरं निर्वोढुमप्यक्षमे ।**

---

१. 'तथा' इति नास्ति क्वचित्; 'तदा' इति पाठः. २. 'संभविष्यति' इति पाठः. ३. 'प्रतिश्रुतगिरम्' इति पाठः.

**सुग्रीवे [1]चिरसंस्थितां शमयितुं रागान्धतां तादृशीं**
**किष्किन्धां द्रुतमाप कोपकलुषो रामाज्ञया लक्ष्मणः ॥ ३४ ॥**

**कामेति**। कामक्षिप्ता मन्मथप्रयुक्ता ये पृषत्का बाणाः। 'पृषत्कबाणविशिखा अजिह्मगखगाशुगाः' इत्यमरः। तैर्भिन्नं विदारितं यद्धृदयं चित्तं वक्षश्च। 'हृदयं जीविते चित्ते वक्षस्याजीवभावयोः' इति शब्दार्णवः। तस्य छिद्रं रन्ध्रमेव प्रणाली जलनिर्गमनमार्गः। 'प्रणाली पयसः पदव्याम्' इत्यमरः। तया गलन्निर्गच्छन्मैत्रीसारः सख्यस्थिरांशो यस्य स तथोक्तः। अतएव लघौ निःसारे क्षुद्रे च। अविच्छिन्नकामकेलिपरतन्त्रतया विस्मृतसख्यसंबन्ध इत्यर्थः। मैत्री व्याख्याता। 'सारो बले स्थिरांशे च' इत्यमरः। अतश्च प्रतिश्रवः सीतान्वेषणाङ्गीकारः स एव भरस्तमपि। किमुतान्यदिति भावः। 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरः। निर्वोढुं समर्थयितुमक्षमेऽशक्ते सुग्रीवे चिरसंस्थितां चिरकालमारभ्य वर्तमानां तादृशीमनिर्वाच्यां रागेण स्त्रीसंभोगासक्त्या यान्धताविवेकिता तां शमयितुं निर्वापयितुम्। स्त्रीलम्पटतां निवर्त्य प्रस्तुतकार्ये प्रवर्तयितुमित्यर्थः। कोपकलुषो रोषाक्रान्तविक्षिप्तहृदयो लक्ष्मणो रामाज्ञया किष्किन्धां द्रुतमाप प्राप। शार्दूलविक्रीडितं वृत्तम् ॥

**[2]ततः सौमित्रि[3]रतिरुष्टः प्रविष्ट इत्यङ्गदेन विज्ञापितोऽप्यनङ्गसंगरसंगतपरिश्रमादजातजागरः सुग्रीवस्तद्दर्शन[4]त्राससंचलितसकलप्लवंगबल[5]किलकिलायितेन प्रबुद्धः सचिवयोः प्लक्षप्रभावनाम्नोः प्रभावेण प्रकृतिं प्रपेदे ॥**

**तत इति**। ततः सौमित्रिर्लक्ष्मणोऽतिरुष्टोऽत्यन्तरोषाविष्टः सन् प्रविष्टः किष्किन्धां प्रत्यागत इत्यङ्गदेन विज्ञापितोऽपि। अनङ्गसंगरसंगतपरिश्रमाद्रतिरणसंप्राप्तखेदाद्धेतोः। 'श्रमः खेदोऽध्वरत्यादेः' इति लक्षणात्। अजातजागरोऽनुत्पन्नप्रबोधः सुग्रीवस्तस्य रोषावेशवतो लक्ष्मणस्य दर्शनाद्यस्त्रासः साध्वसं तेन संचलितानां संभ्रान्तानां सकलानां समस्तानां प्लवंगबलानां वानरसेनानां किलकिलायितेन किलकिलध्वन्याचरणेन हेतुना। किलेत्यनुकरणशब्दः। प्रबुद्धो बोधं प्राप्तः सन्। प्लक्षः प्रभावश्चेति नामनी ययोस्तयोः सचिवयोर्मन्त्रिणोः प्रभावेणोद्वेगनिवर्तकवचनसामर्थ्येन प्रकृतिं पूर्वावस्थां प्रपेदे प्राप। तथाच रामायणम्—'सोऽयं रोषपरीताक्षो द्वारि तिष्ठति वीर्यवान्। वानरान्वानरपते चक्षुषा प्रदहन्निव ॥ तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः। गच्छ शीघ्रं महाभाग रोषो ह्यस्य निवर्त्यताम् ॥' इति ॥

**[6]तस्मिन्सुग्रीवे राघवरोषस्य कारणं निरूपयति सति [7]सद्य एव मुखरितह[8]रिन्मुखोऽभूल्लक्ष्मण[9]स्य ज्याघोषः ॥**

---

१. 'संश्रिताम्' इति पाठः. २. 'तत्र' इति पाठः. ३. 'अतीव रुष्टः' इति पाठः. ४. 'जातत्राससंकुलित' इति पाठः. ५. 'कुल' इति पाठः. ६. 'ततस्तस्मिन्' इति पाठः. ७. 'सद्य एव' इति नास्ति क्वचित्. ८. 'दिङ्मुखः' इति पाठः. ९. 'लक्ष्मणज्याघोषः' इति पाठः.

तस्मिन्निति । तस्मिंस्तथा प्रकृतिमापन्ने सुग्रीवे राघवस्य प्राणप्रियसखस्यापि लक्ष्मणस्य श्रीरामस्य वा रोषस्तस्य कारणं निरूपयति । 'न मे दुर्व्याहृतं किंचिन्नापि मे दुरनुष्ठितम् । लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥' इत्यादि रामायणोक्तरीत्या पर्यालोचयति सतीत्यर्थः । मुखरितहरिन्मुखः प्रतिनादितदिगन्तरालो लक्ष्मणस्य ज्याघोषो गुणध्वनिरभूत् । निजागमनज्ञापनार्थं लक्ष्मणो धनुष्टङ्कारं चकारेत्यर्थः ॥

तत्रासनं द्रुतमपास्य पतिः कपीनां
तत्रास नम्रवदनो घनचापघोषात् ।
संतोषमोक्षमिव भूरि भजन्भुजंगः
संतापनाशपिशुनात्तरुणाभ्रघोषात् ॥ ३५ ॥

तत्रेति । तत्र तस्मिन्समये कपीनां पतिः सुग्रीवो द्रुतं शीघ्रमासनं सिंहासनमपास्य त्यक्त्वा । आसनादुत्थायेत्यर्थः । घनचापघोषान्महाकार्मुकध्वनेर्नम्रवदनोऽवनताननः सन् तत्रास बिभाय । कथमिव । संतापनाशपिशुनाद्ग्रीष्मादिजनितसंज्वरोपशान्तिसूचकादिति विशेषणं चापघोषेऽपि योज्यम् । तरुणाभ्रघोषान्नूतनमेघगर्जिताद्भूरि भूयिष्ठं यथा तथा संतोषमोक्षमानन्दविघातं भजन्प्राप्नुवन्निति विशेषणं सुग्रीवेऽपि योज्यम् । भुजङ्गः सर्प इव । 'सर्पः पृदाकुर्भुजगो भुजङ्गः' इत्यमरः । अत्र तरुणाभ्रघोषस्य नीलकण्ठोल्लासकत्वात्तेषां च 'नीलकण्ठो भुजङ्गभुक्' इत्यभिधानाद्भुजङ्गभुक्त्वाच्च भुजङ्गत्रासहेतुत्वमवगन्तव्यम् । उपमालंकारः । वसन्ततिलकावृत्तम् ॥

तत्र प्रतिश्रुतकार्यप्रोत्साहनाय कुपितेन भ्रात्रा प्रेषित इति मारुतिना धार्यमाणधैर्यः सुग्रीवः सौमित्रिं सान्त्वयितुं तारां प्रेषितवान् ॥

तत्रेति । तत्र वित्रासनसमये प्रतिश्रुतं प्रतिज्ञातं यत्कार्यं सीतान्वेषणरूपकृत्यं तस्य । 'अङ्गीकृतमाश्रुतं प्रतिज्ञातम्' इत्यमरः । प्रोत्साहनाय प्रवर्तनार्थम् । कुपितेन विलम्बाद्रुष्टेन भ्रात्रा रामेणैष लक्ष्मणः प्रेषितः प्रहितः । इत्युक्त्वेति शेषः । मारुतिना हनूमता धार्यमाणं धारणविषयीक्रियमाणं धैर्यं यस्य तथोक्तः । मारुतिवचनात्पुनर्लब्धधैर्यः सन्नित्यर्थः । सुग्रीवः सौमित्रिं सान्त्वयितुं सामवचनैरुपलालयितुम् । 'सामसान्त्वमुभे समे' इत्यमरः । तारां निजवधूं प्रेषितवान् । प्रथमं स्वस्यैव दर्शने पुनः कोपोद्बोधो भविष्यति, स्त्रीदर्शने तु नैवमिति मत्वा तां प्रहितवानित्यर्थः । तथा रामायणम्—'त्वद्दर्शनविमुक्तात्मा न स कोपं करिष्यति । न हि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥' इत्यादि ॥

द्राग्वारुणीभजननिह्नुतराजतेजो
निष्क्रान्ततारमुपशान्ततमोविकारम् ।

---

१. 'पोपम्' इति पाठः. २. 'संतोष' इति पाठः. ३. 'ततः' इति पाठः. ४. 'कार्यस्य' इति पाठः. ५. 'प्रणयकुपितेन' इति पाठः. ६. 'प्रेषित एष इति' इति पाठः.

पूर्वाशया विशति सत्पथभाजि मित्रे
सत्यं निशान्तसमयस्य निशान्तमासीत् ॥ ३६ ॥

द्रागिति। द्रागञ्जसा वारुणीभजनेन सुरासेवनेन निह्नुतमाच्छादितं राज्ञः प्रभोः सुग्रीवस्य तेजः प्रतापो यस्य तत्तथोक्तम्, अन्यत्र वारुणीभजनेन प्रतीचीसंगत्या निह्नुतमन्तर्हितं द्विजतेजश्चन्द्रप्रकाशो यस्मिंस्तत्। 'सुरा प्रत्यक्च वारुणी' इत्यमरः। 'राजा प्रभौ नृपे चन्द्रे' इति विश्वप्रकाशः। निष्क्रान्ता निर्गता तारा सुग्रीवपत्नी यस्मात्तत्तथोक्तम्, अन्यत्रापगतनक्षत्रम्। उपशान्तो निवृत्तस्तमोविकारो मोहविक्रिया, अन्यत्रान्धकारव्याप्तिर्यस्मिंस्तत्तथोक्तम्। अस्य सुग्रीवस्य निशान्तं गृहं कर्तृ। 'निशान्तं गृहशान्तयोः' इति विश्वः। सत्पथभाजि सन्मार्गवर्तिन्याकाशमार्गसंचारिणि च मित्रे सुहृदि लक्ष्मणे अर्के च। 'मित्रं सुहृदि मित्रोऽर्कः' इति विश्वः। पूर्वाशया पूर्वप्रतिज्ञार्थकाङ्क्षया हेतुना पूर्वदिशा च विशति प्रविशति सति। सत्यं यथार्थम्। अतएवोत्प्रेक्षा। निशाया रजन्या अन्तोऽवसानं तत्समं तत्तुल्यम्। प्रभातकल्पमित्यर्थः। आसीत्। श्लिष्टविशेषणेयमुपमा ॥

सा तु रामा रामानुजमासाद्य चैनमवोचत[1] ॥

सेति। सा तु सैव रामा। 'सुन्दरी रमणी रामा' इत्यमरः। 'यत्राकृतिस्तत्र गुणाः' इति न्यायान्निजगुणसंपदा। लक्ष्मणप्रसादनपाटवातिशयद्योतनार्थं रामेत्युक्तमित्यवगन्तव्यम्। रामानुजं लक्ष्मणम्। रामवद्गुणग्राहित्वप्रकटनार्थमित्थं निर्देशः। आसाद्य प्राप्य। एनं रामानुजं प्रत्यवोचतोक्तवती च ॥

तत्प्रकारमेवाह—

प्राचीनं व्यसनं सुरेन्द्रतनयाज्जातं वने भ्राम्यतः
सुग्रीवस्य निराकृतं खररिपोर्बाणेन सालच्छिदा।
अद्यास्य व्यसनं तु पञ्चविशिखादासीदुपेन्द्रात्मजा-
त्सौमित्रे तदपि प्रशान्तमभवज्ज्याघोषमात्रेण ते ॥ ३७ ॥

प्राचीनमिति। सुरेन्द्रतनयाद्वालिनो जातमुत्पन्नम्। अतएव वनेऽरण्ये भ्राम्यतः संचरतः। 'वा भ्राश–' इत्यादिना श्यन्प्रत्ययः। सुग्रीवस्य प्राचीनं पुरातनं व्यसनं विपत्। 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः। खररिपोः खरसुरान्तकस्य श्रीरामस्य संबन्धिना सालच्छिदा सप्तसालविदारिणा बाणेन निराकृतं निरस्तम्। वालिनं निहत्य तद्व्यसनं निराकृतमित्यर्थः। अद्येदानीं तु। इन्द्रमुपगत उपेन्द्र इन्द्रानुजो विष्णुस्तस्यात्मजात्तनयात्। प्रद्युम्नरूपेणावतीर्णत्वादिति भावः। पञ्च अरविन्दादयो विशिखा बाणा यस्य तस्मान्मन्मथात्। महावीरादिति भावः। अन्यत्पूर्वविलक्षणं व्यसनम्। स्त्रीव्यसनमित्यर्थः। आसीत्। हे सौमित्रे, तद्व्यसनमपि ज्याघोषमात्रेण गुणध्वनिमात्रेण प्रशान्तं निवृत्तमभवत्। इन्द्रपुत्रकृत-

१. 'चैवमवोचत्' इति पाठः.

व्यसनं तद्भ्रात्रा निरस्तम् । इन्द्रानुजपुत्रकृतव्यसनं तु त्वया निरस्तमिति क्रमोऽयं युक्त इति भावः । भवदीयचापघोषश्रवणोत्तरक्षण एव निवृत्तकामतन्त्रः सुग्रीवो युष्मत्कार्यनिर्वाहपरतन्त्रतया वर्तते । अतस्त्वया महाराजपुत्रेण न कोपितव्यमिति फलितार्थः । अत्र श्रीरामस्य शरेण व्यसननिरासकत्वमस्य तु चापघोषमात्रेणैवेति व्यतिरेको व्यज्यते । शार्दूलविक्रीडितं वृत्तम् ॥

**तदनन्तरं तारासान्त्ववचनप्रशान्तकोपेन सौमित्रिणा साकं तपनतनयः सविनयमाश्रित्य दाशरथिं प्राञ्जलिर्व्यजिज्ञपत् ॥**

**तदनन्तरमिति** । तदनन्तरं तारायाः सान्त्ववचनेनोक्तरूपसामवाक्येन हेतुना प्रशान्तकोपेन निवृत्तरोषेण सौमित्रिणा साकं लक्ष्मणेन सह तपनतनयः सुग्रीवः सविनयं भयभक्तिप्रयुक्तविनयसहितं यथा तथा दाशरथिं श्रीराममाश्रित्याधिगम्य प्राञ्जलिः कृताञ्जलिः सन् । व्यजिज्ञपद्विज्ञापयामास ॥

**देव, कपिबलमखिलकुलाचलनिलयमनिलतनयेनाहूतं पुरुहूत इव पुलोमजापहारिणमनुह्लादं रावणं रणे निहनिष्यसीति ॥**

**देवेति** । हे देव स्वामिन् श्रीराम, अखिलकुलाचलनिलयं महेन्द्राद्यशेषकुलपर्वतनिकेतनं कपिबलमनिलतनयेन हनूमताहूतम् । अतः पुलोमजां शचीमपहरतीति पुलोमजापहारिणम् । 'पुलोमजा शचीन्द्राणी' इत्यमरः । अनुह्लादं नाम दानवं पुरुहूत इन्द्र इवेत्युपमा । रावणम् । सीतापहारिणमिति शेषः । रणे निहनिष्यसि विनाशयिष्यसीति व्यजिज्ञपदिति संबन्धः । अत्रेन्द्रेणेप्सितां पौलोमीं तत्पितुः पुलोमनाम्नोऽनुमत्यानुह्लादो जहार । इन्द्रस्त्वननुमन्तारं पुलोमानमपहर्तारमनुह्लादं च निहत्य ततस्तां प्रत्यानीतवानिति पौराणिकी कथात्रानुसंधेया ॥

**ततः ॥**

**तत इति** । ततस्तदनन्तरम् ॥

**ककुभि कुलिशपाणेर्मैथिलीं तां विचेतुं**
**विनतमथ दिशायां मारुतिं प्रेतभर्तुः ।**
**वरुणदिशि सुषेणं यक्षराजाञ्चितायां**
**हरिति शतबलिं च प्राहिणोद्वानरेन्द्रः ॥ ३८ ॥**

**ककुभीति** । वानरेन्द्रः सुग्रीवस्तामपहृतां मैथिलीं सीतां विचेतुमन्वेष्टुं कुलिशपाणेरिन्द्रस्य ककुभि केन सूर्येण कुभाति द्योतयतीति ककुप् तस्याम् । प्राच्यामित्यर्थः । विनतं विनताख्यं वानरसेनाधिपतिम् । अथेति वाक्यारम्भे, अनन्तरं वा । प्रेतभर्तुर्यमस्य दिशायाम् । दक्षिणस्यां दिशीत्यर्थः । 'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इति वचनाद्टाप् । मारुतिं हनूमन्तं च । अत्र युवराजस्याङ्गदस्य प्राधा-

---

१. 'सान्त्वनप्रशान्त' इति पाठः. २. 'अखिलमखिल' इति पाठः, ३. 'हारिणं बालाभिधानम्' इति पाठः. ४. 'हनिष्यतीति' इति पाठः.

न्येऽपि कार्यसाधकत्वान्मारुतिग्रहणमिति मन्तव्यम्। तथा वरुणस्य दिशि प्रतीच्यां सुषेणं स्वस्य श्वशुरम्। तथाच रामायणम्—'अथ प्रस्थाप्य च हरीन्सुग्रीवो दक्षिणां दिशम्। अब्रवीन्मेघसंकाशं सुषेणं नाम वानरम्॥ तारायाः पितरं राजा श्वशुरं भीमविक्रमम्॥' इति। तथा यक्षराजाञ्चितायां कुवेराधिष्ठितायां हरिति। उत्तरस्यां दिशीत्यर्थः। शतवलिं शतवलिनामानं वानरनायकं च प्राहिणोत्प्रेषयामास मालिनीवृत्तम्॥

तदनु दिनेषु केषुचिद्गतेषु मासातिपातनासहो नियतमुदग्रदण्डः सुग्रीव इति सत्वरमितरदिगन्तरप्रेषितेषु प्रतिनिवृत्तेषु प्लवङ्गवलेषु पितृपतिहरिति प्रेषिता मारुतिजाम्ववदङ्गदनलनीलप्रभृतयोऽप्यलब्धसीतोपलब्धयस्तनयनाशकुपितकण्डुशापनिःशेषितचराचरमपरिचितचारप्रान्तरं कान्तारं क्रान्त्वा कान्तारे कस्मिंश्चिदसुरमेकं निरीक्ष्य रक्षःपतिरिति बुद्ध्वा युद्धसंनद्धा बभूवुः॥

तदन्विति। तदनु वानरप्रेषणानन्तरं केषुचिद्दिनेषु गतेष्वतिक्रान्तेषु सत्सु। मासातिपातनस्य मासातिक्रमणस्यासहोऽसहिष्णुः। प्रेषणसमये रामायणश्लोकः— 'ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम' इत्येकमासमात्रस्यावधेः कृतत्वादिति भावः। पचाद्यच्। कुतः। नियतं निश्चितमुदग्रदण्डश्चण्डशासनः। 'दण्डोऽस्त्री शासने राज्ञः' इति वैजयन्ती। सुग्रीव इति मत्वा। इतरदिगन्तरप्रेषितेषु दक्षिणदिग्व्यतिरिक्तदिक्त्रयप्रहितेषु प्लवङ्गवलेषु विनतप्रमुखवानरसैन्येषु सत्वरं तूर्णं प्रतिनिवृत्तेष्वनधिगतसीतावृत्तान्ततया प्रत्यागतेषु सत्सु पितृपतिहरिति दक्षिणस्यां दिशि प्रेषिता मारुतिजाम्ववदङ्गदनलनीलाः प्रभृतयो येषां ते तथोक्ताः। प्रभृतिग्रहणाद्गजगवाक्षगवयादयोऽपि गृह्यन्ते। तेऽपि वानरोत्तमा अलब्धसीतोपलब्धयोऽप्राप्तमैथिलीलाभाः सन्तः। तनयनाशेन निजपुत्रनिधनेन कुपितस्य क्रुद्धस्य कण्डुनाम्नो महर्षेः शापेन निःशेषिता विध्वंसिताश्चराचरा जङ्गमस्थावरा मृगपक्षिवृक्षगुल्मादयो यस्मिंस्तत्तथोक्तम्। तथाच रामायणम्—'कण्डुर्नाम महाभागः सत्यवादी तपोधनः। महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः॥ तस्य तस्मिन्वने पुत्रो वालको दशवार्षिकः। प्रणष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः॥ तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम्। अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम्॥' इति। परिचितचारं प्रवृत्तप्राणिसंचारं तच्च तत्प्रान्तरं निकटप्रदेशश्च तन्न विद्यते यस्मिंस्तत्तथोक्तम्। अत्यन्तदुर्गममित्यर्थः। 'प्रान्तरं दूरशून्योऽध्वा' इत्यमरः। तत्कान्तारं विपिनं क्रान्त्वातिक्रम्य कस्मिंश्चित्कान्तारे कुत्रचिदरण्य एकमसुरं निरीक्ष्य रक्षःपती रावण इति बुद्ध्वा ज्ञात्वा युद्धसंनद्धाः समरसंनाहवन्तो बभूवुः॥

---

१. 'इतरेषु' इति पाठः. २. 'निवृत्तेषु' इति पाठः. ३. 'कण्व' इति पाठः. ४. 'अपरचितचारप्रान्तारम्' इति पाठः. ५. 'तीर्त्वा' इति पाठः. ६. 'बुध्वा युद्धाय संनद्धाः' इति पाठः.

निशिचरपतिरित्यवेत्य रोषादशनिनिपातनिभेन ताडनेन ।
असुरहितममुं प्रहृत्य दैत्यं सुरहितमेव चकार वालिसूनुः ॥ ३९ ॥

निशिचरेति । वालिसूनुरङ्गदो निशिचरपती रावण इत्यवेत्य ज्ञात्वा । तमिति शेषः । रोषात्सीतापहरणरूपाकृत्यकरणजनितकोपाद्धेतोरशनिनिपातनिभेन दम्भोलिप्रहारसदृशेन ताडनेन मुष्टिघातेन । असुरेभ्यो हितमसुरहितम् । 'चतुर्थीतदर्थ–' इत्यादिना समासः । सुराणामहितं चामुं दैत्यं प्रहृत्य निगृह्य सुरहितमेव चकारेति विरोधः । स चासुरहितमचेतनं प्रहृत्य सुराणां हितं सुखं चकारेति परिहाराच्छ्लेषानुप्राणितो विरोधाभासोऽलंकारः ॥ 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति लक्षणात् । पुष्पिताग्रावृत्तम् ॥

ततस्तारेयवचनात्ततस्ततो विचित्य निकटगिरिसानुशयाः सानुशयाः सलिलाशया जलचरपतङ्गपतनोत्पतनानुमीयमानपल्वलोपशयं किमपि कुहरमवगाह्य कंचन काञ्चनमयं मयमायानिर्मितं विहिततपोभङ्गायै सुराङ्गनायै हेमायै द्रुहिणेन वितीर्णं मेरुसावर्णिदुहित्रा स्वयंप्रभया कृतावनं वनोद्देशमविशन् ॥

तत इति । ततस्तदनन्तरं ताराया अपत्यं तारेयोऽङ्गदः । 'स्त्रीभ्यो ढक्' । तस्य वचनान्नियोगवाक्याद्धेतोः । ततस्ततः तत्र तत्र विचित्यान्विष्य निकटगिरिसानुषु समीपस्थगिरिप्रस्थेषु शेरत इति तथोक्ताः सानुशयाः । गहनसंचारजनितश्रमातिरेकात्तत्र तत्र संविशन्तीत्यर्थः । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । अतएव सानुशयाः ससंतापाः । 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः । वानराः सलिलेष्वाशया वाञ्छया । पिपासयेत्यर्थः । जलचरपतङ्गानां हंसकारण्डवादिजलवर्तिपक्षिविशेषाणां पतनोत्पतनैः प्रडीनोड्डीनगतिविशेषैरनुमीयमानमभ्यूह्यमानं यत्पल्वलं सरस्तस्योपशयमाश्रयम् । अन्तःस्थकासारमित्यर्थः । किमपि किंचित्कुहरं भूविवरगर्भमवगाह्य प्रविश्य । कंचन कमपि काञ्चनमयं हिरण्मयं मयस्यासुरशिल्पिनो मायया विचित्रशक्त्या निर्मितं रचितम् । तथा विहिततपोभङ्गायै कृततपोविघ्नायै । तस्मिन्नेव वने पूर्वं हेमया मयतपोभङ्गस्य विहितत्वादिति भावः । हेमायै हेमाख्यायै सुराङ्गनायै अप्सरसे द्रुहिणेन नृत्यगीतसंतोषितेन विधात्रा वितीर्णं दत्तं स्वयंप्रभया तदाख्यया मेरुसावर्णिदुहित्रा पुत्रिकया कृतावनं विहितरक्षणं वनोद्देशं वनप्रदेशमविशन्प्रविष्टवन्तः । हेमायाः प्रियसखीत्वान्मेरुसावर्णिदुहित्रे सा वनं दत्तवतीत्यनुसंधेयम् । उक्तंच रामायणे—'दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा । इदं रक्षामि भवनं हेमाया वानरोत्तमाः ॥ मम प्रियसखी हेमा नृत्तगीतविशारदा । तया दत्तवरा चास्मि रक्षामि भवनोत्तमम् ॥' इति ॥

---

१. 'अवेक्ष्य' इति पाठः. २. 'पुत्रः' इति पाठः. ३. 'उपशल्यम्' इति पाठः. ४.'बिलकुहरम्' इति पाठः. ५. 'पिहिताशानभोभागं विहित' इति पाठः.

ततः कृतातिथ्यायाः स्वयंप्रभायाः प्रभावेण विलादुत्तीर्णानां समयातिपातादापतिष्यति सुग्रीवदण्ड इति विकृतिमुपेत्य संगतमनोगदेनाङ्गदेन पवनतनयवचनप्रत्ययप्रत्यानीतप्रकृतिना सह प्रायोपवेशमुपेयुषां प्लवंगपुंगवानां परिदेवनकथाप्रसङ्गे जटायुषो निधनं निशम्य विन्ध्यरन्ध्राद्विहितसंपातः संपातिर्नामा गृध्रस्तानेवमवादीत्॥

तत इति। ततः प्रवेशानन्तरं कृतातिथ्यायाः। अतिथिसत्कारेणोपचरितवत्या इत्यर्थः। स्वयंप्रभायाः प्रभावेण सामर्थ्येन विलादुत्तीर्णानां निर्गतानां समयातिपातादवधिकालातिक्रमणाद्धेतोः। दण्ड्यन्ते निगृह्यन्तेऽनेनेति दण्डः शिक्षा। सुग्रीवस्य कर्तुः दण्ड आपतिष्यति। कालातिक्रमणेनास्मांश्चण्डशासनः सुग्रीवो दण्डयिष्यतीत्यर्थः। इति मत्वा विकृतिं विकारम्। प्रकृतिवैकल्यमिति यावत्। उपेत्य संगतमनोगदेन संजातमनोव्याधिना। 'रोगव्याधिगदामयाः' इत्यमरः। अथ पवनतनयस्य हनूमतो वचनं तत्कालोचितवाक्यं तत्प्रत्ययेन तद्विश्वासेन प्रत्यानीता पुनः समाहिता प्रकृतिः पूर्वावस्था येन स तथोक्तेनाङ्गदेन सह। प्रायोपवेशो नाम दक्षिणाग्रेषु दर्भेषु स्थण्डिले मरणार्थं संकल्प्योपवेशनम्। 'प्रायो भूम्न्यन्तगमने' इत्यमरः। तमुपेयुषां प्राप्तवताम्। 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः। उदग्रसुग्रीवदण्डापेक्षया मरणमेव वरमिति मुमूर्षतामित्यर्थः। उक्तंच रामायणे—'उपस्पृश्योदकं विन्ध्ये प्राङ्मुखाः समुपाविशन्। दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः॥ मुमूर्षवो हरिश्रेष्ठा एतत्क्षममितः स्म ह॥' इति। प्लवंगपुंगवानां जाम्बवदादिवानरश्रेष्ठानां परिदेवनकथाप्रसङ्गे—'रामस्य वनवासं च क्षयं दशरथस्य च। जनस्थानवधं चैव वधं चैव जटायुषः॥' इत्यादि विलापगोष्ठीप्रस्तावे जटायुषो निधनं मरणं निशम्य श्रुत्वा विन्ध्यरन्ध्राद्विन्ध्यपर्वतकन्दराद्विहितसंपातः कृतनिर्गमः। तत्परामर्शार्थं विनिष्क्रान्त इत्यर्थः। संपातिर्नामा गृध्रो जटायुभ्राता तान्वानरान्। एवं वक्ष्यमाणप्रकारेणावादीदवोचत्। तथाच रामायणम्—'संपातिर्नाम नाम्ना तु चिरंजीवी विहंगमः। भ्राता जटायुषः श्रीमान्प्रख्यातबलपौरुषः॥ कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः। उपविष्टान्हरीन्दृष्ट्वा हृष्टात्मा गिरमब्रवीत्॥' इति॥

तदेवाह—

के यूयमक्षतबलेऽप्यभिधाय पापं
वत्से जटायुषि मम श्रवसी दहन्तः।
तस्मात्पुरा किरणदाहितपक्षयुग्मं
तिग्मांशुमुष्णवचसा शिशिरीकुरुध्वे॥ ४०॥

क इति। अक्षतबलेऽप्रतिहतपराक्रमेऽपि वत्सेऽनुजे जटायुषि पापं निधनमभिधायोक्त्वा मम श्रवसी कर्णौ। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्य-

---

१. 'पातेन पतिष्यति' इति पाठः. २. 'प्रलयानीत' इति पाठः. ३. प्रसंगेन इति पाठः. ४. 'गृध्रराजः' इति पाठः. ५. 'अक्षयबले' इति पाठः.

मरः । दहन्तो भस्मीकुर्वन्तः यूयं के कस्मात् भवोदहनाद्धेतोः । पुरा पूर्वम् । सूर्यमण्डलं प्रत्युद्गमनकाल इत्यर्थः । किरणैर्निजगभस्तिभिर्दाहितं दग्धं पक्षयुग्मं गरुद्युगलं येन तम् । तिग्मांशुं चण्डभानुम् । उष्णवचसा । ततोऽप्यतितीक्ष्णवचनेनेत्यर्थः । शिशिरीकुरुध्वे शिशिरीकुरुथ । पक्षदहनजनितदुःखादप्यतिरिच्यते युष्मद्वचनजनितदुःखमिति भावः । संपातेः सूर्यकिरणदग्धपक्षतया विन्ध्यपतनादिकथा श्रीरामायणेऽनुसंधेया । अथ तिग्मांशोः शिशिरीकरणासंबन्धेऽपि तत्संबन्धाभिधानादतिशयोक्तिभेदः । वसन्ततिलका ॥

**ततस्तैः प्रस्तावितप्रवृत्तिः संपातिः प्रोषितायुषे जटायुषे निवापाञ्जलिं निर्वर्त्य पुरा कदाचिदामिषान्वेषणाय प्रेषितेन सुपार्श्वनाम्ना समाम्नातं महेन्द्रमहीध्ररन्ध्रविनिर्गतदशवदननीयमानजानकीपरिदेवनं जानानः सूक्ष्मचक्षुः पुनरेवमवोचत् ॥**

**तत इति ।** ततस्तदनन्तरं तैर्वानरैः प्रस्तावितप्रवृत्तिरादिमारभ्य कथितवृत्तान्तः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । संपातिः प्रोषितायुषे मृताय जटायुषे निवापाञ्जलिं तर्पणाञ्जलिं निर्वर्त्य । कृत्वेत्यर्थः । 'निवापः पितृतर्पणम्' इत्यमरः । पुरा पूर्वं कदाचित्कस्मिंश्चित्समय आमिषान्वेषणाय क्रव्यविचयनाय । आहारानयनार्थमित्यर्थः । प्रेषितेन प्रहितेन सुपार्श्वनाम्ना निजसुतेन स्वतनयेन समाम्नातं कथितं महेन्द्रमहीध्रस्य महेन्द्राख्यकुलपर्वतस्य । महीध्रशब्दो व्याख्यात आरण्यकाण्डे 'महीध्रकल्पं गृध्रराजम्' इत्यत्र । रन्ध्राद्बिलाद्विनिर्गतेन दशवदनेन रावणेन नीयमानाया अपह्रियमाणाया जानक्याः परिदेवनं विलापं जानानोऽवबुध्यमानः । मनस्यनुसंदधान इत्यर्थः । 'ज्ञा अवबोधने' इत्यस्माच्छानच् । सूक्ष्मचक्षुः सूक्ष्मदृष्टिः । पूर्वोत्तरानुसंधानकुशल इत्यर्थः । संपातिः पुनरप्येवमवोचत् ॥

तदेवाह—

**अलं कातर्येण । लङ्काभिधानां यातुधानराजधानीमधिवसती सीता दशवदननीता तत्र गच्छन्तु भवन्तः ॥**

**अलमिति ।** कातर्येण भयविह्वलत्वेनालम् । कातर्यं न कर्तव्यमित्यर्थः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । कुतः । दशवदननीता रावणापहृता सीता लङ्काभिधानां यातुधानराजधानीं राक्षसनगरीमधिवसत्यधितिष्ठति । तत्रास्त इत्यर्थः । 'उपान्वध्याङ्वसः' इति कर्मत्वम् । ततस्तत्र लङ्कां प्रतीत्यर्थः । भवन्तो गच्छन्तु । 'शेषे प्रथमः' इति प्रथमः ॥

**किंच ॥**

तस्मिन्नर्थे प्रत्ययान्तरं वितरत इत्याह—किंचेति ॥

---

१. 'प्रस्तापितवृत्तान्तः'; 'प्रस्तावितवृत्तान्तः' इति पाठौ. २. 'प्रेषितेन निजसुतेन' इति पाठः.

तदेव विवृणोति—

दिवाकरप्लोषभवां मदार्तिं निशाकरो नाम मुनिर्निरस्यन् ।
जगाद वः कार्यमहार्यधैर्याः क्षणेन तां द्रक्ष्यथ रामपत्नीम् ॥४१॥

दिवाकरेति । दिवाकरेण सूर्येण यः प्लोषः पक्षदाहस्तस्माद्भवतीति तथोक्तां मदार्तिं मत्पीडाम् । संतापमिति यावत् । निशाकरो नाम निशाकर इति नाम्ना प्रसिद्धः, चन्द्रश्च प्रतीयते । मुनिरतीतानागतदर्शी निरस्यन् । यदा सीतान्वेषणार्थं वानरा आगच्छेयुस्तदा तव पक्षद्वयं पुनः प्ररूढं भवेदित्यादिवचनप्रत्ययैर्निराकुर्वन् । दिवाकरकृतसंतापस्य निशाकरनिवर्तनं युक्तमेवेति भावः । हे अहार्यधैर्या अपरिहार्यधैर्यसंपन्ना वानराः । अतो धैर्यत्यागो युष्माकं न युक्त इति भावः । वो युष्माकं कार्यं जगादोवाच । तथाच रामायणम्—'एष्यन्ति प्रेषितास्तत्र रामदूताः प्लवंगमाः । आख्येया राममहिषी त्वया तेभ्यो विहंगम ॥' इति । ततस्तत्कारणाद्रामपत्नीं सीतां क्षणेनाल्पकालेन द्रक्ष्यथ प्रेक्ष्यथ । सत्यवचसो मुनेर्वचनं नानृतं भविष्यतीति भावः । उपेन्द्रवज्रा वृत्तम् ॥

इति ब्रुवाणं कृतसौहृदं तं संपातिमापृच्छ्य परापरज्ञम् ।
प्रवृद्धहर्षाः प्रथितप्रभावाः प्रतस्थिरे वानरयूथनाथाः ॥ ४२ ॥

इतीति । इत्यनेन प्रकारेण ब्रुवाणं कथयन्तं कृतसौहृदं विरचितसख्यं परापरज्ञम् । पूर्वोत्तरपर्यालोचनचतुरमित्यर्थः । तं प्रसिद्धं संपातिमापृच्छ्य वयं साधयाम इति पृष्ट्वा प्रथितप्रभावाः प्रख्यातबलपौरुषा वानरयूथनाथा अङ्गदादिवानरश्रेष्ठाः प्रवृद्धहर्षा जानकीवृत्तान्तश्रवणलाभादमन्दानन्दभरिताः सन्तः प्रतस्थिरे प्रस्थिताः । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । वृत्तमुपजातिः ॥

पर्याप्तप्रमदमुपेयुषां कपीनां
पन्थानं दशमुखमार्गमार्गणाय ।
पाथेयीकृतकपिराजशासनानां
पाथोधिर्नयनपथातिथिर्बभूव ॥ ४३ ॥

पर्याप्तेति । पर्याप्तः परिपूर्णः प्रमदो हर्षो यस्मात्तम् । परिपूर्णानन्दकरमित्यर्थः । 'प्रमदसंमदौ हर्षे' इति निपातनात्साधुः । पन्थानं संपातिकथितमार्गमुपेयुषां प्राप्तवताम् । लब्धप्रवृत्ततया संतुष्टान्तःकरणानामित्यर्थः । तथा दशमुखमार्गमार्गणाय रावणपदव्यन्वेषणार्थं पाथेयीकृतं संबलीकृतं कपिराजशासनं सुग्रीवाज्ञा यैस्तेषाम् । तीक्ष्णदण्डोऽयं सुग्रीव इति तदाज्ञाजीवनेन रावणगत्यन्वेषिणामित्यर्थः । 'पाथेयं संबलं मतम्' इति यादवः । कपीनां वानराणां पाथोधिः समुद्रः नयनपथातिथिर्नेत्रमार्गगोचरो बभूव । अत्र कपिराजशासने पाथेयत्वरूपणाद्रूपकालंकारः । प्रहर्षिणीवृत्तम् ॥

---

१. 'ममार्तिं' इति पाठः. २. 'राजपत्नीम्' इति पाठः. ३. 'परावरज्ञम्' इति पाठः. ४. 'पर्याप्तम्' इति पाठः. ५. 'पान्थानाम्' इति पाठः.

सुत्रामपुत्रारिशिलीमुखानां स्मृत्वा गणस्तत्र वलीमुखानाम् ।
अपामपारस्य निधेश्च पश्चादवाङ्मुखो वक्तुमवाङ्मुखोऽभूत् ॥४४॥

**सुत्रामेति** । वलीमुखानां गणो वानरयूथः सुत्रामपुत्रारेर्वालिमथनस्य श्रीरामस्य शिलीमुखानां बाणानाम् । अमोघानामिति भावः । अपारस्य दुस्तरस्यापांनिधेः समुद्रस्य च स्मृत्वा । अमोघाञ्छ्रीरामबाणान्दुस्तरं वारिधिं च मनस्यनुसंधायेत्यर्थः । उभयत्रापि 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । सा च शेषाधिकाराच्छेषत्वाविवक्षायामेव । कर्मत्वविवक्षायां तु द्वितीया भवतीति वेदितव्यम् । पश्चात्स्मरणानन्तरम् । अवाङ्मुखोऽवनतवदनः सन् । वक्तुमाशयं कथयितुम् । न विद्यन्ते वाचो मुखेषु यस्य सोऽवाङ्मुखोऽभून्मूकोऽभूत् । श्रीरामबाणानाममोघत्वं पाथोनिधेर्दुस्तरत्वं चानुसंधाय किमत्र कर्तव्यमस्माभिरिति कर्तव्यतामौढ्येन निरुत्तरोऽभूदित्यर्थः । वृत्तमुपजातिः ॥

तदनु वानरसेनामेनामवार्यमाणकातर्यामित्थमवदद‍ङ्गदः ॥

**तदन्विति** । तदनु तदनन्तरमवार्यमाणमपरिहार्यमाणं कातर्यं भयविभ्रान्तत्वं यस्यास्तामेनां वानरसेनां प्रति अङ्गद इत्थं वक्ष्यमाणरीत्यावददवोचत् ॥

तत्प्रकारमेवाह—

किमिति भजथ मौनं वानरा मानहीनाः
सगररचितकुल्योल्लङ्घने कुण्ठिताशाः ।
अकलशभवलेह्यं दुःशमं वाडवाद्यै-
रनवधिमयशोऽब्धिं किं समर्थास्तरीतुम् ॥ ४५ ॥

**किमिति** । हे मानहीना अभिमानशून्या वानराः । प्राणसंकटेऽपि मानो न त्याज्य इति बोधयितुमेवमामन्त्रितमिति द्रष्टव्यम् । सगररचितकुल्योल्लङ्घने सगरनिखातकुल्यप्रायसागरतरणे कुण्ठिताशा भग्नोत्साहाः सन्तः । किमिति कस्माद्धेतोर्मौनं निरुत्तरतां भजथ प्राप्नुथ । न चैतद्युक्तमिति भावः । कुतः । कलशभवलेह्यमगस्त्यास्वाद्यं न भवतीत्यकलशभवलेह्यम् । किंच वाडवाद्यैर्वडवानलप्रभृतिभिः । आद्यशब्दाद्दूरत्वानलादिभिरिति च गृह्यते । 'वाडवो वडवानलः' इत्यमरः । दुःशमं शमयितुमशक्यम् । 'ईषद्दुः—' इत्यादिना खल्प्रत्ययः । अनवधिममर्यादम् । शतसहस्रादियोजनपरिमाणरहितमित्यर्थः । प्रसिद्धसागरस्तु नैवंभूत इति भावः । अयशोऽब्धिमपकीर्तिसागरं तरीतुमुल्लङ्घयितुम् । 'वृतो वा' इति दीर्घः । समर्थाः शक्ताः किम् । न समर्था एवेत्यर्थः । सागरमिमं सुतरं यदि न लङ्घयेयुस्तर्हि दुस्तरो दुष्कीर्तिसागरः प्रसक्तो भवेत् । तथाच गीतायाम्—'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति न्यायान्महाननर्थः स्यात् । तस्मात्सर्वथैव सागरोल्लङ्घन एव पुनरुत्साहः

---

१. 'पश्यन्' इति पाठः. २. 'अकथयत्' इति पाठः. ३. 'कूपोल्लङ्घने' इति पाठः. ४. 'वाडवाग्नेः' इति पाठः.

कर्तव्य इति भावः । अत्र प्रसिद्धसागरादुपमानादुपमेयस्यायशःसागरस्याधिक्यकथनाद्व्यतिरेकालंकारः । मालिनीवृत्तम् ॥

**ततः पारावारस्य पारीणतायामात्मशक्तेरियत्तां प्रत्येकं कथयत्सु वानरयूथपेषु निर्दिश्याञ्जनेयं प्रभञ्जनसंजातं जाम्बवानभिहितवान् ॥**

**तत इति ।** ततोऽङ्गदवचनानन्तरं वानरयूथपेषु गजगवयगवाक्षादिवानरयूथनाथेषु । 'यूथनाथस्तु यूथपः' इत्यमरः । पारावारस्य समुद्रस्य पारीणतायां पारंगतत्वे । समुद्रपारोल्लङ्घन इत्यर्थः । 'समुद्रोऽब्धिरकूपारः पारावारः' इत्यमरः । प्रत्येकम् । एकैकस्मिन्नित्यर्थः । विभक्त्यर्थेऽव्ययीभावः । आत्मशक्तेः स्वसामर्थ्यस्येयत्तामेतायत्ताम् । दशविंशतित्रिंशदादियोजनोल्लङ्घनविषयां स्वस्वप्लवनशक्तिमित्यर्थः । तथा च रामायणे—'आबभाषे गजस्तत्र प्लवेयं दशयोजनम्' इत्यादि कथयत्सु सत्सु । जाम्बवान्प्रभञ्जनसंजातं पवनतनयम् । पितृवदत्यन्तजवनद्योतनार्थमेतद्विशेषणम् । आञ्जनेयमञ्जनागर्भसंभूतं हनूमन्तम् । क्षेत्रातिशयद्योतनार्थमेतत् । निर्दिश्याभिहितवान् । ननु 'भूतले सागरे वापि शैलेषूपवनेषु च । पातालस्यापि वा मध्ये सममाच्छिद्यते गतिः ॥' इति पूर्वं सुग्रीवसंनिधौ गजादिवानरयूथपैः स्वस्वशक्तेः प्रख्यापितत्वात्, इदानीं 'प्लवेयं दशयोजनम्' इत्यादिना पुनः किमर्थं स्वस्वप्लवनशक्तिन्यूनतामुक्तवन्त इति चेत्सत्यम् । अधिकशक्तियुक्ता अप्येते रावणाधिष्ठितलङ्काप्रवेशसीतान्वेषणं दुष्करमिति मत्वा तादृशकार्यसाधकस्य महाधीरस्य हनूमतः प्रोत्साहनार्थं तथोक्तवन्त इति सर्वं समञ्जसम् ॥

उक्तप्रकारमेवाह—

**हे वीरा यूथनाथाः परिणतिपरुषः कार्य आसीद्विषादः**
**कस्मादस्माकमेतज्जलनिधितरणे शक्तिरेतावतीति ।**
**स्मृत्वा राज्ञः प्रतिज्ञामयमनिलसुतो लङ्घनायोन्मुखश्चे-**
**त्खेदः प्रादुर्भवेत्किं कथयत पयसामास्पदे गोष्पदे वा ॥ ४६ ॥**

**हे वीरा इति ।** हे वीराः शूराः, यूथनाथा यूथश्रेष्ठाः, यूयं चाहं च वयं तेषामस्माकम् । 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषः । एतस्य जलधेस्तरणे लङ्घने शक्तिः सामर्थ्यमेतावतीयती । दशयोजनादिमात्रविषयेत्यर्थः । इत्येवंप्रकारेण परिणतिपरुषः फलकालविरसो विषादश्चेतोभङ्गः । खेद इति यावत् । 'विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः' इति लक्षणात् । कस्माद्धेतोः कार्यः कर्तव्य आसीत् । नायं कर्तव्य इत्यर्थः । अथवा कार्ये कृतवस्तुनि विषये परिणतिपरुष इत्यादि योजना । कुतः । अयमेष इति हस्तनिर्देशः । अनिलसुतो हनूमान् । अनिलवदेव तरस्वीति भावः । राज्ञः सुग्रीवस्य प्रतिज्ञाम् 'ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भविष्यति' इत्येवंरूपाम्, अथवा 'यश्च मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति ।

---

१. 'पारावारपारीणतायाम्' इति पाठः. २. 'वानर' इति नास्ति क्वचित्. ३. 'संभवम्' इति पाठः. ४. 'इत्थमभिहितवान्' इति पाठः. ५. 'कोऽयम्' इति पाठः.

मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥' इत्येवंरूपां वा प्रतिज्ञावाचं स्मृत्वा । लङ्घनाय समुद्रतरणायोन्मुखोऽभिमुखश्चेत् । उद्युक्तः स्यादित्यर्थः । तर्हि पयसामास्पदे सागरे । 'आस्पदं प्रतिष्ठायाम्' इति निपातनात्सुडागमः । गोष्पदे गोपादन्यासे वा । भेदोऽन्तरं प्रादुर्भवेदुत्पद्येत किम् । न प्रादुर्भवेदेवेत्यर्थः । कथयत । यद्यत्र प्रत्युक्तिर्विद्यते तर्हि कथयतेत्यर्थः । महात्मनोऽस्य यदि तितीर्षा स्यात्तदा गोष्पदमिव सागरोऽपि सुतर इति भावः । अत्र सागरगोष्पदयोर्भेदसंबन्धेऽप्यसंबन्धाभिधानात्संबन्धेऽसंबन्धरूपातिशयोक्तिः । स्रग्धरावृत्तम् ॥

उदपतदुपभोक्तुं मण्डलं चण्डभानोः
परिणतफलबुद्ध्या बालभावेऽपि सोऽयम् ।
तदनु कुलिशपातक्षुण्णगण्डाय तस्मै
वरमदिशदमेयं वायुतृप्त्यै विधाता ॥ ४७ ॥

उदपतदिति । स प्रसिद्धोऽयं हनूमान्बालभावेऽपि बाल्येऽपि परिणतफलबुद्ध्या परिपक्वफलभ्रान्त्या चण्डभानोः सूर्यस्य मण्डलमुपभोक्तुमभ्यवहर्तुमुदपतदुत्पतितवान् । तदनु उत्पतनानन्तरं कुलिशपातेनेन्द्रप्रयुक्तवज्राभिघातेन क्षुण्णगण्डाय भुग्नहनुप्रदेशाय तस्मै हनुमते विधाता ब्रह्मा वायोरेतत्पितुस्तृप्त्यै परितोषार्थम् । तदानीं तनयप्रहरणकोपाद्वायुना स्वसंचारसंकोचेन त्रैलोक्यसंतापस्य विहितत्वादिति भावः । अमेयमसदृशं वरं काङ्क्षितकल्पायुरक्षय्यत्वमजयत्वं ब्रह्मास्त्रनारायणास्त्रपाशुपतास्त्रप्रभृतिभिरभेद्यत्वं चादिशद्दत्तवान् । 'देवाद्वृते वरः श्रेष्ठे' इत्यमरः । बाल्य एव बहुयोजनोत्पतनदक्षस्यामुष्य वीरस्येदानीं कियदेतच्छतयोजनविस्तीर्णार्णवलङ्घनमिति भावः । तथाच रामायणम्—'प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ । अशस्त्रवध्यतां तात समरे सत्यविक्रमम् ॥' इति । अत्र बाल्ये नभोलङ्घनजङ्घालस्यास्येदानीं सागरतरणं कियदिति दण्डापूपिकयार्थान्तरस्यापादनादर्थापत्तिरलंकारः । 'दण्डापूपिकयार्थान्तरार्थपतनमर्थापत्तिः' इति सर्वस्वसूत्रम् । शालिनीवृत्तम् ॥

इत्थं जाम्बवता परापरविदा संधुक्षितप्राभवः
कृत्वा वृद्धिमुपेयुषा स्ववपुषा त्रैविक्रमं प्रक्रमम् ।
आरुह्याद्रितटं यथोचितमसौ संमान्य सैन्याधिपानाश्वास्याथ संननाह तरितुं वारांनिधिं मारुतिः ॥ ४८ ॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे किष्किन्धाकाण्डः समाप्तः।

इत्थमिति । इत्थमुक्तप्रकारेण परापरविदा । पूर्वोत्तरकार्यपर्यालोचनचतुरेणेत्यर्थः । जाम्बवता संधुक्षितं समुपोद्बोधितं प्राभवं सामर्थ्यं यस्य स तथोक्तः । असौ मारुतिः । त्रयो विक्रमा यस्य त्रिविक्रमो बलिमथनवामनरूपो विष्णुस्तस्येमं

१. 'परावर' इति पाठः. २. 'सेनाधिपान्' इति पाठः.

त्रैविक्रमं प्रक्रमं प्रतापम् । तादृगभिवृद्धिमित्यर्थः । अतएव निदर्शनालंकारः । उपेयुषा प्राप्तवता स्ववपुषा निजशरीरेण वृद्धिं कृत्वा । प्रवृद्धशरीरः सन्नित्यर्थः । अद्रितटं महेन्द्रशैलसानुमारुह्य । आसन्नान्स्वसमीपस्थान्सैन्याधिपानङ्गदजाम्बवदादिसेनाधिपतीन् । यथोचितं यथार्हं संमान्य बहूकृत्य । अथानन्तरं वारांनिधिं समुद्रं तरितुं लङ्घितुम् । विकल्पान्न दीर्घः । संननाह संनाहं कृतवान् । शार्दूलविक्रीडितं वृत्तम् ॥

इति श्रीमत्परमयोगीन्द्रवृन्दमानसेन्दीवरसंदोहामन्दानन्दलाभाभिवन्दितरघुनन्दनचरणारविन्दमकरन्दास्वादनकन्दलितसारस्वतेनाखण्डतपःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्य पद्मान्वयसुधापारावारपारिजातस्य धन्वन्तर्यवतारान्तरस्यायुर्वेदप्रमुखनिखिलविद्यासारसर्वज्ञसार्वभौमस्य कोण्डोपण्डितवर्यस्य तनुजेन गङ्गाम्बिकागर्भरत्नाकरसुधाकरेण रामचन्द्रबुधेन्द्रेण विरचितायां चम्पूरामायणव्याख्यायां साहित्यमञ्जूषिकासमाख्यायां किष्किन्धाकाण्डः समाप्तः ॥

रामचन्द्रार्यरचिता रामचन्द्रपदार्पिता ।
किष्किन्धाकाण्डस्य व्याख्या पूर्णा मञ्जूषिकाभिधा ॥

---

## सुन्दरकाण्डम् ।

ततोहनूमान्दशकण्ठनीतां सीतां विचेतुं पथि चारणानाम् ।
महेन्द्रशैलस्य खगेन्द्रवेगः प्रस्थादुदस्थात्प्रथमानवेगः ॥ १ ॥

तत इति । ततः संनाहानन्तरं खगेन्द्रस्य गरुडस्य वेगो जवो यस्य स तथोक्त इत्युपमा । अतएव प्रथमानः पृथुतरो वेगो यस्य स तथोक्तः । 'प्रथमानं पृथुप्रथम्' इत्यभिधानात् । हनूमान् । दशकण्ठनीतां रावणेन हृतां सीतां विचेतुमन्वेष्टुं चारणानां सिद्धचारणगन्धर्वादीनां पथि सुरवर्त्मनि । गन्तुमिति शेषः । महेन्द्रशैलस्य प्रस्थात्सानुप्रदेशात् । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । उदस्थादुत्थितवान् । उत्पूर्वात् 'ष्ठा गतिनिवृत्तौ' इति धातोर्लुङ् । 'उदोऽनूर्ध्वकर्मणि' इत्यस्य प्रत्युदाहरणमेतत् । 'ततो रावणनीतायाः सीतायाः शत्रुकर्शनः । इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥' इति श्रीरामायणसुन्दरकाण्डाद्यपद्यमत्रानुसंधाय कविना चमत्कृतमित्यनुसंधेयम् । वृत्तमुपजातिः ॥

तदानीमुदन्वदुल्लङ्घनदृढतरनिहितचरणनिष्पीडनं सोढुमक्षमः क्ष्माभृदेष निःशेषनिःसरन्निर्झरौघतया निरन्तरनिष्पतद्बाष्पवर्ष इव इतस्ततो विततजीमूतवृन्दतया पारिप्लवशिथिलधम्मिल्ल इव, संत्रस्यमानकुञ्जरयूथतया संजातश्वयथुरिव, साध्वसधावमानहरिणगणचरणखरतरखुरकोटिपाटनोद्भूतधातुधूलीपालिपाटलितविकटकटकतया क्षरितशोणित इव, तत्क्षणप्रबुद्धकण्ठीरवमुखरितकन्दरतया कृताक्रन्द इव, परिसरगह्वरनिबिरीसनिःसृतसरीसृपतया निर्गलितान्त्रमाल इव, घूर्णमानतरुविटपकोटिताडितजलदवृन्दस्यन्दितसीकरनिकरकोरकिताकारतया समुपजातस्वेद इव, स्फटिकतटोपलपतनदलितकीचकसुषिरसंमूर्छत्पवनफूत्कारपरिपूरितगगनतया प्रवर्धमानोर्ध्वश्वास इव वचसामविषयं दौस्थ्यमभजत ॥

तदानीमिति । तदानीमुत्थानसमये उदकमस्यास्तीत्युदन्वानुदधिः । 'उदन्वानुदधिः सिन्धुः' इत्यमरः । 'उदन्वानुदधौ च' इति निपातनात्साधुः । तस्योल्लङ्घनेऽतिक्रमणे विषये दृढतरमतिगाढं यथा तथा निहिताभ्यां निक्षिप्ताभ्यां चरणतलाभ्यां यन्निष्पीडनं तत्सोढुमक्षमोऽसमर्थ एष क्ष्माभृन्महेन्द्रपर्वतः । 'महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः' इत्यमरः । निःशेषं निरवशेषं यथा तथा निःसरन्निर्गच्छन्निर्झरौघः प्रवाहनिवहो यस्य स तथोक्तस्तया । हेतौ तृतीया । एवमुत्तरत्रापि ।

---

१. 'मानः' इति पाठः. २. 'पूर' इति पाठः. ३. 'वृन्दसन्दतया' इति पाठः. ४. 'संत्रासमान' इति पाठः. ५. 'ससाध्वसतया' इति पाठः. ६. 'हरिणी' इति पाठः. ७. 'खरतरखुर' इति नास्ति क्वचित्. ८. 'धूलिपटलित' इति पाठः. ९. 'कण्ठीरवकण्ठरव' इति पाठः. १०. 'निःसरत्' इति पाठ.. ११. 'पाटित' इति पाठः.

'प्रवाहो निर्झरो झरः' इत्यमरः। निरन्तरमविच्छिन्नं विरामरहितं वा निष्पतन्निर्गमद्बाष्पवर्षमश्रुवृष्टिर्यस्य स तथोक्त इव। तथा ततइतः तत्रतत्र विततजीमूतवृन्दतया वितीर्णमेघवृन्दतया। 'घनजीमूतमुदिर–' इत्यमरः। पारिप्लवस्तरलः अतएव शिथिलो विश्लिष्टो धम्मिल्लः कचनिचयो यस्य स तथोक्त इव। विश्लथशिखाबन्ध इवेत्यर्थः। 'पारिप्लवं तु तरलम्', 'धम्मिल्लः संयताः कचाः' इत्यमरः। संत्रस्यमानः संत्रासं प्राप्नुवानः कुञ्जरयूथो गजनिवहो यस्य स तथोक्ततया संजातः समुत्पन्नः श्वयथुः शोफगुणो यस्य स तथोक्त इव। 'शोफस्तु श्वयथुः शोथः' इत्यमरः। साध्वसेन भिया धावमानानां पलायमानानां हरिणगणानां मृगयूथानां ये चरणाः पादास्तेषां खरतरखुरकोटिभिरतिनिशितशफाग्रैः। 'शफं क्लीबे खुरः पुमान्' इत्यमरः। पाटनेन विदारणेनोद्भूता या धातुधूलिपाल्यः सिन्दूरादिधातुरजःपुञ्जास्ताभिः पाटलितान्यरुणितानि विकटकटकानि निम्नोन्नतनितम्बदेशा यस्य स तथोक्ततया। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। क्षरितशोणितो निःसृतरक्त इव। तत्क्षणे तस्मिन्नुत्पतनसमये प्रबुद्धैर्बोधं प्राप्तैः कण्ठीरवैः सिंहैः। 'कण्ठीरवो गजरिपुः' इत्यमरः। मुखरिता वाचालिताः कन्दरा गुहा यस्य स तथोक्ततया। 'दरी तु कन्दरो वा स्त्री' इत्यमरः। कृताक्रन्दो विहिताक्रोश इव। मुखरितशब्दो वाख्यातः। परिसरगह्वरेभ्यः पर्यन्तकन्दरेभ्यो निबिरीसं निबिडं निःसृता निर्गताः। प्राणप्रयासेन निःसृता इति यावत्। सरीसृपा व्याला यस्य स तथोक्ततया निर्गलितान्त्रमालो बहिर्निर्गतनाडीसंततिरिव। 'निबिडं निबिरीसं च दृढं गाढं प्रचक्षते' इति वैजयन्ती। 'नेर्बिडज्बिरीसचौ' इति निशब्दाद्बिरीसच्प्रत्ययः। 'चक्री व्यालः सरीसृपः' इत्यमरः। घूर्णमानानां परिभ्रममाणानां तरूणां विटपकोटिभिः शाखाग्रैस्ताडिताद्भिदलिताज्जलवृन्दात्स्यन्दितैः प्रसृतैः सीकरनिकरैर्जलबिन्दुसंदोहैः। 'सीकरोऽम्बुकणाः स्मृताः' इति निघण्टुः। कोरकितः संजातकोरकआकारो मूर्तिर्यस्य स तथोक्ततया। 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः' इति विश्वः। समुपजातखेदः संजातघर्मोदक इव। स्फटिकतटेषु स्फटिकमयसानुषु य उपलास्त एव प्रस्तराः। काठिन्यातिशयद्योतनार्थं स्फटिकग्रहणम्। 'उपलः प्रस्तरे मणौ' इत्यमरः। तेषु पतनेन दलितानां विदीर्णानां कीचकानां वेणुविशेषाणां सुषिरेषु रन्ध्रेषु संमूर्च्छन्तः प्रविशन्तः ये पवनास्तैरेव फूत्कारैः परिपूरितं गगनं यस्य स तथोक्ततया। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। प्रवर्धमानः समेधमान ऊर्ध्वश्वासो यस्य स तथोक्त इवेति सर्वत्रोत्प्रेक्षा। वचसामविषयं वक्तुमशक्यं दौःस्थ्यं दुरवस्थत्वम्। 'दुरवस्था तु दौःस्थ्यं स्यात्' इत्यमरशेषः। अभजत्प्राप॥

कृत्वा मारुतिलङ्घनोत्थितरयाच्चत्रानुयात्रां ततः
पर्यायात्पतिता महेन्द्रगहनक्षोणीरुहाणां ततिः।
मध्येवारिनिधि प्रकाशितशिखा सेतोः कृते भाविनः
सूत्रन्यासनिखातशङ्कुनिवहभ्रान्तिं पयोधौ दधौ॥ २॥

१. 'पतताम्' इति पाठः.

कृत्वेति । तत्र तस्मिन्समये मारुतेर्हनूमतो लङ्घनेनोत्तरणेनोत्थित उत्पन्नो यो रयो वेगस्तस्माद्धेतोरनुयात्रां कृत्वा । अनुसृत्य गत्वेत्यर्थः । ततोऽनुयात्रानन्तरं पर्यायात्क्रमान्मध्येवारिधि समुद्रमध्ये । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावसमासः । पतिता महेन्द्रपर्वतस्य गहने ब्रह्मारण्ये वर्तमानानां क्षोणीरुहाणां ततिः पङ्क्तिः प्रकाशिताः प्रकटीभूताः शिखा अग्राणि यस्याः सा तथाभूता सती भाविनः करिष्यमाणस्य सेतोः कृते निमित्तं सूत्रन्यासेन निखातानां शङ्कूनां निवहस्य भ्रान्तिं पयोधौ सिन्धौ दधौ धृतवती । 'स्थाणुरस्त्री ध्रुवः शङ्कुः' इत्यमरः । उत्प्रेक्षालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

**पक्षाभिघातरयरेचितवीचिमाला-**
**त्पाथोनिधेः पवननन्दनविश्रमाय ।**
**उत्तुङ्गशृङ्गकुलकीलितनाकलोको**
**मैनाकभूभृदुदजृम्भत संभ्रमेण ॥ ३ ॥**

पक्षेति । पक्षयोरभिघातरयेणाभिघातवेगेन रेचिता निरस्ता वीचिमाला यस्य तस्मात्पाथोनिधेः समुद्रात्सकाशात्पवननंन्दनस्य हनूमतो विश्रमायोत्तुङ्गशृङ्गकुलकीलितनाकलोक उन्नतशिखरनिवहव्याप्तस्वर्गलोको मैनाको नाम भूभृन्मैनाकाद्रिः संभ्रमेण वेगेनोदजृम्भत । वसन्ततिलकावृत्तम् ॥

ततः किमित्यत आह—

**तत्र यात्राप्रत्यूहः प्रत्युद्भूत इति वक्षसा त्वमधः पातयित्वा प्रयान्तमेनं सान्त्वयन्हिरण्यनाभो बभाषे ॥**

तत्रेति । तत्र तस्मिन्समये यात्रायाः समुद्रलङ्घनप्रयाणस्य प्रत्यूहो विघ्नः प्रत्युद्भूतः प्रत्युद्गत इति पर्यालोच्य तं मैनाकं वक्षसा वक्षःस्थलेनाधः पातयित्वा प्रयान्तं वेगेन गच्छन्तमेनं हनूमन्तं सान्त्वयन्सामवचनैरुपलालयन्स एष सोऽयं हिरण्यनाभो हिरण्यप्रधानो मैनाको बभाष उवाच । 'नाभिः प्रधाने' इति विश्वः । 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्राजन्तयोगविभागात्समासान्तोऽच्प्रत्ययः ॥

उक्तप्रकारमेव विशदयति—

**सागरेण कृतज्ञेन तवाध्वश्रान्तिशान्तये ।**
**मारुते प्रेरितोऽस्म्यद्य सौम्य विश्रम्य गम्यताम् ॥ ४ ॥**

सागरेणेति । हे मारुते, कृतं जानातीति कृतज्ञेन । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । 'अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः । इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ॥' इति श्रीरामायणोक्तरीत्युपकारज्ञेनेत्यर्थः । अतः सागरेण सगरनिर्मितेन समुद्रेण तवाध्वश्रान्तयेऽध्वश्रमापनोदनार्थम् । अद्येदानीं प्रेरितः प्रचोदितः । 'प्रेषितः'

---

१. 'मालः' इति पाठः. २. 'श्रमे' इति पाठः. ३. 'अत्र' इति पाठः.

इति पाठे 'ग्रहितः' । अस्मि । अतः हे सौम्य साधो, विश्रम्याध्वश्रममपनीय । मयि इति शेषः । गम्यताम् ॥

नहि समुद्रप्रेषणमेवात्र निमित्तम्, किंतु सुहृत्संबन्धादपि मदागमनमुपपद्यत इत्याह—

**त्वत्पित्राहं परित्रातः पूर्वं पर्वतभेदिनः ।**
**तस्माच्चास्मि विपक्षोऽद्य सपक्ष इति मां भज ॥ ५ ॥**

**त्वदिति** । हे मारुते, त्वत्पित्रा मारुतेन पूर्वमहं पर्वतभेदिनः पर्वतपक्षच्छेदिन इन्द्रात्परित्रातः परिरक्षितः । त्वत्पितृसहायेनाहं निर्बन्धविमुक्तोस्मीत्यर्थः । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी । तस्मात्कारणाद्विपक्षः शत्रुः पक्षरहितश्च नास्मि । अद्यास्मिन्नवसरे सपक्षः सुहृत्पक्षसहितश्चेति मत्वा मां भज । विश्रमार्थं मयि निवसेत्यर्थः ॥

**एवं प्रार्थयमानमेनं संमान्य कार्यगत्या गते सति हनूमति ॥**

**एवमिति** । एवमुक्तरीत्या प्रार्थयमानं याचमानमेनं मैनाकं संमान्य मानयित्वा । 'यथा रामविनिर्मुक्तः शरः श्वसनविक्रमः । गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ॥' इति रामायणोक्तरीत्या प्रतिज्ञाया विहितत्वात्कार्यकालस्यात्ययिकत्वाच्च इहान्तरे मया न स्थातव्यमिति समाधायेत्यर्थः । कार्यगत्या स्वामिकार्यवशेन हनूमति गते गतवति सति ॥

ततः किं जातं तत्राह—

**अवलोक्य हिरण्यनाभमब्धौ वलमानं बलमानमाथिवज्रः ।**
**शतमन्युरपेतमन्युरासीत्पवमानात्मजसेवनादमुष्मिन् ॥ ६ ॥**

**अवलोक्येति** । वलमानांश्चलनशीलान्मथ्नाति विदारयतीति तथोक्तं वज्रं दम्भोलिर्यस्य स तथोक्तः । यद्वा बवयोरेकत्वस्मरणात् बलस्य बलाख्यासुरस्य मानं गर्वम् । 'गर्वोऽभिमानोऽहंकारः' इत्यमरः । मथ्नाति नाशयतीति तथोक्तं वज्रं यस्य स तथोक्तः शतमन्युः शतक्रतुरब्धौ वलमानं हिरण्यनाभमवलोक्य । लक्ष्यं लब्ध्वापीत्यर्थः । पवमानात्मजसेवनाद्धेतोरमुष्मिन्मैनाके विषयेऽपेतमन्युर्विगतमन्युरासीत् । श्रीरामकार्यार्थं प्रवृत्तस्य सेवनाय प्रवृत्तत्वाद्वैरमविगणय्योपशान्तकोपोऽभूदित्यर्थः ॥

**तदनु यथापुरं लङ्कापुरं प्रति प्रधावतो हनूमतः सरणिमरुणदरुणसारथेः पदवीं विन्ध्य इव वदनं व्यादाय द्विरसनजननी रंहसा सुरसा ॥**

**तदन्विति** । तदनु मैनाकनिर्गमनानन्तरम् । यथापुरं पुरा यथा । पूर्ववदित्यर्थः ।

---

१. 'तव पित्रा' इति पाठः. २. 'नास्ति' इति पाठः. ३. 'अत्र' इति पाठः.

'यथासादृश्ये' इत्यव्ययीभावे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। लङ्कापुरं रावणराजधानीं प्रति प्रधावतो वेगेन गच्छतो हनूमतः सरणिं मार्गमरुणसारथेरनूरुसारथेः सूर्यस्य। 'सूरसूतोऽरुणोऽनूरुः' इत्यमरः। पदवीं विन्ध्य इव सुरसा नाम द्विरसनजननी सर्पमाता रंहसा तरसा। 'रंहस्तरसी तु रयः स्यदः' इत्यमरः। वदनं व्यादाय शतयोजनपरिमितं व्याप्तं कृत्वारुणत्। रुरोधेत्यर्थः। 'रुधिर् आवरणे' इति धातोर्लङ्॥

ततः किमत आह—

उज्जृम्भितस्य तरसा सुरसां विजेतुं
पादौ पयोधिकलितौ पवमानसूनोः।
तस्योत्तमाङ्गमभवद्गगनस्रवन्ती-
वीचीचयस्खलितसीकरमालभारि॥ ७॥

**उज्जृम्भितस्येति**। तरसा वेगेन सुरसा विजेतुमुज्जृम्भितस्य प्रवृद्धस्यास्य पवमानसूनोर्हनूमतः पादौ पयोधिकलितौ समुद्रसंस्थितावभूताम्। तथोत्तमाङ्गं शिरस्तु। 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः। गगनस्रवन्त्या गगनापगाया मन्दाकिन्या वीचीचयेभ्यस्तरङ्गपरम्पराभ्यः स्खलितानां विगलितानां सीकराणामम्बुकणानां मालाः स्रजो बिभर्तीति तथोक्तमभवत्। सुरसावक्त्राधिकं निजवपुर्यथा स्यात्तथायं निजसामर्थ्याद्व्यवर्धतेत्यर्थः। 'स्रवन्ती निम्नगापगा' 'सीकरोऽम्बुकणाः स्मृताः' इति चामरः। 'इष्टकेषीकामालानां चिततूलभारिषु' इति मालाशब्दस्य ह्रस्वत्वम्। अत्र हनूमदुत्तमाङ्गस्य गगनस्रवन्तीसीकरमालभारित्वासंबन्धेऽपि तत्संबन्धोक्तेरसंबन्धे संबन्धरूपातिशयोक्तिः। वसन्ततिलकावृत्तम्॥

तनुं तनूकृत्य तदा हनूमान्कृत्वा प्रवेशं[1] जठरे तदीये।
ततो विनिष्क्रम्य स चक्रपाणेस्त्रिविक्रमस्य क्रममेव[2] चक्रे॥ ८॥

**तनुमिति**। तदा तस्मिन्समये तादृग्रूपधारणेन प्रसिद्धप्रभावो हनूमांस्तनुं निजशरीरं तनूकृत्याङ्गुष्ठमात्रं कृत्वा। शीघ्रप्रवेशनिर्गमनसौकर्यार्थमिति भावः। तदीये सुरसासंबन्धिनि जठरे कुक्षिकुहरे प्रवेशं कृत्वा प्रविश्य ततस्तदनन्तरं विनिष्क्रम्य वदनपिधानात्पूर्वमेव निर्गत्य। त्रयो विक्रमाः पादन्यासा यस्य। बलिबन्धनोद्युक्तस्येत्यर्थः। चक्रं सुदर्शनं पाणौ यस्य चक्रपाणेर्वामनावतारस्य विष्णोः। 'सप्तम्युपमान—' इत्यादिना बहुव्रीहिः। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति सप्तम्याः परनिपातः। क्रमम्। तत्सदृशप्रकारमित्यर्थः। अतएव निदर्शना। चक्री बलिबन्धनोद्युक्तो वामनो यथा प्रवृद्धो भूत्वा पुनः प्रकृतिस्थोऽभूत्तथायमपि तादृग्रूपो बभूवेत्यर्थः। तथाच रामायणम्—'तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः सुबुद्धिमान्। सुसंक्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः॥ सोऽभिपत्याथ तद्वक्त्रं निष्पत्य च महाजवः। अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत्॥' इति। वृत्तमुपजातिः॥

१. 'अवगाहं' इति पाठः. २. 'त्रिविक्रमप्रक्रमम्' इति पाठः.

अनन्तरवृत्तान्तमाह—

**भूयोऽपि सोऽयं रघुनाथदूतश्चिच्छेद गच्छन्नखरैः खराग्रैः ।**
**नृसिंहरंहः पथि सिंहिकाङ्गं छायानिरोधादुपपन्नमन्युः ॥ ९ ॥**

**भूय इति ।** सोऽयं सुरसाविजयप्रसिद्धपराक्रमसंपन्नो रघुनाथदूतो हनूमान् । भूयः पुनरपि गच्छन्पथि मार्गे छायानिरोधादनातपनिग्रहाद्धेतोः । 'छाया त्वनातपे कान्तौ' इति वैजयन्ती । उपपन्नमन्युः प्राप्तक्रोधः । अतएव नृसिंहस्य रंह इव रंहो वेगो यस्य स तथोक्तः सन्नित्युपमा । सिंहिकायाः सिंहिकाख्यायाश्छायाग्रहस्य राहुमातुः अङ्गं कलेवरं खराग्रैर्निशितमुखैर्नखरैर्निजनखैः । 'नखः स्यान्नखरोऽस्त्रियाम्' इत्यमरः । चिच्छेद विददार । यथा नृसिंहो हिरण्यकशिपुगात्रं तथा अयमपि सिंहिकाङ्गं चिच्छेदेत्यर्थः । 'ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः । उत्पपाताथ वेगेन मनःसंपातविक्रमः ॥' इति रामायणवचनम् । वृत्तं तु पूर्ववत् ॥

**तदनु पारावारस्य पारे लम्बशिखरिणि लम्बमानः प्रतनुतरवपुर्लङ्कापुरोत्तरगोपुरद्वारमासाद्य नितान्तचिन्तातन्तुसंतानितान्तःकरणोऽभूत् ॥**

**तदन्विति ।** तदनु सिंहिकाङ्गभेदनानन्तरमपारं पारमस्य दुस्तरत्वात्पारावारः समुद्रः । पवयोरभेदः । तस्य पारेऽपरतीरे । लम्बशिखरिणि लम्बाख्ये गिरौ । 'लम्बमानशिखरिणि' इति वा पाठः । 'स लम्बशिखरे लम्बे लम्बमानपयोधरे' इति रामायणोक्तत्वात् । यद्वा लम्बपर्वतस्यैव लम्बमान इति नामान्तरम् । लम्बमानः प्रविष्टः सन् । प्रतनुतरवपुरत्यन्तसूक्ष्मशरीरः सन् । परेषामप्रकाशार्थमिति भावः । लङ्कापुरस्योत्तरगोपुरद्वारमुत्तरपुरद्वारम् । यद्यपि 'पुरद्वारं तु गोपुरम्' इत्यमरः । तथापि करिकलभकर्णावतंसादिवदपौनरुक्त्यं द्रष्टव्यम् । आसाद्य प्राप्य । लङ्केयं केन मार्गेण सुप्रवेशेति ज्ञातुमिति भावः । नितान्तमत्यन्तं चिन्ता एव तन्तुसंतानानि सूत्रसंततयस्तैः संदानितं बद्धमन्तःकरणं यस्य स तथोक्तोऽभूत् । दुरन्तचिन्ताक्रान्तान्तरङ्गो बभूवेत्यर्थः । 'बद्धे संदानितं मूतम्' इत्यमरः ॥

चिन्ताप्रकारमेवाह—

**वानरसेना कथं तरेदिममन्तरायं वितन्वन्तमुदन्वन्तम्, तरतु नाम, कथमुपयातु यातुधानराजधानीमिमाम्, सर्वथा वितथमनोरथो दाशरथिः, मोघीकृतार्णवलङ्घनः केवलमहमभवम्, जीविता वा न वेति न जानामि जानकीति तत्र भगवतीं सीतामवजिगमिषुराञ्जनेयः प्रच्छन्नसंचारहेतोरस्तमयं गभस्तिमालिनः केवलमभिललाष ॥**

---

१. 'लम्बमानशिखरिणि लम्बमानतनुर्लङ्कापुरद्वारमासाद्य नितान्तचिन्तातन्तुसंतानितान्तःकरणः' इति पाठः. २. 'जीवति' इति पाठः. ३. 'जानकीम्' इति पाठः. ४. 'तत्तत्रभवतीम्' इति पाठः.

वानरेति । वानरसेनान्तरायं सुरसाग्रहणादिरूपं विघ्नं वितन्वन्तं कुर्वाणम् । दुस्तरमित्यर्थः । इममेनमतिविस्तीर्णमुदन्वन्तं समुद्रं कथं कुतो वा तरेल्लङ्घयेत् । तरितुमशक्योऽयमुदधिरिति भावः । यथाकथंचित्सागरं तरतु नाम । यातुधानानां राक्षसानां राजधानीं त्रिकूटस्थितामिमां लङ्कां कथमुपयातु कथं प्राप्नुयात् । सर्वथा प्राप्तुमशक्येत्यर्थः । सर्वथा सर्वप्रयत्नेन पर्यालोचनायां क्रियमाणायां सत्यां दाशरथिः श्रीरामो वितथमनोरथो व्यर्थसंकल्प एव । अहमपि केवलमत्यन्तं मोघीकृतं विफलीकृतमर्णवलङ्घनं येन स तादृशोऽभवमभूवम् । जानकीसंदर्शनार्थमागतोऽस्मि बहुप्रयत्नेन । जानकी जीविता वा न वा इति न जानामीत्येवं बहुधा संचिन्त्य वृथा चिन्तया किं प्रयोजनमिति निश्चित्य धैर्यमवष्टभ्य तत्र पुरे वनेषु च भगवतीं महानुभावां सीतामाञ्जनेयो हनूमानवजिगमिषुरवगन्तुमिच्छुः सन् । प्रच्छन्नेन रहस्येन संचारहेतोः संचारनिमित्तं गभस्तिमालिनः सूर्यस्यास्तमयं केवलमस्तमयमेवाभिललाष चकमे । 'लष कान्तौ' इति धातोर्लिट् ॥

**तदनु शातमखस्यागस्त्यसंनिधौ निक्षिप्तचापस्य प्रत्यासीदति प्रयोजनवेलेति प्रचेतसे कथयितुमिव प्रतीचीं दिशं प्रविशति भगवति भास्वति ॥**

तदन्विति । तदनु हनूमच्चिन्तानन्तरं शातमखस्य शतमखसंबन्धिनः । 'तस्येदम्' इत्यण् । अगस्त्यस्य संनिधौ निक्षिप्तस्य चापस्य वैष्णवस्य धनुषः प्रयोजनवेला कार्यावसरः प्रत्यासीदति समागतेति प्रचेतसे वरुणाय कथयितुमिव भगवति महात्मनि भास्वति सूर्ये प्रतीचीं दिशं प्रविशति प्राप्तवति सति ॥

**गगनतलमिदमपरमहीधरकटककान्तारसमुद्भवदावपावकशिखाश्रेणिभिः किं शोणितम्, अथवा समीपसमापतत्पतङ्गरश्मिदृढतरवेष्टननिष्ठ्यूतानलतटतपनोपलजालसमुल्लसज्ज्वालापटलैः किमापाटलितम्, आहोस्विदागताय मित्राय महार्घमर्घ्यं प्रदातुं प्रमुदितचेतसा प्रचेतसा तूर्णमर्णवोदरोद्गीर्यमाणमाणिक्यकिरणैः किमरुणितम्, आहोस्वित्तारापथतरङ्गिणीसलिलमपि रसयितुमुज्जृम्भितस्य चरमसागरौर्वाग्नेरर्चिःपुञ्जेन किमिति रञ्जितमिति सकलजनस्य संदेहसंदोहं संदधाने संध्यारागे समुदञ्चिते, सरसीरुहश्रेणिषु पत्रपुटकपाटपिधानासु प्रतिकुमुदभवनं मकरन्दभिक्षामटत्सु मधुव्रतद्विजेषु, विकचकुवलयकलिकाकर्षणकषायेषु सायंतनवायुषु ततस्ततः संचरत्सु तिमिरेषु, कालागरुधूमस्तोमश्यामलितेषु दिक्पालपुरगोपुरव्यूहेषु,**

---

१. 'शातमखस्य निक्षेपचापस्य प्रत्यासीदति' इति पाठः. २. 'किमिह' इति पाठः. ३. 'आपाटलम्' इति पाठः. ४. 'अर्णवोद्गीर्यमाण' इति पाठः. ५. 'ग्रसितुम्' इति पाठः. ६. 'किमनु' इति पाठः. ७. 'कषण' इति पाठः. ८. 'सायंवायुषु' इति पाठः.

अतिकमलाकरं प्रेङ्खिते विश्लेषवेदनापूर्वैरङ्गे रथाङ्गविहंगदीनक्रेंकारे, नक्षत्रमालालंकृते गगनमतङ्गजे॥

गगनतलमिति। इदं गगनतलमाकाशमण्डलमपरमहीधरकटकेष्वस्ताचलनितम्बेषु यानि कान्ताराण्यरण्यानि तत्समुद्भवस्य तत्संजातस्य दावपावकस्य दावाग्नेः शिखाश्रेणिभिर्ज्वालाजालैः शोणितं किमरुणीकृतं किम्। अथवा समीपं निकटं प्रति समापतन्नागच्छन्यः पतङ्गः सूर्यः। 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः। तस्य रश्मीनां किरणानाम्। प्रग्रहाणामिति च गम्यते। दृढतरवेष्टनेनातिगाढसंवलनेन निष्क्यूतो निर्गतोऽनलोऽग्निर्येषां तानि यानि तटतपनोपलजालानि तटवर्तिसूर्यकान्तमणिनिकरास्तेभ्यः समुल्लसद्भिः संस्फुरद्भिर्ज्वालापटलैरर्चिःपुञ्जैरापाटलितमासमन्तादरुणितं किम्। आहोस्विद्यद्वा। 'आहो उताहो किमुत विकल्पे किं किमूत च', 'स्वित्प्रश्ने च वितर्के च' इत्युभयत्राप्यमरः। आगताय निजनिवासं प्राप्ताय मित्राय सूर्याय सुहृदे च। 'मित्रं सुहृदि मित्रोऽर्के' इति विश्वः। महार्घममूल्यम्। अर्घार्थं पूजार्थं द्रव्यमर्घ्यम्। 'पादार्घाभ्यां च' इति यत्प्रत्ययः। 'मूल्ये पूजाविधावर्घः', 'षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः। प्रदातुं प्रमुदितचेतसा संतुष्टान्तःकरणेन प्रचेतसा वरुणेन तूर्णं मित्रागमनजनितसंभ्रमात्सत्वरमर्णवोदरात्समुद्रमध्यादुद्गीर्यमाणान्युदिर्यमाणानि यानि माणिक्यानि तेषां किरणैररुणितं किम्। अत्र निष्क्यूतोद्गीर्यमाणशब्दयोर्गौणार्थत्वान्न ग्राम्यत्वं किंतु सौन्दर्यावहत्वमेवेत्युक्तं प्राक्। आहोस्वित्तारापथतरङ्गिणीसलिलमाकाशगङ्गोदकमपि। 'तारापथोऽन्तरिक्षं च' इत्यमरः। रसयितुमास्वादयितुम्। पातुमिति यावत्। 'रसो गन्धरसे स्वादे' इति वैजयन्ती। उज्जृम्भितस्योद्गतस्य चरमसागरौर्वाग्नेः पश्चिमसमुद्रवर्तिवडवानलस्य। 'और्वस्तु वाडवो वडवानलः' इत्यमरः। अर्चिःपुञ्जेन ज्वालाजालेन। इहेदानीं रञ्जितमरुणीकृतं किम्। इत्यनेन प्रकारेण सकलजनस्य। सर्वेषां जनानामित्यर्थः। संदेहसंदोहं संशयातिशयं संदधाने समुत्पादयति संध्यारागे समुदञ्चिते समुज्जृम्भिते सति। अत्र गगनतलस्य निर्धारितानेकहेतुनिमित्तारुणितत्वोत्प्रेक्षणादुत्प्रेक्षा। तदुज्जीवितश्चायं संदेह इति संक्षेपः। तथा सरसीरुहश्रेणिष्वम्भोजराजिषु। गृहश्रेणिष्विति च गम्यते। पत्रपुटान्येव कपाटान्यरराणि तानि पिधानानि च्छादनानि यासां तासु। मुकुलितासु सतीष्वित्यर्थः। 'कपाटमररं तुल्ये', 'अपिधानतिरोधानपिधानाच्छादनानि च' इति चामरः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। अतएव मधुव्रता भृङ्गा एव द्विजा ब्रह्मचारिण इति रूपकम्। तेषु प्रतिकुमुदभवनम्। कुमुदरूपभवनेष्वित्यर्थः। वीप्सायामव्ययीभावः। मकरन्दभिक्षामुद्दिश्याटत्सु। पुष्परसरूपभिक्षाटनतत्परेषु सत्स्वित्यर्थः। 'अप्रत्याख्यायिनमग्रे भिक्षेत' इत्युपदेशात्कपाटपिनद्धगृहान्विहायान्यत्र भिक्षाटनस्य युक्तत्वादिति भावः। सूर्यास्तमये मधुव्रतानां मुकुलितसरसीरुहपरित्यागेन विकसितकैरवसंचारसंभवादियमुत्प्रेक्षा गम्यमाना रूपकसंकीर्णा। तथा सायंतनाः सायंभवाः। 'सायंचिरं—' इत्यादिना ट्युल्प्रत्ययस्तुडागमश्च। ते च

१. 'विहंगानाम्' इति पाठः.

ते वायवश्च तेपु । विकचकुवलयकलिकाकर्षणेन विकसितकोरकसंघर्षणेन कषायेषु सुरभिषु सत्सु । 'कलिका कोरकः पुमान्', 'रागद्रव्ये कषायोऽस्त्री निर्यासे सौरभे रसः' इत्यमरयादवौ । तिमिरेष्वन्धकारेषु ततस्ततः संचरत्सु व्याप्रियमाणेषु सत्सु । तथा दिक्पालपुराणामिन्द्राद्यष्टदिक्प्रतिपत्तनानां गोपुरव्यूहेषु पुरद्वारसंनिवेशेषु कालागरुधूमस्तोमेनाधिवासनार्थं परिकल्पितकृष्णागरुधूमपटलेन श्यामलितेषु मेचकीकृतेषु सत्सु । तथा प्रतिकमलाकरम् । कमलाकरेष्वित्यर्थः । रथाङ्गविहंगानां चक्रवाकपक्षिणाम् । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः । विश्लेषवेदनाया विरहवेदनायाः पूर्वरङ्गे प्रारम्भभूते । दीनक्रेंकारे दीनाक्रन्दिते । क्रेमित्यनुकरणशब्दः । प्रेङ्खिते समुत्पन्ने सति । तथा गगनमतङ्गज आकाशगज इति रूपकम् । नक्षत्रमालया तारकाश्रेण्या सप्तविंशतिमौक्तिकहारावल्या चालंकृते भूषिते सति । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः ॥

अतश्चन्द्रोदयोऽभूदित्याह—

**आविर्बभूव पूर्वाद्रेः शृङ्गे शृङ्गारजीवितम् ।**
**तमस्तमालकान्तारकुठारः शशलाञ्छनः ॥ १० ॥**

**आविर्बभूवेति** । तमोऽन्धकार एव तमालकान्तारं तापिञ्छकाननं तस्य कुठारः परशुरिति श्लिष्टपरम्परितरूपकम् । ध्वान्तविध्वंसक इत्यर्थः । 'कालस्कन्धस्तमालः स्यात्तापिञ्छः' इत्यमरः । शृङ्गारस्य शृङ्गाराख्यस्य रसस्य जीवितं जीवनभूतः । ताटस्थ्येनोद्दीपकत्वात्तदुज्जीवक इत्यर्थः । तदुक्तम्—'मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः' इति । शशलाञ्छनश्चन्द्रः । पूर्वाद्रेरुदयपर्वतस्य । 'उदयः पूर्वपर्वतः' इत्यमरः । शृङ्गे शिखर आविर्बभूवोदजृम्भत ॥

**तत्करास्तमसा रुद्धा रेजिरे गगनाजिरे ।**
**शैवालचयसंच्छन्नाः सरसीव बिसाङ्कुराः ॥ ११ ॥**

**तदिति** । गगनाजिरे गगनाङ्गणे । 'अङ्गणं चत्वराजिरे' इत्यमरः । तमसान्धकारेण रुद्धाश्छन्नास्तत्कराश्चन्द्रकिरणाः सरसि कासारे । 'कासारः सरसी सरः' इत्यमरः । शैवालचयसंच्छन्नाः शैवालजालाच्छादिता बिसाङ्कुराः मृणालकिसलया इव । 'जलनीली तु शैवालं शैवलोऽथ कुमुद्वती', 'मृणालं बिसम्' इति चामरः । रेजिरे चकाशिरे । 'राजृ दीप्तौ' इति धातोर्लिट् ॥

**तस्मिन्प्रदोषसमये सहसा हनूमा-**
**न्कीर्तिच्छटाजवनिकामपनीय शत्रोः ।**
**आविर्बभूव सुमनःपरितोषणाय**
**लङ्काप्रवेशनवनाटकसूत्रधारः ॥ १२ ॥**

**तस्मिन्निति** । तस्मिन्प्रदोषसमये रजनीमुखवेलायाम् । 'प्रदोषो रजनीमुखम्'

---

१. 'यवनिकाम्' इति पाठः.

इत्यमरः । लङ्काप्रवेश एव नवो नवीनो नाटकसूत्रधारो नाटकप्रवर्तकः प्रगल्भनटो हनूमान् । अत्र नवशब्दग्रहणं लङ्कापुरस्य पुरुषान्तराप्रविष्टचरत्वसूचनार्थमित्यवगन्तव्यम् । शत्रो रावणस्य संबन्धिनीं कीर्तिच्छटां यशोबृन्दमेव जवनिकां प्रतिसीरामपनीयापसार्य । तत्कीर्त्यपनयस्यैतन्मूलत्वादिति भावः । 'बृन्दं जालं चक्रवालं जालकं पेटका च्छटा' इति वैजयन्ती । 'प्रतिसीरा जवनिका' इत्यमरः । सुमनसां देवानां सामाजिकविबुधानां च परितोषणाय । हृदयरञ्जनार्थमित्यर्थः । 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति वैजयन्ती । सहसा शीघ्रमाविर्बभूव । लङ्कापुरमध्यदेशप्रवेशाय प्रवृत्त इत्यर्थः । सूत्रं चतुर्विधाभिनयात्मकनाटकसूचनां धारयतीति सूत्रधारः । 'सूत्रं तु सूचके ग्रन्थभेदे तन्तुव्यवस्थयोः' इति नानार्थरत्नमाला । सूत्रधारलक्षणं तु—'आसूत्रयन्गुणान्नेतुः कवेरपि च वस्तुनः । रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥' इति । अयं तु द्विप्रकारः । एकः पूर्वरङ्गविधायकः इतरस्तु नटापरपर्यायः सूत्रधारसदृशगुणाकृतिः । प्रस्तावनप्रयोजक इति केचित् । तदुक्तम्—'प्रयुज्य रङ्गं निष्क्रान्ते सूत्रधारे सहानुगे । तादृशः प्रविशेदन्यः सूत्रधारगुणाकृतिः ॥' इति । अत्र समस्तवस्तुवर्तिसावयवरूपकालंकारः । वसन्ततिलकावृत्तम् ॥

**तत्काले लङ्काधिदेवतामात्मना सह विग्रहं विधातुं गृहीतयुवतिविग्रहां मार्गप्रसारस्यार्गलीभूय भूयसा तर्जयन्तीं निर्जित्य तया वानररचितावज्ञोपज्ञं निर्जनिलयविलयं सरसिजासनशासनादावेदयन्त्या विहितानुमतिर्मारुतिर्लङ्कायामविकलमेव मैथिलीं विचिन्वन्नैर्ऋतचक्रवर्तिनः प्रासादमाससाद ।**

तत्काल इति । तत्काले पुरप्रवेशसमये मारुतिर्हनूमानात्मना सह स्वेन साकं विग्रहं कलहं विधातुं कर्तुं गृहीतो युवतिविग्रहो यया ताम् । स्त्रीरूपधारिणीमित्यर्थः । अतएव मार्गप्रसारस्य मार्गसंचारस्यार्गलीभूय विष्कम्भतां प्राप्य । गमनप्रतिबन्धिबीभूत्वेत्यर्थः । 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । भूयसा बाहुल्येन तर्जयन्तीं भर्त्सयन्तीम् । तर्जयतेः परस्मैपदत्वं 'तर्जयन्निव केतुभिः' इत्यादौ कालिदासादिप्रयोगदर्शनात्सिद्धम् । 'तर्जयतेरनुदात्तत्वे चक्षिङो ङित्करणेनानुदात्तत्वे प्रयुक्तात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति । अतएव तर्जयति भर्त्सयति चेत्यपि दृश्यते' इति भट्टमल्लः । लङ्काधिदेवतां लङ्काधिष्ठानदेवतां निर्जित्य मुष्टिघातेन जित्वा । 'मुष्टिनाभिजघानैनां हनूमान्क्रोधमूर्छितः' इति रामायणवचनात् । अथ सरसिजासनशासनाद्ब्रह्मनियोगवशात् । उपज्ञायत इत्युपज्ञाद्यज्ञानम् । 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः । कर्मण्यण्प्रत्ययः । वानरेण रचिता विहिता यावज्ञावधीरणं सोपज्ञा आद्यज्ञानं यस्य तं तथोक्तम् । 'वानरकृतावधीरणं तव यदा स्यात्तदा लङ्काया विनाशः'

१. 'मार्गस्य' इति पाठः. २. 'तंतस्तया' इति पाठः. ३. 'निजविलयम्' इति पाठः. ४. 'नैर्ऋति' इति पाठः.

१७-च०

इत्यादौ ज्ञातमित्यर्थः । निजनिलयविलयं निजनिकेतननाशमावेदयन्त्या । 'इदं च तथ्यं शृणु मे ब्रुवन्त्या वै हरीश्वर । स्वयं स्वयंभुवा दत्तं वरदानं यथा मम ॥ यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् । तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ॥' इत्यादिरामायणोक्तरीत्या कथयन्त्येत्यर्थः । तया लङ्काधिदेवतया विहितानुमतिः कृताङ्गीकारः सन् । लङ्कायामविकलमेवाप्रतिहतमेव मैथिलीं विचिन्वन्मृगयन्। नैर्ऋतचक्रवर्तिनो राक्षससार्वभौमस्य रावणस्य प्रासादं हर्म्यमाससाद प्राप ॥

तत्र ।

तत्रेति । तत्र तस्मिन्प्रासादासादनसमये ॥

एषा राक्षससार्वभौमनगरी रक्षश्चमूरक्षिता
तस्येदं सदनं सुवर्णशिखरं बिभ्राणमभ्रावलीम् ।
एतत्पुष्पकमाहृतं धनपतेरित्यादरान्मारुते-
स्तत्रादर्शयदिन्दुदीपकिरणप्रद्योतिताशा निशा ॥ १३ ॥

एषेति । एषेयं रक्षश्चमूरक्षिता राक्षससेनाभिर्गुप्ता राक्षससार्वभौमनगरी रावणराजधानी । तथेदमेतत्तस्य रावणस्य संबन्धि सुवर्णशिखरं हिरण्मयशृङ्गमभ्रावलीं विभ्राणं बिभ्रत् । मेघपर्यन्तोन्नतमित्यर्थः । भृञः शानच् । सदनं गृहम् । तथैतद्धनपतेः । धनपतिं विजित्येत्यर्थः । 'ल्यब्लोपे कर्मण्यधिकरणे पञ्चमी वाच्या' । आहृतमपहृतं पुष्पकं पुष्पकाख्यं विमानम् । इत्यनेन प्रकारेणादराच्छ्रीरामकार्यप्रवृत्तत्वजनितप्रीतिवशात् । मारुतेर्हनूमतः । इन्दुरेव दीपस्तस्य किरणैः प्रद्योतिताः प्रकाशिता आशा दिशो यया सा तथोक्ता निशा रात्रिरदर्शयत् । यथा काचित्कस्मैचिदभ्यागताय रात्रौ दीपप्रभया सर्वं द्रष्टव्यं प्रदर्शयति तद्वदत्रापीत्यर्थः । चन्द्रोदयवशाद्दिक्प्रकाशे सति मारुतिः सर्वं निर्वर्णयामासेति फलितोऽर्थः । अत्र निशायाः प्रदर्शकत्वासंबन्धेऽपि तत्संबन्धाभिधानादतिशयोक्तिभेदः । स चैकदेशवर्तिरूपकेण संकीर्यते । शार्दूलविक्रीडितं वृत्तम् ॥

अथ साक्षाच्चन्द्र एव मारुतेः साहाय्यकतत्परोऽभूदित्युत्प्रेक्षते—

अपिच ॥

अपिचेति । किंचेत्यर्थः ॥

तत्प्रकारमेवाह—

आदित्यः कृतकृत्य एष भविता सीतापतेरीदृशं
साहाय्यं विरचय्य कीर्तिमतुलामादित्सुना सूनुना ।
इत्यालोच्य तदा किल स्वयमपि ख्यातिं गृहीतुं परां
लङ्कायां रघुनाथदूतसरणौ चन्द्रेण दीपायितम् ॥ १४ ॥

आदित्य इति । आदित्यः सूर्यः कर्ता । सीतापतेः श्रीरामस्य । एतेन क्षण-

१. 'विमानशिखरैः' इति पाठः. २. 'अमिताम्' इति पाठः.

मात्रमपि तद्विरहासहिष्णुत्वं सूच्यते। ईदृशमित्थंभूतम्। सीतान्वेषणरूपमित्यर्थः। साहाय्यं सहायकर्म। सहायकारित्वमिति यावत्। 'ब्राह्मणादित्वात्ष्यञ्'। विरचय्य कृत्वा। 'ल्यपि लघुपूर्वात्' इत्ययादेशः। अतुलां निरुपमां कीर्तिं ख्यातिमादित्सुना-दातुमिच्छुना। संजिघृक्षुणेत्यर्थः। ददातेः सन्नन्तादुप्रत्ययः। सूनुना पुत्रेण सुग्रीवेण कृतकृत्यः कृतार्थो भविता भविष्यत्येव। भवतेर्लुट्। इतीत्थमालोच्य किम्। मत्वा किमित्यर्थः। तदा तस्मिन्समये स्वयमपि परां ख्यातिं ग्रहीतुं संपादयितुं लङ्कायां रघुनाथदूतस्य हनूमतः सरणौ मार्गे चन्द्रेण दीपायितं दीपेनेवाचरितम्। तद्वत्सर्वं हनूमते प्रदर्शितमित्यर्थः। अहोरात्रप्रकाशकत्वेन तुल्ययोरावयोरन्यतरस्य ख्यातिसंभवे मया तूष्णीं स्थातुं नोपयुज्यत इति मत्वा चन्द्रेणाप्येवमाचरितमित्युत्प्रेक्षितत्वादुत्प्रेक्षालंकारः। दीपशब्दादाचारक्यङन्ताद्भावे क्तः। वृत्तं पूर्ववत्॥

**एवमेव पर्यटन्नस्वप्नसुन्दरीसौन्दर्यमुद्रां निद्रयाप्यतिशय्य शय्यागृहे कृतसंवेशं वेशयुवतिपरिवृतमवरोधवधूजनमप्यनिरोधेन निरीक्ष्य तत्र वितथमनोरथो मारुतिर्विरचितबहुविधचिन्ताप्रकारः प्राकारादवप्लुतः सन्नशोकवनिकायामपि मैथिलीमन्वेष्टुमिष्टदेवताप्रणतिमतनुत॥**

एवमिति। एवमेवोक्तप्रकारेणैव मारुतिः पर्यटन्संचरन्। सीतानिरीक्षणार्थमिति भावः। न विद्यते स्वप्नो निद्रा येषां तेऽस्वप्ना देवाः। 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरः। तेषां याः सुन्दर्यस्तासां सौन्दर्यमुद्रां रामणीयकपराकाष्ठां निद्रया निद्रावस्थयाप्यतिशय्यातिक्रम्य। जाग्रद्दशया तु किं वक्तव्यमिति भावः। शय्यागृहे शयनमन्दिरे कृतसंवेशं विहितस्वापम्। निद्राणमित्यर्थः। 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः। वेशयुवतिपरिवृतं वेश्याजनपरिवेष्टितम्। 'तच्छाखानगरं वेशो वेश्याजनसमाश्रयः' इत्यमरः। अवरोधवधूजनं मन्दोदर्याद्यन्तःपुरस्त्रीजनं च। 'शुद्धान्तश्चावरोधश्च' इत्यमरः। अनिरोधेनाप्रतिबन्धेन निरीक्ष्य दृष्ट्वा। तत्रान्तःपुरे वितथमनोरथः सीतादर्शनालाभाद्व्यर्थमनोरथः। अतएव विरचिता बहुविधा नानारूपाश्चिन्ताप्रकारा विचारपरिपाट्यो येन स तथोक्तः। 'किं नु सीताद्य वैदेही मैथिली जनकात्मजा। उपतिष्ठेत विवशा रावणं दुष्टचारिणम्॥' इत्यादि श्रीरामायणोक्तनानाविधचिन्ताक्रान्तान्तःकरण इत्यर्थः। अतएव प्राकारादवप्लुतः सन्। लङ्घितप्राकारः सन्नित्यर्थः। अशोकवनिकायामपि रावणान्तःपुरोचितप्रमदाजनेऽपि मैथिलीं सीतामन्वेष्टुं विचेतुमिष्टदेवतानां वसुरुद्राद्यभीष्टदेवतानां प्रणतिं नमस्कारमतनुताकार्षीत्। प्रारब्धकार्यसिद्ध्यर्थमिष्टदेवतानमस्कारं चकारेत्यर्थः। तथा रामायणम्—'वसून्रुद्रांस्तथादित्यानश्विनौ मरुतोऽपि च। नमस्कृत्वा गमिष्यामि रक्षसां शोकवृद्धये॥' इति॥

---

१. 'युवतीजनपरिवृतम्' इति पाठः. २. 'प्रासादाद्' इति पाठः. ३. 'अभीष्टदेवताप्रणामम्' इति पाठः.

असौ जनकनन्दिनीं ततइतो विचिन्वन्क्षणा-
दशोकवनिकामगादपगतान्यमार्गभ्रमः ।
परामभिलषन्गतिं शमधनो यथा निर्मम-
स्त्रयीमखिलकिल्बिषप्रशमनैकदिव्यौषधिम् ॥ १५ ॥

असाविति । असौ हनूमाञ्जनकनन्दिनीं जानकीं ततइतो विचिन्वन्मृगयन्नपगतोऽन्यमार्गभ्रमो मार्गान्तरसंचारः संसारमार्गविभ्रान्तिश्च यस्य स तथोक्तः सन् । विशेषणमेतच्छमधनेऽपि योज्यम् । क्षणात्क्षणमात्रेणाशोकवनिकामगात्प्रापत् । कथमिव । ममेत्येतदव्ययम् । ममत्वाद्वाञ्छिताद्रहितो निर्ममो निःस्पृहः । शमो वैराग्यादिना निर्विकारचित्तत्वम्, स एव धनं यस्य शमधनः । वैराग्यसंपन्नो मुनिरित्यर्थः । परां गतिं मुक्तिमभिलषन्वाञ्छन् । अखिलकिल्बिषप्रशमने सकलपापनिरासे एकदिव्यौषधिम् । समस्तपापक्षयकरीमित्यर्थः । त्रयीं यथा वेदत्रयीमिव । 'सामान्यं विशेषे पर्यवस्यति' इति न्यायेन प्रकृतोपयोगित्वाद्ब्रह्मप्रतिपादकोपनिषद्विद्यामिवेत्यर्थः । 'इति वेदास्त्रयस्त्रयी' इत्यमरः । 'इववद्वायथाशब्दाः' इति दण्ड्याचार्यानुशासनादुपमालंकारः । स च त्रय्यामोषधित्वरूपणाद्रूपकालंकारेणाङ्गेन संकीर्यते । पृथ्वीवृत्तम् ॥

ततस्तस्यां नागपुंनागतालहिन्तालतमालकृतमालसरलवकुलवञ्जुलतिलकामलककुटजलिकुचकतककक्कोलाङ्कोललवङ्गविकङ्कतकेतकीकदम्बोदुम्बरकपित्थाश्वत्थकुरवकमरुवकमाकन्दकुन्दतिन्दुकचन्दनस्यन्दनचम्पकचाम्पेयपनसवेतसपलाशपाटलारसालप्रियालुप्रायैरनेकैरनोकहनिवहैः परिवृतायां परिभ्रमदभ्रंकषविकटविटपनिबिडितगगनप्रपञ्चां कांचन काञ्चनमयीं शिंशपामारुरोह ॥

तत इति । ततस्तदनन्तरम् । नागा नागदन्तकाः, पुंनागा देववल्लभाः, तालास्तृणराजाह्वयाः, हिन्तालाः श्रीतालाः, तमालास्तापिच्छाः, कृतमाला आरग्वधाः, सरला देवदारुविशेषाः, वकुलाः केसराः, वञ्जुला अशोकाः, तिलकाः क्षुरकाः, आमलकास्तिष्यफलाः, कुटजा गिरिमल्लिकाः, लिकुचा लकुचाः, कतका जलपङ्कशोधकबीजवृक्षविशेषाः, कक्कोलानि कोशफलानि ग्रन्थ्यादिशेषाः, अङ्कोला निकोचकाः, लवङ्गानि देवकुसुमानि, विकङ्कताः स्रुवावृक्षाः, केतक्यस्तृणद्रुमविशेषाः प्रसिद्धाः, कदम्बा नीपाः, उदुम्बरा जन्तुफलाः, कपित्था दधिफलाः, अश्वत्थाश्चलदलाः, कुरवका रक्तकुरण्टकाः, मरुवकाः पिण्डीतकाः समीरणा वा, माकन्दाश्चूतविशेषाः, कुन्दानि माध्यानि, तिन्दुकाः स्फूर्जकाः, चन्दना मलयजाः,' स्यन्दनास्तिनिशाः,

१. 'पुंनाग' इति नास्ति क्वचित्. २. 'वञ्जुल' इति नास्ति क्वचित्. ३. 'अङ्कोल' इति नास्ति क्वचित्. ४. 'केतकी' इति नास्ति क्वचित्. ५. 'कदम्बक' इति पाठः. ६. 'माकन्द' इति नास्ति क्वचित्. ७. 'रसाल' इति नास्ति क्वचित्. ८. 'प्रियाल' इति पाठः. ९. 'परिवृताम्' इति पाठः. १०. 'विकट' इति नास्ति क्वचित्.

चम्पका हेमपुष्पकाः, चाम्पेया नागकेसराः, पनसाः कण्टकिफलाः, वेतसा नीवाराः, पलाशाः किंशुकाः, पाटलाः फलेरुहा मुष्कका वा, रसालाश्चूताः, प्रियालवो राजादनानि च, इत्येतेषां वृक्षविशेषाणां द्वन्द्वः । एतेषामभिधानममरकोशादौ द्रष्टव्यम् । एतत्प्रायैरेतत्प्रचुरैरनेकैर्बहुभिरनोकहनिवहैर्वृक्षषण्डैः परिवृतायां परिपूर्णायां तस्यामशोकवनिकायां परिभ्रमन्सीतादर्शनार्थमितस्ततः संचरन् । अभ्रं कषन्तीत्यभ्रंकषा अत्युन्नताः । 'सर्वकूलाभ्रकरीषेषु कषः' इति मुमागमः । तैर्विटपैः शाखाविस्तारैर्निबिडितगगनप्रपञ्चामाच्छादितगगनाभोगामित्यतिशयोक्तिः । कांचन काञ्चनमयीं हिरण्मयीम् । ताद्रूप्ये मयटि ङीप् । शिंशपामगरुतरुमारुरोहारूढवान् । यदधःप्रदेश एव जानकीनिवासस्थानमिति भावः । 'पिच्छिलागरुशिंशपा' इत्यमरः ॥

तत्र तत्पत्रसंछन्नगात्रः पुत्रो नभस्वतः ।
न्यग्रोधदलसंलीनजनार्दनदशां दधौ ॥ १६ ॥

तत्रेति । तत्र तस्यां शिंशपायां नभस्वतः पुत्रः पवनतनयो यो हनूमांस्तत्पत्रसंछन्नं तस्याः शिंशपायाः पत्रसंछन्नं पलाशाच्छादितं गात्रं यस्य स तथोक्तः सन् । न्यग्रोधदलसंलीनस्य वटपत्रशायिनो जनार्दनस्य श्रीमहाविष्णोर्दशां दधौ । अन्येषामप्रकाशार्थं तत्र तथा निलीयातिष्ठदित्यर्थः । तत्रान्यदशाया अन्यस्यासंभवात्तत्सदृशीं दशामिति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धरूपो निदर्शनालंकारः ॥

ततस्तदधस्तात्सीतामपश्यदित्याह—

मल्लीं चूतवनादिव स्नुहिवने म्लेच्छेन संस्थापितां
मालां देवकुलादिवामिषधिया क्षिप्तां श्मशाने शुना ।
देवीमाश्रमतस्तथा स्वभवनं नक्तंचरेण च्छला-
दानीतामपनीतवेषरचनामालोकयन्मारुतिः ॥ १७ ॥

मल्लीमिति । म्लेच्छेन यवनेन चूतवनात्सहकारोद्यानात् । उद्धृत्येति शेषः । स्नुहिवने सीहुण्डिकावने संस्थापितां निक्षिप्तां मल्लीं विचकिलालतामिव । 'मल्ली विचकिला शीतभीरुः स्यादष्टपत्रिका' इत्यभिधानरत्नमाला । तथा शुना शुनकेनामिषधिया मांसभ्रान्त्या देवकुलाद्देवालयात् आकृष्येति शेषः । 'सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्' इति विश्वः । श्मशाने पितृवने क्षिप्तां मालां स्रजमिव । शोच्यामित्यर्थः । नक्तंचरेण रावणेन छलादाश्रमतस्तपोवनात् । अपहृत्येति शेषः । स्वभवनमानीतां प्रापिताम् । अतएवापनीतवेषरचनामपगतनेपथ्यां देवीं सीताम् । तदा तस्मिन्समये मारुतिरालोकयदपश्यत् । अनेकैवेयमुपमा । शार्दूलविक्रीडितं वृत्तम् ॥

---

१. 'स्वभवने' इति पाठः.

**पुनरयमेनामालोक्यैवं चिन्तां ततान ॥**

**पुनरिति।** पुनर्भूयोऽप्ययं हनूमानेनामालोक्यैवं वक्ष्यमाणप्रकारां चिन्तां विचारं ततान चकार ॥

तत्प्रकारमेवाह—

**ज्योत्स्नां विनापि निवसेन्निशि शीतभानु-**
**श्छायां विनापि विलसेद्दिवसेश्वरोऽपि।**
**एनां विना रघुपतिः परिगृह्य धैर्यं**
**सप्राण एव वसतीति विचित्रमेतत् ॥ १८ ॥**

**ज्योत्स्नामिति।** निशि रात्रौ शीतभानुश्चन्द्रो ज्योत्स्नां विना चन्द्रिकां विहायापि। अत्यन्ताविनाभूतामपीति भावः। विलसेद्विलासं प्राप्नुयात्। तथा दिवसेश्वरोऽपि सूर्योऽपि च्छायां विना च्छायानाम्नीं निजभार्यां कान्तिं विहायेत्यर्थः। विलसेत्। नैतच्चित्रमिति भावः। 'छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोः' इति वैजयन्ती। किंत्वेनां विनेत्थंभूतया सीतया वियुक्तः सन्। रघुपतिः श्रीरामो धैर्यं मनःस्थैर्यं परिगृह्यावलम्ब्य। 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः। सप्राणः सजीव एव वसतीति यत्, एतत्प्राणनं विचित्रमाश्चर्यम्। एतादृशरूपलावण्यसंपन्नां विहाय क्षणमात्रमपि प्राणान्धारयितुमशक्यत्वादिति भावः। अत्र शीतभानुदिवसेश्वरयोर्ज्योत्स्नाच्छायाविनाभावेन विलसनासंबन्धेऽपि तत्संबन्धाभिधानादसंबन्धे संबन्धरूपातिशयोक्तिः। वसन्ततिलकावृत्तम् ॥

**एवं चिन्तयता हनूमता कथमपि निशीथसमये गते निशीथिनीनाथेऽपि चरमगिरिशिखरोपकण्ठसेवामुत्कण्ठमाने दशकण्ठस्तु निद्राशेषेण स्मरशरप्रहारेण च कलुषीकृताक्षः सरसहरिचन्दनचर्चया जानकीदर्शनेच्छया च प्रकटितरागः परिवर्तितवैकक्षकमालया मुकुटरत्नप्रभया च तिरस्कृतनक्षत्रमालः शनैः शनैरविशदशोकवनिकाम् ॥**

**एवमिति।** एवमुक्तरीत्या चिन्तयता हनूमता निशीथसमयेऽर्धरात्रकाले गते गमिते सति। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। तथा निशीथिनीनाथे चन्द्रेऽपि चरमगिरिशिखरोपकण्ठसेवामस्ताचलशृङ्गसमीपानुवृत्तिमुत्कण्ठमानेऽभिलषमाणे। अस्तोन्मुखे सतीत्यर्थः। दशकण्ठस्तु रावणोऽपि निद्राशेषेण स्वापावशिष्टांशेन स्मरशरप्रहारेण मन्मथबाणवेधेन च कलुषीकृतान्यरुणीकृतान्यक्षीणि लोचनानि यस्य स तथोक्तः। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः। तथा कलुषी-

१. 'एनामालोक्य' इति नास्ति क्वचित्. २. 'निवसेत्' इति पाठः. ३. 'नीते निशीथसमये निशीथिनीनाथे चरम' इति पाठः. ४. 'सेवासमुत्कण्ठमाने' इति पाठः. ५. 'शर' इति नास्ति क्वचित्. ६. 'परिवर्तित' इति नास्ति क्वचित्. ७. 'वैकक्षमालया' इति पाठः. ८. 'मुकुटतट' इति पाठः.

कृतानि विकलितान्यक्षाणीन्द्रियाणि यस्य स तथोक्तः । तथा सरसहरिचन्दनचर्चया सद्रवरक्तचन्दनलेपनेन च । 'गुणे रागे द्रवे रसः' इत्यमरः । जानकीदर्शनेच्छया च प्रकटितः प्रकाशितो रागो लौहित्यमनुरागश्च यस्य स तथोक्तः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु' इत्यमरः । तथा परिवर्तितोपरि संनिवेशेनामुक्ता या वैकक्षकमालोरसि तिर्यक्प्रसादितपुष्पमाला तया च । 'वैकक्षकं तु तत् । यत्तिर्यक्क्षिप्तमुरसि' इत्यमरः । मुकुटरत्नप्रभया कोटीरहीरत्नसन्मणिदीप्त्या च तिरस्कृता न्यक्कृता नक्षत्रमाला सप्तविंशतिमौक्तिकमाला तारकाश्रेणिश्च येन स तथोक्तः सन् । एकत्र प्रकृत्या, अपरत्र कान्तिप्रसाराच्चेति भावः । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । शनैः शनैर्मन्दप्रकारम् । मदमदनावेशवशादतिमन्थरमित्यर्थः । अशोकवनिकामविशत्प्रविष्टवान् ॥

**रजनिचरमभागे वारसीमन्तिनीनां**
**करतलकलिताभिर्दीपिकामार्जनीभिः ।**
**दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं**
**हृदयमवजगाहे केवलं रावणस्य ॥ १९ ॥**

**रजनीति** । रजनिचरमभागे रात्रिविपरिवृत्तिसमये । अपररात्र इत्यर्थः । वारसीमन्तिनीनां वारनारीणाम् । 'नारी सीमन्तिनी वधूः' इत्यमरः । करतलकलिताभिर्हस्ततलधृताभिर्दीपिकाभिरेव मार्जनीभिः शोधनीभिर्दिशिदिशि प्रतिदिशम् । वीप्सायां द्विरुक्तिः । यत्तमोऽन्धकारो मोहश्च परिमृष्टं परिशोधितम् । जातमिति शेषः । तत्समस्तं कृत्स्नं तमः कर्तृ रावणस्य हृदयं केवलं हृदयमेवावजगाहे प्रविवेश । यथा लोके स्त्रीकरधृतमार्जन्या परिमृष्टो भूपरागः कुत्रचिन्मन्दिरान्तरं, यथा वा दिनकरकराभिमृष्टं सर्वतोदिक्कं शार्वरमन्धकारं गिरिगह्वरं प्रविशति तद्वदित्यर्थः । दीपिकाधरवारनारीपरिवेष्टितो रावणः परममोहाविष्टहृदयस्तदानीमशोकवनिकां प्रविष्ट इति फलितार्थः । अत्र जानकीसंगतिहेतुकत्वेन प्रसिद्धस्य रावणहृदयतमःप्रवेशस्य दीपिकामार्जनीपरिशोधकहेतुकत्वेनोत्प्रेक्षणादुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । सा च तमसः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्या रूपकानुप्राणितया निर्व्यूढेति संकरः ॥

ततः किं तत्राह—

**सोऽयं मदान्धहृदयो रघुवीरपत्नीं**
**सीमन्तिनीति हतनीतिरवाप पापः ।**
**आमूलपल्लवितकोमलसल्लकीति**
**वैतानपावकशिखामिव वारणेन्द्रः ॥ २० ॥**

**सोऽयमिति** । मदेन दर्पेणान्धं विवेकशून्यं हृदयं यस्य स तथोक्तः । अतएव हतनीतिर्निष्टनयः । दुर्विनीत इति यावत् । तथा पापानि परदाराभिमर्शकल्मषाण्यस्य सन्तीति पापः । दुराचार इत्यर्थः । अर्शआद्यच्प्रत्ययः । सोऽयं रावणः

सीमन्तिनी साधारणयोषिदिति मत्वेति शेषः । ननु निजकुलनिर्मूलनमूलभूतां जानातीति भावः । रघुवीरपत्नीं श्रीरामधर्मभार्याम् । वारणेन्द्रो मत्तगजः। मूलादारभ्य आमूलम् । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । ततः पल्लवितशब्देन 'सुप् सुपा' इति समासः । आमूलपल्लविता संजातपल्लवा । तारकादित्वादितच् । कोमला अभिनवा च सल्लकी गजप्रियलताविशेषः सेति । मत्वेति शेषः । 'सल्लकी स्याद्गजप्रिया' इति हलायुधः । वितानस्यायं वैतानो यज्ञियः। 'वितानो यज्ञविस्तारे लाभेऽपि क्रतुकर्मणि' इति विश्वः । स चासौ पावकश्च तस्य शिखां ज्वालामिवाप प्राप । उपमालंकारः । अत्र रघुवीरशब्देन श्रीरामवीर्यात्सीतापातिव्रत्यान्निजदुर्नयाचारस्यासन्नमृत्युत्वं सूचितमित्यवगन्तव्यम् ॥

**एतद्दर्शनेन वेपमानतनुलता मैथिली कापुरुषविषयपरुषवचनपारम्पर्येण विदीर्यमाणहृदया हृदयदयिताशयप्रत्ययादमुमेव तृणमन्तरतः कृत्वा स्थिता पर्यभाषत ॥**

**एतदिति ।** एतद्दर्शनेनैतस्य रावणस्य कर्मणा दर्शनेनावलोकनेन वेपमाना कम्पमाना तनुलता गात्रवल्ली यस्याः सा तथोक्ता मैथिली । कुत्सितः पुरुषः कापुरुषः। 'विभाषा पुरुषे' इति विकल्पात्कुशब्दस्य कादेशः । तस्य विषयाणि गोचराणि । दुर्जनोचितानीति यावत् । तादृशानि यानि परुषवचनानि कर्णकठोरदुर्भाषणानि तेषां पारम्पर्येण परम्परया । 'मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् । अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये ॥' इत्यादिरामायणोक्तरीत्या अवाच्यवचनप्रहेलिकयेत्यर्थः । विदीर्यमाणहृदया विशीर्यमाणान्तःकरणा सती । हृदयदयितस्य प्राणेश्वरस्य श्रीरामस्याशये सर्वदा स्वजिघृक्षारूपाभिप्राये प्रत्ययाद्विश्वासाद्धेतोः । अमुं रावणं प्रत्येव । ननु व्यक्त्यन्तरं प्रतीत्यर्थः। तृणमन्तरतो मध्ये कृत्वा स्थापयित्वा स्थिता वर्तमाना सती। पर्यभाषत प्रत्युवाच। रावणस्य साक्षात्संभाषणानर्हत्वात्तृणव्यवधानकरणं द्रष्टव्यम् । यद्वा यथा श्रीरामस्तृणेनैव काकासुरं निरसितवान् तथा तेनैव तृणेन त्वामपि निरसिष्यतीति ज्ञापनार्थं वा, पशुसमानस्य तवेदं तृणमेव भोज्यमिति बुद्ध्या वा, तृणदंशनेन श्रीरामपादयोः पतेति बुद्ध्या वा, आत्मप्रशंसापरस्य तवैश्वर्यमेतत्तृणसदृशमिति बुद्ध्या वा, जगदेकवीरस्य श्रीरामस्यापराधाचरणेन भवान्सानुबन्धो विनशिष्यतीति तृणं छित्त्वा निवेदनार्थं वा, तृणमन्तरतः कृत्वा प्रत्युत्तरं दत्तवतीत्यर्थः ॥

तत्प्रकारमेवाह—

**अयि, सकलसमाचारप्रतिष्ठानिष्ठः परमेष्ठी ननु कुलगुरुर्भवतः परकलत्ररतिरपत्रपां जनयति हि गोत्रजातानाम् ॥**

१. 'दर्शनवेपमान' इति पाठः. २. 'विषयवचन' इति पाठः. ३. 'दयितशौर्ये' इति पाठः. ४. 'तृणाय मत्वा तृणम्' इति पाठः. ५. 'अयि भोः' इति पाठः. ६. 'कलत्रगात्रनेत्रप्रसक्तिरप्यनिरपत्रपां' इति पाठः.

अयीत्यादिना । अयि इत्यामन्त्रणेन तस्य नामाप्युच्चरितुमनर्हमितीत्थं निर्दिशितमित्यवगन्तव्यम् । सकलाः समस्ता ये समाचारास्तत्तद्वर्णाश्रमोचिताः सम्यगाचारास्तेषां प्रतिष्ठायां निष्ठा प्रतिष्ठा तात्पर्यं यस्य स तथोक्तः। समस्तसदाचारनिर्वहणधुरीण इत्यर्थः । परमे स्थाने तिष्ठतीति परमेष्ठी ब्रह्मा । 'परः कनिः' इति कनिप्रत्यय औणादिकः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । 'स्थास्थिन्स्तृणाम्' इति वक्तव्यात्षत्वम् । भवतस्तव कुलगुरुर्ननु कुलस्वामी ननु । वंशप्रवर्तकः खल्वित्यर्थः । ब्रह्मणो नप्तृत्वात्त्वं महाकुलप्रसूत एव जातोऽसीति भावः। अस्तु । ततः किं तत्राह—परेति । परकलत्रेषु परदारेषु रतिरनुरागो यस्य स तथोक्तः । भवानिति शेषः । 'रतिः स्मरप्रियायां च रागेऽपि सुरतेऽपि च' इति विश्वः । गोत्रजातानां त्वद्वंशोद्भवानाम् । 'गोत्रं वंशे पुमान्शैले' इति भागुरिः । अपत्रपां लज्जां जनयत्युत्पादयति । ह्रिरवधारणे । शेषे प्रथमः । त्वदीयजुगुप्सितकर्मवशात्त्वद्वंश्या लज्जिता भवन्तीत्यर्थः । सदाचारप्रतिष्ठानिष्ठपरमेष्ठिवंशजेन त्वया तन्निष्ठेनैव वर्तितव्यम् । नत्वेवंभूतदुराचारेण सदाचाराणां त्वद्गोत्रजातानां लज्जाजनकेन भवितव्यमिति भावः । 'कलत्रं श्रोणिभार्ययोः' 'लज्जा सापत्रपान्यतः' इति चामरः ॥

तथाच किमत्रेतिकर्तव्यमित्याशङ्क्य मयोपदिश्यमानमेतद्धितं तवावश्यं कर्तव्यम् । तथाच श्रेयो भविष्यतीत्याह—

**भूयोऽपि पञ्चवटीपरिसरममुं जनमनुकूलप्रभञ्जन इवानुकूलः[1] कूलोपकण्ठं परिभ्रष्टां नावमिव यदि नयेथाः, तर्हि तवापि दयते नियतं मदीयो जीवितेशः साक्षाज्जीवितेशोऽपि त्वयि दयालुर्भवेत् ॥**

भूय इति । अमुं जनमित्यात्मनिर्देशः । मामित्यर्थः । पुरुषबुद्धिरेव मयि कर्तव्या नतु स्त्रीबुद्धिरिति ज्ञापनार्थमित्थं निर्देशः । पञ्चवटीपरिसरं पञ्चवट्याश्रमपर्यन्तभुवम् । 'पर्यन्तभूः परिसरः' इत्यमरः । अनुकूलप्रभञ्जनोऽनुकूलवायुरिव परिभ्रष्टां प्रतिकूलवायुवशादमार्गगतां नावं कूलोपकण्ठं तीरप्रान्तमिव । इत्यनेकैवेयमुपमा । भूयः पुनरपि नयेथा यदि प्रापयेथाश्चेत् । नयतिर्द्विकर्मकः । तर्हि मदीयो जीवितेशो मत्प्राणेश्वरः श्रीरामः । परमदयालुरिति भावः । 'जीवितेशो यमे कान्ते' इति विश्वः । तवापि दारापहरणरूपापराधकर्तुरपि । संबन्धसामान्ये षष्ठीत्युक्तं प्राक् । नियतं निश्चितं दयते दयां करिष्यति । महापराधी दुराचारोऽयं हस्तगत इति न मारयिष्यतीत्यर्थः । वर्तमानसामीप्ये वर्तमानप्रत्ययः । इत्थं शरणागते त्वयि काकासुरवद्दयां करिष्यति । तादात्विकगुणगणनापरतन्त्रा एव दयालवो न पूर्वापराधपरतन्त्रा इति भावः । अतः साक्षाज्जीवितेशः प्रत्यक्षान्तकोऽपि त्वयि विषये दयालुर्दयावान्भवेत् । न मारयेदित्यर्थः । श्रीरामदयापात्रस्य कथं मरणमिति भावः ॥

---

१. 'अनुकूल' इति पाठः. २. 'कूलोपकण्ठपरिभ्रष्टाम्' इति पाठः.

नचैवं मत्प्रत्यर्पणेन प्राणत्राणमात्रमेव फलम्, अपितु सकललोकश्लाघनीयश्रीराममैत्रीपात्रमपि भविष्यसीत्याह—

**दाशरथेरजय्याया मैत्र्याः पात्रमपि भवितासि ॥**

**दाशरथेरिति** । दाशरथेः श्रीरामस्य संबन्धिन्या अजय्याया जेतुमशक्याया अपरिहार्यायाः । यावज्जीवनभाविन्या इति यावत् । 'जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके' इत्यमरः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधुः । मैत्र्याः सख्यस्य । मैत्री व्याख्याता । पात्रं योग्यो भवितासि भविष्यसि । अभ्युच्चयश्चायं लाभस्तव भवितेति भावः । 'योग्यभाजनयोः पात्रम्' इत्यमरः ॥

विपक्षे दण्डमाह—

**किंतु खरप्रमुखनिशाचरबलमथनसमयरुचिरलग्नसान्द्रवसापङ्किलमुखमार्यपुत्रस्य शिलीमुखं भवन्तमन्तरेण कः श्रद्दधीत निजहृदयगलितरुधिरधारया प्रक्षालयितुम् ॥**

**किंत्विति** । किंतु । मदुक्तादन्यथाकरण इत्यर्थः । खरप्रमुखनिशाचरबलस्य कोपयुक्तखरासुरप्रभृतिराक्षससेनाया मथनसमये विध्वंसनकाले रुचिरं यथा तथा । 'सुचिर' इति पाठेऽतिचिरकालमारभ्य । लग्नया संसक्तया सान्द्रवसया मेदुरं मेदोविशेषेण पङ्किलं पङ्कवत् । पिच्छादिलादिलच् । मुखं अग्रं वदनं च यस्य तं तथोक्तम् । आर्यपुत्रस्य श्रीरामस्य शिलीमुखं बाणम् । अलिं चेति प्रतीयते । भवन्तमन्तरेण त्वां विना । 'अन्तरान्तरेण युक्ते' इति द्वितीया । निजहृदयात्स्वकीयवक्षःस्थलाद्गलिता निःसृता या रुधिरधारा तया प्रक्षालयितुं शोधयितुं कः श्रद्दधीत श्रद्धां कुर्यात् । तादृक्छिलीमुखक्षालने त्वमेव श्रद्धावान्नान्य इत्यर्थः । मदुक्तान्यथाकरणे श्रीरामः खरविदारणबाणेन त्वदीयं वक्षो विदारयिष्यतीति भावः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्या' इति श्रच्छब्दस्य पूर्वनिपातः ॥

आस्तां तावद्रामबाणवार्ता । लक्ष्मणबाणानां त्वयि निपततां को वा निवारयितेत्याह—

**अथवा जनस्थानसमरादारभ्य समराभावावग्रहतृषितानां सौमित्रिपत्रिचातकानां शोणिताम्बुपारणां तवापनयश्चेत्कः समर्थो निवारयितुम् ॥**

**अथवेति** । अथवेति पक्षान्तरे । जनस्थाने यत्समरं खरादिराक्षसमारणं रणं तस्मादारभ्य । ततःप्रभृतीत्यर्थः । 'अन्यारादितरर्ते—' इत्यत्र 'आरभ्यार्थयोगेऽपि' इति वचनात्पक्षे पञ्चमी । अतएव, तथा 'कार्तिक्याः प्रभृत्याग्रहायणी' इति भाष्यकारप्रयोगादेव प्रभृतिशब्दयोगात्पञ्चमीति कैयटः । समराभाव एवावग्रहो वृष्टिप्रतिबन्ध इति रूपकम् । 'वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ' इत्यमरः । तेन तृषि-

१. 'अजेयस्य' इति पाठः. २. 'सुचिर' इति पाठः. ३. 'वसापङ्कपङ्किलित' इति पाठः. ४. 'त्वदङ्गगलितशोणित' इति पाठः. ५. 'तवापनयधनतश्चेत्' इति पाठः.

तानां सौमित्रिपत्रिणां लक्ष्मणबाणानामेव चातकानां पक्षिविशेषाणाम् । 'पत्री रोप इषुर्द्वयोः' इत्यमरः । शोणिताम्बुपारणां त्वद्रक्ताम्बुपानं तवापनयश्चेत्प्रत्यर्पणाभावरूपदुर्नयो यदि तर्हि निवारयितुं कः समर्थः । न कोऽपीत्यर्थः । अमोघानां लक्ष्मणबाणानां गतिं ब्रह्मापि वारयितुं न शक्तः । अतस्तद्बाणा अपि त्वद्रुधिरं पास्यन्तीति भावः ॥

अथ निशिचरनाथं पञ्चबाणीविभिन्नं
न हि जनकसुतायाः प्रापदेकापि वाणी ।
जनमुपनतमृत्युं पञ्चवक्त्राहिदष्टं
विशति हृतविषाधेरोषधेः किंनु शक्तिः ॥ २१ ॥

अथेति । अथ जानकीभाषणानन्तरं पञ्चानामरविन्दादीनां बाणानां समाहारः पञ्चबाणी । त्रिलोकीवदत्र प्रक्रिया । तया विभिन्नं विदारितम् । अत्यन्तकामोपहतमित्यर्थः । एकबाणभिन्नस्यैवावस्था वक्तुं न शक्यते, पञ्चबाणभिन्नस्य तु किं वक्तव्यमिति भावः । निशिचरनाथं रावणं जनकसुताया एकाप्युक्तानां वाचां मध्ये काचिदपि वाणी वाग्न प्रापत् । कामान्धहृदयोऽयं न कामपि वाणीमशृणोदित्यर्थः । आप्नोतेर्लुङ् । हिरवधारणे । 'हिर्हैतावववधारणे' इत्यमरः । तत्र दृष्टान्तमाह—जनमिति । उपनतमृत्युमापन्नमरणम् । अतएव पञ्चवक्त्रेण पञ्चमुखेनाहिना सर्पेण दष्टं जनं हृतविषाधेः । विषदोषपरिहरणशक्ताया अपीत्यर्थः । ओषधेः शक्तिः सामर्थ्यं विशति किंनु । न प्रविशत्येवेत्यर्थः । दृष्टान्तालंकारः । 'यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निगद्यते ॥' इति लक्षणात् ॥

**एवं जनकदुहितुरवधीरणाफणितिमाकर्ण्य कोपपराङ्मुखो दशमुखस्तामभितो निवसन्तीरारक्षि[1]कराक्षसीरुद्दिश्य[2] 'भवत्यः चतुर्भिरप्युपायैरेनांमवश्यं[3] वश्यां कुरुध्वम् । इयमनुकूला चेदिमां हताशां प्रातरशनाय[4] महानसं नयत' इत्यादिश्य निशान्ते प्रत्यासन्ने निशान्तमेव प्रविवेश[5][6] ।**

एवमिति । एवमुक्तरूपं जनकदुहितुः सीताया अवधीरणाफणितिमवमाननावचनमाकर्ण्य कोपपराङ्मुखः कोपविह्वलो दशमुखस्तामभितः । तस्याः सीतायाः समन्तादित्यर्थः । 'अभितःपरितः—' इत्यादिना द्वितीया । निवसन्तीर्वर्तमानाः । आरक्षणं संरक्षणं प्रयोजनमासामित्यारक्षिक्यः । 'प्रयोजनम्' इति ठकि ङीप् । ततः 'स्त्रियाः पुंवत्—' इत्यादिना पुंवद्भावः । ताश्च ता राक्षस्यश्च ता उद्दिश्य । भान्तीति भवत्यः । अघटितघटनानैपुण्यसंपन्नत्वेन प्रशस्ताः हे राक्षस्यः । 'भातेर्डवतुः' इत्यौणादिको ड्वतुप्रत्ययः । 'उगितश्च' इति ङीप् । यूयं चतुर्भिरप्युपायैः सामदान-

---

१. 'पञ्चबाणावभिन्नम्' इति पाठः. २. 'आरक्षक' इति पाठः. ३. 'आहूय' इति पाठः. ४. 'एनां ममावश्यम्' इति पाठः. ५. 'प्रातराशाय' इति पाठः. ६. 'विवेश' इति पाठः.

भेददण्डरूपैश्चतुर्भिरुपायैरप्येनां सीतामवश्यं नियतं वश्याम् । 'वशं गतः' इति यत्प्रत्ययः । कुरुध्वम् । येन केनाप्युपायेन वशीकुरुध्वमित्यर्थः । अथेयं सीताननुकूलाऽवशगा चेत्तर्हि हताशां नष्टबुद्धिमिमां सीतां प्रातरशनाय प्रातःकालभोजनार्थं महानसं पाकस्थानम् । 'समानौ रसवत्यां तु पाकस्थानमहानसे' इत्यमरः । नयत प्रापयत । एतन्मांसं विशस्य पचनार्थमिति भावः । नयतिर्द्विकर्मकः । इत्येवमादिश्याज्ञाप्य । निशान्ते निशावसाने । प्रभात इत्यर्थः । प्रत्यासन्ने समीपवर्तिनि सति । निशान्तं गृहमेव प्रविवेश प्रविष्टवान् । 'निशान्तं गृहशान्तयोः' इति विश्वः ॥

**तदनु क्षणदाचरीणां[1] भीषणवीक्षणवाग्दोषोन्मेषणमुकुलितहृदयपुण्डरीका पुण्डरीकयूथपरिवृतसारङ्गाङ्गनाभङ्गीमङ्गीकुर्वाणा गीर्वाणतरुणीव शापवलाद्वसुधां[2] प्रपन्ना जनकनन्दिनी चिन्तामेवमकरोत् ॥**

तदन्विति । तदनु रावणगृहप्रवेशानन्तरं क्षणदाचरीणां त्रिजटाप्रभृत्यारक्षिकराक्षसीनां पिशाचीनां च भीषणानि भयंकराणि वीक्षणानि विलोकनानि यस्मिंस्तत्तथोक्तं तस्माद्वाग्दोषोन्मेषणात् 'तस्य त्वं राक्षसेन्द्रस्य भार्या भव यशस्विनि' इत्यादिदुर्वचनोच्चरणात् । तथा वागेव रात्रिस्तस्या उन्मेषणाविर्भावाद्धेतोः । 'दोषा रात्रिमुखे रात्रावत्रानव्ययमिष्यते' इत्यभिधानात् । मुकुलीकृतं संकुचितं हृदयमेव पुण्डरीकमम्भोजं यस्याः सा तथोक्ता । राक्षसीपरुषभाषणवशान्निर्भिन्नहृदयेत्यर्थः । 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । श्लेषसंकीर्णोऽत्र रूपकालंकारः । किंच पुण्डरीकयूथो व्याघ्रसमूहः । 'व्याघ्रेऽपि पुण्डरीको ना' इत्यमरः । तेन परिवृताया उपनिबद्धायाः सारङ्गाङ्गनाया हरिणाङ्गनाया या भङ्गी परिपाटी तामङ्गीकुर्वाणानुवर्तमाना । प्राणप्रयाणपर्यन्तावस्थां प्राप्नुवानेत्यर्थः । उपमा । करोतेस्ताच्छील्ये शानच् । तथा शापवलाद्वसुधां प्रपन्ना भूलोकं प्राप्ता गीर्वाणतरुणी सुरसुन्दरीव स्थिता जनकनन्दिनी । एवं वक्ष्यमाणरूपां चिन्तामकरोत् ॥

तत्प्रकारमेवाह—

**नूनं विदितवृत्तान्ते जटायुषि गतायुषि ।**
**मामिहस्थामार्यपुत्रः किं नाधिगतवान्प्रभुः[3] ॥ २२ ॥**

नूनमिति । विदितो ज्ञातो वृत्तान्तो मदपहारवार्ता येन तस्मिञ्जटायुषि गतायुषि मृते सति । आर्यपुत्रः श्रीराम इह तिष्ठतीतीहस्थाम् । अत्र लङ्कायां स्थिताम् । इहशब्दादव्ययात् 'सुपि स्थः' इति स्थप्रत्ययः । मामनधिगतवान्किमज्ञातवान्किं नूनम् । अन्यथा कथमयं नात्रागच्छेदिति भावः ॥

**आहोस्वित्क्रव्यादमायया विपर्यस्तप्रकृतेः काकुत्स्थस्य किम्वनास्था संजायते ॥**

---

१. 'भीषणवीक्षणक्षणदाचरीणां वाक्यदोषोन्मेषान्मुकुलित' इति पाठः. २. 'वसुंधराम्' इति पाठः. ३. 'मामिहावस्थितामार्यपुत्रः किं नावबुध्यते' इति पाठः.

आहोस्विदिति। आहोस्विद्वा। क्रव्यादमायया राक्षसवञ्चनाशक्त्या विपर्यस्तप्रकृतेर्विपरीतभावस्य। पूर्वविलक्षणामवस्थां प्रापितस्येत्यर्थः। काकुत्स्थस्य श्रीरामस्यानास्थानादरः संजायते किं समुत्पद्यते किम्। मयीति शेषः॥

अथवा। तदेवाह—

न केवलं मामहरद्दुरात्मा कृपां च रामस्य निसर्गसिद्धाम्।
इदं न चेत्संश्रितवत्सलः किं भवेत्स तूष्णीं जगदेकवीरः॥२३॥

अथवेति पक्षान्तरे॥ नेति। दुरात्मा दुर्हृदयो रावणो मां केवलं मामेव नाहरन्न हृतवान्। किंतु निसर्गसिद्धां स्वभावसिद्धां रामस्य कृपां परदुःखप्रहाणेच्छारूपां दयां चाहरत्। कयापि वा माययापहृतवानित्यर्थः। ननु कथमेतन्निर्णीयत इत्याशङ्क्य तत्र युक्तिं वक्ति—इदमेतत्कृपाहरणं न चेत्तर्हि संश्रितेष्वाश्रितेषु वत्सलः स्निग्धः। निरन्तराश्रितरक्षणतत्पर इत्यर्थः। 'श्रीमान्स्निग्धस्तु वत्सलः' इत्यमरः। 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः। जगदेकवीरः। निग्रहानुग्रहसमर्थ इत्यर्थः। स श्रीरामः तूष्णीं भवेत्किम्। उपेक्षापरतन्त्रो जायेत किम्। न भवेदेवेत्यर्थः। कृपाहरणाभावे कथमित्थं समर्थस्यास्याश्रितेषु तूष्णींभाव इति भावः। अत्र कृपाहरणासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः। उपेन्द्रवज्रा वृत्तम्॥

इत्थं विलप्य रघुपुंगवमेव[1] संततं चिन्तयन्ती कृच्छ्रान्मूर्च्छामगमत्॥

इत्थमिति। इत्थमनेन प्रकारेण विलप्य परिदेवनं कृत्वा रघुपुंगवं श्रीराममेव संततं निरन्तरं चिन्तयन्ती मनसि भावयन्ती सती। कृच्छ्रात्प्राणसंकटान्मूर्च्छां मोहमगमत्। श्रीरामसंवेदनेन रावणभर्त्सनानुसंधानेन च विसंज्ञाभूदित्यर्थः॥

ततः किं तत्राह—

निशाचरीस्तां निरवद्यशीलां निर्भर्त्सयन्तीर्निभृतं निवार्य।
अस्वप्नलोकोत्सवमात्मदृष्टं दुःस्वप्नमेकं त्रिजटा जगाद॥ २४॥

निशाचरीरिति। निरवद्यशीलां निर्दुष्टस्वभावाम्। 'अवद्यपण्य–' इत्यादिना निपातः। तां सीतां निर्भर्त्सयन्तीः परितर्जयन्तीः। भर्त्सयतेः परस्मैपदत्वं व्याख्यातम्। निशाचरी राक्षसीर्निभृतं निश्चलं निवार्य निषिध्य त्रिजटा नाम काचिद्वृद्धराक्षसी सीतापक्षपातिनी। अस्वप्नलोकस्य देवनिवहस्योत्सवं हर्षजनकम्। श्रीरामाभ्युदयसूचकत्वादिति भावः। 'उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः' इति रसाकरे। आत्मदृष्टमात्मनानुभूतमेकं दुःस्वप्नं रावणविनाशसूचकत्वादुष्टं स्वप्नं जगादोक्तवती। तथा च रामायणम्—'स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः। राक्षसानामभावाय भर्तुरस्या जयाय च॥' इत्यादि। वृत्तमुपजातिः॥

---

१. 'एव संततम्' इति नास्ति क्वचित्.

न केवलं स्वयमेव कथितवती त्रिजटा, किंतु सीताया आलम्बनभूताप्यभवदि-त्याह—

किंच ॥

उपघ्नवृक्षस्य परोक्षभावा-
दुपेत्य पृथ्वीं सुचिरं लुठन्त्याः।
नक्तंचरस्त्रीमुखकर्शितायाः
सीतालतायास्त्रिजटा जटाभूत् ॥ २५ ॥

किंचेति ॥ तत्प्रकारमेवाह—उपघ्नेति । उपघ्नवृक्षस्यान्तिकाश्रयवृक्षस्य । तद्रूपस्य श्रीरामस्येत्यर्थः । 'स्यादुपघ्नोऽन्तिकाश्रये' इत्यमरः । 'उपघ्न आश्रये' इति निपातः । परोक्षभावादसांनिध्याद्धेतोः पृथ्वीं भुवमुपेत्य सुचिरम् । अतिचिरकालमारभ्येत्यर्थः । लुठन्त्या विवर्तमानायाः । किंच नक्तंचरस्त्रीणां राक्षसीनां मुखैः परुषवचनैः कर्शितायाः कार्श्यं प्रापितायाः । निपीडिताया इति यावत् । तथा नक्तंचरस्त्रीणां शिथिल्याख्यकीटकविशेषाणां मुखैर्वदनैः कर्शितायाः कर्तितायाः । नक्तंचरस्त्रीशब्दः शिथिलीवाचकत्वेन निघण्ट्वन्तरेषु मृग्यः। सीताया एव लतायाः। त्रिजटा जटा शिफा । पुनरुत्थानालम्बनेनेत्यर्थः । अभूदासीत् । 'स्कन्धशाखाशाले शिफाजटे' इत्यमरः । श्रीरामविजयसूचकशुभनिमित्तकथनेन सीतामाश्वासयामासेत्यर्थः । श्लेषसंकीर्णोऽयं रूपकालंकारः । उपजातिवृत्तम् ॥

तदनन्तरमात्मत्यागाय स्पृहयन्त्यां मैथिल्यां मारुतिरियमनुपेक्षणीया तपस्विनी नीतिमनुञ्चतीति चिन्तां परिगृह्य नेदीयानस्या बभूव ॥

तदनन्तरमिति। तदनन्तरं त्रिजटास्वप्नकथनानन्तरं मैथिल्यां सीतायामात्मत्यागाय देहत्यागाय । 'आत्मा जीवे धृतौ देहे' इत्यभिधानात् । 'स्पृहेरीप्सितः' इति संप्रदानत्वाच्चतुर्थी। स्पृहयन्त्यामभिलषन्त्याम्। राक्षसीविरचितोपद्रवासहिष्णुत्वादिति भावः । मारुतिर्हनूमान् । तपस्विनी शोच्या । 'शोच्येऽपि च तपस्विनी' इत्यमरः। अनुपेक्षणीया नानादरणीया । न विलम्बकरणेन हिंसनीयेति यावत् । इति मत्वेति शेषः । नीतिमनुञ्चन्तीम् । नीतियुक्तामित्यर्थः । 'शे मुचादीनाम्' इति नुमागमः । चिन्तामेतत्संमुखीभावविचारं परिगृह्य कृत्वा । अस्या मैथिल्या नेदीयानन्तिकवर्ती बभूव । 'अन्तिकबाढयोर्नेदसाधौ' इति नेदादेशः ॥

ततः ॥

तत इति । ततो नेदिष्ठत्वानन्तरम् ॥

देव्या दशाननवचोमयवज्रदीर्ण-
कर्णान्तरव्रणविरोपणभेषजानि ।
विस्रम्भणार्थमयथान्वयसंगतानि
रामाभिकीर्तनमधूनि शनैर्न्यषिञ्चत् ॥ २६ ॥

देव्या इति । अयं हनूमान्दशाननस्य रावणस्य वचोमयं वाग्रूपं यद्वज्रमायुधं तेन

दीर्णयोर्विदारितयोः कर्णयोरन्तरे यानि व्रणानि क्षतानि तेषां विरोपणे चिकित्सायां भेषजान्यौषधानि । 'भेषजौषधभैषज्यानि' इत्यमरः । तथान्वयेन वंशेन संगतानि । 'राजा दशरथो नाम रथकुञ्जरवाजिमान्' इत्यादिवंशप्रशंसापूर्वकाणीत्यर्थः । रामाभिकीर्तनानि श्रीरामनामसंकीर्तनान्येव मधून्यमृतानि देव्याः सीताया विस्रम्भणार्थम् । विश्वासोत्पादनार्थमित्यर्थः । 'समौ विस्रम्भविश्वासौ' इत्यमरः । अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या । शनैरव्यग्रं न्यषिञ्चत् । श्रावितवानित्यर्थः । रूपकालंकारः । वसन्ततिलकावृत्तम् ॥

तदनन्तरं समन्तात्प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृगमुद्वीक्ष्य दुःस्वप्नबुध्या चकितहृदया सलक्ष्मणाय रामाय[1] भर्त्रे भद्रमाशंसमाना जनमिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिन्त्य[2] मायया समायातनैर्ऋत इति[3] बुध्या तस्मान्मारुतपुत्रात्तत्रास ॥

तदनन्तरमिति । तदनन्तरं श्रीरामसंकीर्तनानन्तरं जनकतनया सीता समन्तात् । दिक्षु विदिक्षु चेत्यर्थः । प्रसारितनयना कुत एतत्प्रयुक्तमिति प्रवर्तितदृष्टिः सती । तस्याम् । नेदिष्ठायामित्यर्थः । शाखायां शिंशपाविटपे । स्थितमिति शेषः । शाखामृगं वानरमुद्वीक्ष्य दुःस्वप्नबुध्या दुष्टस्वप्नोऽयमिति भ्रान्त्या । स्वप्ने वानरदर्शनस्याशुभसूचकत्वेन शास्त्रसिद्धत्वादिति भावः । तथा रामायणे—'स्वप्नो मयायं विकृतोऽद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः' इति चकितहृदया संभ्रान्तान्तःकरणा अतएव सलक्ष्मणाय लक्ष्मणसमेताय । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहशब्दस्य सत्वम् । भर्त्रे प्राणेश्वराय श्रीरामाय । 'चतुर्थी चाशिष्यायुष्य—' इत्यादिना चतुर्थी । भद्रं कुशलमाशंसमाना । 'स्वस्त्यस्तु रामाय सलक्ष्मणाय' इति कल्याणाशंसनं कुर्वाणेत्यर्थः । 'श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । आङ्पूर्वाच्छंसतेः शानच् । ततो दुरापस्वापं दुष्प्रापनिद्रम् । 'स्यान्निद्रा शयनं स्वापः' इत्यमरः । एतेन जागराख्या चतुर्थी मदनावस्था सूच्यते । तदुक्तम्—'दृङ्मनःसङ्गसंकल्पौ जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥' इति । इममीदृगवस्थापन्नं जनमित्यात्मनिर्देशः । स्वप्नः स्वप्नदशा कथं कुतो वाप्नुयात्संगच्छेत् । नाप्नुयादेवेत्यर्थः । तन्नान्तरीयकत्वात्तस्येति भावः । तथाच रामायणम्—'स्वप्नोऽपि नायं नहि मेऽस्ति निद्रा शोकेन दुःखेन च पीडितायाः' इत्यनेन प्रकारेण विचिन्त्यालोच्य मायया वानरभूमिकया समायातः पुनरागतोऽयं नैर्ऋतो रावण इति बुध्या । तद्गोचरभ्रान्त्येत्यर्थः । तस्मात्तथाभूतान्मारुतपुत्रात्तत्रास बिभाय । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी ॥

---

१. 'रामाय' इति नास्ति क्वचित्. २. 'विचिन्तयमाना मायासमायाता' इति पाठः. ३. 'पति' इति पाठः.

ततः किं तत्राह—

**सोऽपि समवतीर्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्याययितुमाञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ॥**

**स इति।** स आञ्जनेयोऽपि समवतीर्य शाखायाः सकाशादवरुह्य वचनवैचित्र्यात्तत्कालोचितनिजवचनरचनाविशेषचातुर्याज्जनकपुत्रीं जानकीं प्रत्याययितुं समाश्वासयितुम्। 'प्रत्याययन्' इति शत्रन्तपाठ आञ्जनेयविशेषणम्। समाश्वासयन्नित्यर्थः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। कृताञ्जलिर्विरचितकरसंपुटः सन्। विनयलक्षणमेतत्। व्यजिज्ञपद्विज्ञापितवान् ॥

विज्ञानप्रकारमेवाह—

**कल्याणि त्वद्वियोगेन तीव्रवेगेन ताम्यतः।**
**राघवेन्द्रस्य दूतं मामन्यथा मा स्म मन्यथाः ॥ २७ ॥**

**कल्याणीति।** हे कल्याणि शोभने जानकि। एतेन सौभाग्याभिधायकेन संबोधनेन श्रीरामस्य कुशलं सूच्यते। गौरादित्वान्ङीष्। तीव्रवेगेन चण्डरयेण। दुर्निरोधेनेत्यर्थः। 'तिग्मं तीक्ष्णं खरं तीव्रं चण्डमुष्णं पटु स्मृतम्' इति हलायुधः। त्वद्वियोगेन त्वद्विरहेण हेतुना ताम्यतो ग्लायतः। क्लिश्यत इत्यर्थः। एतेन व्यापारान्तरासक्तत्वशङ्का न कार्येति सूच्यते। राघवेन्द्रस्य रघुनायकस्य दूतं संदेशहरम्। 'स्यात्संदेशहरो दूतः' इत्यमरः। मामन्यथा प्रकारान्तरेण मा स्म मन्यथाः। न विजानीया इत्यर्थः। 'स्मोत्तरे लङ् च' इति चकारादाशीरर्थे लङ्। 'न माङ्योगे' इत्यडागमाभावः ॥

**त्वया सह प्रस्थितचित्तवृत्ति-**
**र्विभावरीकोकसमानधर्मा।**
**वचोऽब्रवीन्मैथिलि मन्मुखेन**
**त्वां कौशलं कोसलराजपुत्रः ॥ २८ ॥**

**त्वयेति।** हे मैथिलि, त्वया सह प्रस्थिता प्रयाता चित्तवृत्तिर्यस्य स तथोक्तः। त्वदेकायत्तचित्त इत्यर्थः। अतएव विभावर्यां रजन्यां यः कोकश्चक्रश्चक्रवाकस्तस्य समानो धर्मो यस्य स तथोक्तः। अतिविरहातुर इत्यर्थः। 'कोकश्चक्रश्चक्रवाकः' इत्यमरः। 'धर्मादनिच्केवलात्' इत्यनिच्। कोसलानां जनपदानां राजा कोसलराजो दशरथः। तस्य पुत्रः श्रीरामो मन्मुखेन मद्द्वारा त्वां कुशलमेव कौशलम्। स्वार्थेऽण्। वचः क्षेमवचनमब्रवीदवोचत्। ब्रुवो लङ्। 'ब्रुविशासि—' इत्यादिना द्विकर्मकत्वम्। 'अकथितं च' इति सीतायाः कर्मत्वम्। उपजातिर्वृत्तम् ॥

अथ प्रत्ययदार्ढ्याय लक्षणवार्तामप्याह—

**अपि च ॥**

---

१. 'प्रत्यापयन्', 'प्रत्याययन्' इति पाठौ.

शिरसा तव सौमित्रिरकरोदभिवादनम् ।
अपृच्छत्सोऽपि भद्रं त्वामधिपश्च वनौकसाम् ॥ २९ ॥

अपि चेति ॥ तदेव विवृणोति—शिरसेति । हे कल्याणि, सुमित्राया अपत्यं पुमान्सौमित्रिर्लक्ष्मणः । 'बाह्वादिभ्यश्च' इतीञ्प्रत्ययः । शिरसा मूर्ध्ना तवाभिवादनं नमस्कारमकरोत्कृतवान् । अथ सुग्रीवसख्यमपि जातमिति सूचयन्नाह —अपृच्छदिति । स प्रसिद्धः वनौकसामधिपोऽपि च वानरेश्वरः सुग्रीवश्च । 'मर्कटो वानरः कीशो वनौकाः' इत्यमरः । त्वां भद्रं कुशलमपृच्छत्पृष्टवान् । दुह्यादित्वाद्द्विकर्मकत्वम् ॥

एवमभिहितया तया संभूतविस्रम्भतया भयादपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव संततसंनिहित[1]रामनाममङ्गलमङ्गुलीयकमस्यै प्रायच्छत् ॥

एवमिति । एवमुक्तप्रकारेणाभिहितयोक्तया । अतएव संभूतविस्रम्भतया संजातविश्वासतया हेतुना । 'समौ विश्रम्भविश्वासौ' इत्यमरः । भयादपेतया । अपगतसाध्वसयेत्यर्थः । 'अपेतापोढ—' इत्यादिना पञ्चमी । तया सीतया । तावत्तदानीमनुयुक्तः । कथं सुग्रीवसख्यं जातमित्यादि पृष्टः सन् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । पवनतनयो हनूमान् । वालिमरणकारणं सुग्रीवस्य ( कर्तुः ) सख्यं मैत्रीम् । 'सख्युर्यः' इति यप्रत्ययः । आख्याय सम्यक्कथयित्वा प्राचेतसचेत इव वाल्मीकिमन इवेत्युपमा । संततसंनिहितेन निरन्तरसंनिकृष्टेन रामनाम्ना मङ्गलं कल्याणरूपम् । विलिखितश्रीरामनामवर्णावलीशोभितमित्यर्थः । अङ्गुलीयकं श्रीरामप्रेषितामभिज्ञानमुद्रिकामस्यै सीतायै प्रायच्छद्दत्तवान् । 'पाघ्राध्मा—' इत्यादिना दाणो यच्छादेशः ॥

सौख्यावहस्य पवनात्मजनीयमान-[2]
रामाङ्गुलीयकविलोकनवासरस्य ।
सत्यं कलां शततमीं[3] भुवि नैव भेजे
पाणिग्रहोत्सवदिनं जनकात्मजायाः ॥ ३० ॥

सौख्येति । जनकात्मजायाः सीतायाः पाणिग्रहोत्सवदिनं विवाहमहोत्सवदिवसः (कर्तृ)सौख्यावहस्य परमानन्दकरस्य पवनात्मजेन हनूमता नीयमानमानीतं यद्रामाङ्गुलीयकं श्रीरामाभिज्ञाङ्गुलिमुद्रिका तद्विलोकनवासरस्य तत्संदर्शनदिनस्य शततमीं शतस्य पूरणीम् । 'तस्य पूरणे डट्'इति डटो 'नित्यंशतादि मासार्धमाससंवत्सराच्च' इति मडागमे टित्वान्ङीप् । कलामंशम् । 'कला स्यान्मालिकावृद्धौ शिल्पादावंशमात्रके । षोडशांशेऽपि चन्द्रस्य' इति विश्वः । भुवि सत्यं यथार्थं नैव भेजे न प्रापैव । ततोऽपि सहस्रगुणाधिकानन्दजनकत्वादस्येति भावः । अत्र कलाभजनसंबन्धेऽप्यसंबन्धोक्तेरतिशयोक्तिः । वसन्ततिलकावृत्तम् ॥

---

१. 'रामनामकमङ्गुलीयकम्' इति पाठः. २ 'दीयमान' इति पाठः. ३ 'कलाशततमीमपि' इति पाठः.

१८-५०

ततस्तं जानकी निःसीमहर्षा बभाषे ॥

तत इति । ततोऽङ्गुलीयकप्रदानानन्तरं जानकी निःसीमहर्षा निरतिशयानन्दा सती तं हनूमन्तं बभाष उवाच ॥

भाषणप्रकारमेवाह—

महाभाग, सर्वथास्य दुरात्मनः प्रत्यासीदति मृत्युरेवमनलाभिधानया विभीषणदुहित्रा स्वमात्रा प्रेषितया भाषितं च । अयमप्यनार्यशीलस्तुरीयमुपायमन्तरेण न मामार्यपुत्रस्य समर्पयिष्यति । नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान्कृपणान्धारयितुमिति ॥

महाभागेति । हे महाभाग परहिताचरणभाग्यसंपन्न, सर्वथा सर्वप्रकारेणास्य दुरात्मनः पापिष्ठस्य रावणस्य मृत्युरन्तकः प्रत्यासीदति प्रत्यासन्नो भवति । तत्प्रत्यासादनं तथा निश्चितमित्यर्थः । नन्वेतन्मदभ्यूहनमात्रम्, किंत्वाप्तमुखाच्छ्रुतमपीत्याह—एवमिति । एवमुक्तप्रकारेण । अनलेत्यभिधानं यस्यास्तस्याः तथा स्वमात्रा निजजनन्या अस्मत्पक्षपातिन्या सरमया प्रेषितया एतद्वार्ताकथनार्थं प्रहितया विभीषणदुहित्रा विभीषणपुत्रिकया भाषितं च कथितमपि । अतोऽनार्यशीलस्तुच्छभावोऽयं रावणोऽपि च तुरीयं चतुर्थम् । 'चतुरश्छयतावाद्यक्षरलोपश्च' इति छप्रत्यय आद्यक्षरलोपश्च । उपायमन्तरेण । दण्डोपायं विनेत्यर्थः । 'अन्तरान्तरेण युक्ते' इति द्वितीया । मामार्यपुत्रस्य राजपुत्रस्य श्रीरामस्य । आर्यपुत्रेति राजपुत्राणामभिधानम् । 'आर्यो ब्राह्मणकुमारयोः राजा च' इति निपातनात् । न समर्पयिष्यति न दास्यति । दण्डोऽप्ययमविलम्बेनैव प्रयोक्तव्य इत्याह—नियतमिति । अहमपि नियतं निश्चितं मासादूर्ध्वम् । एकमासस्योपरिष्टादित्यर्थः । कृपणान्दीनान्प्राणान्धारयितुं निर्वोढुम् । 'शकधृष—' इत्यादिना तुमुन्प्रत्ययः । न शक्नुयां शक्ता न भवेयम् । अत ऊर्ध्वं जीवितं त्यक्ष्यामीत्यर्थः । इति बभाषे इति संबन्धः । तथाच रामायणम्—'धारयिष्यामि मासं तु जीवितं शत्रुसूदन । मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज ॥' इति ॥

एतदाकर्ण्य मारुतिर्महानुभावे, मा भैषीः । भवन्तीं वहन्नेव तूर्णमुल्लङ्घितसागरो रघुवरचरणसरसिजसमीपमुपयास्यामि । प्रागसमर्थे न समर्थयेथा इत्यभिहितवान् ॥

एतदिति । एतत्सीतावचनमाकर्ण्य श्रुत्वा मारुतिर्हनूमान् । हे महानुभावे महासामर्थ्यसंपन्ने । सामर्थ्यमत्र परमपातिव्रत्यप्रयुक्तमिति द्रष्टव्यम् । मा भैषीर्भयं मा प्राप्नुहि । भवन्तीं पूज्यां त्वां वहन्नेव स्कन्धे धारयन्नेव तूर्णमुल्लङ्घितसागर उत्तीर्ण-

---

१. 'मृत्युस्तथैवम्' इति पाठः. २. 'मयं च स्वमात्रा' इति पाठः. ३. 'ममार्यपुत्रस्य न' इति पाठः. ४. 'कृपणान्' इति नास्ति क्वचित्. ५. 'राघव' इति पाठः. ६. 'समीपम्' इति नास्ति क्वचित्. ७. 'प्रत्येवं मां समर्थं समर्थयेथा इत्यभिधाय' इति पाठः.

समुद्रः सन् । रघुवरस्य श्रीरामस्य चरणसरसिजसमीपं पादकमलसमीपमुपयास्यामि प्राप्स्यामि । मामसमर्थं न सम्भर्थयेथा मा मन्यस्वेत्यभिहितवानुवाच ॥

किंच ॥

किंचेति । अपिचेत्यर्थः ॥

महामहीध्रसध्रीचीं सोऽयं वृद्धिमुपेयिवान् ।
यया नूनमपांराशिः कुल्यातुल्यां दशां दधौ ॥ ३१ ॥

महामहीध्रेति । सोऽयं हनूमान्स्वसामर्थ्यपरिज्ञानाय महतां महीध्रेण गिरिणा सध्रीचीं समानां वृद्धिमुपेयिवान्प्राप्तवान् । 'महीध्रे शिखरिक्ष्माभृत्' इत्यमरः । यया देहवृध्यापांराशिः समुद्रः कुल्यातुल्यामल्पीकृतसरित्समानां दशां स्थितिं दधौ धृतवान् । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । हनूमद्देहापेक्षया समुद्रोऽल्प इव प्रतीयत इति भावः ॥

अथ तमुवाच सा जनकराजसुता मुदिता
किमु तव दुष्करं चरणलङ्घितवारिनिधेः ।
अपि तु मया सह प्लवगपुंगव यास्यसि चे-
न्नियतमपायिनी परिणमेद्भवतः पदवी ॥ ३२ ॥

अथेति । अथ हनूमद्देहवृद्धिदर्शनानन्तरं जनकराजसुता सीता मुदिता संतुष्टा सती तमाञ्जनेयमुवाच—हे आञ्जनेय, चरणाभ्यां लङ्घितस्तीर्णो वारिनिधिः समुद्रो येन तस्य तव दुष्करं कर्तुमशक्यं कार्यं किमु किमस्ति । किंचिदपि नास्तीत्यर्थः । अपितु किंतु । हे प्लवगपुंगव वानरोत्तम, मया सह त्वं यास्यसि गमिष्यसि चेद्भवत इयं पदवी मार्गोऽपायिनी दुष्टा परिणमेद्भवेत्संकटयुक्ता भविष्यति ॥

अन्यच्च ॥

अन्यच्चेति । किंचेत्यर्थः ॥

पातिव्रत्यहुताशनेन यदि तं कुर्यामहं भस्मसा-
त्सत्यं दाशरथेः शरस्य न भवेदात्मोचिता पारणा ।
किं चैतस्य यशोनिशापतिरपि प्रम्लानकान्तिर्भवे-
द्भीतः शासितरावणे रघुपतौ यात्रा मम श्रेयसी ॥ ३३ ॥

पातिव्रत्येति । हे आञ्जनेय, पातिव्रत्यहुताशनेन पातिव्रत्याग्निना तं रावणं भस्मसाद्भस्मीभूतं कुर्यां करोमि यदि तर्हि दाशरथेः श्रीरामस्य शरस्य बाणस्यात्मोचिता स्वानुरूपा पारणा पूर्तिः । तृप्तिरिति यावत् । न भवेन्न स्यात् । सत्यं यथार्थम् । नात्र संदेह इत्यर्थः । श्रीरामबाणेनैव रावणहननं कर्तव्यमिति भावः । श्रीरामस्यापकीर्त्यावहत्वाच्च ममैतन्न युज्यत इति । पक्षान्तरमाह—किंचेति । किंच । एतन्मात्रमेव न भवतीत्यर्थः । एतस्य दाशरथेर्यशो दानक्षात्रोद्भवासत्समाख्याव-

१. 'विशेदशाम्' इति पाठः. २. 'इयमनपायिनी' इति पाठः. ३. 'त्तसाच्छासित' इति पाठः. ४. 'श्रेयसे' इति पाठः.

देव (?) निशापतिः चन्द्रोऽपीति रूपकम् । प्रम्लानकान्तिः प्रक्षीणशोभो भवेत् । स्वसामर्थ्येनैव सीता रावणं विनाशितवती, रामस्त्वशक्त एव जातः किमित्यपकीर्तिः संभविष्यतीत्यर्थः । अतः हे भ्रातः इत्यादरेणामन्त्रणम् । रघुपतौ रघुनायके शासितरावणे विध्वंसितरावणे । श्रीरामेण रावणे विध्वंसिते सतीत्यर्थः । मम यात्रा प्रतिप्रयाणं श्रेयसी प्रशस्या । श्रेष्ठेति यावत् । 'प्रशस्यस्य श्रः' इति श्रादेशः । अतो मयैव आगन्तुं न युज्यते । श्रीरामो यथा क्षिप्रमागच्छेत्तथा त्वया प्रोत्साहितव्य इति भावः । उक्तरूपकयोः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥

**एवं व्याहृतः पवनसुतो विनीतां सीतां पुनरावभाषे ॥**

एवमिति । एवमनेन प्रकारेण व्याहृत उक्तः सन् एतयेति शेषः । पवनसुतो हनूमान् विनीतां विनययुतां सीतां पुनरावभाष उक्तवान् ॥

तदेवाह—

**मायामृगेण तव मैथिलि वञ्चितायाः**
**शाखामृगेण पुनरागतिरित्ययुक्तम् ।**
**एषा कथापि भुवने वितता यदि स्या-**
**त्का नाम रामधनुषः प्रथिता प्रशस्तिः ॥ ३४ ॥**

मायेति । हे मैथिलि, मायामृगेण कनकमृगेण वञ्चितायाः प्रतारितायाः । विप्रलब्धाया इति यावत् । तव । महानुभावाया इति भावः । शाखामृगेण वानरेण पुनरागतिः प्रत्यागमनमित्येतदयुक्तमनर्हम् । वञ्चनेनापहरणं पुनः संकोचेनागमनं चेत्येतत्संभावितायास्तव न युक्तमिति भावः । राज्ञ्याः पुना राजमार्गेणैव गमनं युक्तमिति भावः । किं चैषा उक्ता कथा वार्तापि भुवने जगति । 'विष्टपं भुवनं जगत्' इत्यमरः । वितता विस्तृता प्रचुरा स्यात् यदि, तर्हि रामधनुषः श्रीरामचापस्य । जगत्त्रयप्रसिद्धस्येति भावः । का नाम का वा प्रशस्तिः परनिरासकत्वप्रयुक्तख्यातिः प्रथिता प्रसिद्धा । स्यादिति शेषः । न स्यादेवेत्यर्थः । अतस्त्वयाल्पकालक्लेशसहिष्णुतया प्रस्थातव्यम्, श्रीरामेण पुनरागत्य रावणं जित्वा त्वं प्रत्यानेतव्या चेत्ययमेव राद्धान्त इति भावः । वसन्ततिलकावृत्तम् ॥'

अथ सीताप्रशंसापूर्वकं निगमयन्नाह—

**किं बहुना । इत्येतदेवं चिन्तितम् । यदर्हं राघवगृहिण्यास्तदेव निश्चितम् । यत्सदृशमीदृशस्य समाचारस्य तदेव प्रकाशितम् । यदनुगुणं रावणापराधप्रतिक्रियायास्तदेवानुमोदितम् । यदनुकूलं कुलवधूशीलस्य तदेव कथितम् । यदुचितं क्षत्रियाणीवाणीप्रक्रमस्य तदेवोपक्रान्तमिति बहुशः प्रशस्य सर्वथा रामलक्ष्मणा लङ्कामिमां**

१. 'विनीताम्' इति नास्ति कंचित्. २. 'अभाषत' इति पाठः. ३. 'विदिता' इति पाठः. ४. 'एवम्' इति पाठः. ५. 'क्रमस्येति' इति पाठः.

प्राप्ताविति जानकि, जानीहि । अनुजानीहीमं जनं प्रस्थातुम् ॥

किमिति । बहुना किम् । कालयापनकरैरनेकैर्वचनैरलमित्यर्थः । कुतः । इत्येतत्प्रकृतमिदं चिन्तितं पर्यालोचितम् । समयोचितत्वेनैतदेव विचारितमित्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । किमेतदित्यत आह—यदित्यादिना । राघवस्य रघुवंशोद्भवस्य श्रीरामस्य गृहिण्या धर्मपत्न्या यदर्हं युक्तं तदेव निश्चितं निर्णीतम् । ईदृशस्य । अनिर्वाच्यस्येत्यर्थः । समाचारस्य पातिव्रत्यधर्मस्य यत्सदृशं तुल्यं तदेव प्रकाशितमभिव्यञ्जितम् । रावणापराधप्रतिक्रियाया यदनुगुणमनुरूपं तदेवानुमोदितमभ्युपगतम् । कुलवधूशीलस्य कुलस्त्रीस्वभावस्य यदनुकूलं संमतं तदेव कथितमुक्तम् । क्षत्रियाणी क्षत्रकुलोद्भवा । 'अर्यक्षत्रियाभ्यां च' इति ङीप् । आनुगागमश्च । तस्या वाणीप्रक्रमस्य वचनपरिपाट्या यदुचितं तदेवोपक्रान्तमारब्धम् । इत्येवं बहुशो बहुवारं प्रशस्य प्रस्तूय हे जानकि, सर्वथा सर्वप्रकारेण । प्रकारवचने थाल् । रामलक्ष्मणौ लङ्कामिमां प्राप्तौ प्रविष्टौ जानीह्यवबुध्यस्व । तथेमं जनम् । मामित्यर्थः । प्रस्थातुं पुनर्गन्तुम् । प्रपूरणशब्दवदुपसर्गेण धात्वर्थस्य बाधः । अत एव । 'प्रस्थानं गमनं गमः' इत्यमरः । अनुजानीह्याज्ञापय ॥

अथ च पुनः प्रष्टव्यं किंचिदवशिष्टं विद्यत इत्याह—

किंच ।

किंचेति ॥

तदेवाह—

काकुत्स्थेन विदितपूर्वमभिज्ञानं किमपि दीयतामिति ॥

काकुत्स्थेनेति । काकुत्स्थेन ककुत्स्थवंशोद्भवेन श्रीरामेण विदितपूर्वम् । पूर्वं विज्ञातमित्यर्थः । 'सुप्सुपा' इति समासः । किमपि किंचिदभिज्ञानं ज्ञापकवस्तु दीयतां प्रतिपाद्यतामित्याबभाष इति संबन्धः ॥

ततः किं जातं तत्राह—

सा तु दीर्घं निश्वस्य निश्चित्य पुरा खलु चित्रकूटतटवने तरुणतरतररमणीयतया मन्दीभवन्नन्दनवैभवे रघुनन्दनेनोपधानीकृताङ्कायां मम पयोधरपरिसरे खरतरनखराग्रविरचितविदारणं धाराधरनामानं काकं रघुपतिर्व्यलोकयत् ॥

सेति । सा सीता । तुशब्दोऽप्यर्थः । दीर्घं निश्वस्य । वक्तव्यार्थस्मरणबीजोद्बोधकचिन्तानुवादं सविषादमभिनीयेत्यर्थः । निश्चित्य । तदुक्तम्—'सदृशादृष्टचिन्ताद्याः

१. 'जानकि, जानीहि जनमिममनुजानीहि प्रस्थातुम्' इति पाठः. २. 'किमप्यभिज्ञानं दीयताम्' इति पाठः. ३. 'तटवन' इति पाठः. ४. 'मन्दीकृत' इति पाठः. ५. 'रघुनन्दनोपधानीकृतोत्सङ्गायाः' इति पाठः. ६. 'अवालोकयत्' इति पाठः.

स्मृतिबीजस्य बोधकाः' इति । अथ प्रत्यभिज्ञानाख्यायिकामाह—पुरेति । पुरा पूर्वम् । खलुशब्दो वाक्यालंकारे । तरुणतरैरत्यन्ततरुणैस्तरुभिर्वृक्षैः रमणीयतया सुन्दरतया हेतुना । अथवा तरुणतरास्तरवो यस्मिंस्तत्तथोक्तम्, अतएव रमणीयं च तस्य भावस्तत्ता तया । मन्दीभवन्नन्दनवैभवमिन्द्रोद्यानसौभाग्यातिशयो यस्मात्तस्मिंस्तथोक्त इत्यतिशयोक्तिः । चित्रकूटतटवने चित्रकूटाचलतटविपिने रघुनन्दनेनोपधानीकृत उपबर्हीकृतोऽङ्क उत्सङ्गो यस्यास्तस्याः । 'उपधानं तूपबर्हः' इत्यमरः । मम पयोधरपरिसरे कुचप्रान्ते खरतरनखराग्रैरतिनिशितनखमुखैर्विरचितं विदारणं खण्डनं येन तं तथोक्तं धाराधर इति नाम यस्य तं काकं काकासुरं रघुपतिः श्रीरामो व्यलोकयदपश्यत् ॥

ततः किमकरोदित्यत आह—

> कुशरूपकुशेशयासनास्त्रं
> विजहौ वासविवायसे स वीरः ।
> अथ तत्कृपया हृताक्षिमात्र-
> श्चिरजीवी स दधौ यथार्थसंज्ञाम् ॥ ३५ ॥

कुशेति । स वीरः श्रीरामो वासवस्यापत्यं पुमान्वासविः । 'अत इञ्' । स चासौ वायसश्च तस्मिन्निन्द्रपुत्रे काकासुरे कुशरूपकुशेशयासनास्त्रं दर्भरूपब्रह्मास्त्रं विजहौ प्रायुङ्क्त । अथ प्रयोगानन्तरं स तादृगवस्थापन्नश्चिरकालजीवी काकस्तस्य श्रीरामस्य कृपया दयया हृतमक्षिमात्रं यस्य स तथोक्तः सन् । यथार्थसंज्ञां चिरं जीवतीति चिरजीवी इत्यन्वर्थनामधेयं दधौ । एतदभिज्ञानं श्रीरामाय कथयेति वाक्यशेषः । सोऽयं ब्रह्मास्त्रानुद्रुतः सन् शरण्यान्तराभावात्तमेव परमकारुणिकं श्रीरामं शरणं गत्वा पुनस्तत्कृपयामोघाय ब्रह्मास्त्राय नेत्रमेकं दत्त्वा मुक्तोऽभूदित्यर्थः । 'चिरजीवी चैकदृष्टिर्मौकुलिः पिकवर्धनः' इत्यमरः । तथा रामायणम्—'स दर्भं संस्तराद्गृह्य ब्राह्मेणास्त्रेण योजयत् । स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ॥ स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति । ततस्तं वायसं दर्भः सोऽम्बरेऽनुजगाम ह ॥' इति । औपच्छन्दसिकं वृत्तम् ॥

इत्थं वाचकरूपमभिज्ञानं दत्त्वा संप्रति वस्तुरूपं दातुं प्रावर्ततेत्याह—

**सैषा परिचितकथास्मरणाद्द्विगुणितदुर्दशा केशपिनद्धमपरमिदमभिज्ञानमुन्मुच्य ॥**

सेति । सैषा सीता परिचितकथास्मरणेन पूर्वानुभूतवृत्तान्तस्मृत्या द्विगुणिता द्विरावृत्ता दुर्दशा दुरवस्था यस्याः सा तथोक्ता सती केशपिनद्धं चिकुराच्छादितम् । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यपेरकारलोपः । नह्यतेः कर्मणि क्तः । अपरमन्यदिदं वक्ष्यमाणमभिज्ञानम् । चूडामणिमित्यर्थः । उन्मुच्य विकृष्य ॥

---

१. 'द्विगुण' इति पाठः.

चूडामणिं कपिवरस्य ददौ दशास्य-
'संत्रासपुञ्जितरुषाग्निदशां कृशाङ्गी।
आदाय तत्प्रणतिपूर्वमसौ प्रतस्थे
माणिक्यगर्भवदनोरगतुल्यबाहुः ॥ ३६ ॥

चूडामणिमिति। कृशानि विरहवेदनावशात्कार्श्यावस्थापन्नान्यङ्गानि यस्याः सा कृशाङ्गी तन्वी सीता। 'अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यम्' इति ङीप्। दशास्याद्रावणाद्यः संत्रासो भीतिस्तेन पुञ्जितः पिण्डीभूतो यो रुषाग्निः क्रोधाग्निस्तस्य दशेव दशावस्था यस्य तं तथोक्तम्। रुषेत्यत्र हलन्ताद्विकल्पाट्टाप्। अत्रोत्प्रेक्षितानुप्राणिता निदर्शना। चूडामणिं शिरोरत्नं कपिवरस्य वानरोत्तमस्य हनूमतो ददौ श्रीरामायैतमपि प्रदर्शयेति दत्तवती। अत्र कपिवरस्येति संबन्धसामान्ये षष्ठी। यतः 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानसंज्ञा न भवति। स्वत्वनिवृत्तिपरस्वत्वरूपस्याभावात्। नहि स्वीयं धनमस्मै दीयते किंतु प्रत्यभिज्ञानप्रदर्शनमात्रेण भणिदानव्यपदेशः। तथाच नन्वेवमपि रजकस्य वस्त्रं ददाति ग्नतः पृष्ठं ददातीत्यत्रापि प्राप्नोतीति चोद्यमुद्भाव्य। नैतदस्ति। दानं हि नाम पूज्यानुग्रहकाम्यया द्रव्यपरित्यागः परस्वत्वापादनं च। तच्चेह नास्तीति न्यासकारेणोक्तम्। ननु भाष्यकारमते तु चतुर्थ्येव भाव्यम्। तथाच कैयटकारैः कैश्चिदन्वर्थसंज्ञाविधानाद्ददातिविषय एव संप्रदानसंज्ञेत्यभ्युपगतम्। दानं च स्वस्वत्वनिवृत्तिपरस्वत्वापत्तिपर्यन्तमिति प्रत्याख्यातमुभयमुक्तमन्यत्र भाष्यकारेण संज्ञाभ्युपगमात्। तथा च क्रियाग्रहणस्य गत्यर्थकर्मणि विहितस्य सूत्रस्य च प्रत्याख्यानं कृतम्। तथा स्वत्वनिवृत्त्यभाववद्ददातेः प्रयोगो दृश्यते। 'न शूद्राय मतिं दद्यात्' इति 'खण्डिकोपाध्यायः शिष्याय चपेटिकां ददाति' इति च सप्रपञ्चमुपपादितत्वादिति। अतः कपिवरस्तत्प्रणतिपूर्वं तस्याः सीताया नमस्कारपूर्वकमादाय स्वीकृत्य। मणिमिति शेषः। माणिक्यं गर्भे यस्य तन्माणिक्यगर्भं वदनं वक्त्रं यस्य तेन तथोक्तेनोरगेण सर्पेण तुल्यः सदृशो बाहुर्यस्य स तथोक्तः सन्प्रतस्थे प्रस्थितवान्। उपमा। अस्याश्च पूर्वोक्तालंकारेण संसृष्टिः। वसन्ततिलकावृत्तम् ॥

ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकाशयितुमशोकवनिकां बभञ्ज प्रभञ्जनात्मजः ॥

तत इति। ततः प्रस्थानानन्तरं प्रभञ्जनात्मजो वायुसूनुः कृतकृत्यः कृतार्थः सन् निर्गत्य सीतासांनिध्यान्निष्क्रम्य निजागमनं निशाचरपते रावणस्य प्रकाशयितुं प्रकटयितुमशोकवनिकां बभञ्ज ममर्द। उत्पाटयामासेत्यर्थः ॥

तदेवाह—

स्वकृत्यैः शाखानामवनतिमतीव प्रकटय-
न्नमार्गेण भ्राम्यन्परिकलितभङ्गः सुमनसाम्।

---

१. 'संत्रासपूजितमहाग्निशिखं' इति पाठः. २. 'तम्' इति पाठः. ३. 'एव निशाचरपतेः प्रकटयितुम्' इति पाठः. ४. 'प्रवभञ्ज' इति पाठः.

द्विजानां संत्रासं श्रुतिमधुरवाचां विरचय-
न्नयं लङ्कोद्याने दशवदनलीलामतनुत ॥ ३७ ॥

स्वैरेति । स्वकृत्यैर्निजचङ्क्रमणक्रियाभिः शाखानां द्रुमाणामतीवात्यन्तमवनतिं भुग्नत्वं प्रकटयन्प्रवर्तयन् । अन्यत्र स्वकृत्यैर्निजव्यापारैः शाखानां वेदभेदानामतीवावनतिं सम्यग्विवेचनं प्रकटयन्स्फुटीकुर्वन् । 'शाखा वेदप्रभेदेषु', 'बाह्वावङ्घ्रिद्रुमाङ्गयोः' इत्युभयत्रापि यादवः । तथाऽमार्गेणान्यमार्गेण भ्राम्यन्संचरन् । अन्यत्र लोकविरुद्धमार्गेण वर्तमानः । 'वा भ्राश–' इत्यादिना विकल्पाच्छ्यन्प्रत्ययः । सुमनसां पुष्पाणाम् । अन्यत्र देवानां च । परिकलितभङ्गः । विरचितव्यायाम इत्यर्थः । 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इत्युभयत्रापि वैजयन्ती । तथा श्रुतिमधुरवाचां श्रोत्रानन्दकरवाचां द्विजानामण्डजानाम् । अन्यत्र श्रुतिमधुरवाचामाम्नायलनोहरवचनानां द्विजानां विप्राणां संत्रासं भयं विरचयन्कुर्वन् । 'श्रुतिः श्रोत्रे तथाऽऽम्नाये', 'दन्तविप्राण्डजा द्विजाः' इत्युभयत्रापि विश्वप्रकाशामरौ । अयं हनूमांल्लङ्कोद्यानेऽशोकवनिकायां दशवदनलीलां रावणविभ्रममतनुत । अत्रान्यलीलाया अन्यत्रासंभवात्तत्सदृशीं लीलामिति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धरूपा निदर्शना । सा चोक्तश्लेषानुप्राणितेति संकरः । शिखरिणीवृत्तम् ॥

तदनु सरभसमारैक्षिकरक्षोगणनिवेदितप्रमदवनकदनकुपितदशवदनप्रेषितान्पितृपतिकिंकरभयंकरान्किंकरान्प्रहस्तपुत्रेण जम्बुमालिना सह निहत्य चैत्यतोरणमुपगतवति हनूमति ॥

तदन्विति । तदन्वशोकवनिकाभङ्गानन्तरं सरभसं सवेगम् । 'रभसो वेगहर्षयोः' इति विश्वः । आरक्षो वनपरिपालनं प्रयोजनमस्यारक्षिकः । 'प्रयोजनम्' इति ठक् । स चासौ रक्षोगणश्च । अशोकवनपरिपालकराक्षसनिवह इत्यर्थः । तेन निवेदितं विज्ञापितं यत्प्रमदवनकदनं वानरकृताशोकवनभङ्गः। 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्' इत्यमरः । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः । तेन हेतुना कुपितेन क्रुद्धेन दशवदनेन रावणेन प्रेषितान्प्रहितान्पितृपतिकिंकरभयंकरान्किंकरान् । अशीतिसहस्रसंख्याकान्निजकिंकरानित्यर्थः । तथाच रामायणम्—'तेषामशीतिसाहस्रं किंकराणां तरस्विनाम्' इति । 'मेघर्तिभयेषु कृञः' इति खशो मुमागमः । प्रहस्तपुत्रेण प्रहस्ताख्यमन्त्रिप्रवरतनयेन जम्बुमालिना सह निहत्य मारयित्वा । हनूमति चैत्यतोरणं प्रासादद्वारोपरितनभागमुपगतवत्यधितिष्ठति सति ॥

पुनरपि निशमितामितनिशिचरगणमारणो रावणः सचिवान्पञ्च

१. 'लोकोद्याने' इति पाठः. २. 'आरक्षक' इति पाठः. ३. 'प्रमदावन' इति पाठः. ४. 'प्रकुपित' इति पाठः. ५. 'किंकरान्' इति नास्ति क्वचित्. ६. 'मुपागतवति' इति पाठः.

पञ्चाननपराक्रमान्प्रहसनप्रमुखान्वलीमुखं जीवग्राहं गृह्णीध्वमिति प्राहिणोत्।

पुनरिति। पुनर्भूयोऽपि निशमितं हतशेषैः श्रावितममितनिशिचरगणमारणमशीतिसहस्रसंख्याकराक्षसनिवहसंहरणं यस्य तथोक्तः सन्। रावणः पञ्चाननपराक्रमान्सिंहतुल्यबलान्प्रहसनप्रमुखान्प्रहसनादीन्पञ्च सचिवान्मन्त्रिसुतान्वलीमुखं वानरं जीवग्राहं गृह्णीध्वम्। जीवतीति जीवः। इगुपधलक्षणः कप्रत्ययः। जीवन्तं गृहीत्वा। जीवग्राहं गृह्णन्नित्यर्थः। दूतवधस्य शास्त्रनिषिद्धत्वाज्जीवतस्तस्य विलोकनकौतुकाद्वेति भावः। 'समूल–' इत्यादिना णमुल्प्रत्ययः। कषादित्वादनुप्रयोगः। इति। उक्त्वेति शेषः। प्राहिणोत्प्रेषितवान्। 'हि गतौ' इति धातोः 'हिनुमीना' इति णत्वम्॥

तत्र तानपि तोरणपरिघेण पञ्च पञ्चतां नीत्वा मुहुर्मुहुर्दाशरथिदूतोऽहमित्यात्मानमुद्घोषयन्तं हनूमन्तं नियन्तुं नियन्ता निखिलरक्षसामभ्यक्षमक्षकुमारमभ्यक्षिपत्॥

तत्रेति। तत्र चैत्यतोरणे तानपि पञ्च सचिवांस्तोरणपरिघेण तोरणस्थार्गलेन पञ्चतां मरणं नीत्वा। निहत्येत्यर्थः। मुहुर्मुहुः पुनःपुनरहं दाशरथिदूत इत्येवमात्मानमुद्घोषयन्तम्। 'दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः' इति वारंवारमात्मानं प्रख्यापयन्तमित्यर्थः। हनूमन्तं नियन्तुं निग्रहीतुं निखिलरक्षसां नियन्ता सकलराक्षससार्वभौमो रावणोऽध्यक्षं पुरोवर्तिनं समर्थं वाक्षकुमारमक्षाख्यनिजतनूजमभ्यक्षिपत्। प्राहिणोदित्यर्थः॥

रक्षःसंघट्टचूर्णीकृतकनकमहाभित्तिचैत्योत्थधूल्या<br>
नक्षत्राणामकाले सरणिमरुणयन्वीरलक्ष्म्या समेतः।<br>
रक्षःशूराख्यशारान्क्षितितलफलके क्षेपणीयां हनूमा-<br>
नक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ॥ ३८॥

रक्ष इति। रक्षःसंघट्टेन राक्षससंताडनेन। 'वक्षःसंघट्ट–' इति पाठे वक्षःस्थलसंघर्षणेन चूर्णीकृताः क्षोदिताः कनकमहाभित्तयः काञ्चनमयोन्नतकुड्यानि यस्य तत्तथोक्तं यच्चैत्यं प्रासादस्तदुत्थया तदुत्पन्नया धूल्या परागेणाकालेऽनियतकाले नक्षत्राणां सरणिमाकाशमरुणयन्नरुणीकुर्वन्नित्यतिशयोक्तिः। अरुणशब्दात् 'तत्करोति–' इति ण्यन्ताल्लटः शत्रादेशः। अतएव वीरलक्ष्म्या विजयश्रिया समेतोऽसौ हनूमान्। रक्षःशूरा राक्षसयोधा इत्याख्या यासां तास्तथोक्ताः शारा अक्षोपकरणानि यस्यां तामिति बहुव्रीहिगर्भो बहुव्रीहिः। क्वचिदपचयविवक्षायां शारशब्दस्य स्त्रीलिङ्गप्रयोगः 'स्त्री स्यत्काचिन्मृणाल्यादि विवक्षापचये यदि' इत्यभिधानात्। क्षितितलमेव फलकं तस्मिन्क्षेपणीयां प्रवर्तनीयामक्षक्रीडामक्षकुमारसंहरणखेलां पाशद्यूतकेलिं

---

१. 'प्रहस्त' इति पाठः. २. 'पञ्चतां नीत्वा तोरणपरिघेण' इति पाठः. ३. 'दासः' इति पाठः. ४. 'नियन्ता' इति नास्ति क्वचित्. ५. 'अभ्यक्षमक्षकुमारमाक्षिपत्' इति पाठः.

च दशमुखनगरीचत्वरे लङ्कापुरप्राङ्गणे विधातुं कर्तुं तत्परे त्वरां कृतवान्। 'रक्षःशूराख्यशारान्क्षितितलफलके क्षेपणीयान्' इति पाठे रक्षःशूरा इत्याख्या येषां ताञ्शारानक्षोपकरणानि क्षितितलफलके क्षेपणीयान्निवासनीयान् । विधायेति शेषः । अन्यत्समानम्। अत्र शारशब्दस्याकारान्तत्वेन पुंलिङ्गतायां कविरेव प्रमाणम्—'पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः। श्लेषसंकीर्णोऽयं रूपकालंकारः। स्रग्धरावृत्तम् ॥

तत्क्षणं क्षणदाचराणां मिषतामेव निष्पादितरङ्गनिष्पेषकृत्यश्चैत्यप्रासादमुत्पाटितस्तम्भजातजातवेदसा दग्ध्वा भूयोऽप्युपाश्रिततोरणः समीरणसुतो बभूव। एनमपि वृत्तान्तं श्रुत्वा कुपितस्य निशाचरपतेर्युगपदेव निपेतुः पुत्रे सुत्रामजिति समितिहेतोर्विंशतिदृष्टयः॥

तत्क्षणमिति । तत्क्षणं तस्मिन्नेव क्षणे क्षणदाचराणां राक्षसानां मिषतां पश्यतामेव सताम्। मिषतः क्षणदाचराननादृत्येत्यर्थः। 'षष्ठी चानादरे' इति षष्ठी। रङ्गे रणरङ्गे निष्पेषकृत्यमक्षविनाशकृत्यं निष्पादितं निर्वर्तितं येन स तथोक्तः। तथोत्पाटितस्तम्भजातेन समुत्पाटितस्तम्भसंभूतेन जातवेदसाग्निना। स्तम्भसंभ्रमणजनिताग्निनेत्यर्थः। चैत्यप्रासादं चैत्यगोपुरं दग्ध्वा समीरणसुतो हनूमान्भूयः पुनरप्युपाश्रिततोरणः समधिरूढतोरणान्तरो बभूव। पूर्वतोरणस्य तदा दग्धत्वात्तोरणान्तरसमाश्रितत्वं तत्र द्रष्टव्यम्। तथा च रामायणम्—'प्रासादस्य महान्तस्य स्तम्भं हेमपरिष्कृतम्। उत्पाटयित्वा वेगेन हनूमान्पवनात्मजः॥ ततस्तं भ्रामयामास शतधारं महाबलः। तत्र चाग्निः समभवत्प्रासादं चाप्यदह्यत ॥'इति । एनं वृत्तान्तमक्षकुमारविनाशवार्तामपि श्रुत्वा कुपितस्य निशाचरपते रावणस्य विंशतिदृष्ट्यो विंशतिसंख्याका अपि दृशः समितिहेतोः। युद्धार्थमित्यर्थः। 'समित्याजिसमिद्युधः' इत्यमरः। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। पुत्रे निजतनूजे सुत्रामजितीन्द्रजिति युगपदेकवारमेव निपेतुः प्रसस्रुः। त्वमेवास्य साधने समर्थो नान्य इति गौरवादराभ्यामेकदैव निखिलाभिरपि दृष्टिभी रावणः पुत्रमिन्द्रजितमद्राक्षीदित्यर्थः॥

ततः किं तत्राह—

अनिमिषभुवने वा व्योम्नि वा भूतले वा
समरमुपगतं त्वां वीक्षितुं कः समर्थः।
इति स्तुतिवचनेन श्लाघयन्मेघनादं
प्लवगमिह नयेति प्राहिणोद्राक्षसेन्द्रः॥ ३९॥

अनिमिषेति। न विद्यन्ते निमेषाणि येषां तेऽनिमिषा देवाः। इगुपधलक्षणः कप्रत्ययः। तेषां भुवने स्वर्लोके वा व्योम्न्यन्तरिक्षे भुवर्लोके वा भूतले वा समरमुपगतं रणोन्मुखं त्वां वीक्षितुं द्रष्टुम्। युद्धार्थं तु किं वक्तव्यमित्यर्थः। कः समर्थः शक्तः। न कोऽपीत्यर्थः। भूर्भुवःस्वर्लोकेषु नरचारणसुराणां सर्वेषामपि जगदेक-

---

१. 'अनिमिषताम्' इति पाठः. २. 'तदङ्ग' इति पाठः. ३. 'प्रसाद' इति पाठः. ४. 'पिशिताशनपतेः' इति पाठः. ४. 'समति' इति पाठः.

वीरेण त्वया निर्जितत्वादिति भावः । इत्येवंभूतेन नुतिवचनेन स्तुतिवाक्येन मेघनादमिन्द्रजितं श्लाघयन्प्रशंसयन्राक्षसेन्द्रो रावणः प्लवगं वानरमिहात्र नय प्रापयेति । उक्त्वेति शेषः । प्राहिणोत्प्रेषितवान् । मालिनीवृत्तम् ॥

नेतुं शोकरसं निशाचरपतेर्हन्तुं चमूं रक्षसां
तस्यान्तःपुरयोषितां रचयितुं मानं विना रोदनम् ।
सूर्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमग्निना
शुद्धां कर्तुममुष्य वासवजिता जातो रणस्तोरणे ॥ ४० ॥

नेतुमिति । निशाचरपते रावणस्य शोकरसं विषादं नेतुं प्रापयितुम् । तथा रक्षसां चमूं राक्षससेनां हन्तुं नाशयितुम् । तथा तस्य रावणस्यान्तःपुरयोषितोऽवरोधवध्वस्तासां मानं विना । निर्मर्यादमित्यर्थः । 'पृथग्विना–' इत्यादिना तृतीयाविकल्पात्पक्षे द्वितीया । रोदनमश्रुमोचनं रचयितुं कर्तुम् । तथा सूर्याचन्द्रमसोर्दिवाकरनिशाकरयोः । अहोरात्रं स्वकरप्रसारणेन जगच्छोधकयोरिति भावः । 'देवताद्वन्द्वे च' इति दीर्घः । प्रवेशविकलां प्रवेशरहिताम् । रावणभयात्सम्यक्प्रवृत्त्यभावादिति भावः । लङ्कापुरीमग्निना वालानलेन शुद्धां पवित्रां कर्तुं चेत्यर्थः । अमुष्य हनूमतो वासवजितेन्द्रजिता सह तोरणे चैत्योपरितनद्वारदेशे रणो जातः । अवश्यंभाविनो रणस्य ब्रह्मणापि निवारयितुमशक्यत्वादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

संग्रामदुर्दिने तस्मिन्नहर्ष शरवर्षिणि ।
बर्हीव मेघनादेन मेघनादेन मारुतिः ॥ ४१ ॥

संग्रामेति । शरान्बाणाञ्शराणि नीराणि च वर्षतीति तथोक्ते । 'शरोवध्याय-प्रसारे बाणे काण्डतृणान्तरे । शरं नीरे च' इति नानार्थरत्नमाला । तस्मिन्पूर्वोक्ते संग्रामदुर्दिनं मेघच्छन्नमिव तस्मिन् । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः । मेघनादेन पर्जन्यगर्जितेन बर्ही मयूर इव । 'मयूरो बर्हिणो बर्ही' इत्यमरः । मेघनादेनेन्द्रजिता मारुतिर्हनूमाञ्जहर्ष तुतोष । आत्मतुल्यवीरभटयुद्धलाभादिति भावः । तमिममुत्पत्त्यनन्तरमेव मेघवन्नदनशीलत्वान्मेघनाद इति कथयन्ति । श्लेषसंकीर्णेयमुपमा ॥

तदनु यातुधानबलप्रधाननिधनक्रुद्धो विविधायुधवैतथ्यं विमृश्य विजयश्रीसंगतगन्धं गन्धवहनन्दनं सदानन्दास्त्रेण बबन्ध दशकन्धरात्मजः ॥

तदन्विति । तदनु तदनन्तरं यातुधानबलप्रधाननिधनेन राक्षससेनानायकविनाशेन क्रुद्धः कुपितो दशकन्धरात्मज इन्द्रजिद्विविधायुधवैतथ्यं नानाविधास्त्रव्यर्थतां विमृश्य ज्ञात्वा विजयश्रिया वीरलक्ष्म्या हेतुना संगतगन्धं संगतगर्वम्, विजयश्रियां संगतगन्धं प्राप्तसंबन्धमिति वा । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इत्युभयत्रापि विश्वप्रकाशः । गन्धवहनन्दनं मारुतिं सदानन्दास्त्रेण चतुर्मुखास्त्रेण बबन्ध । अयमवध्य इति मत्वा निगृहीतवानित्यर्थः । तथा च रामायणम्—'अव-

१. 'चमूः' इति पाठः. २. 'शुद्धिरं' इति पाठः. ३. 'प्रबल' इति पाठः. ४. 'संगन्धम्' इति पाठः. ५. 'गन्धवाह' इति पाठः. ६. 'चतुराननास्त्रेण' इति पाठः.

ध्योऽयमिति ज्ञात्वा–तमस्त्रेणास्त्रतत्त्ववित् । निजग्राह महाबाहुर्मारुतात्मजमिन्द्रजित् ॥' इति ॥

तेन दिव्यास्त्रेण विवशशरीरमेनं पिशिताशनाः शणवल्कलैर्बबन्धुः ॥

तेनेति । तेन दिव्यास्त्रेण ब्रह्मास्त्रेण विवशशरीरं परवशगात्रमेनं हनूमन्तं पिशिताशना राक्षसाः शणवल्कलैः । वल्कलविशेषरचितरज्जुभिरित्यर्थः । बबन्धुः । 'ततस्ते राक्षसा दृष्ट्वा निर्विचेष्टमरिंदमम् । बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतम् ॥' इति श्रीरामायणवचनम् । नन्विन्द्राद्यवध्यस्य महाबलवतो हनूमतः कथं राक्षसकृतबन्धनमिति चेत्सत्यम् । पितामहवरदानानुसंधानात् रावणदर्शनकुतूहलतया च स्वयमेव निबद्ध इत्यलमतिप्रसङ्गेन ॥

स मारुतेर्नैर्ऋतपाशजन्मा बन्धोऽभवद्बन्धविमोक्षहेतुः ।
पुरा पुलस्त्यान्वयपांसनेन वन्दीकृतानां सुरसुन्दरीणाम् ॥४२॥

स इति । स नैर्ऋतपाशेभ्यो जन्म यस्य तथोक्तः । राक्षसरज्जुकृत इत्यर्थः । 'अवर्ज्यो बहुव्रीहिर्जन्माद्युत्तरपदः' इति वामनः । मारुतेर्हनूमतो बन्धः । पुरा पूर्वं पुलस्त्यान्वयपांसनेन पुलस्त्यब्रह्मकुलदूषकेण रावणेन वन्दीकृतानामुपग्रहीकृतानाम् । कारागृहनिबद्धानामित्यर्थः । 'प्रग्रहोपग्रहौ वन्द्याम्' इत्यमरः । सुरसुन्दरीणां देवतास्त्रीणां बन्धविमोक्षहेतुर्बन्धविमोचनकारणमभवत् । लङ्कादाहादिनोत्तरत्र तथावश्यंभावित्वादिति भावः । वृत्तमुपजातिः ॥

तदनन्तरमितरहननासहतया निह्नुतस्य दिव्यास्त्रस्य प्रभावं विभावयन्विभावरीचरपतितनूजः पवनतनयं निजपितृसमीपमुपनिनाय ॥

तदनन्तरमिति । तदनन्तरं बन्धनानन्तरम् । हन्यतेऽनेनेति हननम् । कर्मणि ल्युट् । इतरहननस्यान्यकृतबन्धनस्यासहतयासहिष्णुतया निह्नुतस्य तिरोहितसामर्थ्यस्य दिव्यास्त्रस्य ब्रह्मास्त्रस्य प्रभावं सामर्थ्यं विभावयन्पर्यालोचयन् । विभावरीचरपतितनूज इन्द्रजित्पवनतनयं हनूमन्तं निजपितृसमीपं रावणनिकटमुपनिनाय प्रापितवान् । दिव्यास्त्रस्येतरसंबन्धासहिष्णुत्वमुक्तं श्रीरामायणे—'स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् । अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते ॥' इति ॥

सोऽयं ददर्श दशकन्धरमन्धकारि-
लीलाद्रितोलनपरीक्षितबाहुवीर्यम् ।
वन्दीकृतेन्द्रपुरवारवधूकराग्र-
व्याधूतचामरमरुच्चलितोत्तरीयम् ॥ ४३ ॥

स इति । सोऽयं हनूमानन्धकारेरन्धकासुरसंहारस्य शिवस्य लीलाद्रिः क्रीडाशैलः कैलासस्तस्य तोलनेनोच्चालनेन परीक्षितं परिशोधितं बाहुवीर्यं भुजशक्तिर्यस्य

१. 'शोण' इति पाठः. २. 'बन्धनमोक्ष' इति पाठः. ३. 'पांसुलेन' इति पाठः. ४. 'निजास्त्रतस्य' इति पाठः. ५. 'तनयः' इति पाठः. ६. 'शौर्यम्' इति पाठः.

तम् । अप्रमेयबाहुपराक्रमशालिनमित्यर्थः । किंच वन्दीकृतानामिन्द्रपुरवारवधूनामप्सरसां कराग्रैर्व्याधूतानां चामराणां प्रकीर्णकानां मरुता चलितमुत्तरीयं संव्यानं यस्य तं तथोक्तमिति स्वभावोक्तिः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति लक्षणात् । 'चामरं तु प्रकीर्णकम्', 'संव्यानमुत्तरीयं च' इत्यमरः । दशकंधरं रावणं ददर्श ॥

इतः प्रभृति श्लोकपञ्चकं वसन्ततिलकावृत्तम् । अत्र त्रिभिर्दशकन्धरं विशिनष्टि—

आपाटलाधरपुटान्तविराजमान-
दंष्ट्रामहःप्रसरशारशरीरकान्तिम् ।
संध्याम्बुदान्तरितमध्यसुधामयूख-
रेखाभिराममिव वासवनीलशैलम् ॥ ४४ ॥

आपाटलेति । आपाटलस्य समन्ताद्रक्तवर्णस्याधरपुटस्याधरदलस्यान्तेऽन्तिके विराजमानं प्रकाशमानं यद्दंष्ट्राणां दन्तविशेषाणां महस्तेजस्तस्य प्रसरेण प्रसारेण शारा कृष्णरक्तसितवर्णा शरीरकान्तिर्देहशोभा यस्य सः । 'कृष्णरक्तसितः शारः' इति यादवः । अतएव संध्याम्बुदेन संध्याकालमेघेन । संध्याग्रहणमत्राम्बुदस्य रक्तवर्णद्योतनार्थम् । अन्तरितमन्तर्हितं मध्यं यस्याः सा तथोक्ता या सुधामयूखरेखा चन्द्रकला तयाभिरामं सुन्दरं वासवनीलशैलमिन्द्रनीलाचलमिव स्थितमित्युपमा ॥

संग्रामकेलिपरिघट्टनभग्नमग्न-
दिग्दन्तिदन्तकृतमुद्रभुजान्तरालम् ।
छायात्मना प्रतितरङ्गविराजमान-
शीतांशुमण्डलसनाथमिवाम्बुराशिम् ॥ ४५ ॥

संग्रामेति । पुनः संग्रामकेलिषु रणविहारेषु परिघट्टनेन व्याघातेन भग्नाः शकलिताः अतएव मग्नाः संलीनाश्च ये दिग्दन्तिदन्ता दिग्गजदशनास्तैः कृता विरचिता मुद्राश्चिह्नानि यस्य तत्तथोक्तं भुजान्तरालं वक्षःस्थलं यस्य तम् । अतएव छायात्मना प्रतिबिम्बरूपेण । 'छाया स्वनातपे कान्तौ प्रतिबिम्बार्कजाययोः' इति वैजयन्ती । प्रतितरङ्गं तरङ्गे तरङ्गे विराजमानेन शीतांशुमण्डलेन चन्द्रबिम्बेन सनाथं सहकृतमम्बुराशिमिव स्थितमित्युपमा ॥

निश्रेयसप्रणयिनीं पदवीं निरोद्धुं
त्रैलोक्यपापपरिपाकमिवात्तरूपम् ।
सूर्येन्दुपावकमहांसि तपोबलेन
जित्वा यथेच्छमभिषिक्तमिवान्धकारम् ॥ ४६ ॥

निश्रेयसेति । नितरां श्रेयो निश्रेयो मुक्तिः । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्रेयसामृतम्' इत्यमरः । अचतुरादिसूत्रेणाजन्तं निपातः । तस्य प्रणयिनीम् । मोक्षप्रापिकामित्यर्थः । पदवीं मार्गं निरोद्धुमावरितुमात्तरूपं मूर्तिमन्तं त्रयो लोकास्त्रैलोक्यं

१. 'दिग्दन्त' इति पाठः २. 'निश्रेयसः' इति पाठः. ३. 'यथेष्टम्' इति पाठः.

त्रिभुवनम् । चातुर्वर्ण्यादिलारस्खार्थे ष्यङ् । तत्र यानि पापानि तेषां परिपाकं परिपक्कमिव स्थितमित्युत्प्रेक्षा । तथा सूर्येन्दुपावकानां महांसि तेजांसि । 'तेजो धाम महो विभा' इत्यमरः । तपोबलेन तपःसामर्थ्येन । अन्धकारस्येति भावः । यथेच्छं स्वच्छन्दं जितासिधिकं पद्वबद्धमन्धकारं ध्वान्तमिव स्थितम् । इत्यनुपात्तगुणनिमित्तस्वरूपोत्प्रेक्षा पूर्वोत्प्रेक्षया संसृज्यते ॥

सोऽपि प्लवंगममभिवीक्ष्य समीरपुत्रं
चित्रीयमाणहृदयः पिशिताशनेन्द्रः ।
कैलासशैलचलनागसि शापदायी
नन्दीश्वरः स्वयमुपागत इत्यमंस्त ॥ ४७ ॥

स इति । स पिशिताशनेन्द्रो रावणोऽपि समीरपुत्रं वायुनन्दनं प्लवंगं हनूमन्तमभिवीक्ष्याभिमुखं दृष्ट्वा चित्रीयमाणमाश्चर्यं प्राप्नुवानं हृदयं यस्य स तथोक्तः सन् । कैलासशैलचलनं कैलासपर्वतोद्धरणं तदेवागोऽपराधः । 'आगोऽपराधो मन्तुश्च' इत्यमरः । तस्मिञ्शापदायी । न केवलं मत्क्रीडाशैलोद्धरणमात्रम्, अपि तु यस्मात्त्वं वानरमुखतया मामधिक्षिप्तवानसि तस्माद्वानरैरेव त्वं विपत्तिं गमिष्यसीत्येवंरूपंशापप्रदातेत्यर्थः । नन्दीश्वरः शिवपार्षदः । 'भृङ्गीभृङ्गिरिटिस्तुण्डिनन्दिनो नन्दिकेश्वरे' इत्यमरः । स्वयं साक्षात् । उपागतो वानररूपेण समागत इत्येवंप्रकारेणामंस्तामन्यत । तथाच रामायणम्—'किमेष भगवान्नन्दी भवेत्साक्षादिहागतः । येन शप्तोऽस्मि कैलासे मया संचालिते पुरा ॥' इति ॥

ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः ॥

तत इति । ततस्तदनन्तरं प्रहस्तेन रावणमन्त्रिणा विहितविविधानुयोगो विरचितनानाविधप्रश्नः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । कुत्रत्यः कुतो वा समागतः केन वा प्रेषित इत्यादि पृष्टः सन्नित्यर्थः । मारुती रावणं प्रत्यभाषतावोचत् । एतेन प्रष्टारं प्रहस्तमलक्षीकृतवानित्यवगम्यते ॥

भाषणप्रकारमेवाह—

अयमहमहर्पतिकुलतिलकस्य सत्यसंधस्य पितृनियोगसमुपगतवनवासनिरतस्य शूर्पकारातिबाधितशूर्पणखाप्राप्तवैरूप्यकुप्यत्खरप्रमुखनिशिचरबलपलालजालकल्पान्तानलकल्पशिलीमुखस्य कपटहरिणहननसमयपरिमुषितदारान्वेषणसंजातसुग्रीवसख्यस्य समुत्खातवालिकण्टकस्य दुर्वृत्तक्षत्रवंशवनपवनसारथेस्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशरथेर्दूतोऽहं सीतामार्गमार्गणाय दिशिदिशि तपनतनयप्रेषितानां वानराणामेकतमः समुद्रलङ्घनजङ्घालस्तव नगरप्रमदवनसीमनि रघुवरधर्मदारान्प्रणम्य प्रतिष्ठासुर्भेदी-

१. 'प्लवंगममवेक्ष्य' इति पाठः. २. 'अयमहमामधिपति' इति पाठः. ३. 'वैरूप्यस्य' इति पाठः. ४. 'कल्पानलः' इति पाठः. ५. 'समुषित' इति पाठः. ६. 'सख्यसमुत्खात' इति पाठः. ७. 'प्रमदावनसीम्नि' इति पाठः.

यस्यागमनं प्रकाशयितुं प्रमथिताशोकवनिकानोकहनिवहस्त्वद्दर्शनकुतूहलेन केवलमनुभूतनैर्ऋतलूतातन्तुसंनहनस्तव परिसरमुपासरम् ॥

अयमिति। अयमहमहांपतिरहर्पतिः सूर्यः। अहरादीनां पत्यादिषु वा रेफः। तत्कुलतिलकस्य तद्वंशभूषणस्य। महाकुलीनस्येत्यर्थः। सत्यसंधस्य सत्यप्रतिज्ञस्य। 'संधावधौ प्रतिज्ञायां च' इति वैजयन्ती। अतएव पितुर्दशरथस्य नियोगेनाज्ञया अभ्युपगतवनवासनिरतस्य ग्रामवनसंचारतत्परस्य। गुर्वाज्ञापरिपालकस्येत्यर्थः। तथा शूर्पकारातिबाधितया मदनपीडितया शूर्पणखया प्राप्तं यद्वैरूप्यं लक्ष्मणकृतकर्णनासाभेदरूपविरूपितं तस्मात्कुप्यन्ति कोपं प्राप्नुवन्ति यानि खरप्रमुखनिशिचरबलानि खरासुरप्रभृतिराक्षससैन्यानि तान्येव पलालजालानि निष्फलव्रीहिराशयः। 'पलालोऽस्त्री स निष्फलः' इत्यमरः। तेषां कल्पान्तानलः प्रलयकालाग्निरूपः शिलीमुखो बाणो यस्येति श्लिष्टपरम्परितरूपकम्। भगिनीवैरूप्यजनितकोपासियातखरादिराक्षसविध्वंसस्येत्यर्थः। 'शूर्पकारातिबाधितशूर्पणखाप्राप्तवैरूप्यस्य' इति पाठे शूर्पकारातिबाधितशूर्पणखया प्राप्तं वैरूप्यं यस्मात्तस्येति पृथग्विशेषणम्। इदं च तदीयहृदयतोदनार्थमित्यवगन्तव्यम्। तथा कपटहरिणस्य मायामृगस्य हननसमये संहारकाले परिमुषितानां चौर्येणापहृतानां दाराणां भार्यायाः सीताया अन्वेषणे परिमार्गणकाले तद्विषये वा संजातं समुत्पन्नं सुग्रीवस्य सख्यं मैत्री यस्य तथोक्तस्य। एतेनैतस्य मर्मोद्घाटनं श्रीरामस्य सहायसंपन्नत्वं सूचितमित्यवगन्तव्यम्। तथा समुत्खातः समुत्पाटितो वाल्येव कण्टकः सूच्याकारद्रुमाङ्गविशेषो येन तथोक्तस्य। एतेन त्वत्प्रियन्तृवालिसंहारकस्य त्वदीयसंहरणमीषत्करमिति सूचितम्। 'वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टकः' इति विश्वः। दुर्वृत्तानां दुर्मार्गवर्तिनां क्षत्राणां क्षत्रियाणां वंशः कुलं वर्गो वा स एव वंशवनं वेणुविपिनमिति श्लिष्टरूपकम्। तस्य पवनसारथेर्दावानलस्य। दुर्विनीतक्षत्रियकुलविनाशकस्येत्यर्थः। 'वंशो वेणौ कुले वर्गे' इति यादवः। तपोनिधेस्तपःशीलस्य जामदग्न्यस्य जमदग्निपुत्रस्य परशुरामस्य। गर्गादिलाद्यञ्। गर्गादिराकृतिगणः। तस्य यद्भुजबलं तस्यावलेपो दर्पः। 'दर्पोऽवलेपः' इत्यमरः। तस्य लोपे नाशे हेतुः कारणं तस्येत्यर्थः। एतेन परशुरामभुजबलनिवारकस्यास्य त्वद्विंशतिभुजबलनिवारणं तृणप्रायमिति सूचितम्। श्रीमतः सकलगुणसंपत्तिमतः। अथवा राज्यलक्ष्मीसमृद्धस्य वीरलक्ष्मीसमेतस्य वा निरुपमकान्तिसंपन्नस्य वा सीतालक्ष्मीपतेर्वा। 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरपि कथ्यते' इति शाश्वतः। दाशरथेर्दशरथमहाराजतनयस्य श्रीरामस्य दूतो दासः संदेशहरः। 'स्यात्संदेशहरो दूतः' इत्यमरः। किंच सीतामार्गस्य मार्गणायान्वेषणाय। दिशिदिशि प्रतिदिशम्। वीप्सायां द्विर्भावः। तपनतनयप्रेषितानां सुग्रीवप्रहितानां वानराणां मध्ये एकतमोऽन्यतमः। सर्वेऽपि वानरा मत्तुल्या मदधिकाश्च, तदेकेनैव मयैतादृशकार्यं कृतम्, ते सर्वे मिलिताश्चेत्किं भविष्यति वा न ज्ञायत इति भावः। समुद्रलङ्घने जङ्घालोऽतिजवः। नभोमार्गेणोत्तीर्णार्णव इत्यर्थः। एतेन मम किमप्यसाध्यं नास्तीति सूचितम्। 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः। तव नगरे लङ्कायां यत्प्रमदवनमशोकवनं तत्सीमनि

तत्प्रदेशे रघुवरधर्मदारान्श्रीरामधर्मभार्याम् । 'भार्या जायाथ पुं भूम्नि दाराः' इत्यमरः । प्रणम्य नमस्कृत्य । प्रतिष्ठासुः प्रस्थातुमिच्छुः सन् । तिष्ठतेः सन्नन्तादुप्रत्ययः । मदीयमागमनम् । मम लङ्कापुरप्रवेशमित्यर्थः । भवतः प्रकाशयितुं प्रकटयितुं प्रमथितः प्रकर्षेण भग्नोऽशोकवनिकानोकहनिवहः प्रमदवनवृक्षषण्डो येन स तथोक्तः । तथा त्वद्दर्शनकुतूहलेन केवलं भवदवलोकनकुतूहलेनैव । न त्वसमर्थतयेत्यर्थः । नैर्ऋता राक्षसा एव लूतास्तन्तुवायाः कीटकविशेषाः । 'लूता स्त्री तन्तुवायोऽर्णनाभमर्कटकाः समाः' इत्यमरः । तासां तन्तवो रज्जवः । त एव तन्तवो नाभिकोशोत्थसूक्ष्मसूत्राणीति श्लिष्टरूपकम् । तेषां तत्प्रायत्वादित्थं निर्देशः । तैर्यत्संनहनं बन्धनं तदनुभूतमनुकृतं येन स तथोक्तः सन् । तव परिसरं प्रान्तदेशमुपासरम् । प्राप्तोऽस्मीत्यर्थः । 'पर्यन्तभूः परिसरः' इत्यमरः ॥

आनाकलोकपरिकीर्तितसच्चरित्र-
मत्रोपरुध्य रघुवंशपतेः कलत्रम् ।
वैतानवेदिजनितं पवमानबन्धुं
वस्त्रेण बद्धुमविनीत कथं यतेथाः ॥ ४८ ॥

आनाकेति । आनाकलोकं स्वर्गलोकपर्यन्तम् । उपलक्षणमेतत् । सकललोकेष्वित्यर्थः । 'आकाशे त्रिदिवे नाकः' इत्यमरः । परिकीर्तितं परिश्लाघितं सच्चरित्रं साधुसमाचारो यस्य तत्तथोक्तं रघुवंशपते रघुकुलनायकस्य श्रीरामस्य कलत्रं भार्याम् । पूज्यामिति भावः । अत्र लङ्कायाम् । अयोग्यस्थल इति भावः । उपरुध्य निरुध्य । हे अविनीत दुर्विनीत । शास्त्रनिषिद्धाचारतत्परत्वादिति भावः । वैतानवेद्यां यागीयपरिष्कृतभूमौ जनितमुत्पन्नम् । 'वेदिः परिष्कृता भूमिः' इत्यमरः । पवमानबन्धुमग्निं वस्त्रेण बद्धुं बन्धनं कर्तुं कथं यतेथा यत्नं कृतवान्भवेः । न यतेथा एवेत्यर्थः । असंगतत्वादिति भावः । अतः परमपतिव्रतां सीतां श्रीरामाय प्रत्यर्प्य कुशली भव । अन्यथा महाननर्थः स्यादिति तात्पर्यार्थः । वसन्ततिलकावृत्तम् ॥

वक्तव्यान्तरं विवृत इत्याह—

किंच ॥

किंचेति । अपिचेत्यर्थः ॥

प्रेङ्खन्ती पिशिताशया रणमुखे सौमित्रिपत्रिक्षतं
त्वद्गात्रं परितः पतत्रिपरिषच्छन्नच्छविं मागमत् ।
द्राक्पौलस्त्य पुलस्त्यवंशविलये संभाविते त्वत्कृते
कान्तानां नयनान्तवान्तसलिलं मा भूत्निवापोदकम् ॥४९॥

प्रेङ्खन्तीति । हे पौलस्त्य रावण । सौमित्रिपत्रिक्षतं लक्ष्मणशरविदारितं त्वद्गात्रं परितः । त्वच्छरीरस्य समन्तादित्यर्थः । 'अभितःपरितः—' इत्यादिना द्वितीया । पिशिताशया मांसतृष्णया प्रेङ्खन्ती प्रसरन्ती पतत्रिपरिषत्कङ्कादिपक्षिनिवहश्छत्रच्छ-

---

१. 'बद्धम्' इति पाठः. २. 'किंच' इति नास्ति क्वचित्.

विमातपत्रशोभां मागमन्न प्राप्नुयात् । 'माङि लुङ्' इत्याशिषि लुङ् । पुषादित्वाच्च्लेः श्वङादेशः । तथा त्वत्कृते त्वन्निमित्तं द्राक्क्षिप्रमेव पुलस्त्यवंशस्य विलये विशेषतो नाशे । मूलतो हानावित्यर्थः । संभाविते संप्राप्ते सति । कान्तानां स्त्रीणां नयनान्तवान्तसलिलमश्रुजलं निवापोदकं पितृतर्पणोदकं मा भूत् । त्वद्वंशस्य स्वरूपतो विलये तर्पणप्रदातुरभावात्तदेव तर्पणजलं मास्त्वित्यर्थः । पूर्ववल्लुङ् । मदुक्तान्यथाकरण एवमेव भविष्यतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

बद्धादरोऽपि परदारपरिग्रहे त्व-
मिक्ष्वाकुनायककलत्रमनार्य मा गाः ।
वाताशनोऽहमिति किं विनतासुतस्य
श्वासानिलाय भुजगः स्पृहयालुतालुः ॥ ५० ॥

बद्धेति । हे अनार्य मूढ । विवेकशून्येत्यर्थः । त्वं परदारपरिग्रहे परस्त्रीसंगमे बद्धादरो विहितास्थोऽपीक्ष्वाकुनायककलत्रं श्रीरामभार्यां मा गा मा प्राप्नुहि । अन्यथा विनिपातः स्यादिति भावः । 'माङि लुङ्', 'न माङ्योगे' इत्यडागमप्रतिषेधः । कुतः । अहं वाताशनो वायुभक्षक इति भुजगः सर्पो विनतासुतस्य गरुडस्य श्वासानिलाय । श्वासमारुताशनार्थमित्यर्थः । 'स्पृहेरीप्सितः' इति संप्रदानत्वाच्चतुर्थी । स्पृहयालु स्पृहावत्तालु ककुदं यस्य स तथोक्तः । भवति किमिति शेषः । न भवत्येवेत्यर्थः । अत ईदृशाकार्यकरणे प्रयत्नं माकार्षीरिति भावः । स्पृहयतेरदन्तत्वाच्चुरादिणिचि 'स्पृहिगृहि–' इत्यादिना आलुच्प्रत्ययः । अतोलोपस्य स्थानिवत्त्वान्न लघूपधगुणः । 'तालु काकुदम्' इत्यमरः । दृष्टान्तालंकारः । वसन्ततिलकावृत्तम् ॥

बाहुचन्दननिषङ्गकोटरादुद्धृतो रघुपतेः शरोरगः ।
प्राणवायुमविनीत तावकं कालयापनमपास्य पास्यति ॥ ५१ ॥

बाह्विति । बाहुरेव चन्दनः पाटीरद्रुमस्तस्य निषङ्ग इषुधिरेव कोटरं निष्कुहः । 'निष्कुहः कोटरं वा ना' इत्यमरः । तस्मादुद्धृत आकृष्टो रघुपतेः शर एवोरगः । हे अविनीत दुर्विनीत, तावकं त्वदीयम् । 'तवकममकावेकवचने' इति तवकादेशः । प्राण एव वायुस्तं कालयापनं कालविलम्बमपास्य त्यक्त्वा । क्षिप्रमेवेत्यर्थः । पास्यत्यपहरिष्यति । समस्तवस्तुवर्तिसावयवरूपकम् । रथोद्धतावृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥

निगमयति—

किं बहुना ।

मायामृगे समरनाटकसूत्रधारे
शाखामृगे च भवतः प्रतिकूलवाले ।
दृष्टोद्यमस्य रघुनायकसायकस्य
मुक्त्वा प्रणामकवचं कवचं किमन्यत् ॥ ५२ ॥

१. 'निर्गतः' इति पाठः.

१९-८९ २६०

किं बहुनेति । तत्प्रकारमेवाह—मायेति । समर एव नाटकं रूपकविशेषस्तस्य सूत्रधारे । तत्प्रवर्तक इत्यर्थः । सूत्रधारशब्दो व्याख्यातः । मायामृगे त्वत्प्रेरितकुहनाकनकहरिणे । तथा भवतः प्रतिकूलं नियामकं वालं लाङ्गूलं यस्य तस्मिञ्शाखामृगे वालिनि च दृष्टोद्यमस्य परीक्षितव्यवसायस्य । अमोघस्येर्थः । एतेन त्वद्विनाशनमीषत्करमिति सूच्यते । रघुनायकसायकस्य श्रीरामबाणस्य प्रणामो नमस्कार एव कवचमुरश्छदस्तं मुक्त्वा । तद्विनेत्यर्थः । अन्यत्कवचं किम् । न किमपीत्यर्थः । प्रणामपूर्वकं सीतां श्रीरामाय समर्प्य शरण्यं तं शरणं गत्वा प्राणत्राणं कुरुष्वेत्यभिप्रायः । 'उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः । वसन्ततिलकावृत्तम् ॥

एवं निशम्य कुपितः पिशिताशनेन्द्रः<br>
प्राणानमुष्य हरतेति भटानवादीत् ।<br>
आजन्मशुद्धमतिरत्र विभीषणस्तं<br>
दूतो न वध्य इति शास्त्रगिरा रुरोध ॥ ५३ ॥

एवमिति । एवम् । उक्तप्रकारं वचनमित्यर्थः । निशम्य श्रुत्वा कुपितः क्रुद्धः पिशिताशनेन्द्रो रावणोऽमुष्य प्राणान्हरत । एनं वानरं मारयतेत्यर्थः । इत्येवं भटान्किंकरानवादीदाज्ञापितवान् । ततः किं तत्राह—अत्रान्तरे आजन्मशुद्धमतिः स्वभावपरिशुद्धबुद्धिर्विभीषणो रावणानुजस्तं रावणं दूतो न वध्यो वधार्हो न भवतीति शास्त्रगिरा शास्त्रवचनेन रुरोध निवारयामास । तथाच रामायणम्—'राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् । तव चासदृशं वीर कपेरस्य प्रमापणम् ॥' इति । वृत्तं पूर्ववत् ॥

रावणोऽपि विभीषणभाषणमङ्गीकृत्य 'प्लवङ्गानामङ्गेषु लाङ्गूलमेव वरम् । तदेव कार्पासवाससा संवीतं वह्निसात्कृत्य चत्वरे चत्वरे घोषानुद्घोष्य सप्रहारं नगरं परितः संचारयत' इति राक्षसानादिदेश ॥

रावण इति । रावणोऽपि विभीषणस्य भाषणं शास्त्रोपहितवचनमङ्गीकृत्य प्लवङ्गानां वानराणामङ्गेष्ववयवेषु लाङ्गूलमेव वालमेव वरं श्रेष्ठम् । प्रियमिति यावत् । 'देवाद्वृते वरः श्रेष्ठे' इत्यमरः । अतः कार्पासवाससा । कार्पासतन्तुनिर्मितवस्त्रैरित्यर्थः । शीघ्रप्रज्वलनार्थं कार्पासग्रहणं द्रष्टव्यम् । संवीतमावेष्टितं तदेव लाङ्गूलं वह्निसात्कृत्य वीतिहोत्राधीनं कृत्वा । अग्निं प्रज्वाल्येत्यर्थः । 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः' इत्यमरः । 'देये त्रा च' इति चकारात्सातिप्रत्ययः । चत्वरे चत्वरे प्रतिचत्वरम् । प्रतिवीथिमित्यर्थः । वीप्सायां द्विर्भावः । घोषान् 'चौर्येणाशोकवनिकाभङ्गकारी वानरोऽयं लब्धो निबद्धो वध्यते' इत्यादि घोषानुद्घोष्य सप्रहारं ससंताडनं नगरं परितः । नगरस्य समन्तादित्यर्थः । 'अभितः परितः—' इत्यादिना द्वितीया । संचारयत भ्रामयतेत्यनेन प्रकारेण राक्षसानादिदेशाज्ञापयामास ॥

१. 'एतत्' इति पाठः. २ 'वीतिहोत्रसात्कृत्य' इति पाठः. ३. 'दोषान्' इति पाठः.

तेषु तथा कुर्वाणेषु।

ततस्तेषु राक्षसेषु तथा रावणोक्तप्रकारेण कुर्वाणेषु विदधानेषु हनूमल्लाङ्गूलं कार्पासवासोभिरावेष्ट्याग्निसात्कुर्वत्सु सत्सु। करोतेस्ताच्छील्ये शानच्॥

निर्णयाविषयमस्य वालतः कर्णिकारनिकुरुम्बकर्बुरः।
निर्निमेषगणभाग्यसंचयादुन्मिमेष भगवानुषर्बुधः॥ ५४॥

निर्णयेति। कर्णिकारनिकुरुम्बवत्कनकपुष्पप्रसूनमञ्जरीवत्कर्बुरः शबलवर्णः। एतेन सुखस्पर्शत्वं सूच्यते। 'कर्णिकारः कञ्चुकारः कोकः कनकपुष्पकः। पीतपुष्पः किंकिरातः पीतभद्रो मृदुद्रुमः॥' इति प्रतापमार्तण्डः। भगवान्पूज्यः। उषसि बुध्यत इत्युषर्बुधः ज्वलनः। 'अहरादीनां पत्यादिषु' इति रेफादेशः। निर्निमेषगणानां देवसङ्घानां भाग्यसंचयाद्भागधेयसमृद्धेर्हेतोः। लङ्कादाहे तेषामानन्दसंभवादिति भावः। अस्य हनूमतो वालतो लाङ्गूले। सप्तम्यर्थे तसिः। निर्णयाविषयं निर्मर्यादं यथा तथा। उन्मिमेष प्रजज्वाल। अत्रानुप्रासालंकारः। रथोद्धतावृत्तम्॥

ततः किमत आह—

एतद्वृत्तान्तमारक्षिकराक्षसीगणगर्वोदीर्णवर्णितमाकर्ण्य दूयमानमानसा जानकी हुताशनमुपस्थाय 'शीतो भव हनूमतः' इति प्राञ्जलिः प्रार्थयत॥

एतदिति। आरक्षिकराक्षसीगणैर्गर्वोदीर्णं गर्वोद्रिक्तं यथा तथा वर्णितं कथितमेतद्वृत्तान्तं हनूमल्लाङ्गूलप्रज्वलनवार्तामाकर्ण्य दूयमानमानसा संतप्यमानान्तःकरणा जानकी हुताशनमग्निमुपस्थायोपास्य हनूमतः शीतोऽदाहको भव इत्येवंप्रकारेण प्राञ्जलिः प्रणता सती प्रार्थयताभ्यर्थितवती। तथाच रामायणम्—'मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः। उपतस्थे विशालाक्षी प्रयता हव्यवाहनम्॥' इति॥

घोरस्य राघवकलत्रतपोमयाग्ने-
र्मा भूवमिन्धनमहं क्षणमित्यवेत्य।
शैत्यं वितत्य दहनः पवमानसूनो-
र्वालाग्रसीम्नि मणिदीप इवावतस्थे॥ ५५॥

घोरस्येति। घोरस्य दारुणस्य राघवकलत्रतपोमयाग्नेः सीतापातिव्रत्यरूपानलस्य क्षणम्। क्षणमात्रेणेत्यर्थः। इन्धनं दाह्यदारु। अहं मा भूवं न भूयासम्। 'माङि लुङ्' इत्याशिषि लुङ्। इत्यनेन प्रकारेणावेत्य मत्वा दहनः सीतयोपासितोऽग्निः शैत्यं वितत्य विस्तार्य पवमानसूनोर्हनूमतो वालाग्रसीम्नि लाङ्गूलाग्रभागे मणिदीप इवावतस्थे स्थितवान्। तदसंतापकरत्वेनातिष्ठदित्यर्थः। उपमालंकारः। वसन्ततिलकावृत्तम्॥

---

१. 'गणेन गर्वोदीर्णम्' इति पाठः. २. 'हनूमतः शीतो भव' इति पाठः. ३. 'प्रार्थयत्' इति पाठः.

**तदनु पवनतनयोऽपि पुरमिदं न खलु सुव्यक्तं नक्तमालोकयम् । तस्मादनलसाक्षिकमेव पुरमखिलमालोकयामि इति यामिनीचरगणं परिचितितोरणपरिघेण जघान ॥**

**तदन्विति** । तदनु वालप्रज्वलनानन्तरं पवनतनयो हनूमानपि नक्तं रात्रा-विदमेतत्पुरं लङ्कापट्टणं सुव्यक्तं स्फुटतरं नालोकयं खलु न दृष्टवानस्मि किल तस्मात्सु-व्यक्तदर्शनाभावाद्धेतोः अनलोऽग्निः साक्षी साक्षाद्द्रष्टा यस्मिन्कर्मणि तद्यथा तथा । दाहकपूर्वमेवेत्यर्थः । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः । अखिलं कृत्स्नं पुरं लङ्कापट्टणमालोकयाम्यालोकयिष्ये । वर्तमानसामीप्ये वर्तमानप्रत्ययः । इति मत्वेति शेषः । यामिनीचरगणं निर्बन्धकराक्षसनिवहं परिचिततोरणपरिघेण । पूर्वं येन राक्षसाञ्जघ्निवान् तेनैव परिघेणेत्यर्थः । जघान । विनाशितवानित्यर्थः ॥

**सीताभिधानकमलां प्रभवे प्रदातुं**
**लङ्कार्णवं क्षुभितसैन्यतरंगभीमम् ।**
**वेधा ममन्थ किल रज्जुभुजंगराज-**
**भोगावृतेन पवनात्मजमन्दरेण ॥ ५६ ॥**

**सीतेति** । वेधा ब्रह्मा सीतेत्यभिधानं यस्याः सा च सा कमला च तां सीता-रूपिणीं लक्ष्मीम् । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणव-चनात् । प्रभवे श्रीरामरूपिणे विष्णवे प्रदातुं क्षुभितानि क्षोभं प्राप्तानि यानि सैन्यानि राक्षससेनास्तैरेव तरंगैरूर्मिभिर्भीमं भयंकरं लङ्कैवार्णवस्तम् । रज्जुरेव भुजंगराजभोगो वासुकिकायस्तदावृतेन तद्वेष्टितेन पवनात्मजेनैव मन्दरेण मन्थना-चलेन ममन्थ किलालोडयामास खल्वित्युत्प्रेक्षा । सा च समस्तवस्तुवर्तिसावयवरूप-केण संकीर्यते । 'मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वा च वासुकिम्' इति विष्णुपुराणे ॥

**अथ दह्यमानायां लङ्कायाम् ॥**

**अथेति** । अथानन्तरं लङ्कायां दह्यमानायां भस्मीभवन्त्यां सत्याम् ।

**रक्षःस्त्रीवदनारविन्दरजनीं विश्वंभराबर्हिणी-**
**वर्षारम्भदशां दशाननयशःकादम्बकादम्बिनीम् ।**
**वैधव्योचितवेषनिश्चितमनोलङ्कावधूटीजटां**
**वैदेह्यास्त्रिजटासमां समकिरद्धूम्यां हनूमान्दिवि ॥ ५७ ॥**

**रक्ष इति** । रक्षःस्त्रीणां राक्षसाङ्गनानां वदनान्येवारविन्दानि तेषां रजनीम् । तत्संकोचकरीमित्यर्थः । विश्वं बिभर्तीति विश्वंभरा भूमिः । 'संज्ञायां भृतृवृजि-' इत्यादिना खच्प्रत्यये मुमागमः । सैव बर्हिणी मयूरी तस्या वर्षारम्भदशाम् । तदुल्लासकारिणीमित्यर्थः । 'कादम्बः कलहंसः स्यात्', 'कादम्बिनी मेघमाला' इति चामरः । तथा वैधव्यस्य विधवात्वस्योचितोऽप्यनुगुणो यो वेषो नेपथ्यं तत्र निश्चितं मनो यस्याः सा तथोक्ता सा च सा लङ्का च सैव वधूटी वीरवधूस्तस्या जटां ग्रथि-

१. 'लङ्कायां दह्यमानायाम्' इति पाठः.

तकेशपाशरूपाम्। क्षिप्रमेव रावणसंहारस्य जायमानत्वादिति भावः। 'स्नुषा जाया वधूटी स्याद्वधूश्च सुवासिनी' इति प्रतापमार्तण्डः। वैदेह्यास्त्रिजटासमां त्रिजटाकल्पाम्। तथाश्वासकारिणीमित्यर्थः। धूम्यां धूमसंहतिम्। 'पाशादिभ्यो यः' इति यप्रत्ययः। हनूमान्दिव्यन्तरिक्षे समकिरत्। प्रवर्धयामासेत्यर्थः। किरतिरयं कीर्यमाणकर्मकः। यथा 'रजः किरति मारुतः' इति। कुत्रचित् करणकोऽपि यथा—'जगतीरुहोऽपचकिरे कुसुमैः' इति। दृश्यते च धातूनामर्थभेदात्कारकप्रत्ययभेदः। अत्राश्लिष्टपरम्परितरूपकालंकारः। शार्दूलविक्रीडितं वृत्तम्॥

पुनस्तामेव वर्णयति—

अपिच[1]॥

एतद्विक्रमवीक्षणेन जनितामानन्दबाष्पोद्गतिं
रक्षोनाथभयात्पिधातुमनसां विद्याधराणां मुदा[2]।
व्याजव्याहृतये यथा परिणमेद्धूम्या तथोज्जृम्भते[3]
स्वर्लोकेऽपि कलिन्दशैलतनयाकल्लोलशङ्कावहा॥ ५८॥

अपिचेति। किंचेत्यर्थः॥ तत्प्रकारमेवाह—एतदित्यादि द्वाभ्याम्—एतदिति। एतस्य हनूमतो विक्रमवीक्षणेन पराक्रमावलोकनेन जनितामुत्पन्नामानन्दबाष्पोद्गतिमानन्दाश्रुप्रसारं रक्षोनाथभयाद्रावणभयात्। एतत्परिज्ञाते रावणोऽस्मान्पीडयिष्यतीति साध्वसवशादित्यर्थः। पिधातुमाच्छादयितुं मनो येषां तेषाम्। 'तुं काममनसोरपि' इति तुमुनो मकारलोपः। विद्याधराणां नभश्चराणां देवयोनिविशेषाणाम्। 'विद्याधराऽप्सरोयक्ष—' इत्यमरः। मुदा संतोषेण व्याजव्याहृतये रावणविपत्तिकथनाय यथा परिणमेत्परिणतिं प्राप्नुयात्। रावणस्य महती विपत्संप्राप्ता, तस्मान्न भेतव्यमिति कथयितुं यथा पर्याप्नुयादित्यर्थः। यद्वा व्याजव्याहृतयेऽपदेशप्रकाशनाय। 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः। यथा परिणमेत्। एतेषामश्रूदयो धूम्यावशाज्जातः, न त्वन्यतोऽभूदिति प्रत्याययितुं स्वयं यथा पर्यवसिता भवेदित्यर्थः। अथवा व्याजव्याहृतये व्यपदेशकथनाय यथा परिणमेत्। अस्माकं नेत्रेषु धूम्याप्रसारादश्रूदयो न त्वानन्दादिनेति कथयितुं यथोपयुज्यादित्यर्थः। तथा धूम्या उज्जृम्भतेऽवर्धत। स्वर्लोकपर्यन्तं व्याप्तेत्यर्थः। कीदृशी धूम्या। स्वर्लोके स्वर्गलोकेऽपि कलिन्दशैलतनयाकल्लोलशङ्कावहा कालिन्दीसमुत्तुङ्गतरङ्गभ्रान्तिजननी। अत्र स्वतःसिद्धस्य धूम्याविजृम्भणस्य व्याजव्याहृतिपरिणामपरत्वेनोत्प्रेक्षा। सा च कल्लोलशङ्कावहेति भ्रान्तिमता नैरपेक्ष्यात्संसृज्यते। वृत्तं पूर्ववत्॥

आदौ नीलांशुकश्रीस्तदनु मरकताबद्धनीवीविभूतिः
कस्तूरीपङ्कभङ्गी क्षणमपि विकचेन्दीवरस्रक्सपत्नी।
पश्चात्स्निग्धाञ्जनाभा जघनकुचकटीकण्ठनेत्रेषु जाता
दिक्कान्तानां तदानीं दशमुखनगरीदाहसंभूतधूम्या॥ ५९॥

१. 'अपि च' इति नास्ति क्वचित्. २. 'तदा' इति पाठः. ३. 'जृम्भते' इति पाठः.

आदाविति। दशमुखनगरीदाहसंभूतधूम्या लङ्कादहनसंभूतधूमसंहतिस्तदानीं तस्मिन्काले दिश एव कान्तास्तासामिति रूपकम्। जघनानि च कुचाश्च कव्यश्च कण्ठाश्च नेत्राणि चेति द्वन्द्वः। तत्तत्स्थानीयप्रदेशेष्वित्यर्थः। अत्र यद्यपि प्राण्यङ्गत्वादेकवद्भावेन भाव्यं तथापि महाविभाषया विकल्पोऽपि द्रष्टव्यः। यद्वा दिक्कान्ताजघनादीनां तत्तद्देशपरत्वेन साक्षात्प्राण्यङ्गत्वाभावान्नैकवद्भावः। आदौ प्रथमम्। क्षणम्। क्षणमात्रमित्यर्थः। एतच्च सर्वत्र संबध्यते। अनन्तरं तदपायादिति भावः। नीलांशुकस्य नीलाम्बरस्य श्रीरिव श्रीर्यस्याः सा तथोक्ता जाता। तदनु तदनन्तरं मरकताबद्धा गारुत्मतमणिखचिता। 'गारुत्मतं मरकतम्' इत्यमरः। नीवीविभूती रशनासंपत्तिर्यस्याः सा तथोक्ता जाता। ततः कस्तूरीपङ्कस्य मृगमदकर्दमस्येव भङ्गी परिपाटी यस्याः सा तादृशी जाता। अथानन्तरं विकचेन्दीवरस्रजः प्रफुल्लनीलोत्पलमालिकायाः सपत्नी सदृशी जाता। 'ज्ञातिसोदरबन्ध्वादिशब्दाः सादृश्यवाचकाः' इत्याहुः। पश्चादनन्तरं स्निग्धाञ्जनस्य मृदितकज्जलस्य आभेवाभा यस्याः सा तथोक्ता जाता इति सर्वत्रोपमा। अत्र जघनकुचेत्याद्युद्देशक्रमानुसारेण नीलांशुकश्रीरित्यनन्तरं कस्तूरीपङ्कभङ्गीत्युद्देशे कर्तव्ये तथानुक्तत्वात्सर्वङ्गभोजेन क्रमोऽत्र न विवक्षितः। अन्यत्र क्रमसंभवात्स एवालंकारः। स चोक्तोपमारूपकोक्तेरङ्गाङ्गिभावेन संकीर्यत इति संक्षेपः। स्रग्धरा वृत्तम्॥

हा तात हा जननि हा सुत हा सहाय
हा पौत्र हा प्रियसखि क्व नु हा हतोऽस्मि।
इत्यादि पौरपरिदेवनभारवाग्भि-
रापूरि रावणपुरी शिखिना परीता॥ ६०॥

हा तातेति। हेति सर्वत्र विषादे। 'हा विषादशुगर्तिषु' इत्यमरः। हा तात जनक। 'तातस्तु जनकः पिता' इत्यमरः। हा जननि मातः, हा सुत पुत्रक, हा सहाय सहचर सहोदरेति वा। हा पौत्र, हा प्रियसखि प्रियभार्ये, क्व नु कुत्र वा। गतासीति शेषः। तथा हा हतोऽस्मि नष्टोऽस्मि इत्यादिरेवमादिः पौरपरिदेवनभारः पुरजनविलापातिशयो यासु ताभिर्वाग्भिराक्रोशवचनैः शिखिनाग्निना परीता व्याप्ता रावणपुरी लङ्कापुरी आसमन्तादापूरि आपूरिता। 'पूरी आप्यायने' इत्यस्मात्कर्मणि लुङ्। 'चिण् भावकर्मणोः' इति चिण्। वसन्ततिलका वृत्तम्॥

यैर्वृन्दारकसुन्दरीजनमुखे नीराजनं निर्मितं
निर्मेघे गगनेऽपि यैर्विरचिता सौदामिनीसंहतिः।
ते छित्राण्यपि वासराणि न गता निर्वाणमौर्वानल-
ज्वालाडम्बरमम्बुधौ विदधिरे वालानलोद्यत्कणाः॥ ६१॥

यैरिति। यैर्वालानलोद्यत्कणैर्वृन्दारकसुन्दरीजनस्य सुरसुन्दरीवृन्दस्य मुखे वदनाग्रभागे नीराजनमारात्रिकं निर्मितम्। नीराजनत्वेन परिणतमित्यर्थः। अत्र

१. 'पुत्रि' इति पाठः.

सुरसुन्दरीणां कल्याणकालः संप्राप्त इति सूचनार्थमित्थं निर्देश इति मन्तव्यम्। तथा येर्निर्मघे मेघरहितेऽपि गगने सौदामिनीसंहतिर्विद्युल्लताश्रेणिर्विरचिता। तथात्वेन परिणतमित्यर्थः। अशक्यकरणोऽपि रावणवध एवमेव संभविष्यतीति सूचनार्थमित्थं निर्देशः।ते दालानलोद्यत्कणा हनूमल्लाङ्गूलाग्निसमुत्थितस्फुलिङ्गाः। द्वे त्रीणि द्वित्राणि। 'संख्ययाव्ययासन्न–' इत्यादिना बहुव्रीहिः। 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच्प्रत्ययः समासान्तः। तान्यपि वासराणि। तावत्स्वपि वासरेष्वित्यर्थः। 'वा तु क्लीबे दिवसवासरौ' इत्यमरः। अत्यन्तसंयोगे द्वितीया। अम्बुधौ निर्वाणं शान्तिं न गता न प्राप्ताः सन्तः। नञर्थस्य नशब्दस्य 'सुप्सुपा' इति समासः। और्वानलज्वालाडम्बरं वडवाग्निकीलासंभ्रमं विदधिरे चक्रुः। क्षिप्रमेव सकलराक्षससंहाराभिद्योतकवैपरीत्यवृत्तिसूचनार्थमित्थं निर्देश इति मन्तव्यम्। अत्राग्निकणानां नीराजननिर्माणाद्यसंबन्धेऽपि तत्संबन्धकथनादसंबन्धे संबन्धरूपातिशयोक्तिः। शार्दूलविक्रीडितं वृत्तम्॥

आदीप्यमानपवनात्मजवालसङ्गा-
दङ्गारशेषविभवामवलोक्य लङ्काम्।
व्योम्नि स्थिता निशिचराः स्वगृहाणि नूनं
निर्वापयन्त इव नेत्रभवैः पयोभिः॥ ६२॥

आदीप्यमानेति। आदीप्यमानो जाज्वल्यमानो यः पवनात्मजवालस्तस्य सङ्गात्संपर्काद्धेतोः। अङ्गार एव शेषः शिष्टांशो यस्य स तथोक्तो विभवः समृद्धिर्यस्यास्ताम्। कार्त्स्न्येन दग्धामित्यर्थः। लङ्कामवलोक्य। व्योम्न्यन्तरिक्षे स्थिता निशिचरा राक्षसाः स्वगृहाणि दह्यमानानि निजमन्दिराणि। यद्यपि 'गृहाः पुंसि च भूम्न्येव' इत्यमरस्तथापि महाकविप्रयोगबाहुल्यादविरोधो द्रष्टव्यः। नेत्रभवैः पयोभिर्बाष्पोदकैर्नूनं निश्चितं निर्वापयन्तः प्रशमयन्त इव। अलक्ष्यन्त इति शेषः। उत्प्रेक्षालंकारः। यथा दह्यमानं गृहादिकमुन्नतदेशमारुह्य जलैः प्रशमयन्ति तद्वदित्युत्प्रेक्षार्थः। वसन्ततिलकावृत्तम्॥

चक्रे शक्रजिदाज्ञया रणमुखे यत्कर्म रक्षोगण-
स्तत्कर्तुं क्षणदाचरक्षितिभुजा युक्तोऽप्यशक्तो भवेत्।
सप्तार्चिश्च हनूमता परिचितो लङ्कामधाक्षीद्यथा
तत्पित्रा मरुता युतोऽपि न तथा दाहक्रियायां पटुः॥६३॥

चक्र इति। रक्षोगणो राक्षसनिवहः शक्रजिदाज्ञयेन्द्रजिन्निदेशेनोपलक्षितः नतु साक्षाच्चक्रे चकार। तत्कर्म क्षणदाचरक्षितिभुजा राक्षससार्वभौमेन रावणेन युक्तोऽपि साक्षात्सहितोऽपि कर्तुमशक्तोऽसमर्थो भवेत्। न शक्नुयादित्यर्थः। तदपेक्षया पुत्रसामर्थ्यस्यैव बलिष्ठत्वादिति भावः। संभावनायां लिङ्। एवं सप्त अर्चींषि यस्य

१. 'रजनीचरक्षितिभृता' इति पाठः. २. 'अयुक्तोऽभवत्' इति पाठः. ३. 'मरुतः' इति पाठः.

सप्तार्चिरग्निश्च हनूमतः परिचितः प्रवर्तितः संगतो वा यथा लङ्कामधाक्षीद्ददाह । तथा तत्पित्रा हनूमज्जनकेन मरुता वायुना युतः सहितोऽपि दाहक्रियायां दहनकृत्ये पटुः समर्थो न भवेत् । वायुपरिचयापेक्षया तत्पुत्रपरिचयस्यात्यन्तजृम्भणहेतुत्वादिति भावः । वायुसाहचर्यादप्यधिकं लङ्कां ददाहेति परमार्थः । अत्र पूर्ववाक्ये रावणसहितस्य राक्षसगणस्येन्द्रजिदाज्ञाकृतकर्मकरणसामर्थ्यसंबन्धेऽपि संभावनया तदसंबन्धाभिधानात्संबन्धेऽसंबन्धरूपातिशयोक्तिः । तथा उत्तरवाक्ये वायुसखस्य सप्तार्चिषो हनूमत्परिचयसंवीतदाहकृत्यकरणपाटवसंबन्धोक्तेरतिशयोक्तिः । अनयोर्दृष्टान्तदार्ष्टान्तिकतया सापेक्षत्वात्परिकरः । शार्दूलविक्रीडितं वृत्तम् ॥

तस्मिन्हनूमदरणिप्रभवे हुताशे
शुद्धिं विधाय पतिमेव समेतुमैच्छत् ।
लङ्केश्वरेण रणकेलिकुतूहलेन
बाहोर्बलादपहृता सुरराजलक्ष्मीः ॥ ६४ ॥

तस्मिन्निति । रणकेलिकुतूहलेन युद्धक्रीडासमुत्सुकेन लङ्केश्वरेण रावणेन बाहुबलाद्भुजपराक्रमादपहृता सीता सुरराजलक्ष्मीरिन्द्रसाम्राज्यश्रीर्हनूमानेवारणिरग्निमन्थनदारुविशेषः । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । स प्रभवः कारणं यस्य तस्मिन् । तत्समुत्पादित इत्यर्थः । हुतमश्नातीति हुताशनेऽग्नौ कर्मण्यण् । शुद्धिं संस्कारं विधाय । पापिष्ठरावणसंपर्कजनितपापं विशोध्येत्यर्थः । पतिं निजभर्तारमिन्द्रमेव समेतुं संगन्तुमैच्छदिच्छति स्म । यथा कुतश्चित्कारणात्काचन साध्वी कुत्रचिदपवित्रस्थले स्थित्वा परिणामकाले संस्कारपरिशुद्धा सती पुनर्निजभर्तारमेव जिगमिषति तद्वदित्यर्थः । इच्छतेर्लङ् । 'आडजादीनाम्' इत्याडागमः । 'आटश्च' इति वृद्धिः । अत्र सुरराजलक्ष्म्या ईदृशेच्छासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । एतेन रावणस्य विनिपात आसन्न इति सूच्यते । वसन्ततिलकावृत्तम् ॥

निगमयति—

वाचामिदानीं किमु विस्तरेण लङ्कापुरीं रावणबाहुगुप्ताम् ।
काकुत्स्थदूतोऽयमुपेत्य चक्रे कृतान्तदूतस्य सुखप्रवेशाम् ॥ ६५ ॥

वाचामिति । इदानीमस्मिन्नवसरे । संस्कारोचितकाल इत्यर्थः । वाचां विस्तरेण वचनप्रपञ्चेन । 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यमरः । किमु । न किमपीत्यर्थः । किं त्वयं काकुत्स्थदूतो हनूमानुपेत्यागत्य रावणबाहुगुप्ताम् । दुष्प्रवेशामित्यर्थः । लङ्कापुरीम् । कृतान्तदूतस्य । यमकिंकराणामित्यर्थः । 'कृतान्तो यमसिद्धान्त' इत्यमरः । सुखप्रवेशां सुखेन प्रवेष्टुं शक्यां चक्रे । अनाघ्रातनिधनगन्धानां लङ्कापुरस्थयातुधानानां निधनं विधाय तद्द्वारा पूर्वमसंभावितप्रवेशान्यमकिंकरान्स्वसामर्थ्येन प्रवेशयामासेत्यर्थः । एतेनोत्तरत्राप्येतेषां निराघाटसंचारत्वं सूच्यते । वृत्तमुपजातिः ॥

पौलस्त्यपातकिसमागमजायमान-
मेनः पुनान इव वानरयायजूकः।
निर्वर्तिताक्षविजयो निजवालवह्नौ
हुत्वा पलाशसमिधः सुगतिर्बभूव॥ ६६॥

पौलस्त्येति। वानरो हनूमानेव यायजूको यज्ञकर्ता। 'इज्याशीलो यायजूकः' इत्यमरः। 'यजजपदशां यङ्' इति यजतेर्यङन्तादूकप्रत्ययः। पौलस्त्यो रावण एव पातकी ब्रह्महत्यादिपातकवान् तस्य समागमेन संगत्या जायमानं संपद्यमानमेनः। 'तत्संयोगी च पञ्चमः' इति न्यायात्संभावितदुरितमित्यर्थः। 'कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्' इत्यमरः। पुनान इव विशोधयन्निव। पापापनोदनं कुर्वाण इवेत्युत्प्रेक्षा। पूञः शानच्। निर्वर्तिताक्षविजयो विरचिताक्षकुमारनिधनः, कृतेन्द्रियजयश्च सन्। 'अक्षो रथस्यावयवे पाशके चाक्षमिन्द्रियम्' इति विश्वः। निजवाले यो वह्निर्हुताशनस्तस्मिन्। पलं मांसमश्नन्तीति पलाशाः। 'पलोऽस्त्री पललं मांसम्' इत्यभिधानात्। पलाशा राक्षसास्त एव पलाशसमिधः पलाशवृक्षसमिधो हुत्वा सुगतिरप्रतिहतगमनः शोभनलोकश्च बभूव। अत्र श्लेषोत्प्रेक्षानुप्राणितः सावयवरूपकालंकारः। वसन्ततिलकावृत्तम्॥

लङ्कादाहेऽप्यनार्तां रघुपतिदयितां चारणोक्त्या विदित्वा
सानन्दस्तां प्रणम्य प्रतिगमनविधौ प्राप्य तस्या नियोगम्।
आरुह्यारिष्टशैलं निधिमपि पयसां स्वैरमुत्तीर्य वेगा-
च्चक्रे गत्वा महेन्द्रं प्लवगकुलपतीन्पूर्णकामान्हनूमान्॥ ६७॥

लङ्केति। लङ्कादाहेऽपि रघुपतिदयितां श्रीरामप्रेयसीं सीतां चारणानां नभश्चराणां गन्धर्वादीनामुक्त्या वचनेनानार्तामपीडिताम्। अनष्टामिति यावत्। विदित्वा ज्ञात्वा। अतएव सानन्दः ससंतोषस्तां सीतां प्रणम्य नमस्कृत्य प्रतिगमनविधौ प्रतिप्रयाणविधाने विषये। 'विधिर्विधाने दैवेऽपि' इत्यमरः। तस्याः सीताया नियोगमाज्ञां प्राप्य। ततः अरिष्टशैलमरिष्टाख्यं परपारस्थपर्वतमारुह्य पयसां निधिं समुद्रमपि स्वैरं यथेच्छम्। अप्रतिहतमिति यावत्। उत्तीर्योल्लङ्घ्य महेन्द्रमङ्गदाद्यधिष्ठितं महेन्द्रपर्वतं गत्वा हनूमान्प्लवगकुलपतीनङ्गदजाम्बवन्नलनीलादिप्लवगेश्वरान्पूर्णकामान्संपूर्णमनोरथांश्चक्रे। अत्रातिविस्तरकथनयोग्यस्यार्थस्य संक्षेपेणोक्तेः संक्षेपो नाम गुणः। तदुक्तं विद्यानाथेन—'संक्षेपार्थाभिधानं यत्संक्षेपः परिकीर्तितः' इति। स्रग्धरावृत्तम्॥

अथ यथार्हं सैन्याधिपान्संमान्य मारुतिस्तैरनुयुक्तः स्ववृत्तान्तमखिलमाख्यातवान्॥

अथेति। अथानन्तरं मारुतिर्हनूमान्यथार्हं यथायोग्यं सैन्याधिपाञ्जाम्बवदङ्गदादिसेनापतीन्संमान्य मानयित्वा। तैः सैन्याधिपैरनुयुक्तः। 'कथं दृष्टा त्वया देवी

१. 'बल' इति पाठः. २. 'एतैः' इति पाठः. ३. 'स्वकीयवृत्तान्तम्' इति पाठः.

कथं वा तत्र वर्तते' इत्यादिना पृष्टः सन् अखिलमशेषं स्ववृत्तान्तमाख्यातवान् । उत्पतनादिसीतादर्शनलङ्कादाहान्तां निजवार्तामशेषां कथयामासेत्यर्थः ॥

**तदनु पवनतनयवचनमुदिता वानरवरूथिनी यूथनाथानुयाता तद्दर्शनजनितमानन्दमानन्दशरधौ दाशरथौ सुग्रीवे च संविभज्येव विवक्षितुमहमहमिकया धावन्ती मध्येसरणि दधिमुखकृतावनं मधुवनं हनूमदनुमत्याभिभूय मधुपानसुखमनुवभूव ॥**

**तदन्विति** । तदनु तदनन्तरं पवनतनयवचनमुदिता हनूमद्वाक्यसंतुष्टा वानरवरूथिनी कपिसैन्यम् । 'वरूथिनी वलं सैन्यम्' इत्यमरः । यूथनाथानुयाता जाम्बवदादियूथाधिपानुयाता । तदा तद्दर्शनजनितं सीतावलोकनसमुत्पन्नमानन्दमानन्दशरधावानन्दसागरे । नित्यनिरतिशयानन्दपरिपूर्णे इत्यर्थः । दाशरथौ श्रीरामे सुग्रीवे च संविभज्य रम्यग्विविच्य विवक्षितुं द्रष्टुमिति फलोत्प्रेक्षा । सीतावलोकनवार्ताकथनेन श्रीरामसुग्रीवानन्दयोरन्तरं परीक्षितुमित्यर्थः । अहमहमिकया परस्पराहंकारेण । अहमहमिका व्याख्यातारण्यकाण्डे । धावन्ती धावमाना । अतिवेगेन प्रद्रवती सतीत्यर्थः । सरण्या मध्ये मध्येसरणि । मार्गमध्य इत्यर्थः । 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः । तत्संनियोगादेकारान्तत्वं च मध्यशब्दस्य । दधिमुखेन दधिमुखाख्येन सुग्रीवमातुलेन वानरेण कृतमवनं रक्षणं यस्य तथोक्तम् । 'अव रक्षणे' कर्तरि ल्युट् । तथाच रामायणम्—'यद्रक्षति महावीर्यः सदा दधिमुखः कपिः । मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥' इति । मधुवनं मधुनामकसुग्रीवोद्यानवनम् । मधुप्रचुरत्वान्मधुवनमित्यर्थसंज्ञा । हनूमदनुमत्या हनूमदाज्ञयाभिभूयाक्रम्य मधुपानेन क्षौद्रपानेन यत्सुखं तदनुवभूव । यथेष्टं मध्वपिवदित्यर्थः । 'मधु मद्ये पुष्परसे क्षौद्रेऽपि' इत्यमरः ॥

**अथाब्रवीद्गिरिवरतुङ्गमङ्गदं**
**कृताञ्जलिर्दधिमुख एष रोषवान् ।**
**वलीमुखान्मधुभजने शिलीमुखा-**
**न्भवानिमान्झटिति निवारयेदिति ॥ ६८ ॥**

**अथेति** । अथानन्तरं रोषवान्मधुवनाक्रान्तजनितकोपवानेष दधिमुखो वनपालकस्तदा कृताञ्जलिर्विरचितकरसंपुटः सन् । प्रार्थनालक्षणमेतत् । गिरिवरतुङ्गम् । महोन्नतमित्यर्थः । अङ्गदं युवराजमब्रवीत् । किमिति । भवान्मधुभजने मधुपाने पुष्परसास्वादे च शिलीमुखानलीन् । 'अलिवाणौ शिलीमुखौ' इत्यमरः । रूपकालंकारः । इमान्वलीमुखान्कपीन् । 'कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः' इत्यमरः । झटित्यञ्जसा । निवारयेन्निरुन्ध्यात् । इत्येवमब्रवीदिति पूर्वेण संबन्धः । अन्यथा महोग्रशासनः सुग्रीवो दण्डयिष्यतीति भावः । शेषे प्रथमः । युष्मदस्मद्व्यतिरिक्तस्य भवच्छब्दस्य शेषत्वादिति । रुचिरावृत्तम् । 'चतुर्ग्रहैरिह रुचिरा जभास्जगाः' इति लक्षणात् ॥

---

१ 'वचन' इति नास्ति क्वचित

अयमप्येनमवोचत् ॥

अयमिति। अयमङ्गदोऽप्येनं दधिमुखं प्रत्यवोचदुक्तवान् ॥

तत्प्रकारमेवाह—

दशमुखपुरमध्ये वीक्षिता मैथिलीति
श्रवणमधु वितीर्णं येन वीरेण मह्यम्।
दधिमुख यदि सोऽयं भाषते को निरुन्ध्या-
त्मधु पिबतु यथेच्छं वाहिनी वानराणाम् ॥ ६९ ॥

दशमुखेति। दशमुखपुरमध्ये लङ्कापुरमध्ये मैथिली सीता वीक्षिता दृष्टेत्येवंभूतं श्रवणमधु श्रोत्रामृतं येन वीरेण मह्यं वितीर्णं दत्तम्। 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः। हे दधिमुख, सोऽपि वीरो भाषते यद्याज्ञावचनं वदति चेत् कः को वा निरुन्ध्यान्निवारयेत्। न कोऽपि निवारयितुं शक्नुयादित्यर्थः। 'शकि लिङ् च' इति लिङ्। सकलवानरजीवातुभूतमैथिलीकथामधुप्रदस्येदम्मधुपाननिवारणं कथं युक्तं स्यादिति भावः। अतो वानराणां वाहिनी सेना यथेच्छमिच्छासदृशम्। 'यथेष्टम्' इति वा पाठः। मधु पिबतु। मालिनीवृत्तम् ॥

ततः किं जातं तत्राह—

तदनु भयवशसमुपगतदधिमुखवचनविदितमधुवनकदनपरिगणितजनकदुहितृदर्शनजनितप्रमदभरभरितस्तपनतनयस्तत्र तनुविकृतिमतनुत दधिमुखागमननिमित्तसंपत्तिम् ॥

तदन्विति। तदन्वङ्गदवचनानन्तरं भयवशेन भयपारतन्त्र्येण समुपगतस्य समीपमागतस्य दधिमुखस्य वचनेन विदितं ज्ञातं यन्मधुवनकदनं वानरकृतमधुवनोल्लुण्ठनं तेन परिगणितं परिसंख्यातम्। निश्चितमिति यावत्। यज्जनकदुहितृदर्शनं सीतावलोकनं तज्जनितेन तदुत्पादितेन प्रमदभरेण हर्षातिशयेन भरितः संजातभरः। आनन्दपरिपूर्ण इत्यर्थः। भरित इत्यत्र तारकादित्वादितच्। प्रमदेत्यत्र 'प्रमदसंमदौ हर्षे' इति प्रत्ययान्तो निपातः। तपनतनयः सुग्रीवस्तत्र तस्मिन्समये दधिमुखागमनमेव निमित्तसंपत्तिः कारणसामग्री यस्यास्तां तनुविकृतिं मुखविकासनेत्रविस्फारणस्कन्धोन्नमनरोमाञ्चत्वादिगात्रचेष्टामतनुताकरोत्। मधुवनकदनश्रवणात्सीतादर्शनं निर्णीय परमानन्दभरितोऽभूदित्यर्थः ॥

अनन्तरं कपिसेनापि निकटवर्तिन्यभूदित्याह—

आरुह्याद्रिमथावरुह्य विपिनान्यासाद्य नानाफला-
न्यास्वाद्य प्लुतमारचय्य वदनैरापाद्य वाद्यक्रमान्।

१. 'यथेष्टम्' इति पाठः. २. 'यावेशसमुन्नत' इति पाठः. ३. 'परिभणित' इति पाठः. ४. 'तत्र' इति नास्ति क्वचित्. ५. 'तदभिमुखा' इति पाठः. ६. 'आस्वाद्य' इति पाठः. ७. 'आरचय्य' इति पाठः.

आलिङ्ग्य द्रुममक्रमं मदवशादाधूय पुच्छच्छटा-
मारादाविरभूदहंप्रथमिकापीना कपीनां चमूः ॥ ७० ॥

आरुह्येति । अद्रिं मार्गस्थं पर्वतमारुह्याथावरुह्य । पर्वतारोहणावरोहणक्रीडामनुभूयेत्यर्थः । विपिनान्यरण्यान्यासाद्य प्रविश्य नानाफलानि पनसरसालादिविविधफलान्यास्वाद्य भुक्त्वा । द्रुतम् । वल्गितानीत्यर्थः । आरचय्य कृत्वा । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । वदनैर्मुखैर्वाद्यक्रमान्डिण्डिमादिवाद्यध्वनिप्रकारानापाद्य वादयित्वा । तथा द्रुमम् । द्रुमानित्यर्थः । अक्रममपगतक्रमम् । मोहनोद्भावनादिजुगुप्सिताचरणेनापगतमर्यादमित्यर्थः । आलिङ्ग्याश्लिष्य । मदवशान्मधुपानजनितदर्पवशात्पुच्छच्छटां लाङ्गूलजालम् । 'वृन्दं जालं चक्रवालं जालकं पेटका च्छटा' इति वैजयन्ती । आधूय चालयित्वा । अहं प्रथमोऽहं प्रथम इति यस्यां क्रियायां साहंप्रथमिका । मयूरव्यंसकादित्वात्समासः । स्वार्थे कप्प्रत्ययः । तया पीना पूर्णा । एतत्पूर्विकया धावमानेत्यर्थः । कपीनां चमूर्वानरसेनारात्समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । आविरभूत् । आलक्षितेत्यर्थः । अत्र कपिस्वाभाव्येन यथावद्वस्तुवर्णनात्स्वभावोक्तिरलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

ततः किं तत्राह—

निद्राक्षयादरुणितेन समीरपुत्रः
सौमित्रिनेत्रयुगलेन निपीयमानः ।
चूडामणिं करतले कलयन्ववन्दे
पादारविन्दयुगलं भरताग्रजस्य ॥ ७१ ॥

निद्रेति । समीरपुत्रो हनूमान्निद्राक्षयान्निद्राभावात् । यावद्वनवासं निद्राहारयोरभाव इति भावः । अरुणितेन पाटलितेन सौमित्रिनेत्रयुगलेन लक्ष्मणनयनयुग्मेन निपीयमानः । अत्यादरेणावलोक्यमानः सन्नित्यर्थः । एतेन श्रीरामापेक्षयापि लक्ष्मणस्य भूयान्हनूमदागमनप्रतीक्षणादरोऽविद्यतेति सूच्यते । चूडामणिं सीताया अभिज्ञानभूतं शिरोरत्नं करतले कलयन् । श्रीरामादीनां यथा चक्षुर्गोचरं स्यात्तथा धारयन्नित्यर्थः । सीतां दृष्ट्वा समागत इति प्रथमवचनेनैव ज्ञापनार्थमिति भावः । भरताग्रजस्य श्रीरामस्य पादारविन्द इवेत्युपमितसमासो ननु रूपकम् । अन्यथोत्तरपदप्राधान्ये तत्र वन्दनायोगात् । तयोर्युगलं ववन्दे नमश्चकार । वसन्ततिलकावृत्तम् ॥

अक्लेशसंभूतगतागताभ्यां वितीर्णविस्तीर्णमहार्णवोऽपि ।
आनन्दसिन्धौ पृतनासमक्षमक्षस्य हन्ता नितरां ममज्ज ॥७२॥

अक्लेशेति । अक्षस्य हन्ताक्षकुमारमारको हनूमानक्लेशेनानायासेनैव संभूते संजाते ये गतागते यातायाते ताभ्यां वितीर्णौ विलङ्घितो विस्तीर्णमहार्णवः पुरुषान्तरदुस्तरमहासमुद्रो येन स तथोक्तोऽपि । अक्ष्णोः समीपे समक्षम् । समीपार्थे-

१. 'निस्तीर्ण' इति पाठः.

ऽव्ययीभावः। 'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यच्प्रत्ययः। पृतनाया वानरसेनायाः समक्षं पुरतः। नितरामत्यन्तम्। अव्ययादाम्प्रत्ययः। आनन्दसिन्धावानन्दसागरे ममज्ज मग्नोऽभूत्। ईदृङ्महाकपिवीरवाहिनीमध्येऽहमेक एव महोदधिमुल्लङ्घ्य सीतां दृष्ट्वा पुनरागतोऽस्मीत्येवंभूतभाषणप्रवर्तकमहाभाग्यसंपन्नोऽभवमित्यमन्दानन्दतुन्दिलितान्तःकरणोऽभूदित्यर्थः। अतएव विरोधाभासोऽलंकारः। वृत्तमुपजातिः॥

आनीतचूडामणिसंनिधानादाविःप्रमोदेन रघूद्वहेन।
तत्रानुयुक्तः पवनात्मजन्मा विज्ञापयामास कृतप्रणामः ॥७३॥

आनीतेति। आनीतस्य हनूमताहृतस्य चूडामणेः सीताशिरोरत्नस्य संनिधानात्सांनिध्याद्धेतोः। आविःप्रमोदेन प्रादुर्भूतानन्देन रघूद्वहेन रघुनन्दनेन तत्र तस्मिन्सीतावृत्तान्ते विषयेऽनुयुक्तः पृष्टः पवनात्मजन्मा हनूमान्कृतप्रणामो विहितनमस्कारः सन्। विज्ञापयामास। सीतावलोकनवार्ता कथयामासेत्यर्थः। पूर्वमागमनानन्तरकर्तव्यतया विहितो नमस्कार इदानीं शुभवार्ताकथनप्रारम्भसंतोषातिरेकादिति वेदितव्यम्। इन्द्रवज्रावृत्तम्॥

विज्ञापनप्रकारमेवाह—

लङ्कापुरोपवनसीम्न्यथ राजपुत्री-
मालोकयं निशिचरीगणबाध्यमानाम्।
केनापि पातकवशेन सुपर्णलोके
वन्दीकृतामिव भुजंगमराजकन्याम्॥ ७४॥

लङ्केति। अथ विज्ञापनानन्तरं मङ्गलाचारे वा 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। लङ्कापुरस्य रावणराजधान्या उपवनसीम्न्युद्यानवनप्रदेशे। अशोकवनिकामध्य इत्यर्थः। निशिचरीगणबाध्यमानां रक्षकराक्षसीनिवहपरितप्यमानाम्। अतएव केनाप्यनिर्वाच्येन पातकवशेन पापानुबन्धेन सुपर्णलोके गरुडलोके वन्दीकृताम्। कारागारबद्धामित्यर्थः। भुजंगमराजकन्यां नागकन्यामिव स्थितां राजपुत्रीं जानकीमालोकयमवलोकितवानस्मि। उपमालंकारः। वसन्ततिलकावृत्तम्॥

देव्यास्त्वदीयान्वयकीर्तनेन त्वन्मुद्रया च व्यपनीय शोकम्।
वार्तामभिज्ञानमयीमयाचं प्रस्थातुकामः परिपूर्णकामः॥ ७५॥

देव्या इति। त्वदीयान्वयकीर्तनेन भवदीयवंशप्रशंसया त्वन्मुद्रया भवदीयप्रत्यभिज्ञानाङ्गुलिमुद्रिकया च देव्याः सीतायाः शोकं विषादं व्यपनीय निरस्य। अत एव परिपूर्णकामः संपूर्णमनोरथः प्रस्थातुकामः पुनरागन्तुमनाः सन्। 'तुं काममनसोरपि' इति तुमुनो मकारलोपः। अभिज्ञानमयीमभिज्ञानरूपाम्। ताद्रूप्ये मयटि ङीप्। वार्तां वृत्तान्तमयाचं याचितवानस्मि। इन्द्रवज्रावृत्तम्॥

१. 'पवमानजन्मा' इति पाठः. २. 'सीमनि' इति पाठः.

**ब्रह्मास्त्रवित्रस्तजयन्तकृत्यां कथामभिज्ञाप्य वने प्रवृत्ताम् ।**
**चिरं रुदन्त्या जनकेन्द्रपुत्र्या चूडामणिः प्रेषित एष तुभ्यम् ॥७६॥**

**ब्रह्मेति ।** ब्रह्मास्त्राद्भयाद्वित्रस्तस्य विशेषतः भीतस्य जयन्तस्य जयन्तासुरनाम्नः काकासुरस्य कृत्यं स्तनोल्लेखनरूपक्रिया यस्यां ताम् । वने चित्रकूटतटविपिने प्रवृत्तां संभूतां कथामाख्यायिकामभिज्ञाप्याभिज्ञानत्वेनोक्त्वा । चिरं चिरकालं रुदन्त्याः पूर्वानुभूतार्थस्मरणवशादश्रूणि विमुञ्चन्त्या जनकेन्द्रपुत्र्या जानक्या एषोऽयं चूडामणिः शिरोरत्नं तुभ्यं प्रेषितः । वाग्रूपं चाभिज्ञानद्वयं प्रहितमित्यर्थः । वृत्तमुपजातिः ।

निगमयति—

**किं बहुना ॥**

**किं बहुनेति ।** बहुना वाग्व्यापारेण किम् । न किमपीत्यर्थः ॥

तथापि किंचिद्वक्तव्यमवशिष्टं विद्यत इत्याह—

**देव तस्याः प्रतिष्ठासूनसूनाशैकपालितान् ।**
**मुद्रयित्वा प्रपन्नोऽहं तवाभिज्ञानमुद्रया ॥ ७७ ॥**

**इति श्रीविदर्भराजविरचिते चम्पूरामायणे सुन्दरकाण्डः समाप्तः।**

**देवेति ।** हे देव स्वामिन्, प्रतिष्ठासून्प्रस्थातुमिच्छून्, उत्क्रमिष्यमाणानित्यर्थः । तिष्ठतेः सन्नन्तादुप्रत्ययः । तथाप्याशैकपालितानाशया त्वदागमनप्रतीक्षयैकया पालितान्गुप्तान् । शिवभागवतवत्समासः । तस्याः सीताया असून्प्राणान् तवाभिज्ञानमुद्रयाभिज्ञानरूपाङ्गुलिमुद्रिकया तवैवाभिज्ञानमुद्रया मुद्राफलकयेति श्लिष्टरूपकम् । मुद्रयित्वा । निरुध्येत्यर्थः । अहं प्रपन्नः । आगतोऽस्मीत्यर्थः ॥

इति श्रीमत्परमयोगीन्द्रवृन्दमानसेन्दीवरसंदोहामन्दानन्दलाभाभिवन्दितरघुनन्दनचरणारविन्दमकरन्दास्वादनकन्दलितसारस्वतेनाखण्डतपःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्य पद्मान्वयसुधापारावारपारिजातस्य धन्वन्तर्यवतारान्तरस्यायुर्वेदप्रमुखनिखिलविद्यासारसर्वज्ञसार्वभौमस्य कोण्डोपण्डितवर्यस्य तनूजेन गङ्गाम्बिकागर्भरत्नाकरसुधाकरेण रामचन्द्रबुधेन्द्रेण विरचितायां चम्पूरामायणव्याख्यायां साहित्यमञ्जूषिकासमाख्यायां सुन्दरकाण्डः समाप्तः ॥

रामचन्द्रार्यरचिता रामचन्द्रपदार्पिता ।
व्याख्या सुन्दरकाण्डस्य पूर्णा मञ्जूषिकाभिधा ॥

---

१. 'कथामपि ज्ञाप्य'; 'कथां च विज्ञाप्य' इति पाठौ. २. 'एव' इति पाठः. ३. 'आशोक' इति पाठः. ४. 'त्वदभिज्ञान' इति पाठः.

# युद्धकाण्डम्।

इत्थं निजचित्रकवितासभाजितसकलकविसमाजेन तत्रभवता भोजराजेन विरचितपञ्चकाण्डसंबद्धं चम्पूरामायणप्रबन्धं परिपूरयितुकामेन लक्ष्मणनाम्ना पण्डितवर्येणावशिष्टो युद्धकाण्डो निजवाग्वैभवानुसारेण रचितः। सोऽयं मयेदानीं व्याक्रियते॥

अथ तत्रभवान्कविः स्वचिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय शिष्टाचारसंप्राप्तविशिष्टेष्टगुरुचरणारविन्दभोजमहाराजस्मरणरूपं मङ्गलं निबध्नाति—

दृष्टे यत्र यदृच्छयापि वचसां देवी पुरो वर्तते
सारस्यं महदभ्युदेति सदसि प्रागल्भ्यमुज्जृम्भते।
जायन्ते सकलाः कला अपि नृणां जागर्ति कीर्तिर्नवा
चेतः स्निह्यति तत्र देशिकपदाम्भोजे च भोजे मम॥ १॥

दृष्ट इति। यत्र यस्मिन्देशिकपदाम्भोजे च यदृच्छया लीलयापि। अल्पादरेण चेत्किमु वक्तव्यमिति भावः। दृष्टेऽवलोकिते सति। नृणाम्। मनुष्यमात्रस्येत्यर्थः। एतच्च सर्वत्र संबध्यते। वचसां देवी सरस्वती पुरो वर्तते। उपासनादिप्रयत्नं विनैव स्वयं संनिहिता भवतीत्यर्थः। तथा महदनल्पम्। कार्यकारणपर्याप्तमित्यर्थः। सारस्यं कवितारसङ्गत्वम्। अभ्युदेत्यभ्युदयं प्राप्नोति। समुत्पद्यत इत्यर्थः। 'अभ्युपैति' इति पाठ आभिमुख्येन समीपमागच्छतीत्यर्थः। तथा सदसि। राजविद्वत्सभास्वित्यर्थः। प्रागल्भ्यं सकलविद्याविवरणप्रौढत्वमुज्जृम्भते विजृम्भितं भवति। तथा सकलाः समस्ता अपि कला इतिहासागमाद्याश्चतुःषष्टिविद्या जायन्तेऽध्ययनपरिशीलनाभ्यासाभावेनैव तत्त्वतोऽवबुध्यन्ते। तथा नवापूर्वा कीर्तिः सत्समाख्या जागर्ति विलसति। तत्र तस्मिन्देशिकपदाम्भोजे गुरुचरणारविन्दे भोजे भोजराजे च मम चेतो मनः स्निह्यति। उक्तरीत्या बहुश्रेयस्करत्वान्मामकं मनस्तत्र स्नेहयुक्तं भवतीर्थः। चतुःषष्टिकलास्तु—'इतिहासागमाद्याश्च काव्यालंकारनाटकम्। गायकत्वं कवित्वं च कामशास्त्रं दुरोदरम्॥ देशभाषालिपिज्ञानं लिपिकर्म च वाचकम्। सर्वाणि चापदानानि स्वरशास्त्रं तु शाकुनम्॥ सामुद्रिकं रत्नशास्त्रं रथाश्वगतिकौशलम्। मल्लशास्त्रं सूदकर्म भूरुहाणां च दोहदम्॥ गन्धवादो धातुवादः खन्यावादो रसस्य च। जालवादोऽग्निसंस्तम्भः खड्गस्तम्भो जलस्य च॥ वाचःस्तम्भो वयःस्तम्भो वश्याकर्षणमेव च। विद्वेषणोच्चाटनं च मारणं कालवञ्चनम्॥ पयसि प्लवचातुर्यं पादुकासिद्धिरेव च। मृत्सिद्धिर्घटिकासिद्धिरैन्द्रजालिकमेव च॥ अञ्जनं नरदृष्टिस्तु वञ्चनं स्वरवञ्चनम्। मणिमन्त्रौषधानां च सिद्धयश्चौरकर्म च॥ चित्रलोहाश्ममृद्दारुवेणुवर्माञ्जनक्रियाः। अदृश्यकरणी दूरकरणी मृगयारतिः॥ वाणिज्यं पाशुपाल्यं च कृषिराहवकर्म च। लावकुक्कुटमेषादियुद्धकारणकौशलम्॥ चतुःषष्टि-

---

१. एतत्पूर्वम् 'आनीतं पवनात्मजेन जनकक्ष्मापालपुत्रीशिरोरत्नं मूर्तमिवानुरागमसकृद्वीक्ष्य प्रमोदान्वितः। यो लोकत्रककण्टकं दशमुखं प्रोद्धर्तुमैच्छद्बलात्सोऽयं वीरवराग्रणीर्जनकजाजानिः सदा पातु नः॥' इति श्लोको दृश्यते क्वचित्. २. 'स्निह्यतु' इति पाठः.

कलाश्चैताः कलाविद्भिः प्रकीर्तिताः ॥' इति । अनुप्रासोऽलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

संप्रति स्वाहंकारं परिहरति—

भोजेन तेन रचितामपि पूरयिष्य-
न्नल्पीयसापि वचसा कृतिमत्युदाराम् ।
न व्रीडितोऽहमधुना नवरत्नहार-
सङ्गेन किंतु[1] हृदि धार्यत एव तन्तुः ॥ २ ॥

भोजेनेति । तेनासाधारणमहिमास्पदतया प्रसिद्धेन भोजेन । अपिरतिशयार्थः। रचितां प्रणीतामतएवात्युदाराम् । रसालंकाराद्युल्लसितशब्दार्थसंघटनोज्जृम्भिततयात्यन्तगम्भीरामित्यर्थः । कृतिं काव्यमल्पीयसात्यल्पेन । ईषन्मात्रगौरवरहितेनापीत्यर्थः । 'द्विवचनविभज्य—' इत्यादिनेयस्प्रत्ययः । वचसा पूरयिष्यन्पूरितां करिष्यन्नहमधुनास्मिन्काले । अधुनेति निपातनात्साधुः । व्रीडितो लज्जितो न जातः क्वायं सर्वज्ञभोजप्रबन्धः, क्व च वा मदीयेनाल्पिष्ठेन वचनेन तत्परिपूरणमिति लज्जां न गतोऽस्मीत्यर्थः । कुत एतदित्याशङ्क्य तत्रार्थान्तरं न्यस्यति—किंतु । तथाहीत्यर्थः। तन्तुः सूत्रं नवरत्नहारसङ्गेन नूतनमाणिक्यहारसमागमेन हृदि वक्षसि मानसे च धार्यत एवासज्यत एव । नतु परिहीयत इत्यर्थः । कुतः । अतएव तत्साम्येन मद्वचनस्यापि महाजनपरिग्रहो भविष्यतीति भावः । अर्थान्तरन्यासोऽलंकारः । वसन्ततिलकावृत्तम् ॥

एवं निजवाग्व्यापारस्यावकाशं संपाद्येदानीं चिकीर्षितमाह—

मुद्रामुद्रितजीवितां जनकजां मोहाकुलं राघवं
चूडारत्नविलोकनेन सुचिरं निध्याय निध्याय च ।
प्रारेभे हृदि लक्ष्मणः कलयितुं पौलस्त्यविध्वंसनं
धीरः पूरयितुं कथां च विमलामेकेन काण्डेन सः ॥ ३ ॥

मुद्रेति । मुद्रया श्रीरामाभिज्ञानमुद्रिकया मुद्रितं स्थापितं जीवितं यस्यास्तां जनकजां जानकीम् । तथा चूडारत्नविलोकनेन चूडामणिदर्शनेन मोहाकुलं मोहविह्वलं राघवं च सुचिरमनल्पकालम् । अत्यन्तसंयोगे द्वितीया । निध्याय नितरां ध्यात्वा । मनस्यनुसंधायेत्यर्थः । 'ध्यै चिन्तायाम्' इति धातोर्निपूर्वात्क्त्वो ल्यबादेशः । तथा निध्याय दृष्ट्वा च । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । तथाच जनकजां ध्यात्वा राघवं दृष्ट्वेति यथाक्रममन्वयाद्यथासंख्यालंकारः । धीरो धैर्यशाली स प्रसिद्धो लक्ष्मणः सौमित्रिरेकेन काण्डेन बाणेन । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । पौलस्त्यविध्वंसनं रावणसंहारं कलयितुं कर्तुं हृदि प्रारेभ उपचक्रमे । मनसि निर्धारितवानित्यर्थः । तथा धीरो विद्वान्स लक्ष्मणो लक्ष्मणनामा कविरेकेन काण्डेन युद्धकाण्डेन विमलां निष्कलङ्कां कथां रावणसंह-

[1] 'किं न' इति पाठः.

रणरूपोपाख्यानं पूरयितुं हृदि प्रारेभे मनस्युपक्रान्तवान्। अत्र रामलक्ष्मणयोरुभयोरपि प्रकृतत्वात्केवलप्रकृतगोचरश्लेषालंकारः । 'प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम्। श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वये नान्त्ये॥' इति लक्षणात्। शार्दूलविक्रीडितं वृत्तम्॥

कथां पूरयितुं प्रारेभ इत्युक्तम्। संप्रति तामेव कथां प्रस्तौति—

**आनन्दमन्थरमनन्तरमाञ्जनेया-**
**दाकर्ण्य वृत्तिमनघां जनकात्मजायाः।**
**दृष्टिर्दशाननरुषा परुषायमाणा**
**बाणासनोपरि दधे प्रभुणा रघूणाम्॥ ४॥**

**आनन्देति।** अनन्तरं चूडामण्यभिज्ञानप्रदर्शनानन्तरमानन्देन मन्थरं निर्भरं यथा तथा। आनन्दपरिपूरितमित्यर्थः। आञ्जनेयादञ्जनातनयाद्धनूमतः। 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी। अनघां निर्दुष्टां जनकात्मजाया वृत्तिं वर्तनं जीवनं वा। 'वृत्तिर्वर्तनजीवने' इत्यमरः। आकर्ण्य श्रुत्वा। रघूणां प्रभुणा श्रीरामेण दशानने रावणे रुषा रोषेण परुषायमाणोग्रायमाणा दृष्टिर्बाणासनोपरि कार्मुकोपरि दधे निचिक्षिपे। महावीरस्वाभाव्याच्छरासनावलोकनसंज्ञयैव सुग्रीवादिभ्यो जैत्रयात्रासंनाहमाज्ञापयामासेत्यर्थः। वसन्ततिलकावृत्तम्॥

**अथ सुग्रीवोऽपि दशग्रीवकुपितराघवावलोकनद्विगुणितरणोत्साहः साहाय्यसमनुपालयन्नन्धुमिव सिन्धुमवधार्य धार्यमाणधैर्योदगाधमतिरधिरूढत्रिकूटशृङ्गां लङ्कामधिगन्तुमङ्गदकुमुदनलनीलप्रमुखमप्यखिलानीकं समनीनहत्॥**

**अथेति।** अथानन्तरं सुग्रीवोऽपि दशग्रीवे कुपितस्य राघवस्यावलोकनेन द्विगुणितो द्विरावृत्तो रणोत्साहो रणप्रयत्नो यस्य स तथोक्तः। 'लोकोत्तरेषु कार्येषु स्थेयान्प्रयत्न उत्साहः' इति लक्षणम्। सहायस्य भावः साहाय्यं सहायकर्म। ब्राह्मणादित्वात्ष्यञ्। तस्य समयं संविदमपि। सीताप्रवृत्त्युपलब्ध्यनन्तरं तदपहारिणं वैरिणं संहृत्य पुनस्तामानेष्यामीति पूर्वविहितप्रतिज्ञामित्यर्थः। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। अनुपालयन्ननुवर्तमानः। अगाधमतिर्गम्भीरमतिर्धैर्योद्धीरत्वादन्धुं कूपमिव सिन्धुमवधार्य। तथा सुतरां निश्चित्येत्यर्थः। 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः। अधिरूढं त्रिकूटशृङ्गं यया ताम्। त्रिकूटाचलशृङ्गाग्रवर्तिनीमित्यर्थः। लङ्कामधिगन्तुमङ्गदकुमुदनलनीलाः प्रमुखाः प्रधाना यस्य तत्तथोक्तम्। अखिलमप्यनीकं वानरसैन्यम्। 'अनीकं तु रणे सैन्ये' इति विश्वः। समनीनहत्संनाहयामास। नहतेर्णौ चङ्युपधाह्रस्वोऽभ्यासदीर्घश्च॥

---

१. 'द्विगुणीकृत' इति पाठः. २. 'साहायकमनुपालम्भम्' इति पाठः. ३. 'धैर्यावगाढमतिः' इति पाठः. ४. 'शिखराम्' इति पाठः. ५. 'वलिमुखानीकम्' इति पाठः. ६. 'समनीनयत्' इति पाठः.

**वारिदादपि च रामनामतः पूरिता पुनरपाङ्गधारया।**
**तत्क्षणं प्रति चचाल दक्षिणं वाहिनीशमखिलापि वाहिनी ॥ ५॥**

**वारिदादिति**। रामनामतो रामाभिधानात्। तद्रूपादित्यर्थः। वारिदाज्जलदादप्यपाङ्गधारया कटाक्षरेखया तयैव धारया पुनर्भूयोऽपि पूरिता समग्रीकृताप्यायिता च अखिला कृत्स्नापि वाहिनी वानरसेना सैव वाहिनी नदी। 'सेनानद्योश्च वाहिनी' इति वैजयन्ती। तत्क्षणं तस्मिन्नेव क्षणे दक्षिणं वाहिनीशं प्रति दक्षिणसमुद्रमुद्दिश्य दाक्षिण्यगुणयुक्तसेनानायकं चेति गम्यते। चचाल प्रतस्थे। श्लेषसंकीर्णं समस्तवस्तुवर्ति सावयवरूपकम्॥

**तत्क्षणे[1] समचलितऋक्ष[2]समुदये[3] कुमुदामोदकारिणि शरभाधिकप्रसादशीले नीलेन्दीवरानन्दिनि दशाननदिशाक्रमणव्यग्रतेजसि समारूढतारानन्दनलक्ष्मणानुगते सरय[4]मुदयसानुमन्तमिव हनुमन्तमधिरोहति निशाचरतिमिरवारण[5]निस्तन्द्रे रामचन्द्रे समन्ततः कन्दलितबहुलहरिजालकोलाहलभरितहरिदन्तरो निरन्तरास्कन्दितनिकटकान्तारावलिर्वलीमुखबलमहाम्बुधिः ससंभ्रममुदजृम्भत॥**

**तत्क्षण इति**। तस्मिन्क्षणे। तत्काल इत्यर्थः। समं तुल्यं चलितः प्रस्थित ऋक्षसमुदयो जाम्बवदादिभल्लूकगणः, अन्यत्र नक्षत्रमण्डलं यस्य तस्मिन्। ऋक्षाच्छभल्लभल्लूक', 'नक्षत्रमृक्षं भं तारा' इति चामरः। कुमुदस्य कुमुदनाम्नः कपिसेनापतेरामोदं संतोषम्,अन्यत्र कैरवोल्लासं करोतीति कुमुदामोदकारिणि। 'कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ' इति विश्वः। शरभे शरभाख्यसेनापतावधिकप्रसादशीलेऽत्यन्तानुग्रहतत्परे, अन्यत्र शरस्याश्ववालाख्यतृणविशेषस्य कुसुमस्य भा शोभा तस्या अप्यधिकप्रसादशीलेऽतिनिर्मलस्वभावे। नीलेन्दीवराख्यः सेनानायकः। अथवा नील इन्दीवरमिव तदानन्दिनि तत्परितोषकारिणि, अन्यत्र नीलोत्पलविकासकारिणि। 'नीलः कपीशेऽद्रिभेदे कृष्णे ना तद्वति त्रिषु' इति नानार्थरत्नमाला। दशाननदिशाक्रमणे रावणदिगवस्कन्दने व्यग्रं चटुलं तेजः प्रतापो यस्य तस्मिन्, अन्यत्र दशसंख्याकान्याननानि मुखानि यासां तास्तासां दिशानाम्। दशदिङ्मुखानामित्यर्थः। आक्रमण आवरणे व्यग्रं वेगवत्तेजो ज्योतिर्यस्य तस्मिन्। 'तेजोऽनले प्रभावे च ज्योतिष्यर्चिषि रेतसि' इति वैजयन्ती। समारूढः समधिष्ठितस्तारानन्दनोऽङ्गदो येन तेन लक्ष्मणेन सौमित्रिणा अनुगतेऽनुसृते, अन्यत्र समारूढा प्रतिदिनमेकैकताराधिष्ठाननियमात्समधिष्ठिता यास्तारा अश्विन्यादिनक्षत्राणि ता नन्दयतीति तथोक्तः स चासौ लक्ष्मणानुगतो लाञ्छनेनानुसृतश्च तस्मिन्। 'लक्ष्मणा' इति तृतीययानुगतशब्देनालुक्समासः। निशाचरा राक्षसास्तिमिराणीव,

---

१. 'ततः क्षणेन' इति पाठः. २. 'समक्षचलित' इति पाठः. ३. 'समुदाये' इति पाठः. ४. 'सरमसम्' इति पाठः. ५. 'हरण' इति पाठः.

अन्यत्र शार्वरान्धकाराणि तेषां वारणे विध्वंसने निस्तन्द्रे जागरूके रामचन्द्र इवे-त्युपमितसमासः । उदयसानुमन्तमिवेति स्पष्टोपमालिङ्गात् । तस्मिन् । उदयसा-नुमन्तमुदयाचलमिव हनूमन्तं सरयं सत्वरमधिरोहत्यधितिष्ठति सति समन्ततः सर्वत्र कन्दलितः समुत्पन्नो बहुलो भूयिष्ठश्च यो हरिजालकोलाहलो वानरसङ्घकल-कलो घुमघुमध्वनिश्च तेन भरितानि परिपूर्णानि हरिदन्तराणि यस्य स तथोक्तः । निरन्तरं नीरन्ध्रमास्कन्दिता आक्रान्ता निकटकान्तारावलिः समीपारण्यश्रेणिर्येन स तथोक्तः समानमेतत् । वलीमुखबलमहाम्बुधिर्वानरसेनासमुद्र इवेत्युपमितस-मासः । ससंभ्रमं साटोपम् । उदजृम्भज्जृम्भितोऽभूत् । 'शरभाधिकप्रसादशीले' 'लक्ष्मणानुगते' इत्यत्र च शब्दश्लेषः । वस्तुतः शब्दभेदेन अर्थद्वयावभासेऽपि जतु-काष्ठवदेकशब्दस्य प्रतीतेः । अन्यत्रार्थश्लेषः । एकनालावलम्बिफलद्वयवदभिन्नपदेना-र्थद्वयप्रतीतेरेतत्संकीर्णयमुपमा ॥

उत्त्रासकासरमुदञ्चितपञ्चवक्त्रं
वित्रस्तहस्तिविशरारुचमूरुयूथम् ।
आलोललोचनतरङ्गकुरङ्गशाव-
मासीदसीम विपिनं कपिनर्मघोषैः ॥ ६ ॥

उत्त्रासेति । असीम निर्मर्यादम् । अतिविपुलमित्यर्थः । 'सीमसीमे स्त्रियामुभे' इत्यमरः । विपिनमरण्यम् । कर्तृ । कपीनां नर्मघोषैर्जैत्रयात्रोत्सवक्रीडोद्घोषैः । 'क्रीडा लीला च नर्म च' इत्यमरः । उत्त्रासा भयविभ्रान्ताः कासरा वनमहिषा य-स्मिंस्तथोक्तम् । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । उदञ्चिता उद्भ्रा-न्ताः पञ्चवक्त्राः सिंहा यस्मिंस्तत्तथोक्तम् । 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः । वित्रस्ता विभीता हस्तिनो गजा यस्मिंस्तत्तथोक्तम् । विगताः शरारूणां व्याघ्रादिहिं-स्रजन्तूनां चमूरूणां मृगाणां च यूथा निवहा यस्मिंस्तत्तथोक्तम् । 'शरारुर्घातुको हिंस्रः' इत्यमरः । आलोलाः साध्वसाद्विलोला लोचनतरङ्गा दृष्टिपरम्परा येषां ते कुरङ्गशावा हरिणशिशवो यस्मिंस्तत्तथोक्तं चासीत् । वसन्ततिलकावृत्तम् ॥

सैन्यैस्ततो रघुपतिः सरितां निवेशं
वेशन्तयन्विरलयन्विपिनान्तराणि ।
आरुह्य शैलमपि सह्यमसह्यवातं
मन्दानिलैकनिलयं मलयं जगाम ॥ ७ ॥

सैन्यैरिति । ततो नर्मघोषानन्तरं रघुपतिः सैन्यैर्वानरसेनाभिः सरितां नदीनां निवेशं विन्यासस्थानम् । 'निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः' इति विश्वः । वेशन्तयन्वेशन्तं कुर्वन् । सेनासंमर्दादल्पसरांसि कुर्वन्नित्यर्थः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । वेशन्तशब्दात्तत्करोतीति ण्यन्ताल्लटः शत्रादेशः । तथा विपि-नान्तराणि गहनान्तरालानि विरलयन्विरलानि कुर्वन् । वानरसेनासाटोपधाटीविघट्टित-

१. 'सह्यमपि शैलम्' इति पाठः.

तरुगुल्मपाषाणतया सुगमनानि कुर्वन्नित्यर्थः । पूर्ववच्छतृप्रत्ययः । सह्यं सह्याख्यमप्यसह्यो विरहिणां दुष्प्रसहो वातो यस्मिंस्तं शैलं मार्गसंबद्धं पर्वतमारुह्य ततो मन्दानिलैकनिलयं मन्दगन्धवाहैकनिकेतनं मलयं मलयाख्यं शैलं जगाम । वृत्तं पूर्ववत् ॥

**गत्वा रामस्तमद्रिं[1] सौमित्रिमिदमवादीत् ॥**

**गत्वेति** । रामस्तमद्रिं मलयपर्वतं गत्वा सौमित्रिं प्रतीत्थं वक्ष्यमाणप्रकारं वचनमवादीदुक्तवान् । वदेर्लुङि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः ॥

उक्तप्रकारमेवाह—

**अमी तटसमीपनिर्झरतरङ्गरिङ्गत्पयो-**
**जडीकृतपटीरभूरुहकुटीरसंसारिणः ।**
**मनो विधुरयन्ति मे मलयमेखलामेदुरा**
**दुरासदवनप्रियप्रियतमारुता मारुताः ॥ ८ ॥**

**अमी इति** । तटसमीपेषु सानुप्रदेशेषु ये निर्झराः प्रवाहाः । 'प्रवाहो निर्झरो झरः' इत्यमरः । तेषां तरङ्गेभ्यो रिङ्गद्भिः स्खलद्भिः पयोभिरम्बुभिर्जडीकृतानि शिशिरीकृतानि । 'सुषीमः शिशिरो जडः' इत्यमरः । अभूततद्भावे च्विप्रत्ययः । तथाभूतानि यानि पटीरभूरुहाश्चन्दनतरव एव कुटीराणि गृहाणि तेषु संसारिणो नियतावस्थानशीलाः । ताच्छील्ये णिनिः । मलयमेखलासु मलयशैलनितम्बप्रदेशेषु मेदुराः सान्द्राः । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः । दुरासदान्युद्दीपकत्वाद्दुःसहानि वनप्रियप्रियतमानां कोकिलाङ्गनानां रुतानि कूजिनानि येषु तथोक्ताः । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः । अमी प्रवर्तमाना मारुता अनिला मे मम मनो विधुरयन्ति विह्वलयन्ति । विकलीकुर्वन्तीत्यर्थः । यमकानुप्रासयोः संसृष्टिः । पृथ्वीवृत्तम् ॥

**इत्यालपन्करुणमेष निरुद्धवेलं**
**शैलं महेन्द्रमधिगत्य[2] महीमहेन्द्रः ।**
**आवर्तमुद्रितमिवान्वयभूपतीना-**
**मक्षय्यकीर्तिनिधिमम्बुनिधिं ददर्श ॥ ९ ॥**

**इतीति** । इत्युक्तप्रकारेण करुणं दीनमालपन्व्याहरन् । एष महीमहेन्द्रो भूदेवेन्द्रः श्रीरामो निरुद्धवेलमावृतसमुद्रकूलम् । 'वेला कूले च जलधेर्वेला कालविकारयोः' इति विश्वः । महेन्द्रं शैलं महेन्द्राख्यकुलपर्वतविशेषम् । 'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥' इति विष्णुपुराणवचनात् । एतेन पूर्वोक्तसह्यमलययोरपि कुलपर्वतविशेषत्वमवगन्तव्यम् । अधिगत्य प्राप्य । आवर्तैर्जलभ्रमैर्मुद्रितं चिह्नितम् । प्रतिबद्धमिति यावत् । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । अन्वयभूपतीनां संगरादिनिजकुलभूभुजाम् । क्षेतुं शक्यः क्षय्यः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । ततो नञ्समासः । तं कीर्ति-

---

1. 'च तमद्रिं' इति पाठः. 2. 'अभिगम्य' इति पाठः.

निधिं यशोनिधानमिव स्थितमित्युत्प्रेक्षा। अम्बुनिधिं समुद्रं ददर्श। अत्रावर्तेषु समुद्रारोपणाद्रूपकालंकारः। स चोक्तोत्प्रेक्षया संसृज्यते। वसन्ततिलकावृत्तम्॥

**दृष्ट्वा च तमद्भुताकृष्टमना रामस्तदिदमाचष्ट॥**

**दृष्ट्वेति।** तमम्बुनिधिं दृष्ट्वा चाद्भुताकृष्टमना आश्चर्याविष्टहृदयः सन् रामस्तदिदं वचनमाचष्टावोचत्॥

तत्प्रकारमेवाह—

**द्रष्टुं नालमगाधतां फणिपतिः सीमान्तरेखा दिशो**
**द्वीपाः सैकतमण्डलानि तदयं दूरे गिरां वारिधिः।**
**येषामेष सुखादखानि नखरैर्येनाथवा पूरित-**
**स्तेषां नः कुलभूभुजामविहतस्थेम्ने महिम्ने नमः॥ १०॥**

**द्रष्टुमिति।** ( हे सुग्रीव, उल्लोलकल्लोलवेष्टितं चञ्चलतरङ्गवेष्टितं कल्लोलिनीनां नदीनां वल्लभः पतिः समुद्रस्तं द्रष्टुं प्रेक्षितुमर्हसि। यद्यस्मात्कारणात् ) फणिपतिः पातालकुहरवासीति शेषः। अगाधतामतलस्पर्शताम्। गाम्भीर्यमित्यर्थः। 'अगाधमतलस्पर्शे' इत्यमरः। द्रष्टुं नालं न पर्याप्तः। 'पर्याप्तवचनेष्वलमर्थेषु तुमुन्'। दिशः सीमान्तरेखा मर्यादावसानभूप्रदेशाः। सिकतानां समूहाः सैकतानि सिकतामयानि। 'सैकतं सिकतामयम्' इत्यमरः। 'सिकताशर्कराभ्यां च' इत्यण्प्रत्ययः। तेषां मण्डलानि श्रेणयो द्वीपाः सिंहलादयो द्वीपविशेषाः। तत्तस्मात्कारणादयं वारिधिर्गिरां दूरे। वर्तत इति शेषः। अनिर्वाच्य इत्यर्थः। अत एष वारिधिर्येषां नः कुलभूभुजामस्मत्कुलप्रसूतपूर्वराजन्यानाम्। सगरकुमाराणामित्यर्थः। नखरैः सुखादनायासेनाखान्यवदारितः। खनतेर्लुङ्। 'भावकर्मणोः' इति चिण्। अथानन्तरं येन वा। अस्मत्कुलभूभुजा भगीरथेनैवेत्यर्थः। पूरित आप्यायितः। 'गङ्गा सागरपूरणा' इति पुराणवचनात्तस्याश्च कापिलानलदग्धसगरतनयसंतर्पणार्थं महाप्रयत्नपूर्वकमनेनानीतत्वादिति भावः। तेषां नः कुलभूभुजां सगरकुमारभगीरथप्रभृत्यस्मदन्वयभूपतीनामविहतस्थेम्नेऽप्रतिहतस्थैर्याय। कल्पान्तस्थायिन इत्यर्थः। स्थिरशब्दस्य दृढादिपाठात् 'वर्णदृढादिभ्यः ष्यञ् च' इति चकारादिमनिच्। 'प्रियस्थिर—'इत्यादिना स्थादेशः। महिम्ने माहात्म्याय नमो नमस्कारः। 'नमःस्वस्ति—' इत्यादिना चतुर्थी। शार्दूलविक्रीडितं वृत्तम्॥

**अथ हरीन्द्रोऽपि महेन्द्रोपान्तकान्तारशोभिनि लोभनीयमलय-[2]जातानिले [3]वेलोपवनदेशे रघुपतेर्निदेशेन निवेशयामास बलमखिलम्॥**

**अथेति।** अथानन्तरं हरीन्द्रः सुग्रीवोऽपि महेन्द्रस्योपान्तकान्तारेण निकटारण्येन शोभत इति तथोक्ते। लोभनीया मनोहारिणस्ते मलयजातानिला यस्मिंस्त-

१. अत्रत्यधनुश्चिह्नवर्तिन्याख्याभागस्योपलब्धादर्शेषु मूलं नोपलभ्यते. २. 'बालानिले' इति पाठः. ३. 'वेलावनप्रदेशे दाशरथेर्निदेशेन' इति पाठः.

स्मिन्वेलोपवनदेशे समुद्रकूलोद्यानप्रदेशे रघुपतेर्निदेशेनाज्ञयाखिलं बलं निवेशयामास । प्रतिष्ठापयामासेत्यर्थः ॥

सरसपटीरकुञ्जवनजवनाभिपत-
न्मृगमदगन्धगन्धवहमेदुरितेऽम्बुनिधेः ।
तटनिकटे लुठत्पनसतालरसालफलै-
रुदितमदा विचेरुरुदरंभरयो हरयः ॥ ११ ॥

**सरसेति** । सरसाणां सान्द्राणां पटीरकुञ्जानां चन्दननिकुञ्जानां वने, अथवा सरसाः पटीरकुञ्जा यस्मिंस्तस्मिन्वने, संजवनः सम्यग्वेगशीलः सन् । 'जुचंक्रम्य—' इत्यादिना युच् । अभिपतन्प्रसरन् । तथा मृगमदस्य कस्तूर्या गन्धो यस्य स तथोक्तश्च यो गन्धवहोऽनिलस्तेन मेदुरिते । तत्प्रचुर इत्यर्थः । एतेन सुखसंचारयोग्यत्वं सूच्यते । 'मृगनाभिर्मृगमदः कस्तूरी' इत्यमरः । अम्बुनिधेः समुद्रस्य तटनिकटे कूलोपान्ते लुठद्भिः पचेलिमतया वृन्तान्निपत्य भुवि लुठद्भिः पनसानां तालानां रसालानां च फलैर्हेतुना उदितमदा उत्पन्नहर्षाः । कुतः । उदरं बिभ्रतीत्युदरंभरयः स्वोदरपूरकाः । 'फलेग्रहिरात्मंभरिश्च' इत्यत्र चकारसामर्थ्यादुदरंभरिरिति निपातनात्साधुः । हरयः कपयो विचेरुः । तत्तत्फलभक्षणतत्परतया तत्र विजह्रुरित्यर्थः । वृत्त्यनुप्रासालंकारः ॥

अथ रावणवृत्तान्तमाह—

अनन्तरमपरंमहाम्भोधिमिव चलितमम्भोधिरोधस्यम्भोधिविलङ्घनविशृङ्खललाघवं राघवानीकमनीकोन्मुखं चारमुखादवधार्य धार्यमाणहृदयातङ्कः पङ्कलीनचरण इवैरावणो रावणो विधेयमपरमजानञ्जानकीमप्यविमोक्तुकामः कामपरतन्त्रो मन्त्रिभिः समं समाजमाजगाम॥

**अनन्तरमिति** । तदनन्तरं सेनानिवेशानन्तरमम्भोधिरोधसि समुद्रकूले चलितमपरमहाम्भोधिमिव स्थितमित्युत्प्रेक्षा । तथाम्भोधिविलङ्घने समुद्रतरणे विश्रृङ्खललाघवं निराघाटपाटवं यस्य तत्तथोक्तमनीकोन्मुखं रणोद्युक्तं राघवानीकं श्रीरामसैन्यम् । 'अनीकं तु रणे सैन्ये' इति हलायुधः । चारमुखाद्गूढपुरुषवचनादवधार्य श्रुत्वा रावणो धार्यमाणो हृदयातङ्को मनोवेदना यस्य स तथोक्तः । अतएव पङ्कलीनचरणः कर्दमनिमग्नपाद ऐरावण इन्द्रगज इवेत्युपमा । अपरमन्यद्विधेयं कर्तव्यमजानन्ननवबुध्यमानः। तर्हि जानकीपरित्यागं सकलातङ्कनिरासकं करोत्वित्यत आह—कामपरतन्त्रो मन्मथपराधीनोऽतएव जानकीमप्यविमोक्तुकामोऽपरित्यक्तुमनाः सन् । मन्त्रिभिः समं प्रहस्ताद्यमात्यैः सह समाजं सभामण्डपमाजगाम प्राप ॥

रहस्तदानीं रजनीचरेन्द्रः प्रहस्तमुख्यानिदमाबभाषे ।
इदं तु मे वाञ्छितमीक्षितं वो वदन्तु यद्वैरिजनोचितं नः ॥१२॥

---

१. 'जलधेः' इति पाठः. २. 'दरस्फुट' इति पाठः. ३. 'अपरमिव चलितं महाम्भोधिम्' इति पाठः. ४. 'कृतसंवेशं रोदसीलङ्घन' इति पाठः. ५. 'परम्' इति पाठः. ६. 'परतन्त्रितः' इति पाठः. ७. 'पूर्वान्' इति पाठः.

रह इति । तदानीं तस्मिन्समये रजनीचरेन्द्रो रावणो रह प्रकान्ते । मन्त्रवादस्य रहसि कर्तव्यत्वादिति भावः । 'रहश्चोपांशु चालिङ्गे' इत्यमरः । प्रहस्तमुख्यान्प्रहस्तप्रमुखान्मन्त्रिणः । इदं वक्ष्यमाणं वचनमाबभाष उवाच । भाषणप्रकारमेवाह—**इदमिति** । इदमेतत् । जानक्या अपरित्यागरूपमित्यर्थः । तुशब्दोऽवधारणार्थकः । मे मम वाञ्छितमभिलषितं वो युष्माकमीक्षितम् । युष्माभिः प्रत्यक्षतो दृष्टमित्यर्थः । 'मतिबुद्धि–' इत्यादिना वर्तमाने क्तप्रत्ययः । 'क्तस्य च वर्तमाने' इति षष्ठी । अतः नोऽस्माकं यत्क्षमं वैरिजने प्रत्यासन्न उचितं युक्तं तद्वदन्तु । सम्यग्विचार्य कथयन्त्वित्यर्थः । उपेन्द्रवज्रावृत्तम् ॥

**अमी च पुनराशयज्ञा व्यज्ञापयन्[1] ॥**

**अमी चेति** । आशयं जानक्या अपरित्यागरूपं रावणाभिप्रायं जानन्तीति आशयज्ञाः । एतेनैतेषामैच्छिकभाषणतत्परत्वमेव नतु नीतिशास्त्रार्थबोधनप्रवृत्तितात्पर्यमिति सूच्यते । अत्र 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । अतएवाह भगवान्कात्यायनः–'अकारादनुपसर्गात्कर्मोपपदात्को भवति विप्रतिषेधेन' इति वार्तिकव्याख्याने भाष्यकारेणार्थशब्दमुदाहृत्य व्यर्थत्वसमर्थनात् । अमी प्रहस्तादिमन्त्रिणः । पुनःशब्दो वाक्यालंकारे । व्यज्ञापयन्विज्ञापयामासुः ॥

विज्ञापनप्रकारमेवाह—

**देव, जीवत्सु भवदाज्ञापरेष्वनुचरेषु परमस्मासु[2] कस्मादयमपवादो[3] दुरवापोरुभुजपञ्जरानीतां सीतां जातु न जहातु नाथ इत्यभिदधानेषु[4] ॥**

**देवेति** । हे देव राजन् । 'देवः सुरे घने राज्ञि' इति विश्वः । भवदाज्ञापरेषु युष्मन्निदेशकरणतत्परेष्वस्मासु मादृशेष्वनुचरेषु । महावीरेष्वित्यर्थः । परं जीवत्सु प्राणधारितया वर्तमानेषु सत्सु । अयमपवादः सीताहरणाद्याक्षेपः । कस्मात्कुतोहेतोः । भवेदिति शेषः । न कुतोऽपीत्यर्थः । 'अवर्णाक्षेपनिर्वादपरिवादापवादवत्' इत्यमरः । अतो नाथः स्वामी । भवानिति शेषः । दुरवापेन परेषां दुष्प्रापेणोरुभुजपञ्जरेण महाभुजमण्डलेनानीतामपहृतां सीताम् । जातु कदाचिदपि । महासंकटेऽपीत्यर्थः । न जहातु न त्यजतु । 'गृहीतं न परित्यजेत्' इति वचनादिति भावः । आशिषो लोटि शेषे प्रथमः । इत्येवमभिदधानेषु वदत्सु सत्सु ॥

**ततो[5] रम्भोपहितहठाङ्कसंभवशापमम्भोजभवं चैतदुपालम्भान्तरायमावेदयन्तमग्रजन्मानमसमानविनयविज्ञानभूषणो[6] बिभीषणः सरोषमिदमवादीत् ॥**

---

१. 'विज्ञापयामासुः' इति पाठः. २. 'परंत्वास्मासु' इति पाठः. ३. 'अवापो' इति पाठः. ४. एतदनन्तरम् 'प्रधानेषु' इति क्वचित्. ५. 'ततः' इति नास्ति क्वचित्. ६. 'हठात्कारसंभवमम्भोजसंभवशापमन्तरायमावेदयन्तं दुर्जयं तमग्रजन्मानं समानयन्विनय' इति पाठः.

**तत इति** । ततस्तदनन्तरं रम्भोपहितो रम्भानिबन्धनो नलकूबराभिहितशापो हराङ्कसंभवः कैलासोद्धरणे नन्दीश्वरविरचितशापः । ततो द्वन्द्वे 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति एकवद्भावः । यद्वा रम्भोपहितो रम्भापतिर्नलकूबरः स च हराङ्कश्च तौ संभवः कारणं यस्य तं बलादन्यनारीग्रहणे मूर्धा शतधा भविष्यतीति रम्भानिबन्धननलकूबरशापम्, वानरैस्त्वद्वंशविलयो भविष्यतीति नन्दीश्वरशापं चेत्यर्थः । तथाम्भोजभवशापं पुञ्जिकस्थलाख्याप्सरोनिबन्धनब्रह्मशापं चैतस्याः सीताया उपालम्भान्तरायं संभोगप्राप्तिविघ्नमावेदयन्तं प्रहस्तादिभ्यः कथयन्तमग्रजन्मानं ज्येष्ठभ्रातरं रावणम् । विनयो महत्सु प्रह्वीभावः, विज्ञानं शास्त्रजन्यविवेकः । असमानेऽसाधारणे विनयविज्ञाने एव भूषणं यस्य तथोक्तो विभीषणः सरोषं सामर्षं यथा तथेदं वक्ष्यमाणप्रकारं वचनमवादीदुवाच । अम्भोजभवशापः श्रीरामायणे—'अथ संकुपितो देवो मामिदं वाक्यमब्रवीत् ॥ अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि । तदा ते शतधा मूर्धा भविष्यति न संशयः ॥ इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् । नारोपये बलात्सीतां वैदेहीं शयनं मम ॥' इति ॥

विभीषणोक्तप्रकारमेवाह—अहहेत्यादिचतुर्भिः ।

**अहह विधिनियोगादद्य नक्तंचरेन्द्र**
**त्वमसि परकलत्रे दुर्निवारानुरागः ।**
**अरुणदवशिखायामामिषग्रासमोहा-**
**दविरलकृतजिह्वाचापलः केसरीव ॥ १३ ॥**

**अहहेति** । अहहेति खेदे । 'अहहेत्यद्भुते खेदे' इत्यमरः । हे नक्तंचरेन्द्र राक्षसेश्वर, अद्येदानीं त्वं विधिनियोगाद्दैववशात्परकलत्रे परदारेषु दुर्निवारो निवारयितुमशक्योऽनुराग आसक्तिर्यस्य स तथोक्तोऽसि । परदारानुषक्ते महापातकत्वेन शास्त्रनिषिद्धत्वात्ततो विनिपात एव न श्रेय इति भावः । कथमिव । अरुणायां रक्तवर्णायां दवशिखायां वनवह्निज्वालायाम् । 'वने च वनवह्नौ च दवो दाव इतीष्यते' इति शाश्वतः । आमिषग्रासमोहान्मांसपिण्डभ्रान्तिवशात् । 'आमिषं त्वस्त्रियां मांसं तथा स्याद्भोग्यवस्तुनि' इति वैजयन्ती । अविरलं बहुलं यथा तथा कृतम् । अथवाऽविरलं विरलं संपाद्यमानं कृतं विरलकृतम्, तन्न भवतीत्यविरलकृतं बहुलीकृतं जिह्वाचापलं रसनेन्द्रियप्रियतृष्णा यस्य स तथोक्तः । 'श्रेण्यादयः कृतादिभिः' इति समासः । केसरी सिंह इवेत्युपमा । सा च भ्रान्तिमताङ्गेन संकीर्यते । दवाग्निज्वालाखादनस्य केसरिणो यादृश्यवस्था तादृश्येव तवापीत्यर्थः । मालिनीवृत्तम् ॥

**आकर्ण्य किंनरमुखादनघे स्ववंशे**
**काकुत्स्थदारहरणोपगतं[1] कलङ्कम् ।**
**हाहेति मीलितदृशः करयोर्युगं तं**
**दद्यौ श्रुतीरपि कथं पिदधातु धातुः[2] ॥ १४ ॥**

**आकर्ण्येति** । अनघे निर्दुष्टे स्ववंशे निजान्वये काकुत्स्थदारहरणोपगतं श्रीराम-

१. 'उपनतं' इति पाठः. २. 'दधातु कथं विधातुः' इति पाठः.

धृतमायापहरणसंभ्रमम् । तद्वंशोद्भवेन त्वया तस्या अपहृतत्वादिति भावः । कलङ्कमपवादम् । 'कलङ्कोऽङ्कापवादयोः' इत्यमरः । किंनरमुखात्किंनरवचनात् । 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी । आकर्ण्य श्रुत्वा । हाहेति प्रकृते विषादातिशयद्योतको द्विरुक्तोऽयं शब्दः । 'हा विषादशुगर्तिषु' इत्यमरः । इत्युक्त्वेति शेषः। मीलितदृशस्तादृग्दुर्वार्ताकर्णनजनितखेदातिरेकान्निमीलिताक्षस्य धातुर्ब्रह्मणस्तत्प्रसिद्धं करयोर्युगं हस्तयुग्मं कर्तृ । अष्टावपि । तस्य चतुर्मुखत्वादष्टसंख्याका इत्यर्थः । श्रुतीः श्रोत्राणि कथं पिदधात्वाच्छादयतु । द्वयोरष्टाच्छादनेऽपर्याप्तत्वान्नाच्छादयिष्यत्येवेत्यर्थः । तादृग्वार्ताकर्णने कर्णाच्छादनस्यावश्यकत्वादिति भावः । त्वन्मूलेन कूटस्थस्यापि ब्रह्मणो महात्मनः संतापः संप्राप्तः । अतो दुर्जीवितमिति तात्पर्यम् । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अत्रोक्तव्यवहारासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । वसन्ततिलकावृत्तम् ॥

पश्येदानीमुदधिपरिखापालिता कुत्र लङ्का
वाचातीतः क नु वनचराद्‌ागतो दुर्विपाकः ।
कर्तुं नक्तंचरपरिभवं कापि मायेति शङ्के
जाता सीता धरणितनया जानकी मैथिलीति ॥ १५ ॥

पश्येति । इदानीमधुना पश्यावलोकय । किं पश्यामीत्यत आह—उदधिनैव परिखया खेयेन पालिता गुप्ता । दुष्प्रवेशेत्यर्थः । 'खेयं तु परिखा' इत्यमरः । लङ्का कुत्र । वाचातीतोऽनिर्वाच्यो वनचराद्वानरमात्रादागतः संप्राप्तो दुर्विपाको वनभङ्गाक्षकुमारादिराक्षसविक्षोभणगृहदाहादिरूपा दुरवस्था क नु कुत्र । तदेतदाश्चर्यमित्यर्थः । अतः नक्तंचरपरिभवं राक्षसविध्वंसनं कर्तुं काप्यनिर्वाच्या माया विचित्रशक्तिरेव सीता धरणितनया जानकी मैथिलीति नामभिरुपलक्षिता सतीत्यर्थः । जाता प्रादुर्भूतेति शङ्के तर्कयामि । अन्यथा कथमीदृग्विपत्तिः संभविष्यतीति भावः । 'मन्ये शङ्के ध्रुवं नूनम्' इत्युत्प्रेक्षालंकारः । मन्दाक्रान्तावृत्तम् ॥

निगमयति—

किं बहुना ।

न गणयसि यदि त्वं वानरं वा नरं वा
ननु परिचितवीर्यौ जिष्णुभूकार्तवीर्यौ ।
न कलयसि यदि त्वं नन्दिशापं च धातु-
र्वैरमपि नरवर्जे दुर्जयो दैवयोगः ॥ १६ ॥

किं बहुनेति । गतार्थमेतत् ॥ नेति । हे रावण, त्वं वानरं कपिम् । वा नरं मानुषं वा । न गणयसि यदि न संख्यायसे चेत् । तृणप्रायावेतौ मद्बाहुबलस्य किम्न्मात्रमिति न लक्षीकरोषि चेदित्यर्थः । तर्हि जिष्णुभूः शक्रपुत्रो वाली । 'जिष्णुः शक्रे धनंजये' इति निघण्टुः । स च कार्तवीर्यश्च तौ परिचितवीर्यौ ननु । पूर्वं त्वदनुभूतपराक्रमौ खलु एकेन वालवलयनिबद्धत्वात्, अन्येन यावत्प्रसादं

१. 'मायेव' इति पाठः.

वन्दीकृतत्वाच्चेति भावः । अत्र तादृगरिविनाशकस्य तथाविधकार्तवीर्यकुलनिर्मूलनालंकर्मीणपरशुरामभङ्गकर्तुश्च श्रीरामस्य त्वद्विनाशः कियन्मात्र इत्यन्तर्निगूढाभिप्रायः । अतस्त्वं नन्दिशापम्, वानरैस्तवोपहतिर्भविष्यतीति नन्दीश्वरशापं च नरवर्जं नररहितं धातुर्वरमपि । नराद्विनान्यस्मान्न ते विनाश इति ब्रह्मवरं चेत्यर्थः । न कलयसि यदि न मनुषे यदि नानुसंदधासि चेत् तर्हि दैवयोगो दैवगतिर्दुर्जयो जेतुमशक्यः । 'ईषद्दुः–' इत्यादिना खल्प्रत्ययः । नन्दीश्वरशापब्रह्मवरानुगुण्येन वानराणां नरवेषधारिणः श्रीरामस्य च प्रत्यासन्नत्वादत्यासन्नस्तव मृत्युरिति भावः । मालिनीवृत्तम् ॥

**इत्यादिनीत्या सहितं हितमभिवदन्तं निजमनुजमवज्ञाय ज्ञातिरयमरातिपक्षः शिक्षणीय इति शंसन्तं नृशंसं तमरुंतुदाचरणरोषभीषणो विभीषणो विहाय विहायसि समुत्पतन्तमनूत्पतद्भिश्चतुर्भिरमात्यैः सममतीत्य वारिधिं दूरत एव सवितर्कमुद्ग्रीवान्सुग्रीवादीनन्तरिक्षगत एवमाचष्टे ॥**

इतीति । इत्यादिरेवमादिर्या नीतिर्नीतिशास्त्रसंमतवार्ता तया सहितं संबद्धं यथा तथा हितमभिवदन्तम् । आलपन्तमित्यर्थः । कर्तरि क्तप्रत्ययः । 'मतिबुद्धि–' इत्यादिसूत्रे चकाराद्वर्तमानार्थत्वात् । अनुजं विभीषणमवज्ञायानुचितभाषणैरवमत्य । 'रीढावमाननावज्ञा' इत्यमरः । अरातिपक्षः शत्रुपक्षपातोऽयं ज्ञातिर्दायादः शिक्षणीयो दण्ड्यः । इत्येवं शंसन्तं वदन्तं नृशंसं पापिष्ठम् । 'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः' इत्यमरः । तं रावणमरुंतुदाचरणेन मर्मभेदकरावणदुराचारदुर्भाषणादिना यो रोषोऽमर्षस्तेन भीषणो भयंकरः । अरुंतुदेत्यत्र 'विध्वरुषोस्तुदः' इति खशि 'अरुर्द्विषद्–' इत्यादिना मुमागमः । विभीषणो विहाय त्यक्त्वा विहायस्याकाशे समुत्पतन्नुद्गच्छन् । 'पुंस्याकाशविहायसी' इत्यमरः । अनूत्पतद्भिरनुसृत्योत्पतद्भिश्चतुर्भिरमात्यैरनलादिमन्त्रिभिः समम् । अमा सह सुखदुःखादिषु भवन्तीत्यमात्या इति विग्रहः । 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः । अमाशब्दादव्ययात्त्यप् । 'अनलश्च हरिश्चैव संपातिः प्रमदस्तथा । एते विभीषणामात्याश्चत्वारो बुद्धिसत्तमाः ॥' इति श्रीरामायणे । वारिधिमतीत्योल्लङ्घ्य । दूरत एवान्तरिक्षगत आकाशे गच्छन्नेव स्थितः सन्नित्यर्थः । सवितर्कम् 'कोऽयं किमस्यागमनप्रयोजनम्' इति ससंदेहमुद्ग्रीवानुन्नमितकन्धरान्सुग्रीवादीन्वानरेश्वरान्प्रति । एवं वक्ष्यमाणप्रकारेणाचष्टेऽवोचत् । एते वानरा ममाभिधेयमभिप्रायमज्ञात्वासौ रावणसंबन्धीत्यन्यथा करिष्यन्ति । अतो रामसमाश्रयणाभिप्रायमेतेभ्यो निवेद्य एतत्पुरुषकारमुखेनैव रामं समाश्रयिष्यामीत्यभिप्रेत्याब्रवीदित्यर्थः । अत्र श्रीरामायणवचनम्—'अन्य एवंविधं ब्रूयाद्वाक्यमेतन्निशाचर । अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ॥ इत्येवं कुत्सितो भ्रात्रा न्यायवादी विभीषणः । उत्पपात गदापाणिश्चतुर्भिः सह

१. 'नीतिसहितम्' इति पाठः. २. 'अभिहितवन्तम्' इति पाठः. ३. 'अरुंतुदरोषणभाषणो' इति पाठः. ४. 'आचचक्षे' इति पाठः.

राक्षसैः ॥' इति । ननु 'ज्येष्ठभ्राता पिता चैव यश्च विद्यां प्रयच्छति । त्रयस्ते पितरो ज्ञेया धर्मश्चेदत्र कारणम् ॥' इति, 'जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥' इति ज्येष्ठभ्रातृत्वेन पितृसाम्यमापाद्यापि त्यागानर्हं रावणं परित्यज्य रामसमीपमागमनं विभीषणस्य विरुद्धमिति चेत्, सत्यम् । 'विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥' इत्याद्युक्तपतनहेतूनां रावणे परिपूर्णत्वात् 'न पतितैः सह संव्यवहारो विद्यते' इति पतितस्य परित्यागाभिधानात्, 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य न्याय्यो दण्डो विधीयते ॥' इत्यादिना अपथप्रवृत्तस्य गुरोरपि परित्यागश्रवणाच्च न दोष इत्यलमतिप्रपञ्चेन ॥

एवमाचष्टेत्युक्तम्, तत्प्रकारमेवाह—

पौलस्त्यमग्रजनुषं परुषं वदन्तं
संत्यज्य बान्धवजनं च बिभीषणोऽहम् ।
रामं विराममिह विद्विषतामवाप-
मापन्नदैन्यहरणं शरणं ममेति ॥ १७ ॥

**पौलस्त्यमिति** । अग्रजनुषमग्रजन्मानम् । ज्येष्ठभ्रातरमित्यर्थः । 'जनुर्जननजन्मानि' इत्यमरः । एतेन स्वस्य रावणसंबन्धेन दोषवत्त्वमुक्तं भवति । अनेन 'उपाया नैव सिध्यन्ति ह्यपाया बहुशस्तथा । इति या गर्वहानिश्च सैव कार्पण्यमुच्यते ॥' इत्युक्तलक्षणकार्पण्यरूपमङ्गं प्रदर्शितम् । परुषं वदन्तमरुंतुदभाषणशीलं पौलस्त्यं पुलस्त्यवंशोद्भवं रावणं च । एतेन महाकुलप्रसूतत्वेऽपि दुरदृष्टवशात्पापाचारतया परिहार्यत्वं सूच्यते । तथा बान्धवजनं पुत्रमित्रकलत्रादिबन्धुवर्गं च संत्यज्य त्यक्त्वा । एतेन प्रातिकूल्यनिरसनरूपमङ्गं प्रदर्शितम् । विभीषणाख्योऽहम् । एतच्छक्तेस्तव राहित्येन तेषां विश्वासोत्पादनार्थं स्वनामसंकीर्तनमित्यवगन्तव्यम् । विद्विषतां शत्रूणाम् । विरमयतीति विरामं विनाशकम् । दुष्टनिग्रहशिष्टपरिपालनक्षममित्यर्थः । आपन्नानां तापत्रयनिपीडितानां दैन्यहरणं दुर्गतिनिरासकम् । सुरनरतिर्यगात्मनां सर्वेषां प्राणिनां समाश्रयणीयमित्यर्थः । रमयतीति रामं नाम्नैव सकललोकानन्दकरं मम शरणं रक्षकमिति । मत्वेति शेषः । 'शरणं गृहरक्षित्रोः' इत्यमरः । अवापं प्राप्नवम् । 'रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः । स विश्वासो भवेच्चक्रं सर्वदुष्कृतनाशकम् ॥' इत्युक्तविश्वासरूपकमङ्गं प्रदर्शितम् । तथाच—'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥' इति भगवच्छास्त्रोक्ता यथायोगाङ्गा शरणागतिः प्रदर्शितेति द्रष्टव्यम् । ननु इक्ष्वाकुवंशजस्य राज्ञो रामभद्रस्योक्तगुणसंपन्नत्वेन परत्वं विभीषणेन कथमुक्तमिति चेत्, 'बालोऽपि नावमन्तव्यो मनुष्य इति भूपतिः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ नानृषिः कुरुते काव्यं नासुरो विन्दते बलम् । नादेवांशो ददात्यन्नं नाविष्णुः पृथि-

१. 'चरन्तम्' इति पाठः.

वीपतिः ॥' इत्यादिवचनैर्भूपतेर्विष्णुरूपत्वावगमेन 'ब्रह्मा स्वयंभूश्चतुराननो वा' इत्यादिहनूमद्वचनाद्रामस्य ब्रह्मादिभ्योऽधिकशक्तिकत्वेनावगतत्वात् 'परमापद्गतस्यापि धर्मे मम मतिर्भवेत् ॥ या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च । सा सा ममातिधार्मिष्ठा तं तं धर्मं च पालय ॥' इति प्रार्थितेन ब्रह्मणा 'धर्मिष्ठस्त्वं सदा वत्स तव चैतद्भविष्यति' इति दत्तवरत्वेन च रामं सकलजगद्रक्षणार्थमिक्ष्वाकुवंशेऽवतीर्णं परमधर्मरूपं परमपुरुषरूपं श्रीमन्नारायणं ज्ञात्वा तथोक्तवानिति सर्वं रमणीयम् । वसन्ततिलकावृत्तम् ॥

**अनन्तरमतिकरुणं समीरयन्तं समीरभुवा च सप्रत्यभिज्ञं विज्ञापितं निशाचरपतेरनुजं निशाम्य तदागमनाय किं कारणमिति शङ्कापरवशे निवेदयति हरीशे दाशरथिरतिदयमानमानसः स्मयमानो मधुरमिदमवादीत् ।**

अनन्तरमिति । अनन्तरमतिकरुणमत्यन्तदैन्ययुक्तं यथातथा समीरयन्तम् । 'सर्वलोकशरण्याय राघवाय महात्मने । न्यवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥' इति भाषमाणमित्यर्थः । 'वाचा धर्ममवाप्नुहि' इति न्यायेनाक्लेशेन भवतां महानुपकारः प्राप्स्यतीति निवेदयन्तमिति भावः । तथा समीरभुवा हनूमता च सप्रत्यभिज्ञम् । लङ्काप्रवेशसमये मयायं दृष्टो धर्मिष्ठोऽस्मत्पक्षपातेनोपकारमेवाचरितवानित्यादिप्रत्यभिज्ञासहितमित्यर्थः । विज्ञापितं निवेदितम् । निशाचरपतेरनुजं विभीषणं निशाम्य दृष्ट्वा । 'शमो दर्शने' इत्यत्र शमो दर्शनार्थे अमित्त्वाद्ध्रस्वादेशाभावः । तस्य निशाचरपतेरागमनाय । आगमनस्येत्यर्थः । किं कारणं को हेतुः । इतीत्थं शङ्कापरवशे वितर्कतत्परे । 'शङ्का वितर्कभययोः' इति विश्वः । हरीशे सुग्रीवे निवेदयति रावणावरजोऽयं विभीषणः शरणार्थितया समागत इति विज्ञापितवति सति दाशरथिः श्रीरामोऽतिदयमानं निरवधिकपरदुःखप्रहाणेच्छातत्परत्वाद्दयामापद्यमानं मानसं यस्य स तथोक्तः । तथा स्मयमानः । 'स्मितपूर्वाभिभाषी च राघवः' इति वचनाद्वा साक्षाच्छत्रू रावणस्तदनुज एव शरणागतश्चेत्संतोष एवेति वा । शरणागत एव चेद्यो वा को वा भवतु पुनर्निवेदनं किमर्थं शरणागतरक्षणदीक्षितस्य मम निकट इति मन्दहासं कुर्वाण इत्यर्थः । मधुरं सर्वेषां श्रवणानन्दकरम् । इदं वक्ष्यमाणप्रकारं वचनमवादीदुवाच ॥

तत्प्रकारमेवाह—

**अभयागतो मदपयाति चेन्मुधा**
**रघवो भवन्ति लघवो न किं सखे ।**
**अनुजोऽयमस्तु तनुजोऽथवा रिपोः**
**करुणापदं हि शरणागतो जनः ॥ १८ ॥**

---

१. 'सप्रत्यभिज्ञापितम्' इति पाठः. २. 'निशाम्य तदा तदागमनाय' इति पाठः. ३. 'अतिदयमानः स्मयमानो' इति पाठः. ४. 'अभापत' इति पाठः. ५. 'अयमपयाति' इति पाठः.

**अभयेति।** हे सखे सुग्रीव, अभयागतोऽभयार्थमागतो जनः। मन्मत्तः सकाशात्। मुधा व्यर्थम्। अप्राप्तमनोरथः सन्नित्यर्थः। अपयाति चेत् अपगतो यदि। रघवो रघुवंशोद्भवा राजानः। अथ रघुशब्देन यदुशब्दवत्तदपत्ये लक्षणा। जनपदशब्दानामतद्राजत्वात्। लघवो नीचाः न भवन्ति किम्। भवन्त्येवेत्यर्थः। न केवलं शरणागतसंरक्षणवैमुख्येनाहं लघुः, किंतु पूर्वेषामपि सकलजनशरण्यानामस्मत्कुलभूपतीनामपि नैच्यापादकत्वेन मूलच्छेदको भवामीति भावः। अतोऽयं शरणार्थी रिपोः शत्रो रावणस्यानुजो वास्तु। अथवा तनुजस्तनयो वा अस्तु। शरणागतो जनः करुणापदं हि दयापात्रं खलु। अतस्तमवश्यमानयतेत्याशयः। मञ्जुभाषिणीवृत्तम्। 'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात्॥

**तदनु हृदयविदा हनूमता सरयमानीतो विनीतोऽयमाशरपतिरवन्दत दाशरथिम्॥**

**तदन्विति।** तदनु श्रीरामवचनानन्तरं हृदयविदाशयाभिज्ञेन हनूमता सरयं सत्वरमानीतः प्रापितोऽयं शरणार्थी आशरपती राक्षसेश्वरो विभीषणो विनीतः सन् दाशरथिमवन्दत नमस्कृतवान्। 'राक्षसः कोणपः क्रव्यात्क्रव्यादोऽस्रप आशरः' इत्यमरः॥

**रामस्तमाह विनतं रजनीचरेन्द्रं**
**दत्तं मयाद्य भवते दशकण्ठराज्यम्।**
**अस्मिन्नुदाहरणमग्रजराज्यभोक्ता**
**सानुप्लवः प्लवनमण्डलसार्वभौमः॥ १९॥**

**राम इति।** रामो विनतं प्रणतं रजनीचरेन्द्रं विभीषणमाह ब्रूते स्म। आहेति णलन्तत्वेन ब्रूतित्वं भ्रान्तम्(?)तदुक्तं वामनेन—'आह ब्रूतिना णलन्तलभ्रमात्' इति। उक्तप्रकारमेवाह—हे विभीषण, अद्येदानीं मया। भातीति भवते तुभ्यम्। भातेर्डवतुप्रत्ययः। दशकण्ठराज्यं रावणसाम्राज्यं दत्तं वितीर्णम्। अत्र भविष्यदर्थत्वेऽपि भूतत्वेन सिद्धवत्कृत्यानुवादः। एतेन श्रीरामस्य सत्यप्रतिज्ञापरिपालनधौरेयत्वमुक्तम्। तथाच रामायणवचनम्—'निहत्य रावणं युद्धे सप्रहस्तं सबान्धवम्। राजानं त्वां करिष्यामि लङ्कायां राक्षसेश्वर॥' इति। नन्वग्रजं घातयित्वा कथं तद्राज्यं भोक्तुमुचितमित्याशङ्क्य तत्र दृष्टान्तमाह—अस्मिन्निति[1] अस्मिन्नर्थेऽग्रजस्य ज्येष्ठभ्रातुर्वालिनो राज्यभोक्ता राज्यानुभवकः। अनुप्लवन्तीत्यनुप्लवा अमात्यभृत्यादयस्तैः सह सानुप्लवः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। 'वोपसर्जनस्य' इति सहशब्दस्य सभावः। प्लवगमण्डलसार्वभौमः कपिराष्ट्रचक्रवर्ती सुग्रीवः। सर्वभूमेरीश्वरः सार्वभौम इति विग्रहः। तस्येश्वरः 'सर्वभूमिपृथिवीभ्याम्' इत्यण्, 'अनुशतिकादीनां च'इत्युभयपदवृद्धिः। उदाहरणं निदर्शनं दृष्टान्तः। उपमानमिति यावत्। अतो नात्रानौचित्यशङ्का कार्येति भावः।

---

१. 'तदत्र' इति पाठः.

नायं दृष्टान्तालंकारः । विम्वप्रतिविम्बभावेनौपम्यस्य गम्यत्वेन वाधात् । किंतूदाहरणशब्देन तुल्यत्वाभिधानादुपमालंकारः । अतएव दृष्टान्तोदाहरणनिदर्शनरूपाः शब्दा न प्रयोक्तव्याः पौनरुक्त्यापत्तेरित्येकावलीकारः । वसन्ततिलकावृत्तम् ॥

उक्तमर्थान्तरन्यासेनोपपादयति—

**तथाहि ॥**[1]

**तथाहीति** । स एव प्रकार इत्यर्थः ॥

तत्प्रकारमेवाह—

**श्रेयः पदात्पदमुपैति विधेः प्रसादा-**
**त्प्रायस्तदद्य फलितं हि विभीषणे तु[2] ।**
**रेखातपत्रसहितं पदमस्य गृह्ण-**
**न्नेकातपत्रसहितं पदमेष भेजे ॥ २० ॥**

**श्रेय इति** । श्रेयो राज्यादिकं कर्तृ । विधेः प्रसादाद्दैवानुग्रहात् । 'विधिर्विधाने दैवे च' इति विश्वः । प्रायो भूम्ना । 'प्रायो भूम्न्यन्तगमने' इत्यमरः । पदात्स्थानाचरणाच्चेति गम्यते । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । उपैति प्राप्नोतीति यत् इत्यध्याहारः । यत्तदोर्नित्यसंवन्धात् । न्याय्यवचनमित्यर्थः । अद्येदानीम् । विभीषणे तु विभीषण एव । तुशब्दो व्यवच्छेदार्थकः । फलितं फलवत् । चरितार्थं जातमित्यर्थः । 'तारकादित्वादितच्' हिरवधारणार्थकः । कुतः । यत् यस्मात् एष विभीषणः । रेखा । आतपत्राकाररेखेत्यर्थः । तत्सहितं महापुरुषत्वात्तच्चिह्नितमस्य श्रीरामस्य पदं चरणम् । स्थानं चेति गम्यते । गृह्णन्स्वीकुर्वन् । एकातपत्रसहितमेकच्छत्रयुक्तम् । निःसपत्नमित्यर्थः । पदं साम्राज्यं भेजे प्राप । अतः श्रेयसः पदात् पदान्तरप्राप्तिरिति एतत् फलितं जातमिति युक्तमुक्तमिति भावः । श्लेषानुप्राणितोऽयं विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः । वसन्ततिलकावृत्तम् ॥

अनन्तरवृत्तान्तमाह—

**असौ पुनरग्रत एव भरताग्रजापाङ्गसुधातरङ्गाभिषिक्तोऽपि पुनरुक्तराज्याभिषेकः सकलविस्रम्भभाजनतया सुग्रीव इवापरो दशग्रीववलमखिलमावेद्य सद्य एव लङ्कापुरसमास्कन्दनाय सेनासमुत्तरणहेतुं सेतुं विधातुमाराधय[4] वारांनिधिमिति सविनयमेनं विज्ञापितवान् ॥**

**असाविति** । असौ विभीषणः । पुनःशब्दो वाक्यालंकारे । अग्रतोऽनुपदमेव भरताग्रजस्य श्रीरामचन्द्रस्यापाङ्गसुधातरङ्गैः कटाक्षामृतलहरीभिरभिषिक्तोऽपि पुनरुक्तराज्याभिषेकः पुनर्विरचितसाम्राज्याङ्गमूर्धाभिषेकः श्रीरामेण करुणाकटाक्षावलोकनपूर्वकं लङ्काराज्येऽभिषिक्त इत्यर्थः । सकलविस्रम्भभाजनतया समग्रविश्वास-

१. 'तथाहि' इति नास्ति क्वचित्. २. 'उक्षेति' इति पाठः. ३. 'यत्' इति पाठः. ४. 'आराधयतु' इति पाठः.

पात्रतया। 'समौ विस्रम्भविश्वासौ' इत्यमरः। अपरः सुग्रीव इव स्थितः सन् इत्युत्प्रेक्षा। अखिलं समग्रं दशग्रीवबलं रावणशक्तिः सैन्यं वा। 'बलं सैन्यं बलं स्थौल्यं बलं शक्तिर्बलोऽसुरः' इति शाश्वतः। आवेद्य। 'अवध्यः सर्वभूतानां गन्धर्वोरगरक्षसाम्। राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः॥' इत्यादिना विज्ञाप्येत्यर्थः। सद्योऽविलम्बेनैव लङ्कापुरस्य समास्कन्दनाय समाक्रमणार्थं सेनाया वानरसैन्यस्य समुत्तरणहेतुं समुद्रोल्लङ्घनसाधनं सेतुं विधातुं बद्धुं वारांनिधिं नीरनिधिम्। 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः। आराधय प्रार्थय। इत्यनेन प्रकारेण सविनयं सप्रश्रयं यथा तथैनं श्रीरामं प्रति विज्ञापितवान्॥

ततः श्रीरामः किमकार्षीदित्यत्राह—

अथ वारांनिधिं ध्यायन्नम्भोधिहृदयेशयः।
व्यानशे दर्भशयनं वेदीमिव हुताशनः॥ २१॥

अथेति। अथ विभीषणविज्ञापनानन्तरं श्रीरामो वारांनिधिं ध्यायन्प्रसादनार्थं चिन्तयन्। अम्भोधिहृदयेऽम्भोधितीरे शेत इति तथोक्तः सन्। 'अधिकरणे शेतेः' इत्यच्प्रत्ययः। 'शयवासवासिष्वकालात्' इत्यलुक्। दर्भशयनं दर्भरूपशयनं वेदिं परिष्कृतभूमिम्। 'वेदिः परिष्कृता भूमिः' इत्यमरः। हुताशनोऽग्निरिव व्यानशे। तत्राधिशिश्ये इत्यर्थः। उपमालंकारः। तेन प्रार्थनावैधर्म्येऽपि प्रकारान्तरेण कार्यनिर्वाहकत्वं शुचित्वं च द्योत्यते। तथाच रामायणवचनम्—'एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः। संविवेश तदा रामो वेद्यामिव हुताशनः॥' इति॥

तत्र च[1] कुशास्तरणमध्यमध्यासीने देवे[2] रामभद्रे नियन्त्रित इव नियमवशान्निशात्रयमपि[3] निर्ध्यानवति[4] प्रसादं नाससाद यादसांपतिः॥

तत्रेति। तत्राम्भोधितीरे च कुशास्तरणमध्यम्। दर्भशयनमध्यप्रदेश इत्यर्थः। 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम्। अध्यासीनेऽधिष्ठिते देवे स्वामिनि रामभद्रे नियमवशान्निष्ठापारतन्त्र्यान्नियन्त्रिते नियमित इव। वस्तुतस्तु सकलनियन्तृत्वात्तस्य न तथात्वमिति भावः। निशात्रयमपि तिसृषु निशास्वपीत्यर्थः। 'अत्यन्तसंयोगे द्वितीया'। निध्यानवति नितरां ध्यानतत्परे सत्यपि यादसां जलजन्तूनां पतिर्जलनिधिः। 'रत्नाकरो जलनिधिर्यादःपतिरपांपतिः' इत्यमरः। अतएव प्रसादमनुग्रहम्। आभिमुख्यमिति यावत्। नाससाद न प्राप। तथाच रामायणवचनम्—'तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले। नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः॥' इति॥

---

१. 'च' इति नास्ति क्वचित्. २. 'निध्यानवति देवे रामचन्द्रे' इति पाठः. ३. 'नियतिवशात्' इति पाठः. ४. 'निध्यानवति' इति नास्ति क्वचित्.

ततश्च श्रीरामः किं कृतवानित्याह—

व्यापारयन्नथ विलोचनकोणमब्धौ
कोपारुणं कुटिलितभ्रुकुटीविटङ्कः ।
आदातुमैहत धनुः प्रथमो रघूणां
पैतामहप्रथमसर्गसमापनाय ॥ २२ ॥

**व्यापारयन्निति** । अत्र निशात्रयानन्तरं कोपारुणम् । मया प्रार्थनायां कृतायामपि मत्सामर्थ्यापरिज्ञानेन तूष्णीं स्तब्धभावेनैवायमनादृत्य तिष्ठतीति समुत्पन्नकोपसंरक्तमित्यर्थः । विलोचनकोणं नेत्राञ्चलम् । अब्धौ व्यापारयन्प्रसारयन्कुटिलितो वक्रीकृतो भ्रुकुटिर्भ्रूभङ्गो विटङ्क इव यस्य स तथोक्तः । रघूणां प्रथमः श्रीरघुनायकः । पितामहस्यायं पैतामहो यः प्रथमसर्गः । अप्सृष्टिरित्यर्थः । 'अप एव ससर्जादौ' इति ब्रह्माण्डपुराणवचनात् । तस्य समापनाय संक्षयाय । विध्वंसनायेत्यर्थः । धनुरादातुमैहतैच्छत् । वसन्ततिलकावृत्तम् ॥

**आदाय च दुरापं चापमारोपयत विशिखमनलशिखम् ॥**

**आदायेति** । दुरापं परेषां दुष्प्रापं चापमादाय चानलशिखं विशिखमाग्नेयास्त्रमारोपयतानुसंधितवान् ॥

नाथो विमोक्तुमुदयुङ्क्त न यावदेष[1]
पाथोनिधेरुपरि पावकरूपमस्त्रम् ।
संतापिनी नयनवारिमिषेण ताव-[2]
न्मन्दाकिनी किमुत वारुणमाललम्बे ॥ २३ ॥

**नाथ इति** । एषोऽयं नाथो रघुनायकः पाथोनिधेर्जलनिधेः । 'कबन्धमुदकं पाथः' इत्यमरः । उपरि पावकरूपमस्त्रमाग्नेयास्त्रं यावद्यदाविमोक्तुं नोदयुङ्क्त नोद्युक्तवान् । तावत्तदानीमेव मन्दाकिनी वियद्गङ्गा संतापिनी स्वप्रियतमस्य महाविपत्तिः संप्राप्तेति संतापवती सती । नयनवारिमिषेण नेत्राम्बुव्याजेन । वारुणं वरुणदेवताकं सलिलास्त्रमाललम्बे किमुत स्वीकृतवती किम् । अत्र पतिविपत्तिनिमित्तकस्य मन्दाकिनीबाष्पस्य बाष्पत्वमपह्नुत्य वारुणास्त्रत्वेनोत्प्रेक्षा । तथाग्नेयास्त्रप्रयोगसंतापयोः कार्यकारणयोर्भिन्नदेशत्वादसंगत्यलंकारः । 'कार्यकारणयोर्भिन्नदेशत्वे स्यादसंगतिः' इति लक्षणात् । अयं चोक्तोत्प्रेक्षानुगत इति संकरः । वसन्ततिलकावृत्तम् ॥

रुषा विशिखमुच्छिखं जहति राघवे लाघवा-
दजायत रुजायतश्वसितनक्रचक्राकुलम् ।
रसातलवलत्तिमि स्तिमितकुम्भिकुम्भीनस-
प्रविष्टगिरिकन्दरं तरलमन्तरं वारिधेः ॥ २४ ॥

**रुषेति** । राघवे श्रीरामे रुषा रोषेणोच्छिखमुद्गतज्वालं विशिखं बाणम् । आग्नेयास्त्रमित्यर्थः । 'घृणिज्वाले अपि शिखे', 'पृषत्कबाणविशिखाः' इति चामरः ।

---

१. 'एव' इति पाठः. २. 'ताम्यन्' इति पाठः.

लाघवाद्धस्तलाघवाज्जहति त्यजति सति । जहातेः शतृप्रत्ययः । वारिधेरन्तरं मध्यं ( कर्तृ )। 'अन्तरं परिधानीये बाह्ये: स्वीयेऽन्तरात्मनि । किंतु मध्येऽवकाशे वा' इति वैजयन्ती । रुजा उपतापः । 'स्त्री रुग्रुजा चोपताप—'इत्यमरः । 'षिद्भिदादिभ्योऽङ्' । अथवा रुजेति वेदनाभेदः । तयायतान्यतिदीर्घाणि श्वसितानि निश्वासा यस्य तथोक्तेन नक्रचक्रेण कुम्भिकापरपर्यायजलग्राहव्यूहेनाकुलं संकुलम् । 'नक्रस्तु कुम्भीनसः' इत्यमरः । रसातले पाताले वलन्तो वलमानास्तिमयः शतयोजनविस्तृतकाया मीनविशेषा यस्मिंस्तत्तथोक्तम् । 'राजीवः शकुलस्तिमिः' इत्यमरः । अत्र वलतेरनुदात्तत्वेऽपि चक्षिङो ङित्करणेन तस्यानित्यत्वज्ञापनात्परस्मैपदप्रयोगः । अतएव 'वलतेरात्मनेपदमनित्यमनित्यत्वज्ञापनात्' इति वामनः । स्तिमिता निश्चेष्टाः कुम्भिनो जलकरिणो यस्मिंस्तत्कुम्भीनसैः सर्पविशेषैः । 'कुम्भीनसो लोहिताहिः' इति वैजयन्ती । प्रविष्टानि गिरिकन्दराणि मैनाकादिपर्वतबिलानि यस्मिंस्तत्तथोक्तं च तत्तरलं विघूर्णितमजायत जातम् । पृथ्वीवृत्तम् ॥

**तत्क्षणं च[1] जलनिधिः क्षन्ता च युगान्तानलस्य सहनोऽपि गरलदहनोष्मणां[2] सोढापि वाडवगाढावलेह्यस्य[3] तितिक्षुरपि भार्गवतीक्षणपरशोः परिशोषयन्तमन्तरङ्गमङ्गारमयं[4] शरवरं निमिषमपि न विषेहे ॥**

तत्क्षणमिति । तत्क्षणं तस्मिन्क्षणे । अत्यन्तसंयोगे द्वितीया । अयं जलनिधिश्च वारिनिधिरपि । युगान्तानलस्य प्रलयकालाग्नेः । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । एवमुत्तरत्रापि द्रष्टव्यम् । क्षन्ता च सहनशीलोऽपि । 'क्षमूष् सहने' तृच् । गरलदहनोष्मणां नियतात्मकुक्षिनिवासस्य शेषाशीविषस्य विषज्वलनपरितापानां वा सहनो मर्षणः वाडवस्य वडवानलस्य यद्गाढावलेह्यं निरन्तरदृढतरास्वादनम् । 'गाढावलेपस्य' इति पाठे दृढदाहगर्वः । 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः । तस्य सोढापि । सहतेस्तृच् । भार्गवतीक्ष्णपरशोर्जामदग्न्यनिशितकुठारस्य । ब्राह्मणेभ्यः सर्वसर्वसहां दत्त्वा स्वनिवासप्रार्थनासमये प्रयुक्तस्येति भावः । तितिक्षुः क्षान्तिशीलोऽपि । क्षमतेः सन्नन्तादुप्रत्ययः । अङ्गारमयमग्निस्वरूपमन्तः परिशोषयन्तमप्रमेयमपरिच्छेद्यमानप्रभावं शरवरमस्त्रोत्तमं निमिषं निमेषमात्रमपि किमुत चिरकालमिति भावः । न विषेहे न चक्षमे । स्वतो दुःसहस्य तत्रापि कोपावेशेन श्रीरामप्रेरितस्यास्त्रस्य कः क्षन्तेति भावः ॥

**शरणमथ शरव्यथानिदानं जलनिधिरेष जगाम राममेव ।**
**परुषकुलिशपातमेव किं वा जलधरमर्थयते न जीवलोकः ॥२५॥**

शरणमिति । अथासहनानन्तरमेष जलनिधिः समुद्रः शरव्यथानिदानं शरजनितात्यन्तसंतापकारणम् । 'निदानं त्वादिकारणम्'इत्यमरः । रामं श्रीराममेव शरणं

---

१. 'च' नास्ति क्वचित्. २. 'दाहनोष्मणाम्' इति पाठः. ३. 'अवलेपस्य' इति पाठः. ४. 'शरमयम्' इति पाठः.

२१ च०

रक्षकम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । जगाम प्राप । गमेर्लिट् । कुत एतदित्या-शङ्क्य तत्र दृष्टान्तमाह—परुषेति । जीवलोकः प्राणिसमूहः परुषोऽसह्यः कुलिश-पातो यस्मात्तम् जलधरमेव नार्थयते न याचते किम् । जलमिति शेषः । याचत एवेत्यर्थः । अतोऽस्यैतच्छरणागतित्वं युक्तमिति भावः । 'अर्थ याञ्चायाम्' इति धातुः । 'अर्थेनेऽर्थयतेरर्थायासे यञ्चावरोधयोः' इति वचनात् । वैधर्म्येण दृष्टा-न्तालंकारः । पुष्पिताग्रावृत्तम् ॥

**आगत्य चानुपदमुपदीकृतचित्र[1]रत्नराशि[2]र्जलराशिर्विनीत[3]वेषोप-जातनुतिभिर्नतिभिरभ्यनन्दयद्रघुनन्दनम् ॥**

**आगत्येति** । आगत्य शरणं प्राप्य च जलराशिः । अनुपदमनन्तरमुपदीकृत उपायनीकृतश्चित्ररत्नराशिर्येन स तथोक्तः सन् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । विनीतवेषोऽनुद्धताकारः । विनयप्रह्वीभाव इत्यर्थः । उपजातनुतिभिर्वि-रचितस्तोत्रैर्नतिभिर्नमस्कारैश्च रघुनन्दनमभ्यनन्दयदतोषयत् । उपायनस्तुतिनम-स्कारैः श्रीरामस्य कोपोपशमं चकार । 'प्रणिपातप्रतीकारः संरम्भो हि महात्म-नाम्' इति भावः । अत्र नतिभिरिति वहुवचनं तासां भक्तिश्रद्धातिशयपूर्वकत्वं द्योतयति । तथाविधानामेव श्रेयस्करत्वात् । तथाच श्रुतिः—'भूयिष्ठां ते नम-उक्तिं विधेम' इति ॥

**तदनु संहितममोघं वैधात्र[4]मस्त्रं कुत्र च वनचरधामनि मरुसी-मनि विनिपात्यताम्, सह्यते मया सलिलावष्टम्भः, संप्रत्येव नलो विदधातु सेतुमित्यभिदधानो मन्दमन्दमन्तरधात् ॥**

**तदन्विति** । तदनु रघुनन्दनाभिनन्दनानन्तरं संहितं धनुषि योजितममोघम-व्यर्थं वैधात्रमस्त्रं ब्रह्मास्त्रं वनचराणामाभीरप्रमुखानां पापात्मनां धामनि निवासस्थाने कुत्र च कस्मिंश्चिन्मरुसीमनि मरुदेशे विनिपात्यतां विसृज्यताम् । मया सलिलाव-ष्टम्भः सलिलप्रतिवन्धः सह्यते मृष्यते । संप्रतीदानीमेव नलः सेतुं विदधातु विरचयतु इतीत्थमभिदधानो भाषमाणः । सागर इति शेषः । मन्दमन्दं मन्दप्रकारम् । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । कर्मधारयवद्भावात्सुपो लुक् । अन्तरधादन्त-र्हितोऽभूत् ॥

ततः किं तत्राह—

**आदिष्टा रघु[6]नन्दनेन हरयोऽप्यष्टासु दिक्षु क्षणा-**
**त्त्रैलोक्याश्रितमूलमध्यशिखरान्धात्रीधरानाहरन् ।**
**यैः क्षिप्तैः सलिले नलेन जलधिर्यातोऽपि जम्बालतां**
**निर्गच्छन्नचिराय निर्झरपयःपूरैः पुपूरे पुनः ॥ २६ ॥**

---

१. 'नूतनरत्न' इति पाठः. २, 'वारिराशिः' इति पाठः. ३. 'वेषविशेषोपजातनति-भिर्नुतिभिः' इति पाठः. ४. 'अस्त्रं वैधात्रम्' इति पाठः. ५. 'कुत्रचन वनसीमनि विनि-पात्य साध्यो मया सलिलविष्टम्भ इति पाठः. ६. 'पुंगवेन' इति पाठः.

**आदिष्टा इति।** हरयो वानरा रघुनन्दनेनादिष्टाः सेतुनिबन्धनार्थं पर्वता नाहरन्त्वित्याज्ञप्ताः सन्तः। अष्टास्वपि दिक्षु स्थितानिति शेषः। त्रयो लोकास्त्रैलोक्यम्। पातालमर्त्यस्वर्लोका इत्यर्थः। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यङ्। तत्राश्रितानि संगतानि मूलमध्यशिखराणि येषां तानित्यतिशयोक्तिः। धरन्तीति धराः। पचाद्यच्। धात्रीधरान्पर्वतान्क्षणादाहरन्नानीतवन्तः। ततो नलेन सलिले क्षिप्तैर्यैर्धात्रीधरैर्जलधिर्जलनिधिर्जम्बालतां पङ्कताम्। 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः। यातोऽपि। निर्जरपयःपूरैर्गिरिप्रवाहैः। 'प्रवाहो निर्झरो झरः' इत्यमरः। अचिराय शीघ्रमेव निर्गच्छन्। उपचयं प्राप्नुवन्नित्यर्थः। पुनर्भूयोऽपि पुपूरे पूरितः। पूरेः कर्मणि लिट्। अत्राम्बुधेः पङ्किलत्वनिर्झरपयःपूरितत्वासंबन्धेऽपि तत्संबन्धाभिधानादसंबन्धे संबन्धरूपातिशयोक्तिः पूर्वोक्तया संसृज्यते। शार्दूलविक्रीडितं वृत्तम्॥

अथ जलधौ निपेतुरतिदूरनिपातदल-
ज्जलचरजीवजीवनदगन्धमहौषधयः।
स्फुटितधराविराजदहिपुंगवफूत्करण-
क्षुभितगुहागृहोत्थितमहाहरयो गिरयः॥ २७॥

**अथेति।** अथानन्तरं जलधौ जलनिधौ। अतिदूरनिपातेनात्यन्तविप्रकृष्टपातेन सुदूरावगाहनेन वा दलतां विशीर्यमाणानां जलचराणां नक्रादिजलजन्तूनां जीवानां प्राणिनां जीवनदः पुनरुज्जीवको गन्ध आमोदो यासां तास्तथोक्ता महौषधयः संजीविन्यादिलताविशेषा येषां ते तथोक्ता इति बहुव्रीहिः। स्फुटिता निपातेन यो वेगस्तेन दलिता या धरा समुद्राधारभूमिस्तस्यां विराजतां प्रकाशमानानामहिपुंगवानां पातालवासिनां महोरगाणां च फूत्करणैर्मुखनिश्वासमारुतैः क्षुभिताः क्षोभं प्रापिताः। अतएव गुहागृहेभ्यः कन्दरमन्दिरान्तरालेभ्य उत्थिता निर्गता महाहरयो महासिंहा येषां ते तथोक्ता गिरयः पर्वता निपेतुः पतन्ति स्म। अत्र पूर्वोत्तरवाक्यस्थयोरसंबन्धे संबन्धरूपातिशयोक्त्योः संसृष्टिः॥

अलक्षितमहीधरग्रहणमस्फुटक्षेपणं
विचित्रघटनं ततो विरचितो नलेनामुना।
अबोधि हरियूथपैरधिपयोधि सेतुर्महा-
न्भुवो भुज इवाभयं निजतनूभुवो लम्भयन्॥ २८॥

**अलक्षितेति।** ततः। गिरिनिपातानन्तरमित्यर्थः। अलक्षितमदृष्टं महीधरग्रहणं पर्वतस्वीकरणं यस्मिन्कर्मणि तद्यथा भवति तथा। अस्फुटक्षेपणमप्रकाशनिक्षेपणं यथा तथेत्यतिशयोक्तिः। तथा विचित्रा आश्चर्यकरी घटना यस्मिन्कर्मणि तद्यथा भवति तथा। अमुना नलेनाधिपयोधि पयोधौ इति विभक्त्यर्थेऽव्ययीभावः।

---

१. 'दत्तजीवनवगन्ध' इति पाठः. २. 'गृहासिक' इति पाठः. ३. 'अस्खल' इति पाठः.

विरचितो निर्मितो महानत्यायतः सेतुर्हरियूथपैः कपिश्रेष्ठैर्निजतनूभुवः स्वपुत्रिकायाः सीताया अभयं भयाभावम् । अर्थाभावेऽव्ययीभावः । लम्भयन्प्रापयन् । भुवो भूमेर्दीर्घा भुज इवेत्युत्प्रेक्षा । अबोधि बुद्धम् । बुध्यतेः कर्तरि लुङ् । 'दीपजन–' इत्यादिना च्लेश्चिणादेशः । पृथ्वीवृत्तम् ॥

**अनन्तरमन्तर्मुखा इव वलीमुखाः प्रबोधेनेव सेतुपथेन संसारमिव दुस्तरं तरंगिणीपतिमतीत्य सद्य एव प्रकाशं गिरीशं सुवेलमवलोकयन्तो मुहुरविदन्परमानन्दम्[1] ॥**

**अनन्तरमिति** । अनन्तरं सेतुनिर्माणानन्तरमन्तर्मुखा आत्मनिष्ठा योगिन इव वलीमुखा वानराः प्रबोधेन तत्त्वज्ञानेनेव सेतुपथेन । 'ऋक्पूः–' इत्यादिना समासान्तोऽच्प्रत्ययः । संसारं पुत्रमित्रकलत्रादिबन्धुरूपां संसृतिमिव दुस्तरं तरितुमशक्यम् । 'ईषद्दुः–' इत्यादिना खल्प्रत्ययः । तरंगिणीपतिं समुद्रमतीत्य तीर्त्वा सद्यस्तदानीमेव प्रकाशं चक्षुर्गोचरं भास्वरं च । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतिः । सुवेलं सुवेलाख्यं पर्वतं शोभनमर्यादं च । 'वेलाब्धितीराब्धिवृद्ध्योः कालमर्यादयोरपि' इति नानार्थरत्नमालायाम् । गिरीशं पर्वतश्रेष्ठं परमेश्वरं च । अवलोकयन्तः पश्यन्तः साक्षात्कुर्वन्तश्च । मुहुः पुनःपुनः परमनिर्वाच्यमानन्दं संतोषं ब्रह्मानन्दं चाविदन्नलभन्त । अनेकैवेयमुपमा श्लेषसंकीर्णा ॥

**वलयिततटदेशैर्वाहिनीनां निवेशै-**
**रविरलवनरेखामध्यमध्यास्त रामः ।**
**कपिकलकलशीर्यत्कन्दरामन्दिरान्त-**
**श्चलितकुपितसिंहत्रस्तवेलं सुवेलम् ॥ २९ ॥**

**वलयितेति** । रामो वलयिततटदेशैरावेष्टितसानुप्रदेशैर्वाहिनीनां कपिसेनानाम् । 'सेनानद्योश्च वाहिनी' इति वैजयन्ती । निवेशैः शिबिरैरविरलानि सान्द्राणि वनरेखामध्यानि वनश्रेण्यन्तरालानि यस्य तं तथोक्तम् । 'पङ्क्तिश्रेणी रेखास्तु राजयः' इत्यमरः । कपिकलकलैर्वानरकोलाहलैः शीर्यतां विदीर्यमाणानां कन्दरामन्दिराणां गुहागृहाणामन्तर्मध्यप्रदेशः । 'अन्तर्मध्ये तथा प्रान्ते स्वीकारार्थेऽपि दृश्यते' इति विश्वः । ततश्चलिता कोलाहलासहिष्णुतया निर्गताः तथा कुपिताश्च ये सिंहास्तेभ्यस्त्रस्ता भीता वेला लक्षणया तटवर्तिजन्तवो यस्य तं सुवेलमध्यास्ताधिष्ठितवान् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । मालिनीवृत्तम् ॥

**तदनु दशमुखोऽपि[2] शुकमुखादतिलङ्घितजलधिगतसुवेलारामं रामं निशम्य सम्यगवगमनाय रघुनायकवलमनु प्रयातयोर्विदि[3]तविभीषण[4]प्रेरणाकुपितकपिलोकनियन्त्रणनितान्तखिन्नयोर्विपन्नाधारदाशरथिविमोचितप्राणयोः शुकसारणयोर्वचसा प्रासादमुदग्रमा[5]-**

१. 'अविन्दत महान्तमानन्दम्' इति पाठः. २. 'अपि' इति नास्ति क्वचित्. ३. 'प्रहितयोः' इति पाठः. ४. 'वेषविभीषणावेदितकुपित' इति पाठः. ५. 'प्रासादाग्रम्' इति पाठः.

साद्य प्रत्येकशस्तदावेद्यमानान्प्रवर्धमानान्समरसंनाहमतीन्प्लवगसेनाधिपतीनतिधीरतया सावधीरणमवेक्षमाणः प्रतिपक्षबलप्रशंसिनावुभावप्युपेक्षमाणः शार्दूलप्रभृतिभिः प्रणिधिभिरप्यवगताशेषवृत्तान्ततान्तः सुचिरमनुचिन्तयन्नन्तिकासीनमतिविनयप्रह्वं विद्युज्जिह्वमुपह्वरे किमप्यभिधाय सौधादवततार ॥

तदन्विति । तदनु सुवेलाधिष्ठानानन्तरं दशमुखो रावणोऽपि शुकमुखाच्छुकाख्यदूतप्रणिधिवचनादतिलङ्घितजलधिं सेतुमार्गेणातिक्रान्तवारिधिमधिगतसुवेलाराममधिष्ठितसुवेलाचलोद्यानं रामं निशम्य श्रुत्वा । सम्यगवगमनाय सम्यक्परिज्ञानार्थम् । रघुनायकस्य बलमनु सैन्यमुद्दिश्य प्रयातयोर्गतयोः तथा विदितं तद्वृत्तान्तज्ञानमस्यास्तीति विदितः । अर्शआद्यच्प्रत्ययः । स चासौ विभीषणश्च तस्य प्रेरणेन रावणप्रेषितावेतौ गूढपुरुषौ गृह्यध्वमिति चोदनया कुपितस्य क्रुद्धस्य कपिलोकस्य वानरनिवहस्य नियन्त्रणेन । तत्कृतनिबन्धनेनेत्यर्थः । नितान्तखिन्नयोरत्यन्तखेदमापन्नयोः । ततो विपन्नाधारेणार्तरक्षकेण दाशरथिना विमोचितप्राणयोस्त्याजितजीवनयोः शुकसारणयोर्गूढपुरुषयोर्वचसा वचनाद्वानरबलं स सम्यग्दृष्ट्वा निबन्धमुक्तौ पुनरावामागतावित्येवंभूतवाक्यात् । उदग्रमुन्नतं प्रासादं हर्म्यमासाद्याधिरुह्य प्रत्येकमाभागतस्ताभ्यां शुकसारणाभ्यामावेद्यमानाञ्ज्ञाप्यमानान्प्रवर्धमानान्वृद्धिं प्राप्नुवतान्समरसंनाहमतीन्युद्धसंनद्धा बुद्धिर्येषां तान्प्लवगसेनाधिपतीन्सुग्रीवाङ्गदादिसेनानायकानतिधीरतयात्यन्तगम्भीरतया हेतुना सावधीरणं सावज्ञमवेक्षमाणोऽवलोकयमानः । तथा प्रतिपक्षस्य बलप्रशंसिनौ शत्रुसैन्यस्तावकौ । उभावपि शुकसारणौ च । उपेक्षमाणः । 'रिपूणां प्रतिकूलानां युद्धार्थमभिधावताम् । उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥' इत्यादिना गर्हमाण इत्यर्थः । तथा शार्दूलप्रभृतिभिः प्रणिधिभिर्गूढपुरुषैरवगताशेषवृत्तान्तो ज्ञाताखिलसैन्यप्रवृत्तिः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । अतएव तान्तः खिन्नः । सुचिरमनल्पकालमनुचिन्तयन्नेतद्विजये क उपायो भवेदिति विचारयन्नन्तिकासीनं निकटवर्तिनमतिविनयप्रह्वमत्यन्तविनयेन नम्रं विद्युज्जिह्वं नाम कंचिन्महामायाविनं राक्षसं प्रति उपह्वरे रहसि । अव्ययमेतत् । किमपि किंचिद्वचनमभिधाय । मायाकल्पितं रामशिरः सधनुः प्रदर्श्य सीतां प्रलोभयेत्येवंभूतं वाक्यमुक्त्वेत्यर्थः । सौधादवततारावरूढवान् ॥

तत्क्षणं क्षणदाचरो निदेशान्निशाचरपतेर्दाशरथिशिरः सशरं धनुरपि निर्माय मायानुभावादाहवानीतमित्यभिधाय निधाय च पुरो निदाघातिशयसंतापिनीं वासन्तीमिव वैद्युतानलश्चिरकालविरहविह्वलीकृतामाकुलीचकार मैथिलीम् ॥

१. 'प्रवर्धमान' इति पाठः. २. 'प्लवंगम' इति पाठः. ३. 'ताडुर्यौ' इति पाठः ४. 'प्रणयिभिः' इति पाठः. ५. 'वृत्तान्तः सांन्तस्तापः' इति पाठः. ६. '[illegible]चरोऽभि' इति पाठः. ७. 'चिरकालविह्वलाम्' इति पाठः.

तत्क्षणमिति । तत्क्षणं तस्मिन्क्षणे क्षणदाचरो विद्युज्जिह्वो निशाचरपतेर्निदेशाद्रावणाज्ञावशाद्धेतोर्मायानुभावान्निजमोहनशक्तिसामर्थ्याद्दाशरथेः श्रीरामस्य शिरः सशरं सबाणं धनुरपि धनुश्च निर्माय प्रकल्प्याहवाद्युद्धादानीतमितीत्थमभिधायोक्त्वा पुरः सीताया अग्रे निधाय निक्षिप्य च निदाघातिशयेन घर्मातिशयेन ग्रीष्मकालप्रयुक्तोष्माधिक्येन संतापिनीं परितप्यमानाम् । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति विश्वः । वासन्तीं माधवीलताम् । 'वासन्ती माधवीलता' इत्यमरः । वैद्युतानल इव इत्युपमा । चिरकालविरहेण बहुकालवियोगेन विह्वलीकृतां मैथिलीमाकुलीचकाराकुलीकृतवान् । तदेतन्नखव्रणोपरि मुसलाघातप्रायं चण्डभानुसंतप्ताय दावानलवेष्टमानरूपं चाभूदिति भावः ॥

**ततः प्रबुद्धा च सा मुग्धा पुनस्तथ्यमिति विचार्य तदनार्यं पर्यदेवयत पतिदेवता ॥**

तत इति । ततस्तदनन्तरं पतिदेवता पतिव्रता सा मैथिली मुग्धा मूर्च्छिता पुनः प्रबुद्धा बोधं प्राप्ता सती । अनार्यं मायिकं तत्सधनुः शिरस्तथ्यं यथार्थमिति विचार्य पर्यदेवयत व्यलापीत् । 'विलापः परिदेवनम्' इत्यमरः ॥

तत्प्रकारमेवाह—

**रक्षोवरोधवसतिं रजनीचरीणां**
**रक्षोपरोधमपि रावणभर्त्सनं च ।**
**सर्वं सहे यदुपलम्भधिया स एवं**
**सर्वंसहे भवति जीवति हन्त सीता ॥ ३० ॥**

रक्ष इति । रक्षसो रावणस्यावरोधवसतिमन्तःपुरावस्थानम् । अत्यन्तदुरवस्थापादिनीमित्यर्थः । 'शुद्धान्तश्चावरोधश्च' इत्यमरः । रजनीचर्यश्च रजनीचराश्च तेषाम् । अतिभयंकराणामिति भावः । 'पुमान्स्त्रिया' इत्येकशेषः । रक्षया गुप्त्या य उपरोधो निर्बन्धस्तमपि रावणस्य त्रिलोककण्टकस्य भर्त्सनं तर्जनं चेति सर्वं यस्य श्रीरामस्योपलम्भधिया प्राप्त्याशया सहे मृष्यामि । 'सह मर्षणे' लटस्तङ् । स श्रीराम एवमित्थंभूतः । छिन्नशीर्षो जात इत्यर्थः । अथापि । सर्वं सहत इति सर्वंसहा । हे सर्वंसहे वसुमति । 'सर्वंसहा वसुमती' इत्यमरः । भातीति भवती । हे भवति पूज्ये । 'भातेर्डवतुः' इत्यौणादिको डवतुप्रत्ययः । 'उगितश्च' इति ङीप् । सीता । स्वयमित्यर्थः । जीवति प्राणान्धारयति । हन्त । एतद्दर्शनसमकालमेव प्राणनिष्क्रमणेन भाव्ये तथा न भूतमित्यत्यन्तविरोध इत्यर्थः । सर्वंसहायाः सर्वसाक्षित्वान्निजमातृत्वाच्च तां संबोध्येत्थं विलापो युक्त एवेति भावः । अत्र पूर्वोत्तरवाक्यस्थयोरनुप्रासयमकविशेषयोः संसृष्टिः ॥

**इत्येवमत्याहितमत्या समेतामेतां सद्य आसाद्य 'सखि वैदेहि,**

---

१. 'सा' इति नास्ति क्वचित्. २. 'इति' इति नास्ति क्वचित्. ३. 'समेतामेतामासाद्य' इति पाठः.

देहि[1] मे वचः। मम[2] वचो विधेहि। कथमियं[3] दशा। दशाननकृता माया हि सेयम्[4]। मा याहि मनसि वैधुर्यम्। अखिलजगतीधुर्यभुजबलाभिरामे[5] रामे[6] किंचिदनार्यमविचार्यम्' इति भाषमाणां नवीनासारनिष्यन्दिनी कादम्बिनीव घर्मोद्वेगिनीं केकिनीं सरमा चिरमाश्वासयामास ॥

इतीति। इत्येवमुक्तप्रकारेणात्याहितमत्या विभीतबुद्ध्या। यद्वा अत्याहिते जीवितानपेक्षितव्यापारे या मतिस्तया समेताम्। तादृग्बुद्धिमतीमित्यर्थः। 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः। एतां सीतां सद्योऽविलम्बेनैव। अन्यथा महाननर्थः स्यादिति भावः। आसाद्य संनिधाय। हे सखि प्रिये। 'सख्यशिश्वीति भाषायाम्' इति ङीप्। हे वैदेहि मैथिलि, मे मह्यं वचो देहि। मां प्रति वदस्वेत्यर्थः। तथा मम मे वचः। मया वक्ष्यमाणं वाक्यमित्यर्थः। विधेहि कुरु। मदीयवचनं श्रुत्वा समाहितमनस्का भवेत्यर्थः। किं तद्वच इत्यत आह—इयं वर्तमाना दशा व्यामोहावस्था कथं कुतः। न कथमपीत्यर्थः। किंतु सेयं शिरोधनुराद्याहरणक्रिया दशाननेन महामायाविना रावणेन कृता प्रयुक्ता माया हि। चित्रं खल्वेतत्सर्वं विबुध्यस्वेत्यर्थः। हिरवधारणे। अतः मनसि वैधुर्यं वैक्लव्यं मा याहि मा प्राप्नुहि। कुतः। अखिलजगतीधुर्यं सकललोकधुरंधरम्। 'धुरो यड्ढकौ' इति यत्प्रत्ययः। यद्भुजबलं बाहुपराक्रमस्तेनाभिरामे कमनीये रामेऽनार्यं तुच्छमिदमेतच्छिरश्छेदादिकृत्यं विचार्यं किं विचारितुं योग्यं किम्। न विचार्यमेवेत्यर्थः। अत्यन्तविरुद्धत्वादिति भावः। इत्यनेन प्रकारेण भाषमाणा सरमा विभीषणपत्नी नवीनासारनिष्यन्दिनी प्रत्यग्रजलधारावर्षिणी कादम्बिनी मेघमाला। 'कादम्बिनी मेघमाला' इत्यमरः। घर्मोद्वेगिनीं ग्रीष्मोष्मपरिक्लिष्टाम्। 'उद्वेगस्तिमिते क्लेशे भये मन्थरगामिनि' इति शब्दार्णवः। केकिनीमिव मयूरीमिव चिरमाश्वासयामासोपलालितवती। उज्जीवितवतीत्यर्थः ॥

अथ निगदितनीतिं मुञ्च मुञ्चेति सीता-
मविरतरणकण्डूभीषणो रावणोऽयम्।
मनसि न बहु मेने मन्त्रिणं माल्यवन्तं
दिवि परममरीणां मण्डलं माल्यवन्तम् ॥ ३१ ॥

अथेति। अथ मायाप्रयोगानन्तरमविरतरणकण्ड्वा वञ्छ्नरसमराभिनिवेशेन भीषणः। नन्द्यादित्वाल्ल्युट्। अयं रावणः सीतां श्रीरामपत्नीं परस्परविवृताम्। मुञ्च मुञ्चाभीक्ष्ण्यं त्यज। आभीक्ष्ण्ये द्विर्भावः। अन्यथा महाननर्थो भविष्यतीति भावः। इत्येवं निगदितनीतिमुक्तनीतिवचनं माल्यवन्तं माल्यवन्तं नाम मन्त्रिणं मनसि बहु

---

१. 'वै देहि वचः' इति पाठः. २. 'मम वचो विधेहि' इति नास्ति क्वचित्. ३. 'तव दीना दशा' इति पाठः. ४. 'सेयं' इति नास्ति क्वचित्. ५. 'निखिल' इति पाठः. ६. 'रामेऽपि' इति पाठः. ७. 'अभिदधाना' इति पाठः.

गुरु यथा तथा न मेने न बुध्यते स्म। किंतु दिवि स्वर्गे। 'द्यौः स्वर्गनभसोरपि' इति विश्वः। मालैव माल्यम्। 'चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्' इति क्षीरस्वामी। तद्वन्तम्। पुष्पस्रगलंकृतमित्यर्थः। अमरीणां मण्डलं परं सुरसुन्दरीनिकरमेव। 'मण्डलं त्रिषु' इत्यमरः। बहु मेने। सीतामपरित्यज्य श्रीरामेण रणे निहतः सन् स्वर्ग गन्तुमैच्छदित्यर्थः। अनुप्रासयमकयोः संसृष्टिः। मालिनीवृत्तम्॥

**अथ रामोऽपि कामोचितवेषविभीषणामात्यविदितरक्षोनगररक्षोदन्तो हृदन्तोपजातसमरसंरम्भधीरम्बुधिमेखलालंकारमणेर्लङ्कायाः प्राग्द्वारस्थाय प्रहस्ताय पर्यस्ताहितप्राणानिलं नीलं दक्षिणद्वाररक्षिणोर्महोदरमहापार्श्वयोर्विश्वत्रयविजयधौरेयं तारेयं प्रत्यग्द्वारपालनाधिकृतं पाकशासनजिते पराक्रममिव तनूमन्तं हनूमन्तमन्तर्व्यूहविहितरक्षाय विरूपाक्षाय रक्षःप्लवगर्क्षाधिपतीन्प्रतिनिधीन्विधाय विधाय च सज्यं धनुरनुजेन समं समीकाभिमुखेन दशमुखेन गुप्तमुत्तरं गोपुरमुत्तरङ्गो बलैरुपरुरोध॥**

अथेति। अथानन्तरं रामोऽपि कामोचितवेषा इच्छासदृशवेषधारिणः विहितपक्षिभूमिका इत्यर्थः। तथाभूतेभ्यो विभीषणामात्येभ्योऽनलादिविभीषणमन्त्रिभ्यो विदितो विज्ञातो रक्षोनगरस्य रावणराजधान्या लङ्काया रक्षोदन्तो रक्षणवार्ता यस्य तथोक्तः। तथा रामायणे श्रीरामं प्रति विभीषणवचनम्—'अनलश्च हरिश्चैव संपातिः प्रमदस्तथा। गत्वा लङ्कां ममामात्याः पुरीं पुनरिहागताः॥ भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम्॥' इत्यादि। अतएव हृदन्ते हृत्प्रदेशे उपजाता समरे संरम्भधीः कोपबुद्धिर्यस्य स तथोक्तः। 'संरम्भः संभ्रमे कोपे' इत्यमरः। अम्बुधिमेखलालंकारमणेः। भूतधात्रीभूषणायमानाया इत्यर्थः। 'भूतधात्र्यब्धिमेखला' इत्यमरः। लङ्कायाः प्राग्द्वारे तिष्ठतीति तथोक्ताय। 'सुपि स्थः' इति कप्रत्ययः। प्रहस्ताय प्रहस्ताख्याय राक्षससेनापतये पर्यस्ताहितप्राणानिलं निरस्तशत्रुप्राणवायुम्। शत्रुकुलान्तकमित्यर्थः। नीलं नाम वानरसेनापतिं प्रतिनिधिम्। निधायेति सर्वत्र संबध्यते। तथा दक्षिणद्वारं रक्षत इति तद्रक्षिणोर्महोदरमहापार्श्वयोर्विश्वत्रयविजयधौरेयं त्रैलोक्यविजयधुरंधरं तारेयं तारातनयमङ्गदम्। 'स्त्रीभ्यो ढक्'इति ढक्। उभयत्रापि ढक्येयादेशः। प्रत्यग्द्वारपालनं प्रतीचीद्वारसंरक्षणमधिकरोतीति तदधिकृते। करोतेः क्विप्। पाकशासनजित इन्द्रजिते। कृधातोः कर्मणि क्तप्रत्ययः। पाकशासनजिति विषये तनूमन्तं मूर्तिमन्तं पराक्रममिव स्थितमित्युत्प्रेक्षा। हनूमन्तम्। तथा अन्तर्व्यूहे मध्यगुल्मे विहितरक्षाय कृतसंरक्षणाय विरूपाक्षाय राक्षससेनाधिपतये च रक्षःप्लवगर्क्षाधिपतीन्विभीषणसुग्रीवजाम्बवतः। प्लवगर्क्षेत्यत्र 'ऋत्यकः' इति सांहितः प्रकृतिभावः। प्रतिनिधीन्प्रतिभटान्विधाय कृत्वा। नियुज्येत्यर्थः। तथा धनुश्च सज्यमारोपितगुणं विधाय। अनुजेन समं लक्ष्मणेन

---

१. 'प्लवंगम' इति पाठः. २. 'विनिधाय' इति पाठः.

सह। वलैर्वानरसैन्यैरुत्तरङ्गः समुद्भटः सन्। समीकाभिमुखेन समरोन्मुखेन दशमुखेन गुप्तं रक्षितमुत्तरमुत्तरदिगवस्थितं गोपुरं पुरद्वारमुपरुरोधावारौत्सीद्रुणद्धि स्म ॥

अत्याकुलां हरिवलैरवलोक्य लङ्कां
दत्तार्गलेषु दशकंधरकिंकरेषु।
आरक्षकैस्त्वरितमन्तकराजधान्या-
मुद्धाटिताभिरुदभावि कवाटिकाभिः ॥ ३२ ॥

अत्याकुलामिति। हरिवलैर्वानरसैन्यैरत्याकुलामत्यन्तसंकुलां लङ्कामवलोक्य दशकंधरकिंकरेषु रावणभृत्येषु दत्तार्गलेषु संघटितकवाटेषु। वानराणामन्तःप्रवेशनिरोधार्थं कवाटाच्छादितद्वारेषु सत्स्वित्यर्थः। 'कवाटमररं तुल्ये' इत्यमरः। अन्तकराजधान्यां यमपुर्यां कवाटिकाभिः कवाटैः कर्तृभिः। गौरादित्वान्ङीष्। अतएवोक्तममरकोशे—'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि' इति। वाहुल्यप्रतीतिः। ततः स्वार्थे कः। 'केऽणः' इति ह्रस्वः। आसमन्ताद्रक्षन्तीत्यारक्षकैर्द्वारपालकैः। 'नन्दिग्रहि-' इत्यादिना पचाद्यच्। 'आरक्षिकैः' इति पाठ आरक्षा प्रयोजनमेषामारक्षिकैः। 'प्रयोजनम्' इति ठक्। त्वरितं शीघ्रम्। 'जवोऽथ शीघ्रं त्वरितम्' इत्यमरः। उद्घाटिताभिर्विघटिताभिरुदभाव्युद्भूतम्। भुवो भावे लुङ्। 'चिण्भावकर्मणोः' इति चिण्। समनन्तरमेव महारणे निपत्य पुनरागन्तॄणां राक्षसानाम्। अत्रैकमेव द्वारं चेन्महासंकटं भविष्यतीति धिया यमद्वारपालकाः सर्वाण्यपि द्वाराणि शीघ्रमुद्धाटितकवाटानि चक्रुरित्यर्थः। राक्षसानां पापिष्ठानां यमपुरप्रवेशनैयत्यादिति भावः। मृत्युस्तेषामतिसंनिहितोऽभूदिति फलितार्थः। लोके तावदज्ञैः स्वरक्षणार्थं केवलं वृथा व्याप्रियते। भवितव्यस्वविपत्त्यादिकं त्वावश्यकतया स्वयमेव भवति न चैतज्जानन्त्यहो मूढाः पशव इव शोच्या इति तात्पर्यार्थः। अत्र संयमनीकवाटोद्घाटनासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः। वसन्ततिलकावृत्तम् ॥

तत्क्षणं लक्ष्मणाग्रजः सुग्रीवेण सह सुवेलाचलकूटमधिरूढस्त्रिकूटावनीधरचूडामणिं सिंहलद्वीपकमलकर्णिकां निर्माणकौशलं विश्वकर्मणो निवेशदर्शी निशाचरहरीणामनवरतबन्दीकृतामरपुरंध्रीवाष्पनदीमातृकोपवनसीमान्तरां निरन्तरसेवासमागतदिक्पालकुलमातङ्गमदाम्बुपङ्किलबाह्याङ्गणोत्सङ्गां लङ्कामवलोकमानस्तत्र चैकत्र समुन्नतं सौधमधिवसन्तं संतमसमिव सदेहबन्धमन्तिकचरोदस्तविमलमुक्तातपत्रनिभात्सतारकेण विभावरीपतिनेव सेव्यमानं वैमानिकवधूविधूयमानधवलचामरद्वंद्वशोभितममितश्चलितम-

१. 'तत्क्षणं च' इति पाठः. २. 'कौशलीम्' इति पाठः. ३. 'अनारत' इति पाठः. ४. 'उपवनसीमान्तां सीमान्तरात्' इति पाठः. ५. 'दिक्पालमातंग' इति पाठः. ६. 'च' इति नास्ति क्वचित्. ७. 'मिषात्' इति पाठः. ८. 'धवल' इति नास्ति क्वचित्.

न्दाकिनीपरीवाहमिवाञ्जनाचलमखिलजगद्विजयवर्णावलीमतिनिर्णायकैरनेकविधसमीकाभिघातमग्नभग्नैरावणविषाणकुलिशाग्रैरुत्कीर्ण[1]विशालवक्षःस्थलफलकमानीलतया लसच्छायमाच्छादिताभिनवलोहित[2]वत्पाटलपटं संध्यारागबन्धुरं कंधरमिव ददर्श दशकंधरम् ॥

**तत्क्षणमिति** । तत्क्षणं तस्मिन्क्षणे लक्ष्मणाग्रजः श्रीरामः सुग्रीवेण सह । उपलक्षणमेतत् । सर्वैरपि वानरैः सहेत्यर्थः । सुवेलाचलकूटं सुवेलाख्यगिरिशिखरमधिरूढोऽधिष्ठितः सन् । त्रिकूट इत्यवनीधरः पर्वतो राजा च गम्यते । तस्य चूडामणिं शिरोरत्नम् । त्रिकूटाचलशिरोभूषणायमानमित्यर्थः । रूपकालंकारः । सिंहलद्वीप इत्यष्टादशद्वीपेषु प्रसिद्धो यो द्वीपोऽन्तरीपम् । 'द्वीपोऽस्त्रियामन्तरीपम्' इत्यमरः । द्विर्गता आपोऽस्मिन्निति द्वीप इति विग्रहः । सुप्सुपेति समासः । 'ऋक्पूः—' इत्यादिना समासान्तोऽकारः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीकारादेशः । स एव कमलं तस्य कर्णिकां बीजकोशिकाम् । परमशोभावहतया तन्मध्यवर्तिनीमित्यर्थः । अत्रैकदेशवर्त्यश्लिष्टपरम्परितरूपकम् । विश्वकर्मणो गीर्वाणशिल्पिनः । 'विश्वकर्मा दिनकरे तथा गीर्वाणशिल्पिनि' इति वैजयन्ती । निर्माणकौशलं रचनाचातुर्यम् । विश्वकर्मणा यावत्स्वकौशलं निर्मितामित्यर्थः । अत्र कौशलतत्कार्ययोर्भेदेऽप्यभेदोक्तेरतिशयोक्तिः । एतेनास्यासाधारणशिल्पसौष्ठवसंपन्नत्वं सूच्यते । निशाचरा राक्षसास्त एव हरयः सिंहास्तेषां निवेशदरीं नियतनिवासगुहामिति रूपकम् । अनवरतं निरन्तरं बन्दीकृता उपग्रहीकृता या अमरपुरंध्र्यः सुरसुन्दर्यस्तासां बाष्पैर्नेत्राम्बुभिः। 'बाष्पो नेत्राम्बुधूमयोः' इत्यभिधानात् । नद्येव माता येषां तानि नदीमातृकाणि । नद्यम्बुजीवदेशभूतानीत्यर्थः । 'देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालिकः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः । तान्युपवनसीमान्तराण्युद्यानप्रदेशान्तरालानि यस्यास्ताम् । बन्दीकृतसुरसुन्दरीबाष्पाम्बुप्रवाहपरिपूरितोद्यानवनमध्यप्रदेशामित्यर्थः । अत्रासंबन्धे संबन्धरूपातिशयोक्तिः । निरन्तरमनवरतं सेवार्थं रावणोपासनार्थं समागतस्य संप्राप्तस्य दिक्पालकुलस्येन्द्रादिदिगीश्वरसङ्घस्य ये मातङ्गा ऐरावतादिमत्तगजास्तेषां मदाम्बुना पङ्किलः पङ्कवान् बाह्याङ्गणोत्सङ्गो बहिर्भवचत्वरप्रदेशो यस्यास्तामिति पूर्ववदतिशयोक्तिः । 'उत्सङ्गो मुक्तसंयोगे वक्षस्यूर्ध्वतलेऽपि च' इत्युत्पलमालायाम् । पङ्किलेत्यत्र पिच्छादित्वान्मत्वर्थीय इलच् । बाह्येत्यत्र 'बहिर्देवपञ्चजनेभ्यश्च' इति वक्तव्यात्यञ् । लङ्कामवलोकमानोऽवेक्षमाणस्तत्र लङ्कायां चैकत्रैकस्मिन्प्रदेशे समुन्नतमत्युन्नतं सौधम् । प्रासादमित्यर्थः । 'उपान्वध्याङ्वसः' इति कर्मत्वम् । अधिवसन्तमधितिष्ठन्तम् । सदेहवद्धं मूर्तिमत्संतमसं विष्वगन्धकारमिव स्थितमित्युत्प्रेक्षा । 'ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः । विष्वक्संतमसम्' इत्यमरः । 'देहबद्धम्' इति पाठे गृहीतशरीरमित्यर्थः । 'वाहिताग्न्यादिषु' इति निष्ठायाः परनिपातः । वाहिताग्न्यादिराकृतिगणः । अन्तिकचरेण पार्श्ववर्तिना उदस्तमुत्क्षिप्तं यद्विमलमुक्तातपत्रं स्वच्छतरमौक्तिकच्छत्रं तन्निभांतस्या-

---

१. 'उद्गीर्ण' इति पाठः. २. 'लोहितपटमापाटलसंध्या' इति पाठः.

जात्। 'व्याजे निभे ना सदृशे त्रिष्वथो वाक्यलिङ्गकौ' इति नानार्थरत्नमाला। सतारकेणाश्विन्यादिनक्षत्रयुक्तेन विभावरीपतिना चन्द्रेण सेव्यमानमुपास्यमानमिवेति सापह्नवोत्प्रेक्षा। विमानेन संचरन्तीति वैमानिका देवाः। 'चरति' इति ठक्। तेषां वधूभ्यां रमणीभ्यां विधूयमानं पार्श्वद्वयेऽपि संवीज्यमानं यद्धवलचामरद्वन्द्वं पाण्डुरवालव्यजनयुगलं तेन शोभितं प्रकाशमानमतएवाभित उभयतः। उभयपार्श्वयोरित्यर्थः। चलितौ प्रसृतौ मन्दाकिनीपरीवाहौ गङ्गाप्रवाहौ यस्य तं तथोक्तम्। 'जलोच्छ्वासाः परीवाहाः' इत्यमरः। अञ्जनाचलं कज्जलशैलमिव स्थितमित्यभूतोपमा उत्प्रेक्षा वा मतभेदात्। अखिलजगतां समस्तलोकानां या विजयवर्णावल्यो विजयज्ञापकाक्षरविन्यासास्तन्मतिनिर्णायकैः। तादृग्भ्रान्तिजनकैरित्यर्थः। अतएव भ्रान्तिमदलंकारः। अनेकविधसमीकेष्वसंख्यातरणेष्वभिघातैः संप्रहारैर्मग्नानि सुदूरं प्रविष्टानि अतएव भग्नानि विदलितानि यान्यैरावणविषाणकुलिशाग्राणीन्द्रगजदन्तवज्रमुखानि तैरुत्कीर्णं विक्षिप्तं विशालं यद्वक्षःस्थलं तत्फलकमिव यस्य तम्। आनीलतया लसच्छायं समन्ताद्विनीलतापिञ्छगुच्छसमानकान्तिसभिनवलोहितवत्प्रत्यग्रशोणितवत्पाटलोऽरुणो यः पटः स आच्छादितोऽवसितो येन तं तथोक्तम्। 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः। अतएव संध्यारागेण वन्धुरं सुन्दरम्। 'वन्धुरं सुन्दरे नम्रे' इत्यमरः। कंधरसम्बुधरमिव स्थितमित्युत्प्रेक्षा उपमा वा। 'पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः। दशकंधरं रावणं ददर्श॥

कोपादुत्पतितस्तदा हरिपतिः कोटीरमुत्पाटितं
चक्रे नैर्ऋतनायकस्य सुदृढीचक्रे च वैभीषणम्।
युद्ध्वा तत्प्रथमावमानकुपितेनैतेन बुद्ध्वा ततो
मायामस्य जगाम कोमलगुणग्रामं स रामं पुनः॥ ३२॥

**कोपादिति**। तदा रावणदर्शनसमये हरिपतिर्वानरेश्वरः सुग्रीवः कोपात्तद्दर्शनजनितामर्षाद्धेतोरुत्पतितः। रावणाधिष्ठितसौधमुद्दिश्येति शेषः। 'हतं च रावणं युद्धे दर्शनादवधारय' इति श्रीरामायणवचनात्। श्रीरामसंनिधौ स्वोक्तमर्थं समर्थयितुं सत्वरमुत्थित इत्यर्थः। नैर्ऋतनायकस्य रक्षःपते रावणस्य। 'नैर्ऋतो यातुरक्षसी' इत्यमरः। कोटीरं मुकुटमुत्पाटितं चक्रे। आकृष्य भुवि निपातयामासेत्यर्थः। 'आकृष्य मुकुटं चित्रं पातयित्वापतद्भुवि' इति रामायणवचनम्। तथा वैभीषणं विभीषणसंबन्धिनं कोटीरं सुदृढीचक्रे सुष्ठु दृढीकृतवान्। अभूततद्भावे च्विः। रावणकोटीरविघटनेन विभीषणकोटीरसंघटनं निश्चितं चकारेत्यर्थः। अत्र भविष्यदर्थत्वेऽपि सिद्धवदनुवादाद्भूतार्थप्रयोगः। अथ तत्प्रथमावमानकुपितेन स एव प्रथम आद्यस्तत्प्रथमः[1]। तावत्पर्यन्तं कुत्रापि भङ्गाभावात्तेनावमानेनावज्ञया हेतुना कुपितेन क्रुद्धेन एतेन रावणेन सह युद्ध्वा मुष्टितलप्रहारैर्विचित्रगतिविशेषैर्युद्धं कृत्वा ततोऽस्य रावणस्य मत्यां मायाबलसमाश्रयारम्भं बुद्ध्वा ज्ञात्वा पुनर्भूयोऽपि कोमलगुणग्रामं रमणीयसकलसद्गुणाभिरामं श्रीरामं जगाम प्राप। तथाच रामायणम्—'एतस्मि-

१. 'च' इति पाठः.

न्तरे रक्षोमायाबलमथात्मनः। आरब्धुमुपसंपेदे ज्ञात्वा वै वानराधिपः॥ उत्पपात तदाकाशं जितकाशी जितक्लमः॥' इति। अत्रातिविस्तरेण वक्तव्यार्थस्य संक्षेपेण कथनात्संक्षेपो नाम गुणः। लक्षणं तूक्तम्। शार्दूलविक्रीडितं वृत्तम्॥

**ततो विरचिततत्साहसोपालम्भविधिना दाशरथिना संमन्त्र्य मन्त्रिभिः समादिष्टः साधिष्ठभुजशौर्यशाली वालिनन्दनः सलीलं सालमुल्लङ्घ्य लङ्कां प्रविश्य निःशङ्को नृशंसमिति शशंस निशिचरपतिम्॥**

**तत इति**। ततस्तदनन्तरं तस्य सुग्रीवस्य यत्साहसं रावणोपर्युत्पतनरूपमविचारकृत्यं तस्योपालम्भविधिर्निन्दावचनरचना स रचितः कृतो येन तथोक्तेन। तथाच रामायणम्—'असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम्। एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः॥' इति। विरचितसुग्रीवोपालम्भेनेत्यर्थः। 'यः सनिन्द उपालम्भः' इत्यमरः। दाशरथिना श्रीरामेण (कर्त्रा) मन्त्रिभिः सुग्रीवविभीषणाद्यमात्यैः सह संमन्त्र्य दूतप्रेषणस्य राजधर्मत्वात्सम्यग्विचार्य समादिष्टः। 'गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनादिदम्' इत्यादिनाज्ञप्तः साधिष्ठेन बाढतरेण भुजशौर्येण बाहुपराक्रमेण शालतेऽभीक्ष्णमिति तथोक्तः। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। साधिष्ठेति। 'अन्तिकबाढयोर्नेदसाधौ' इति साधादेशः। वालिनन्दनोऽङ्गदः सलीलं सविलासम्। सोत्पतनपाटवमित्यर्थः। सालं प्राकारमुल्लङ्घ्यातिक्रम्य। 'प्राकारो वरणः सालः' इत्यमरः। लङ्कां प्रविश्य निःशङ्को निर्भीकः सन् नृशंसं पापिनं तं निशिचरपतिं रावणम् इति वक्ष्यमाणप्रकारेण शशंसोवाच॥

तत्प्रकारमेवाह—सोऽहमित्यादिपञ्चभिः। तत्रादौ कस्त्वं कस्य वा दूत इत्याशङ्कायामाह—

**सोऽहं प्लवङ्गमपतेस्तनयस्त्वदीय-**
**निःश्वासगन्धिनिजवालधिमण्डलस्य।**
**कालस्य दूषणखरत्रिशिरोमुखानां**
**पौलस्त्य मां रघुपतेरवधेहि दूतम्॥ ३४॥**

**सोऽहमिति**। हे पौलस्त्य, स प्रसिद्धोऽहं त्वदीयनिःश्वासानां तावकोच्छ्वासानां गन्ध आमोदः संबन्धो वास्यास्तीति तथोक्तम्। निजवालधिमण्डलं स्वकीयवालवलयं यस्य तस्य। वालेन त्वां निबध्य कक्षे निक्षिप्तवत इत्यर्थः। 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः। प्लवङ्गमपतेर्वालिनस्तनयः। तथा मां दूषणखरत्रिशिरसो मुखानि मुख्या येषां तेषां राक्षसानाम्। 'मुखं तु वदने मुख्ये तोत्रे द्वाराभ्युपाययोः' इति यादवः। कालस्यान्तकस्य। 'कालो दण्डधरः श्राद्धदेवो वैवस्वतो-

१. 'विरचित' इति नास्ति क्वचित्. २. 'उपलम्भ' इति पाठः. ३. 'समामन्त्र्य' इति पाठः. ४. 'सममादिष्ट' इति पाठः. ५. 'उल्लङ्घयन्' इति पाठः. ६. 'निःशङ्क' इति नास्ति क्वचित्. ७. 'रोधि' इति पाठः.

ऽन्तकः' इत्यमरः। रघुपतेः श्रीरामस्य दूतमवधेहि जानीहि। निजस्वरूपकथनापदेशेन तदीयमर्मोद्घाटनमित्थं कृतवानित्यर्थः। वसन्ततिलकावृत्तम्॥

रक्षःपते रघुपतेर्नयनं तृतीय-
मास्कन्दनीयमिति हा मनुषे कलत्रम्।
अम्भोजमित्यलिकसंभवमक्षि शंभो-
र्मन्दाकिनीमधुकरस्तु यथा मदान्धः॥ ३५॥

रक्ष इति। हे रक्षःपते, रघुपतेस्तृतीयं नयनम्। तृतीयनेत्ररूपमित्यर्थः। अतएव रूपकालंकारः। एतेन रामस्यात्यन्तप्रेमास्पदत्वं रावणस्यातिदुराक्रमत्वं च सूच्यते। कलत्रं भार्यां सीताम्। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। आस्कन्दनीयमाक्रमणीयमिति मनुषेऽवबुध्यसे। हा। आत्मविनाशहेतुभूतेयमिति न जानासीति विषाद इत्यर्थः। 'हा विषादशुगर्तिषु'इत्यमरः। कथमिव। मदेनान्धो विवेकशून्योऽत एव मन्दाकिनीमधुकरो वियद्गङ्गासंचरणशीलो भृङ्गः। तुशब्दो व्यवच्छेदकः। शंभोस्त्र्यम्बकस्यालिकसंभवं ललाटस्थम्। 'ललाटमलिकं गोधिः' इत्यमरः। अक्षि अभ्यात्मकं नेत्रमम्भोजमिति यथा मनुते तद्वत्सोऽप्यात्मविनाशहेतुभूतमेतदिति न जानातीत्यर्थः। मन्दाकिनीग्रहणं कनककमलसंभवेन तत्सादृश्यललाटनेत्रेऽम्भोजभ्रान्तिजननार्थमित्यवगन्तव्यम्। उपमालंकारः। वृत्तं तु पूर्ववत्॥

वक्तव्यान्तरमपि विद्यत इत्याह—

किंच

एकं हैहयसंभवात्परिभवान्म्लानं द्वितीयं पुन-
र्दैत्येन्द्राविनयात्तृतीयमपि मे ताताहिताद्वैकृतात्।
इत्थं त्वच्चरितैः पितामहमुखान्येकं विनैवाभवं-
स्तच्चैकं न विधेहि दाशरथये देया त्वया मैथिली॥ ३६॥

किंचेति॥ तदेवाह—एकमिति। हे दैत्येन्द्र, हैहयसंभवात्कार्तवीर्यकृतात्परिभवात् कारागारनिक्षेपरूपतिरस्काराद्धेतोः। 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः। एकं पितामहमुखं म्लानं खिन्नम्। मत्कुलनन्दनस्य परिभवः संप्राप्त इति तेजोहीनमभूदित्यर्थः। तथाविनयाल्लोकविद्विष्टाचरणरूपात्त्वदीयदुर्नयाद्द्वितीयं मुखं म्लानम्। तथा मे मम तातेन पित्रा वालिना आहिताद्विरचिताद्वैकृताद्वालेन निबध्य कक्षनिक्षेपणरूपाद्विकारात्तृतीयमपि मुखं म्लानम्। इत्थमनेन प्रकारेण त्वच्चरितैस्तावकदुर्व्यापारैः पितामहस्य चतुर्मुखस्य मुखानि वदनानि। एकमेव विना त्रीणि मुखानि म्लानान्यभवन्। बभूवुरित्यर्थः। तच्च तदप्यवशिष्टमेकं मुखमित्यर्थः। एवमुक्तरीत्या म्लानं न विधेहि न कुरुष्व। अतस्त्वया मैथिलीं दाशरथये देया दातुं योग्या। अन्यथा तन्मुखमपि मुखत्रयावशिष्टमपि म्लानं भविष्यतीत्यर्थः। कूटस्थब्रह्मणो लज्जाविमुखतां विदधतस्ते धिग्जीवि-

१. 'वादूग्लानं' इति पाठः. २. 'सुखानि' इति पाठः.

तमिति भावः । अत्र पितामहमुखत्रयम्लान्यसंवन्धेऽपि तत्संवन्धोक्तेरतिशयोक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥

> कौबेरस्य तु पुष्पकस्य हरणं कैलासविक्षेपणं
> दिक्पालाक्रमणं च जल्पसि मुहुः किंवा यशस्तावता ।
> वेषं [1]संयमिनां विधाय विजने देवीं वने जानकीं
> वेगादाहरता त्वयाद्य रचितं[2] वीरव्रतस्योचितम् ॥ ३७ ॥

**कौबेरस्येति** । कुबेरस्येदं कौबेरम् । 'तस्येदम्' इत्यण् । तस्य पुष्पकस्य पुष्पकाख्यविमानस्य हरणमपहरणं च । ज्येष्ठभ्रातरं जित्वा तदीयपुष्पकहरणेन महापौरुषं कृतमिति सोल्लुण्ठनोक्तिः । कैलासविक्षेपणं हरनिवासशैलोत्तोलनं बाहुबलं च विद्यत इति स्वामिद्रोहकरणं तदधस्ताद्द्वितीयं बलं निरूपितवानसीति मर्मोद्घाटनोक्तिः । दिक्पालानामिन्द्रादिदिङ्मर्यादापालकानामाक्रमणमास्कन्दनं च सांकर्यनिरासपूर्वकं लोकं परिपालयतां साधूनामिन्द्रादीनां चापराधकारिणस्तव दुरात्मत्वं किं वक्तव्यमित्याततायित्वोक्तिः । मुहुः पुनः पुनर्जल्पसि कथयसि । तावता पुष्पकाद्याहरणादिना किं वा यशः कीर्तिः । न किमपीत्यर्थः । कुतः । संयमिनां संन्यासिनां वेषं काषायवसनदण्डधारणरूपं नेपथ्यं विधाय स्वीकृत्य । कपटसंन्यासी भूत्वेत्यर्थः । विजने वने निर्जनारण्ये देवीं पूज्यां जानकीं वेगात् श्रीरामदर्शने सद्य एव निपातो भवेदिति समुत्पन्नभयसंभ्रमादाहरता त्वया अद्येदानीं वीरव्रतस्य वीरधर्मस्योचितमनुरूपं रचितं कृतम् । सकललोकश्लाघ्यां जानकीं श्रीरामासमक्षं चौर्येणापहरता त्वया सम्यक्पौरुषं प्रकटितमित्यर्थः । वृत्तं पूर्ववत् ॥

निगमयति—

**किं बहुना ॥**

> पूजोपहाररचनाय पुरा पुरारे-
> श्छिन्नेषु मूर्धसु नवस्ववशेषितं यत् ।
> देवस्तदद्य कुतुकी दशमं शिरस्ते
> रामो बलिं रचयितुं रणदेवतायै ॥ ३८ ॥

**किं बहुनेति** । बहूक्त्या किमित्यर्थः ॥ **पूजेति** । पुरा पूर्वं पुरारेरीश्वरस्य पूजायामुपहाररचनाय नैवेद्यकरणार्थं नवसु मूर्धसु शिरःसु छिन्नेषु सत्सु यच्छिरः । दशममित्यर्थः । अवशेषितमवशिष्टं कृतं तत्ते । दशममित्यर्थः । देवो वीरलक्ष्म्या द्योतनशीलः श्रीरामोऽद्येदानीं रणदेवतायै रणशक्त्यै बलिं पूजोपहारं रचयितुं कर्तुं कुतुकी कौतुकवान् । स्वापराधं निवेद्य 'पुनर्जानक्यप्रदाने क्षिप्रमेव रामस्त्वां निहनिष्यतीति भावः । 'बलिः पूजोपहारे च करे दैत्यान्तरेऽपि सः' इति नानार्थरत्नमाला । वसन्ततिलकावृत्तम् ॥

---

१. 'संयमिनः' इति पाठः. २. 'रचिताम्' इति पाठः.

अनन्तरमरुंतुदभाषणरोषणेन रावणेन 'गृह्यतां गृह्यतामयम्' इति सरयमादिष्टानवलम्बितभुजप्रकोष्ठानाशरांश्चतुरश्चतुरोऽयं भुजंगानिव विहंगाधिपो गृहीत्वा [3]दिवि समुत्पत्य चैतान्निपात्य पादेन तत्प्रासादशृङ्गं रिपोः शिरोभङ्गमिव विभिन्दन्नविन्दन्कमप्यात्मन प्रतिरथं पङ्क्तिकण्ठोपकण्ठभुवः पङ्क्तिरथभुवो विवेश निवेशम् ॥

अनन्तरमिति । अनन्तरमङ्गदवचनानन्तरम् । अरुं तुदतीत्यरुंतुदं मर्मस्पृक् । तेन भाषणेन हेतुना रोषणेन रोषवता । 'कर्तरि ल्युट्' । रावणेनायं वानरो गृह्यतां गृह्यतामिति चापलाद्द्विरुक्तिः । 'संभ्रमेण प्रवृत्तिश्चापलम्' इति काशिका । रोषातिरेकाच्च संभ्रमः । इत्यनेन प्रकारेण सरयं सत्वरमादिष्टानाज्ञप्तान् अतएवावलम्बितौ गृहीतौ भुजप्रकोष्ठौ कूर्पराधःप्रदेशौ च यैस्तान् । 'कक्ष्यान्तरं प्रकोष्ठश्च प्रकोष्ठः कूर्परादधः' इति शाश्वतः । चतुरश्चतुःसंख्याकानाशरान्राक्षसान् । चतुरस्तत्कालकर्तव्यबुद्धिकुशलोऽयमङ्गदो विहंगाधिपो गरुत्मान्भुजंगान्सर्पानिव गृहीत्वा दिव्यन्तरिक्षे समुत्पत्योत्प्लुत्यैतानाशरान्निपात्य भुवि पातयित्वा च पादेन तत्प्रासादशृङ्गं रावणसौधशिखरं रिपो रावणस्य शिरोभङ्गं शिरोविदारणमिवेत्युत्प्रेक्षा । विभिन्दन्विदारयन् । तथात्मनः कमपि प्रतिरथं प्रतिभटमविन्दन्नलभमानः सन् पङ्क्तिकण्ठोपकण्ठभुवो रावणनिकटप्रदेशात्पङ्क्तिरथभुवो दशरथनन्दनस्य निवेशं शिविरं विवेश प्रविष्टवान् ॥

रघुतनयस्ततो विदितरावणदुर्विनयः
कुपितमना मनागिव दधे कुटिलां भ्रुकुटीम् ।
अथ परिवव्रुराशरपुरं हरयः सरयं
युगविगमे यथा युगपदम्बुधिमौर्वशिखाः ॥ ३९ ॥

रघुतनय इति । ततोऽङ्गदप्रवेशानन्तरं रघुतनयो रघुनन्दनो विदितोऽङ्गदवचनाद्विज्ञातो रावणदुर्विनयः सीताप्रत्यर्पणाभावरूपरावणदुर्नीतिर्येन स तथोक्तः । अतएव कुपितमनाः कोपाविष्टचित्तः सन् । मनाग्धीरोदात्तत्वादीषत् । इवशब्दो वाक्यालंकारे । 'इवेतीषदर्थोपमावाक्यालंकारेषु' इति गणव्याख्याने । भ्रुकुटिं भ्रूभङ्गं कुटिलां वक्रां दधे धृतवान् । अथानन्तरं हरयो वानरा युगविगमे प्रलये युगपदेकवारमेवाम्बुधिमौर्वशिखा यथा वडवानलज्वाला इव । 'और्वस्तु वाडवो वडवानलः ।' इत्यमरः । 'इववद्वायथाशब्दौ' इति दण्ड्याचार्यानुशासनात् । सरयं सत्वरमाशरपुरं लङ्कां परिवव्रुः परिवेष्टयामासुः । उपरुरुधुरित्यर्थः । उपमालंकारः ॥

---

१. 'एवमरुंतुदभाषण' इति पाठः. २. 'गृह्यतामयं निगृह्यतामिति' इति पाठः. ३. 'भुवि निपात्य' इति पाठः. ४. 'पादाहतेन' इति पाठः. ५. 'तत्' इति नास्ति क्वचित्. ६. 'प्रासादशृङ्गमपि भिन्दन्' इति पाठः. ७. 'कमपि' इति नास्ति क्वचित्. ८. 'पङ्क्तिकण्ठोपकण्ठभुवः' इति नास्ति क्वचित्.

ततो मदपरिप्लवप्लवगवीरसांराविण-
क्षणक्षुभितकोणपप्रकरपाणिकोणाहतः ।
रवैरधिकभैरवैरुपरुरोध रोदोन्तरं
तरङ्गितघनाघनस्तनितबन्धुभिर्दुन्दुभिः ॥ ४० ॥

तत इति । ततो लङ्कोपरोधानन्तरम् । समन्ताद्रावः संरावः । कोलाहल इति यावत् । 'आरवारावसंराव-' इत्यमरः । तस्य भावः सांराविणम् । 'अभिविधौ भाव इनुण्' इति भावार्थे इनुण् । 'अणिनुणः' इति स्वार्थेऽण्प्रत्ययः । आदिवृद्धिः । 'इनण्यनपत्ये' इति प्रकृतिभावः । मदपरिप्लवानां दर्पोद्रिक्तानां प्लवगवीराणां वानरवीरभटानां सांराविणक्षणे कोलाहलकाले तदुत्सवे वा । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः । क्षुभितः क्षोभं प्राप्तो यः कोणपप्रकरो राक्षसनिवहः । 'राक्षसः कोणपः क्रव्याद्' इत्यमरः । तस्य पाणिकोणेन हस्तप्रदेशेन । अथवा पाणौ यः कोणो वाद्यवादनदण्डविशेषः । 'कोणो वीणादिवादनम्' इत्यमरः । तेनाहतस्ताडितो वादितो दुन्दुभी रणभेरी । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । अधिकभैरवैरत्यन्तभीषणैस्तरङ्गितमविच्छिन्नं यद्घनाघनस्तनितं वर्षुकाब्दगर्जितं तस्य बन्धुभिः । तत्सदृशैरित्यर्थः । अतएवोपमा । 'ज्ञातिसोदरबन्ध्वादिशब्दाः सादृश्यवाचकाः' इत्याहुः । 'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः' इत्यमरः । रवैर्झाङ्कारैः । रोदोन्तरं द्यावाभूमीमध्यकुहरमुपरुरोधावृणोत् । राक्षससमरसंनाहभेरीझाङ्कारः सर्वत्र व्याप्तोऽभूदित्यर्थः । अत्र दुन्दुभिरवाणां रोदोन्तरोपरोधासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । पृथ्वीवृत्तम् ॥

तेन[3] समन्ततः कन्दलयता दलयतेव जगन्ति दुन्दुभिनिर्घोषेण रोषेण च प्रेर्यमाणा वृद्धाः[4] केसरिण इव गिरिकन्दरान्मन्दिरान्निर्गत्य गत्यन्तरायसंधायकान्यपत्यानीवानिमित्तान्यविलोकमाना[5] विमानाधिगतविबुधसीमन्तिनीभिः सह विजिहीर्षयेव प्रस्थानसमयपरिम्लानमुखीः सुमुखीरप्यगणयन्तो निरन्तरज्वलितकोपानलनयनकोणारुणालातशतनिपातवित्रासचलितनिजवारणनिवारणावेशपरवशा[6] दिशामुखमुखरशिवारवाम्रेडितक्ष्वेलिताकुलकुलमहीध्रा[7][8] गृध्रायतपक्षविक्षेपाकुलपताकानीकसमुत्तुङ्गशताङ्गसंघातपरिगता[9] नितान्तनिशितकृतान्तदंष्ट्रापटलखरतरनखरपट्टिसप्रासपरशुगदामुसलपरिघद्रुघ-[10][11][12]

१. 'परिप्लवव' इति पाठः. २. 'संरम्भण' इति पाठः. ३. 'तेन च' इति पाठः. ४. 'वृद्धाः इति नास्ति क्वचित्. ५. 'अनवलोकमाना' इति पाठः. ६. 'अनिवारणावेशपरवशनिजाशयाः' इति पाठः. ७. 'मुखरित' इति पाठः. ८. 'व्याकुलीकृत' इति पाठः ९. 'विशेषकृतपताकानिकायपुनरुक्तसमुत्तुङ्ग' इति पाठः. १०. 'निशितकृतान्तदंष्ट्राखरतर' इति पाठः ११. 'पट्टिस' इति पाठः. १२. 'मुसलशक्तितोमरमुद्गरपरिघदुघण' इति पाठः.

णधारिणो दारुणाजगरसंतानसंवीता इव विन्ध्यकूटा व्यूढातिकरालकालायसकङ्कटा विकल्पा इव कल्पाम्बुदानां व्यत्यय इव कालरात्रेर्विवर्ता इव कलिकालस्यापि भयंकराः संगराङ्गणमवतरन्तः समीरयन्तो वीरवादानादाय शरासनमासारैरिव गिरिमम्भोधरा दूरापातिभिः शिलीमुखैर्वलीमुखबलमखिलमक्षोभयन्त रक्षोभटाः ॥

तेनेति। समन्ततः सर्वत्र कन्दलयता व्याप्नुवता, अतएव जगन्ति भूर्भुवःस्वर्लोकान्दलयता विदारयतेवेत्युत्प्रेक्षा। तेन पूर्वोक्तेन दुन्दुभिनिर्घोषेण रोषेण वानररसांराविणजनितामर्षेण च प्रेर्यमाणः, अतएव गिरिकन्दरात्। गिरिदरीभ्य इत्यर्थः। 'दरी तु कन्दरो वा स्त्री' इत्यमरः। बुद्धाः सुप्तोत्थिताः केसरिणः सिंहा इवेत्युपमा। मन्दिरान्मन्दिरेभ्यो निर्गत्य निष्क्रम्य गत्यन्तरायसंधायकानि क्व व्रजसीत्यादिनिषेधवचनपादग्रहणादिना गमनविघ्नकारीणि। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। अपत्यानि नन्दनानीवेत्युपमा। 'आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे' इत्यमरः। अनिमित्तानि प्रतिकूलवातादिदुःशकुनान्यविलोकमानाः। न गणयन्त इत्यर्थः। समरपारवश्यादिति भावः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। तथा विमानाधिगता व्योमयानाधिष्ठिता विबुधसीमन्तिन्यः सुरसुन्दर्यस्ताभिः सह विजिहीर्षया विहरणेच्छयेवेति हेतूत्प्रेक्षा। रणाभिमुखनीताहतानां सुरसुन्दरीसंभोगलाभादिति भावः। विपूर्वाद्धरतेः सन्नन्तात्स्त्रियामप्रत्यये टाप्। प्रस्थानसमये रणप्रयाणकाले परिम्लानमुखीर्विषण्णवदनाः। एतच्च दुर्निमित्तमिति भावः। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीप्। सुमुखीर्निजवधूरप्यगणयन्तः। अनाद्रियन्त इत्यर्थः। तथा निरन्तरमविच्छिन्नं ज्वलितः प्रज्वलन्कोप एवानलो येषां ते तथोक्ता नयनकोणा नेत्रान्तास्त एवारुणालातशतानि। अनेकारुणोल्कानीत्यर्थः। 'अलातमुल्मुकं ज्ञेयं नपुंसकमिदं द्वयम्' इति प्रतापमार्तण्डः। तेषां निपातात्प्रसाराद्वित्रासो भयम्। उल्मुकदर्शने वारणा बिभ्यन्तीति प्रसिद्धिः। तस्माच्चलिता विमार्गगता ये निजवारणा आत्मीयगजास्तेषां निवारणावेशे मार्गप्रवर्तनकृत्ये परवशाः प्रमत्ताः। अनवधाना इत्यर्थः। तथा दिशामुखेषु दिगन्तरालेषु मुखरा दुर्निमित्ततयाशुभसूचकवादनतत्परा याः शिवाः क्रोष्टारस्तासां रवाम्रेडितानि। द्विस्त्रिरुक्तवाणीत्यर्थः। 'शिवा हरीतकी क्रोष्ट्री' इति वैजयन्ती। 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः। क्ष्वेलिताः सिंहनादाः। 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः। कर्तरि क्तः। तैराकुलाः संकुलाः कुलमहीध्राः कुलपर्वता येषां ते। गृध्राणां कङ्कानां य आयता विस्तृताः पक्षास्तेषां विक्षेपैः प्रेरणैराकुलानि संकुलानि पताकानीकानि पताकायुक्तसैन्यानि येषां ते तथोक्ताः। 'अनीकं तु रणे सैन्ये' इत्यमरः। कङ्काधिष्ठितपताकावन्त इत्यर्थः। 'आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे' इति प्रसिद्धिः। तथा समुत्तुङ्गा अत्युन्नता ये शताङ्गसंघाता आयतस्यन्दनवृन्दानि तत्परिगताः। तदारूढा इत्यर्थः। 'शताङ्गः स्यन्दनो

१. 'कलिकालस्य च भयंकराः समराङ्गणमवतारयन्तः' इति पाठः. २. 'आदाय च' इति पाठः.

रथः' इत्यमरः। तथा नितान्तं निशितानि तीक्ष्णानि यानि कृतान्तस्य यमस्य दंष्ट्रापटलानि दन्तविशेषफलकानि खरतराश्च तद्वन्नखरा निशिता येन पट्टसा विशालसंनिवेशखड्गविशेषाः। प्रास्यन्त इति प्रासाः कुन्तापरपर्यायाः क्षेपणीया आयुधविशेषाः। तदुक्तं वृत्तिकारेण—'अकर्तरि च कारके संज्ञायाम्' इत्यत्र प्रास्यन्त इति प्रासा इति। परशवः कुठाराः, गदाः प्रसिद्धाः, मुसलानि अयोग्राणि, परिघा अयोमयदण्डविशेषाः। 'परिघः परिघातनः' इत्यमरः। द्रुघणा मुद्गरापरपर्याया अयोमया गदाः। 'द्रुघणे मुद्गरघनौ' इत्यमरः। कृपाणः करवालश्चेति द्वन्द्वः। 'कौक्षेयको मण्डलाग्रः करवालः कृपाणकः' इत्यमरः। तानायुधविशेषान्धारयन्ति ताच्छील्येनेति तथोक्ताः। ताच्छील्ये णिनिः। तथा दारुणा भयंकरा येऽजगरसंताना महाकायसर्पविशेषनिकायास्तैः संवीताः संवेष्टिता विन्ध्यकूटा विन्ध्याचलशिखराणीवेत्युपमा। 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः। अतिकराला अत्यन्तभीषणाः कालायसकङ्कटा लोहमयोरश्छदास्ते व्यूढा आमुक्ता यैस्ते तथोक्ताः। 'करालो दन्तुरे तुङ्गे भीषणे वैकृतेऽपि च', 'उरश्छदः कङ्कटकः' इति वैजयन्ती। तथा कल्पाम्बुदानां प्रलयकालमेघानां विकल्पा इव। कालरात्रेः प्रलयकालरात्रेर्व्यक्तयो मूर्तय इव। कलिकालस्य महाघोरकलियुगसमयस्य विवर्ताः परिणामविशेषा इव प्रतीयमाना इत्युत्प्रेक्षा। तथा कालस्य च यमस्यापि भयंकरा भयप्रदा इत्यतिशयोक्तिः। 'मेघर्तिभयेषु कृञः' इति खशि मुमागमः। संगराङ्गणं युद्धभुवमवतरन्तः प्रविशन्तो वीरवादान् 'छिन्धि भिन्धि' इत्यादिवीरालापान्समीरयन्त उच्चारयन्तो रक्षोभटा राक्षसंयोधाः। शरासनम्। कार्मुकाणीत्यर्थः। आदाय स्वीकृत्याम्भोधरा मेघा आसारैर्धारासंपातैः। 'धारासंपात आसारः' इत्यमरः। गिरिमिवेत्युपमा। दूरापातिभिरत्यन्तदूरप्रसारिभिः शिलीमुखैर्बाणैरखिलं वलीमुखबलं वानरसैन्यमक्षोभयन्त। क्षोभमनयन्नित्यर्थः।

ततो धुतनखायुधस्तरुपरित्रुटत्तोमरः
शिलानिहतमुद्गरः शिखरिभिन्नमत्तद्विपः।
स्वपक्षविजयैषिभिर्दिवि सुरासुरैरातुरै-
रलक्षि हरिरक्षसामतिभयंकरः संगरः॥ ४१॥

तत इति। ततो विक्षोभणानन्तरं नखैर्वानरनखैर्धुता विक्षिप्ता आयुधा राक्षसप्रयुक्तबाणपट्टसाद्यायुधा यस्मिन्स तथोक्तः। तरुभिः परित्रुटन्तः परितो विशीर्यन्तस्तोमरा दण्डविशेषा यस्मिन्स तथोक्तः। शिलाभिर्निहता विदलिता मुद्गरा यस्मिन्स तथोक्तः। शिखरिभिः पर्वतैर्भिन्ना विदारिता मत्तद्विपा मत्तगजा यस्मिन्स तथोक्तः। अतएवातिभयंकरोऽतिदारुणो हरिरक्षसाम्। वानराणां राक्षसानां चेत्यर्थः। संगरो रणः स्वपक्षयोर्वानरराक्षसबलयोर्विजयमिच्छन्त्याकाङ्क्षन्त इति तथोक्तैरतएवातुरैरत्यन्तव्यग्रचित्तैर्दिव्यन्तरिक्षे स्थितैः सुरासुरैर्देवदानवैरलक्षि दृष्टः। 'चिण् भावकर्मणोः' इति चिण्। 'चिणो लुक्' इति लुक्। सुरासुरैरित्यत्र 'येषां च विरोधः शाश्वतिकः'

१. 'आकुलैः' इति पाठः.

इति न द्वन्द्वैकवद्भावः। यत एषां कार्यत एव विरोधो व्याघ्रादिवन्न शाश्वतिक इत्याहुः। अथवा सुरैः संगता असुराः। मयूरव्यंसकादित्वात्समास उत्तरपदलोपश्च। ननु सुराश्च असुराश्चेति द्वन्द्वः। अत्र हि–'येषां च विरोधः शाश्वतिकः' इत्येकवद्भावः स्यात्। पृथ्वीवृत्तम्॥

इत्थं प्रवृद्धयुद्धसंरम्भयोरुभयवलयोः संध्यासमयः प्रवृत्त इत्याह—

क्रमेण च कुपितकपिवीरदूरीकृतनैर्ऋतवीरभुजप्रतापानल इवास्तं भजति भानुमति, मथितायुधिकगलनालप्रणालीपरीवाहलोहितनदीपूर इव दूरमन्तरितहरिदाभोगे संध्यारागे समुदञ्चिते, विक्रान्तहरिनखाक्रान्तदन्तावलविपुलकुम्भस्थलमुक्तमुक्ताकलाप इव विजृम्भमाणे वियति तारागणे, रणरभसचलितरथतुरगपदातिगजपदाहतविश्वंभरान्तरालजन्मुषि रजसीव भुवनमास्कन्दति तमसि, तामसीचरेष्विव सशोकेषु यामिनीविरहविहगेषु, आशरकरेष्विव सकोशेषु तामरसेषु, दाशरथिवल इव प्रमदाकरे कुमुदाकरे॥

क्रमेणेति। किंचेति चार्थः। क्रमेण कालक्रमेण कुपितैः राक्षससंप्रहारक्रुद्धैः कपिवीरैर्वानरभटैर्दूरीकृतो दूरतः प्रास्तो यो नैर्ऋतवीराणां राक्षसयोधानां भुजप्रतापानलो बाहुप्रभावाग्निस्तस्मिन्निव भानुमति सूर्येऽस्तमदर्शनं भजति सति। अस्तमित्यकारान्तमव्ययम्। 'अस्तमदर्शने' इत्यमरः। सूर्यपक्षेऽस्तमस्ताचलम्। 'अस्तस्तु चरमः क्ष्माभृत्' इत्यमरः। तथायुधं प्रहरणमेषामित्यायुधिकाः। 'प्रहरणम्' इति ठक्। मथितानि छिन्नानि यान्यायुधिकानां गलनालानि तान्येव प्रणाल्यो जलनिर्गमनमार्गास्ताभ्यः परिवहति प्रवहतीति तत्परीवाही यो लोहितनदीपूरः शोणितसरित्प्रवाहस्तस्मिन्निव संध्यारागे। दूरम्। सर्वत्रेत्यर्थः। अन्तरित आच्छादितो हरिदाभोगो दिग्विस्तारो येन तस्मिंस्तथोक्ते सति। दिक्षु व्याप्रियमाणेषु संस्थित्यर्थः। विक्रान्ताः पराक्रमवन्तो ये हरयः कपयस्त एव हरयः सिंहा इति श्लिष्टरूपकम्। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥' इत्यमरः। तेषां नखैराक्रान्तानि विदारितानि यानि दन्तावलानां महागजेन्द्राणां विपुलकुम्भस्थलानि तैर्मुक्तस्त्यक्तो यो मुक्ताकलापो मौक्तिकप्रकरस्तस्मिन्निव तारागणे नक्षत्रमण्डले वियत्याकाशे। 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' इत्यमरः। विजृम्भमाणे सति। गजानां मुक्ताकरत्वमुक्तम्—'करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि॥'

१. 'विदूपित' इति पाठः. २. 'वीर' इति नास्ति क्वचित्. ३. 'भगवति भानुमति मथितायुधयातुधानगल' इति पाठः. ४. 'प्रणालपरिवाहि' इति पाठः. ५. 'विदूरम्' इति पाठः. ६. 'समुदञ्चिते' इति नास्ति क्वचित्. ७. 'वियति विजृम्भमाणे' इति पाठः. ८. 'ताराङ्गणे' इति पाठः. ९. 'गजतुरगपदातिपादाहतविश्वविश्वंभरा' इति पाठः. १०. 'यामिनीविरहविहगेषु आशरवरेष्विव सकोशेषु तामरसेषु' इति नास्ति क्वचित्.

इति। तथा रणरभसेन समरसंभ्रमेण चलितं प्रवृत्तं यद्रथतुरगपदातिगजम्। सेनाङ्गत्वाद्द्वन्द्वैकवद्भावः। तस्य पदैराहतमवदारितं यद्विश्वंभरान्तरालं रणक्षोणीमध्यं तत्र जनुर्जन्म यस्य तस्मिन्रजसि धूलाविव तमस्यन्धकारे भुवनं जगदास्कन्दत्याक्रमति सति। अत्र 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यभिधानात्तत्क्रमेणैव गजादीनां वक्तव्यत्वे तथा नोक्तमिति चोद्यं यद्यपि, तथापि क्रमो नात्र विवक्षित इति बहुपुस्तकेष्वेवमेव दर्शनात्। ननु 'यवाग्वाग्निहोत्रं जुहोति, यवागूं पचति' इत्यत्र पाठक्रमानुपपत्तावर्थक्रमो यथा स्वीकृतस्तद्वदत्रापि यथायोग्यमन्वयोऽङ्गीक्रियतामिति चेत्सत्यम्। अपौरुषे वेदवाक्ये यथातथा वास्तु। पुंवाक्ये तु श्रवणानन्तरमेव प्रयोक्तुस्तारतम्यानभिज्ञप्रतीतेरन्वयविलम्बासहिष्णुत्वाद्दोषोऽत्र दुर्वार इत्यलमतिप्रसङ्गेन। तथा तमसीचरेषु रात्रिंचरेष्विव। 'तमिस्रा तमसी रात्रिः' इत्यमरः। यामिनीविरहविहगेषु चक्रवाकपक्षिषु। उभयत्रापि 'पुमान्स्त्रिया' इत्येकशेषः। सशोकेषु सविषादेषु सत्सु। एकत्र महाविपत्तिप्रत्यासत्तेरन्यत्र विरहाकुलितत्वाच्चेति भावः। तथाशरकरेषु राक्षसभटहस्तेष्विव तामरसेषु पङ्केरुहेषु सकोशेषु खड्गापायात्केवलतत्पिधानेषु सत्सु। अन्यत्र सकुड्मलेषु सत्सु। 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः। तथा दाशरथिबले श्रीरामसैन्य इव कुमुदाकरे कैरवाकरे प्रमदाकर उल्लासभाजि सति। नात्र तुल्ययोगिता। प्रतापानलभानुमदादीनां केवलप्रकृतेऽप्यौपम्यस्य गम्यत्वेन तदनुत्थानान्नापि श्लेषः। केवलप्रकृतश्लेषे विशिष्य श्लेषायोगात्। तस्मादुपमानोपमेयसाधारणधर्मसादृश्यप्रतिपादकानां चतुर्णां प्रयोगेणेयमनेकेवशब्दकापि पूर्णोपमा श्लेषसंकीर्णा॥

ततः किं तत्राह—

**आसारधारां विकिरञ्शराणामाश्वासयन्मानसमाशराणाम्।**
**वीरो हरीन्संयति मेघनादो विव्याध हंसानिव मेघनादः॥ ४२॥**

**आसारेति**। शराणां बाणानाम्, अन्यत्र उदकानाम्। आसारधारां धारासंपातपरम्पराः। 'धारासंपात आसारः' इत्यमरः। विकिरन्विक्षिपन्। अन्यत्र प्रवर्षन्निति। तद्वतौ तत्त्वमुपचर्यते। अत एवाशराणां राक्षसानाम्। 'राक्षसः कोणपः क्रव्यात्क्रव्यादोऽस्रप आशरः' इत्यमरः। अन्यत्रासमन्ताच्छरवत्प्रवर्तन्ते तृष्णयेत्याशराणाम्। चातकादिपक्षिविशेषाणामित्यर्थः। मानसमाश्वासयन्। एकत्र भयनिवारणेन, अपरत्र 'सर्वसहापतितमम्बु न चातकानाम्' इति भूगतस्य तेषामविषयत्वादभौमाम्बुदानेनोज्जीवयन्नित्यर्थः। वीरो रणशूरो मेघनाद इन्द्रजित्। उत्पत्तिसमय एव मेघवन्नदनान्मेघनाद इति व्युत्पादयन्ति। मेघनादोऽभ्रनिर्घोषो हंसानिव संयति युद्धे हरीन्वानरान्विव्याध निजघान। श्लेषसंकीर्णेयमुपमा। इन्द्रवज्रावृत्तम्॥

**रणे तदनु दारुणे रभसमङ्गदो रावणेर्द्रुमेण महताहताखिलधुरीणयानव्रजः।**

---

१. 'प्रकिरन्' इति पाठः. २. 'हतश्लथधुरीणयानव्रजम्' इति पाठः.

शितेन शतकोटिना शिखरिकूटमिन्द्रो यथा
ममन्थ च रथं मनोरथमपि क्षणाद्रक्षसाम् ॥ ४३ ॥

रण इति । तदनु तदनन्तरम् । दारुणे भीषणे रणे । अङ्गदो महता महोन्नतेन द्रुमेण रभसं वेगयुक्तं यथा तथा । 'रभसो वेगहर्षयोः' इति विश्वः । अर्शआद्यच्प्रत्ययः । रावणे रावणात्मजस्येन्द्रजितः । 'अत इञ्' । अखिलं समस्तं । धुरं वहतीति धुरीणो धुरंधरः । 'खः सर्वधुरात्' इत्यत्र योगविभागात्खप्रत्ययः । तादृशो यो यानव्रजो रथाश्वनिवहः स आहतो मारितो येन स तथोक्तः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । इन्द्रः शितेन तीक्ष्णेन शतकोटिना दम्भोल्या शिखरिकूटं यथा पर्वतशिखरमिव रथं रावणिस्यन्दनं रक्षसां मनोरथं विजयाभिलाषमपि क्षणात्क्षणमात्रेण ममन्थ बभञ्ज । अत्र रथमनोरथयोः केवलप्रकृतयोरेव मथनरूपसमानधर्मेणौपम्यस्य गम्यमानत्वात्केवलप्रकृतगोचरा तुल्ययोगिता । सा चोक्तोपमया संसृज्यते । पृथ्वीवृत्तम् ॥

वियत्तले तदनु निलीय मायया
स लक्षयन्रघुतनयं सलक्ष्मणम् ।
अजिह्मगानधिगतजिह्मगाकृती-
नमर्षतः समिति ववर्ष रावणिः ॥ ४४ ॥

वियदिति । तदनु रथमथनानन्तरं स रावणिरिन्द्रजिन्मायया कैतवेन वियत्तले नभस्तले निलीय । निगूढतया स्थित्वेत्यर्थः । रघुतनयं रघुनन्दनं सलक्ष्मणं लक्षयंल्लक्षीकुर्वन् । 'लक्ष्यं लक्षं शरव्यं च' इत्यमरः । 'तत्करोति–'इति ण्यन्ताल्लटः शत्रादेशः । अधिगतजिह्मगाकृतीन्प्राप्तपन्नगाकारान् । 'उरगः पन्नगो भोगी जिह्मगः पवनाशनः' इत्यमरः । अजिह्ममकुटिलं गच्छन्तीत्यजिह्मगाञ्शरानमर्षतः कोपात् । समिति युद्धे ववर्ष । नागपाशास्त्राणि प्रयुक्तवानित्यर्थः । रुचिरावृत्तम्—'चतुर्ग्रहैरिह रुचिरा जभौ स्जगाः' इति लक्षणात् ॥

लक्ष्मणानुगतं रामचन्द्रं राहुभयंकराः ।
बबन्धुर्दारुणतमा बन्धच्छिदममी शराः ॥ ४५ ॥

लक्ष्मणेति । लक्ष्मणेन चिह्नेन सौमित्रिणा चानुगतमित्यर्थश्लेषः । एकनालावलम्बिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेः । बन्धच्छिदं संसारनिवर्तकं रामचन्द्र इव तं राहुभयंकरा दारुणतमा अत्यन्तदारुणा अमी शरा नागपाशरूपा बबन्धू रुरुधुः । शरकार्यं वेधनम् । पन्नगकार्यं वेष्टनम् । ततो वेष्टनं चक्रुरित्यर्थः । अत्र राहुभयंकरा इति समस्तोपमालिङ्गाद्रामचन्द्रमित्यत्रोपमितसमासाश्रयणं युक्तम् ।अतएवोक्तश्लेषसंकीर्णेयमुपमा । बन्धच्छिदं बबन्धुरित्यत्र विरोधाभासस्य गम्यत्वात्त्रयाणां संसृष्टिः ॥

ततः किं जातं तत्राह—

यावद्याति पुरं पुरंदरजयी यावद्दशास्याज्ञया
सीता पुष्पकवासिनी रघुसुतौ दृष्ट्वा पुरः शोचति ।

---

१. 'ममाथ' इति पाठः. २. 'विलीय' इति पाठः.

तावत्ते दलिताः सुपर्णगरुतां वातेन वाताशना
दीप्तौ चन्द्रदिवाकराविव तमोमुक्तौ ततो राघवौ ॥ ४६ ॥

यावदिति । यावद्यदा पुरंदरजयी इन्द्रजित् । 'जिदृक्षि—' इत्यादिना इनिप्रत्ययः । पुरं लङ्कां याति । रघुसुतौ रामलक्ष्मणौ नागपाशबद्धौ । अतः कृतकृत्योऽस्मीति गच्छतीत्यर्थः । तथा यावद्दशास्याज्ञया रावणनियोगेन पुष्पकवासिनी पुष्पकाख्यविमानारूढा सीता पुरोऽग्रे रघुसुतौ नागपाशबद्धौ रामलक्ष्मणौ दृष्ट्वा शोचति विषीदति । यत्प्राप्त्याशयेयं वर्तते तावेवं निबद्धाविति प्रदर्शयतेति रावणेन नियुक्तै राक्षसैः । पुष्पकमारोप्य सीतायास्तदानीं तत्रानीतत्वादिति भावः । तावत् तदानीमेव ते पूर्वोक्ता वाताशना नागपाशाः सुपर्णगरुतां गरुडपक्षाणां वातेन दलिता निर्भिन्ना इति वेगातिशयोक्तिः । ततस्तदनन्तरं राघवौ रामलक्ष्मणौ तमोमुक्तौ राहुमुक्तौ । 'राहौ ध्वान्ते गुणे तमः' इत्यमरः । चन्द्रदिवाकरौ चन्द्रसूर्याविव दीप्तौ सुप्रकाशौ । अभूतामिति शेषः । उपमालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥

दुर्वारे तदनु द्वयोश्च बलयोरुज्जृम्भमाणे रणे
धूम्राक्षं भुजतः प्रकम्पनमथ द्वेधा व्यधान्मारुतिः ।
तारेयोऽपि च वज्रदंष्ट्रमचलान्नीलः प्रहस्तं बला-
त्तत्सर्वं दशकंधराय चकितैरुक्तं च नक्तंचरैः ॥ ४७ ॥

दुर्वार इति । तदनु नागपाशमोक्षानन्तरम् । द्वयोश्च बलयोर्वानरराक्षससैन्ययोः दुर्वारे निवारयितुमशक्ये रणे उज्जृम्भमाणे प्रवर्धमाने सति मारुतिर्मारुतात्मजो हनूमान् । 'अत इञ्' । भुजतः । भुजबलप्रयुक्तशृङ्गसालप्रहारेणेत्यर्थः । 'धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत्' इत्यादि रामायणवचनादिति भावः । धूम्राक्षं प्रकम्पनमपि । तस्य नाम्ना कम्पन इति च वदन्ति । धूम्राक्षप्रकम्पननामानौ राक्षससेनानायकावित्यर्थः । द्वेधा द्विप्रकारेण व्यधादकरोत् । विदारयामासेत्यर्थः । तथा तारेयस्तारासुतोऽङ्गदोऽपि । 'स्त्रीभ्यो ढक्' । अचलात् । अचलेनेत्यर्थः । वज्रदंष्ट्रं द्वेधा व्यधात् । तथा नीलोऽग्निसुतो वानरसेनापतिर्बलाभिजभुजशक्तेः प्रहस्तं नाम राक्षससेनापतिं द्वेधा व्यधात् । 'प्रहस्तस्य शिलां मूर्ध्नि नीलस्तूर्णमपातयत्' इत्यादि रामायणवचनम् । तत्सर्वं धूम्राक्षवधाद्यशेषवृत्तान्तं चकितैर्भयसंभ्रान्तैर्नक्तंचरैर्हतशेषै राक्षसैर्दशकंधराय रावणायोक्तं कथितं च । अत्र संक्षेपो नाम गुणः । वृत्तं पूर्ववत् ॥

अथ तदानीमनीकिनीनाथवधजनित[1]कोपोदयादायोधनोत्कण्ठो दशकण्ठः सकलजगदण्डभरितभयानकजयानक[2]निनदबधिरिताशेषशेषाहिलोचनो रोचिष्णुजिष्णुकोदण्डधरः सलिलधर इव सुमेरुशृङ्गसमुत्तुङ्गं रथमलंकुर्वन्सर्वतश्चलितसकलचतुरङ्गसंघातया[3] लङ्क-

१. 'जनित' इति नास्ति क्वचित्. २. 'जयानकभयानक' इति पाठः. ३. 'संगतया' इति पाठः.

येव स्वयमनुगम्यमानः क्रमादतिक्रम्य पुरतोरणं पुरतो रणप्रचलित-मालोकयन्निखिलमपि कपिकुलम् ॥

अथेति। अथ सेनापतिनिधनकथनानन्तरम्। तदानीं तस्मिन्समये। अनीकिनीनाथानां राक्षससेनापतीनां वधेन विध्वंसनेन जनितो यः कोपोदयोऽमर्षाविर्भावस्तस्माद्धेतोः आयोधनोत्कण्ठः समरोत्सुको दशकण्ठो रावणः सकलजगदण्डेऽशेषब्रह्माण्डगोलके भरितः परिपूर्णो भयानको भयंकरश्च यो जयानकनिनदो जयदुन्दुभिध्वनिस्तेन बधिरितानि बधिरीकृतानि पूरितान्यशेषाणि समस्तानि च शेषाहिलोचनान्यादिशेषचक्षूंषि च येन स तथोक्तः तस्य चक्षुःश्रवस्त्वाद्दुन्दुभिध्वनिना तल्लोचनपूरणं युक्तमिति भावः। अत्रोक्तार्थासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः। रोचिष्णुजिष्णुकोदण्डधरो दीप्यमानजैत्रधनुर्धरो विस्फुरदिन्द्रधनुरङ्कितश्च। सलिलधरो नीलमेघ इव। सुमेरुशृङ्गवत्समुत्तुङ्गमत्युन्नतं रथमलंकुर्वन्विभूषयन्। अधिरूढः सन्नित्यर्थः। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। तथा सर्वतः समन्ततश्चलितो युद्धसंनद्धतया प्रवृत्तः सकलः समग्रश्च तुरङ्गसंघो हस्त्यश्वरथपादातरूपचतुरङ्गबलं यस्य स तथोक्तस्तस्य भावस्तत्ता तया हेतुना स्वयं साक्षाल्लक्ष्म्यानुगम्यमानोऽनुस्रियमाण इवेत्युत्प्रेक्षा। क्रमात्क्रमेण पुरतोरणं पट्टणबहिर्द्वारम्। 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः। अतिक्रम्योल्लङ्घ्य पुरतः पुरस्ताद्रणप्रचलितं युद्धार्थं प्रसर्पन्निखिलमपि कपिकुलं वानरबलमालोकयदपश्यत् ॥

जेतारमाहवमुखे दशदिक्पतीनां
दृष्ट्वा पुरो दशमुखं रघुनन्दनस्य।
श्लाघावशेन न चचाल शिरः परं त-
त्सव्येतरं भुजशिरोऽपि समीक्ष्य लक्ष्यम् ॥ ४८ ॥

जेतारमिति। आहवमुखे रणाग्रे दशदिक्पतीनामिन्द्रादिदिक्पालकानां जेतारम्। 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। ऊर्ध्वाधोदिग्भ्यां दिशां दशसंख्याकत्वं वेदितव्यम्। दशमुखं पुरोऽग्रे दृष्ट्वा श्लाघावशेन अहो महानयमिति प्रशंसावशेन रघुनन्दनस्य श्रीरामस्य शिरः परमुत्तमाङ्गमेव न चचाल। किंतु तत्प्रसिद्धम्। आत्मानुरूपमित्यर्थः। लक्ष्यं रावणरूपशरव्यं समीक्ष्य दृष्ट्वा। सव्येतरम्। दक्षिणमित्यर्थः। भुजशिरो भुजाग्रमपि चचाल तद्दर्शनसमय एव श्रीरामदक्षिणभुजः शरचापव्यापारतत्परोऽभूदिति किं वक्तव्यमस्य धन्यत्वमिति भावः। एतेनास्य महावीरत्वं सूच्यते। 'स वीरो यस्य वै वीर्यमरिणा युधि वर्ण्यते' इति लक्षणात्। अत्र शिरोभुजशिरश्चलनयोः केवलप्रकृतत्वात्तुल्ययोगिता। वसन्ततिलका वृत्तम् ॥

अथ मदगर्जितैरधिकतर्जितदिक्करिभि-
र्दशवदनस्तदा दशदिगन्तरमन्तरयन्।

---

१. 'चलित' इति पाठः. २ 'वलीमुखवेलम्' इति पाठः.

समरमुखे सखेलपदचङ्क्रमतो विदधे
हरिकुलमाकुलं जलधिमादिवराह इव ॥ ४९ ॥

अथेति । अथानन्तरं तदा तस्मिन्वानरसेनाभियोगसमये दशवदनो रावणोऽधिकमत्यन्तं तर्जिता भीषिता दिक्करिणो यैस्तैर्मदगर्जितैर्मदप्रयुक्तसिंहनादैर्दशदिगन्तरम् । दशदिगवकाशमित्यर्थः । अन्तरयन्नाच्छादयन् । अन्तरशब्दादन्तर्धानार्थात् 'तत्करोति–' इति ण्यन्ताल्लटः शत्रादेशः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्युभयत्राप्यमरः । समरमुखे रणाग्रे सखेलपदचङ्क्रमतः सविलासपादविन्यासवैचित्र्याज्जलधिमादिवराह इव हरिकुलं वानरसमूहमाकुलं क्षुब्धं विदधे चकार ॥

अनन्तरमनीकास्कन्दकन्दलितामर्षं वर्षन्तं गिरीन्हरीणामधिपतिमतिनिष्ठुरेण मुष्टिना गाढमभिघ्नन्तं[1] हनूमन्तममन्दतरलाघवाक्रान्त[2]ध्वजकिरीटाञ्चलं नीलमपि वानरसेनापतिं निखिलमपि वानरबलं[3] निखिलजगज्जिता महता बलेन वातूल इव तूलराशिमपसारयन्[4]नविरतशरासारवर्षिणमभ्यमित्रीणं सौमित्रिमपि[5] शक्त्या महत्या[6] गाढमुरसि विव्याध क्रव्यादाधिपतिः ॥

अनन्तरमिति । अनन्तरमनीकास्कन्दनेन वानरसेनाकुलीकरणेन कन्दलितामर्षं समुत्पन्नक्रोधम् । अतएव गिरीन्वर्षन्तं हरीणामधिपतिं सुग्रीवं चातिनिष्ठुरेणात्यन्तकठोरेण मुष्टिना । मुष्टिशब्दः पुंलिङ्गोऽप्यस्ति । यथाहामरसिंहः—'सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना' इति । गाढमत्यन्तमभिघ्नन्तं प्रहरन्तं हनूमन्तममन्दतरलाघवेनाल्पचङ्क्रमणपाटवेनाक्रान्त आक्रमणविषयीकृते ध्वजकिरीटाञ्चले केतुकोटीराग्रे येन तम् । निजचङ्क्रमणलाघवेन ध्वजकिरीटाग्रप्रदेशावाक्रान्तावित्यर्थः । अर्धर्चादिष्वञ्चलशब्दो द्रष्टव्यः । यद्यप्यञ्चलशब्दो वस्त्रदशासु वर्तते । अतएवामरसिंहः—'अञ्चलं त्वंशुकान्ते स्यात्' इति । तथापि अन्तिमप्रदेशसाधर्म्याद्गौणतेति । नीलमपि नीलाख्यं वानरसेनापतिं च निखिलमपि वानरबलं निखिलजगज्जिता सकलभुवनजयिना । 'जगती भुवने भूमौ' इति विश्वः । महता बलेन निजपराक्रमेण वातूलो वात्या । 'वाताच्च' इत्यूलप्रत्ययः । तूलराशिमिवापसारयन्निरस्यन् । क्रव्यादाधिपती राक्षसेश्वरो रावणोऽविरतशरासारवर्षिणं निरन्तरबाणपरम्परावर्षिणमभ्यमित्रीणमाभिमुख्येनामित्रं सुष्ठु गच्छतीत्यभ्यमित्रीणम् । 'सोऽभ्यमित्रोऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि' इत्यमरः । सौमित्रिं लक्ष्मणमपि । बाह्वादित्वादिञ् । बाह्वादिराकृतिगणः । महत्या शक्त्या ब्रह्मदत्तया शक्त्या उरसि गाढमत्यायतं विव्याध निजघान ॥

---

१. 'अभिनिघ्नन्तम्' इति पाठः. २. 'अमन्दलाघव' इति पाठः. ३. 'वासरसेनापतिं निखिलमपि वानरबलम्' इति नास्ति क्वचित्. ४. 'तूलजालं कपिकुलमपसारयन्' इति पाठः ५. 'अभ्यमित्रीणसौमित्रिम्' इति पाठः. ६. 'महत्या' इति नास्ति क्वचित्.

**अवकीर्य दाशरथिरश्रुझरैरनुजं पुलस्त्यतनुजं च शरैः।**
**युगपद्व्यधात्करुणवीररसौ युधि शोकहर्षशबलं च बलम्॥ ५० ॥**

**अवकीर्येति।** दाशरथिः श्रीरामः। अश्रुझरैर्बाष्पप्रवाहैरनुजं शक्तिविद्धं लक्ष्मणम्। तथा शरैर्बाणैः पुलस्त्यवंशोद्भवं रावणं चावकीर्य विक्षिप्य। लक्ष्मणंप्रति रुदित्वा, रावणं विद्ध्वा चेत्यर्थः। युधि युद्धे करुणवीररसौ शोकोत्साहौ स्थायिनौ रसविशेषौ युगपदेकवारमेव व्यधादकरोत्। तथा बलं वानरसैन्यं शोकहर्षाभ्यां शबलं संकीर्णं व्यधात्। लक्ष्मणोपहतिजनितशोकेन शोकः, रावणप्रहरणेन हर्ष इति विवेकः। नन्वन्योन्यविजातीययोः करुणवीररसयोः कथं युगपद्विधानमिति चेत्, 'रसाः कार्यवशात्सर्वे मिलन्त्येव परस्परम्' इति सर्वेषां रसानां कार्यसंभवाददोष इति संक्षेपः। प्रमिताक्षरावृत्तम्॥

**आधूय मोहमहितोन्मथनाय याव-**
**त्सौमित्रिरुन्मिषति संयति तावदेव[1]।**
**पौलस्त्यमेष परिभूय परं तदीया-**
**न्प्राणान्मुमोच दयया न मुमोच बाणान्॥ ५१ ॥**

**आधूयेति।** सौमित्रिर्मोहं मूर्च्छामाधूय निरस्य संयति युद्धेऽहितोन्मथनाय शात्रवविध्वंसनाय यावद्यदोन्मिषत्यवबुध्यते, तावत्तदानीमेव। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः। एष श्रीरामः पौलस्त्यं रावणं परिभूय तिरस्कृत्य दयया तात्त्विककृपया तदीयान्रावणसंबन्धिनः प्राणान्परं प्राणानेव मुमोच तत्याज। बाणांस्तु न मुमोच। प्रथममेव किमयं हन्तव्यः। ततो गृहं गत्वा पुनरागच्छत्वित्युपेक्षितवानित्यर्थः। वसन्ततिलकावृत्तम्॥

**प्राप्य तत्प्रथमं युद्धे पराजयमुदेजयन्।**
**दशाननः पुरीं प्राप दिनदीपदशाननः॥ ५२ ॥**

**प्राप्येति।** दशाननस्तदेव प्रथमं तत्प्रथमं पूर्वम्। यदाकदाप्यसंभावितत्वादिति भावः। पराजयं श्रीरामादपजयं प्राप्योदेजयन्प्रकम्पमानः। उत्पूर्वात् 'एजृ कम्पने' इति धातोः शतृप्रत्ययः। अतएव दिनेऽहनि यो दीपस्तस्येव दशा येषां तान्याननानि यस्य तथोक्तः। तेजोहीनवदनः सन्नित्यर्थः। पुरीं प्राप लङ्कां प्रविवेश॥

**प्राबोधयत्तदनु पङ्क्तिमुखः शयालुं**
**कालं विनापि च कथंचन कुम्भकर्णम्।**
**आदेशतः स च विभोरपुनःप्रबोध-**
**संवेशधाम समराङ्गणमाजगाम॥ ५३ ॥**

**प्राबोधयदिति।** तदनु पुरप्रवेशानन्तरं स पङ्क्तिमुखो दशमुखः शयालुं निद्रालुम्। 'स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ समौ' इत्यमरः। 'शीङो वाच्यः' इत्यालुच्। कुम्भकर्णं कालं विनापि। अकाल इत्यर्थः। ब्रह्मवरदानात्तस्य षाण्मासि-

---

१ 'एष समुदञ्चति तावदेव' इति पाठः।

कावच्छिन्ननिद्रानन्तरमेकस्मिन्दिने प्रवोधनियमादिति भावः।एतच्चोत्तरकाण्डे स्पष्टम्। 'पृथग्विना—' इत्यादिना तृतीयाविकल्पात्पक्षे द्वितीया । कथंचन केनचित्प्रयासेन प्राबोधयद्बोधयामास । स च कुम्भकर्णश्च विभो रावणस्यादेशत आज्ञावचनात् । 'पञ्चम्यास्तसिः' । 'उक्तिराभाषणं वाक्यमादेशो वचनं वचः' इति शब्दार्णवे । न विद्यते पुनः प्रबोधो यस्मिन्स तथोक्तो यः संवेशो दीर्घा निद्रा । मरणमिति यावत् । तद्धाम तत्स्थानं तद्गृहं वा । पूर्वसंवेशधाम्नि तु षण्मासेन वा पुनः प्रबोधो जायते नत्वत्र कदाचिदपीति भावः । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि'। 'धाम देशे गृहे स्थाने तेजो जन्मप्रकाशयोः' इत्यमरविश्वप्रकाशौ । समराङ्गणं युद्धभूमिमाजगाम प्राप । वसन्ततिलकावृत्तम् ॥

**आगतं च तमञ्जनाचलनिकाशमाकाशतलभ्रमितत्रिशूलं शूलधरमिव जगत्क्षयोद्युक्तं नक्तंचरं निशाम्य शाम्यत्सहजभुजतेजोविशेषमशेषासु दिक्षु धावमानं पवमानचलितजलदपारिप्लवं प्लवंगवलमङ्गदो धीरमवादीत् ॥**

आगतमिति । आगतं चेत्यनुवादः । अञ्जनाचलनिकाशं कज्जलशैलसंनिभमित्युपमा । आकाशतलभ्रमितत्रिशूलं गगनतलावर्तितत्रिशिखम् । अतएव जगत्क्षय उद्युक्तं संनद्धं शूलधरं कालाग्निरुद्रमिव स्थितं तं नक्तंचरं कुम्भकर्णं निशाम्य दृष्ट्वा शाम्यन्दमं प्राप्नुवन्सहजभुजतेजोविशेषः स्वाभाविकबाहुप्रभावविशेषो यस्य तत्तथोक्तम् । अतएवाशेषासु दिक्षु । प्रतिदिशमित्यर्थः । धावमानं पलायमानम् । अतएव पवमानचलितजलदपारिप्लवं समीरणसमीरितवारिवाहतरलम् । 'पारिप्लवं तु तरलम्' इत्यमरः । प्लवंगबलं कपिसैन्यमङ्गदो धीरमुदारमवादीदुवाच ॥

तत्प्रकारमेव—

**कपयः कैकसेयानां कापि सेयं विभीषिका ।**
**माभूदभूतपूर्वं वः प्राकृतं भयवैकृतम् ॥ ५४ ॥**

कपय इति । हे कपयः. सेयं परिदृश्यमाना व्यक्तिः कैकसेयानां कैकसीगर्भसंभूतानां मध्ये । 'स्त्रीभ्यो ढक्' । कापि काचन विभीषिका वित्रासभूमिका । अतो वो युष्माकं पूर्वं भूतं भूतपूर्वम् । ततो नञ्समासः । अदृष्टचरमित्यर्थः । सुप्सुपेति समासः । प्राकृतं लोकसाधारणं प्रकृतिसिद्धं वा । भयवैकृतं पलायमानादिभयजनितविकारो मा भून्न भूयात् । प्राकृतजनैरिव महावीरैर्युष्माभिर्न भेतव्यमित्यर्थः । 'माङि लुङ्' इत्याशिषि लुङ् ॥

**अथ हरयोऽपि सत्यमनुनयसंगतमङ्गदवचनमवधारयन्तो धारयन्तः समरसंनाहं दिङ्नागा इव प्रतिनिवृत्ताः प्रमत्तमिवैरावणं राव-**

---

१. 'आकाशभ्रमित' इति पाठः. २. 'अवलोक्य' इति पाठः. ३. 'पारिप्लवप्लवग' इति पाठः. ४ 'मा' इति नास्ति क्वचित्. ५. 'संनाहान्दिग्भागाः' इति पाठः. ६. 'प्रमत्ताश्रयम्' इति पाठः.

णानुजं विन्ध्याचलमिव युगान्तानिलाः समन्तादाहृतैर्गिरिभिस्तरुभिरप्यवाकिरन् ॥

अथेति। अथानन्तरं हरयः कपयोऽप्यनुनयसंगतं तत्कालोचितप्रार्थनासहितमङ्गदवचनमवधारयन्त आकर्णयन्तः। अतएव सरयं सत्वरं समरसंनाहं रणोत्साहं धारयन्तो दधाना दिङ्नागा दिग्गजा इवेत्युपमा। प्रतिनिवृत्ताः प्रत्यागताः प्रमत्तमैरावणमिव स्थितम्। अप्रकम्प्यपराक्रममित्यर्थः। रावणानुजं कुम्भकर्णं युगान्तानिलाः प्रलयकालवायवो विन्ध्याचलमिव समन्तात्। सकलदिग्भ्य इत्यर्थः आहृतैरानीतैर्गिरिभिस्तरुभिरप्यवाकिरन्। अभिववृषुरित्यर्थः। अत्र किरतेर्वृष्ट्यर्थत्वाद्गिरितरूणां करणत्वम्। विक्षेपार्थे तु कर्मत्वम्। एवं सिञ्चतीत्यादीनामपि। सिञ्चतेरार्द्रीकरणार्थत्वाद्द्रवद्रव्यस्य करणत्वम्। यत्र तु क्षरणत्वमर्थः, तत्र द्रवद्रव्यस्य कर्मत्वम्। यथा—'अमृतं सिञ्चति, अमृतैर्वा वपुः' इत्यादि बोध्यम् ॥

क्षिप्ताः संयति पुष्पिताः क्षितिरुहस्ते रक्षसो वक्षसि
प्रस्विन्ने पटवासपांसव इवालीयन्त चूर्णीकृताः।
मुक्ता ये धरणीधरा मुहुरमी तद्बाहुसंघट्टना-
त्प्रत्यावृत्य पुनः प्रहर्तुरभवन्खेदाय भेदाय च ॥ ५५ ॥

क्षिप्ता इति। य इत्यध्याहारः यत्तदोर्नित्यसंबन्धात्। पुष्पिताः संजातपुष्पाः। तारकादित्वादितच्। विशेषणमेतत्पटवासत्वोपयोगार्थं द्रष्टव्यम्। ये क्षितिरुहो वृक्षाः। क्विप्। संयति युद्धे क्षिप्ता विकीर्णाः। वानरैरिति शेषः। ते क्षितिरुहः। प्रस्विन्ने क्रोधानुभावस्वेदार्द्रे। स्विद्यतेर्निष्ठातकारस्य नकारः। रक्षसः कुम्भकर्णस्य वक्षसि। अतिकठोर इति भावः। चूर्णीकृताः सन्तः। पटवासपांसव इव पिष्टातपरागा इव। 'पिष्टातः पटवासकः' इत्यमरः। अथवा पटवासो नानाविधकुसुमादिसुगन्धद्रव्यपरिमलितगन्धचूर्णम्। 'पटवासो गन्धचूर्णं सुमाद्यैरधिवासितम्' इत्यभिधानात्। अलीयन्ताश्लिषन्। तत्र संसक्ता बभूवुरित्यर्थः। 'लीङ् श्लेषणे' लङि तङ्। तथा ये धरणीधराः पर्वता मुहुः पुनःपुनर्मुक्ताः क्षिप्ता अमी धरणीधरास्तस्य कुम्भकर्णस्य बाहुसंघट्टनाद्बाहूपमर्दाद्धेतोः प्रत्यावृत्य प्रातिलोम्येनागत्य प्रहर्तुः परप्रहर्तुरेव खेदाय भेदाय चाभवन्। अत्र पूर्वार्धे क्षितिरुहचूर्णीकृतत्वासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः। तया रक्षोवक्षसस्ताहक्काठिन्यं व्यज्यते। तदुज्जीविता चेयं पटवासपांसव इवेत्युपमेति संकरः। उत्तरार्धे तूक्तार्थासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः। तथानर्थोत्पत्तिरूपो विषमालंकारश्चेति संकरः। 'विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य चाभवेत्। विरूपघटना वा स्याद्विषमालंकृतिस्त्रिधा ॥' इति लक्षणात्। शार्दूलविक्रीडितं वृत्तम् ॥

ज्वलदनलं त्रिशूलमुपरिभ्रमयन्भ्रमय-
न्नयमवनीमनीकमदखेलनदुर्ललितः।

१. 'अपि' इति नास्ति क्वचित्. २. 'तै' इति पाठः. ३. 'परम्' इति पाठः.

सपदि बभञ्ज नीलमृषभं शरभं च बला-
दहरत गन्धमादनमरुन्ध गवाक्षमपि ॥ ५६ ॥

ज्वलदिति। अयं कुम्भकर्णो ज्वलदनलं प्रज्वलज्ज्वलनं त्रिशूलमुपर्युपरि-ष्टाद्भ्रामयंश्चालयन्नवनीं भुवं नमयंश्चालयन्। निजपादघातेन कम्पयन्नित्यर्थः। अनीकमदेन युद्धाभिनिवेशदर्पेण यत्खेलनं लीला तेन दुर्ललितो दुर्विलसितः सन्। सपदि सद्य एव बलान्निजबाहुपराक्रमान्नीलं ऋषभं शरभं चेति त्रीन्वानरसेनापतीन्वभञ्ज ममर्द। तथा गन्धमादनमहरत। प्राहरदित्यर्थः। गवाक्षमप्यरुन्ध रुरोध। न्यवध्नादित्यर्थः॥

ततश्च सहजभ¹यचापलाधिगतलाघवं राघवं शरणमश्नुवानं वानरानी²कमाश्वासयन्विश्वाधिकविपुलभुजवीर्यो विकीर्य द्विषति सर्वतः पर्वतान्विधाय च³ विचित्रमतिचिरं युद्धं नक्तंचरविमुक्तधात्रीधरावलि⁴-कुलिशदारित इव कुलभूधरो धरायामचे⁵तनः पपात हरिकुलपतिः॥

तत इति। ततस्तदनन्तरं च। सहजे कपिकुलस्वाभाव्यान्नैसर्गिके ये भयचापले ताभ्यामधिगतं प्राप्तं लघुत्वं येन तत्तथोक्तम्। अतएव राघवं शरणं रक्षकम्। 'शरणं गृहरक्षित्रोः' इत्यमरः। अश्नुवानं प्राप्नुवानम्। 'अशू व्याप्तौ' शानच्। वानरानीकं वानरसैन्यम्। 'अनीकं तु रणे सैन्ये' इति विश्वः। आश्वासयन्। विश्वाधिकविपुलभुजवीर्यो लोकोत्तरमहाबाहुपराक्रमशाली हरिकुलपतिः सुग्रीवो द्विषति कुम्भकर्णे सर्वतः समन्तात्पर्वतान्विकीर्य विक्षिप्य। तथा विचित्रमाश्चर्यकरं युद्धमतिचिरमत्यन्तं विधाय। ततो नक्तंचरेण कुम्भकर्णेन विमुक्ता विक्षिप्ता धात्रीधरावलिः पर्वतश्रेणिर्यस्य स तथोक्तः। कुम्भकर्णहस्तविमुक्तपर्वताहत इत्यर्थः। अतएवाचेतनो निःसंज्ञः सन्। कुलिशदारितो वज्रायुधविदलितः। 'ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरः। कुलभूधरः कुलपर्वत इवेत्युपमा। धरायां पपात। तथाच रामायणम्—'स तत्तदा भग्नमवेक्ष्य शूलं चुकोप रक्षोधिपतिर्महात्मा। उत्पाट्य लङ्कामलयात्स शृङ्गं जघान सुग्रीवमुपेत्य तेन॥ स शैलशृङ्गाभिहतो विसंज्ञो नेदुः प्रहृष्टा युधि यातुधानाः॥' इति॥

ततः किं जातमत आह—

परिगृह्य तं झटिति बाहुपञ्जरे
चलिते पुरं तदनु रावणानुजे।
अविनीतवालिकृतमद्य न प्रभो-
रयशः प्रमृष्टमिति हृष्टमाशरैः॥ ५७॥

परिगृह्येति। तदनु पतनानन्तरं रावणानुजे कुम्भकर्णे झटिलाञ्जसा तं सुग्रीवं बाहुपञ्जरे। दोर्मण्डलेनेत्यर्थः। अधिकरणविवक्षायां सप्तमी। परिगृह्य गृहीत्वा।

---

१. 'बल' इति पाठः. २. 'राघवानीकम्' इति पाठः. ३. 'च' इति नास्ति क्वचित्. ४. 'धात्रीधरवशः' इति पाठः. ५. 'अचेतन इव' इति पाठः.

पुरं लङ्कां प्रति चलिते प्रवृत्ते सत्यविनीतेनामर्षितेन वालिना कृतं नोऽस्माकं प्रभोः स्वामिनो रावणस्यायशः। वालेन निवध्य कक्षनिक्षेपणरूपकृत्यजनितापकीर्तिरित्यर्थः। अथेदानीं प्रमृष्टं शोधितम्। अस्मत्स्वामिविरोधिवाल्यनुजस्य तदनुजेन कुम्भकर्णेन तथा नीतत्वान्निराकृतमित्यर्थः। इतीत्थम्। मत्वेति शेषः। आशरै राक्षसैर्हृष्टं संतुष्टम्। मञ्जुभाषिणीवृत्तम्। लक्षणमुक्तम्॥

तत्र विचित्रकुसुमपरिमलशिशिररथ्योपचारसचेतनोद्ग्रीवसुग्रीवनखमुखाकलितशूर्पणखामुखानुकारो दारुणाकारः सचमत्कारं प्राकारमुत्प्लुत्याक्षिगतमेनमनालक्ष्य वैलक्ष्यतः प्रतिनिवृत्तो वृत्तोरुविषमतारकेक्षणः क्षणदाचरः प्रतिक्षणमतिक्षीवतया प्रतिपक्षबलमिव स्वँबलमपि भक्षयन्नलक्षयन्सौमित्रिमद्रिशिखरं विमुञ्चन्नेवायमञ्जसा राममाजगाम॥

तत्रेति। तत्र लङ्कापुरे विचित्रा विविधाः कुसुमपरिमलाः पुष्पगन्धा येषु ते तथोक्ताः शिशिरा जलसेकादिना शीतलाश्च ये रथ्योपचाराः पुरवीथीप्रसाधनक्रियास्तैः सचेतनः ससंज्ञोऽतएवोद्ग्रीव उन्नतकंधरश्च सुग्रीवस्तस्य नखमुखैर्नखाग्रैराकलितो विरचितः शूर्पणखाया मुखानुकारो मुखसादृश्यं यस्य स तथोक्तः। सुग्रीवनखनिर्भिन्नकर्णनास इत्यर्थः। अतएव दारुणाकारो भयंकराकृतिः। सचमत्कारं चमत्कारसहितं यथा तथा। चमदित्यनुकरणशब्दः। चमत्कारलक्षणं तु–'सुखदुःखाद्भुतानन्दैर्हर्षाधैर्यैश्चित्तविक्रिया। चमत्कारः ससीत्कारः शरीरोल्लासनादिभिः॥' इति। प्राकारं सालम्। 'प्राकारो वरणः सालः' इत्यमरः। उत्प्लुत्योल्लङ्घ्य। अक्षिगतं चक्षुर्गोचरं द्वेष्यम्। 'द्वेष्ये त्वक्षिगतो वध्यः' इत्यमरः। तमेनमीदृग्दुर्दशाकारिणं सुग्रीवमनालक्ष्यादृष्ट्वा विगतं लक्ष्यं यस्य स विलक्षी विह्वलस्तस्य भावो वैलक्ष्यम्। ब्राह्मणादित्वात्ष्यञ्। ततो हेतोः प्रतिनिवृत्तः सन् युद्धाय प्रत्यावृत्तः। वृत्ते वर्तुलाकारे उरुणी पृथुले विषमतारके न्यूनातिरिक्तकनीनिके च ईक्षणे नेत्रे यस्य स तथोक्तः। विरूपोग्राक्ष इत्यर्थः। 'निस्तुलं वर्तुलं वृत्तम्' इत्यमरः। सोऽयं क्षणदाचरः क्षपाचरः कुम्भकर्णः। 'त्रियामा क्षणदा क्षपा' इत्यमरः। प्रतिक्षणं क्षणे क्षणे क्षीबते माद्यतीति क्षीबो मत्तः। 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः। 'क्षीबृ मदे' इति धातोः। 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निष्ठान्तो निपातः। तस्य भावस्तया। 'लब्धतया' इति पाठे विमूढतया। प्रतिपक्षबलं शत्रुसैन्यमिव स्वबलमपि भक्षयन्सौमित्रिमभ्युद्गतं लक्ष्मणं लक्षयन्मत्पराक्रमस्यायं कियानित्यलक्षीकुर्वन्नद्रिशिखरं गिरिशृङ्गं विमुञ्चन्नेव प्रयुञ्जानः सन्नेव। अञ्जसा झडिति रामं श्रीरामं प्रत्याजगाम प्राप। अभ्युज्जगामेत्यर्थः॥

---

१. 'तत्र च' इति पाठः. २. 'शिशिरोपचार' इति पाठः. ३. 'दारुणाकारः' इति नास्ति क्वचित्. ४. 'प्रकारम्' इति नास्ति क्वचित्. ५. 'समुत्प्लुत्य' इति पाठः. ६. 'प्रतिनिवृत्तो विवृत्तोरुतारकेक्षणः' इति पाठः. ७. 'स्वपक्षबलम्' इति पाठः.

विच्छिद्याशु सथार्धचन्द्रमुखतो वीरो रघूणां पति-
र्बाणानत्र मुमोच वालिदलनान्मारीचमर्मच्छिदः ।
आलोक्याथ स तान्विदारितखरानस्मिन्नकिंचित्करा-
न्वायव्यं पुनरैन्द्रमप्यरिवधूवैधव्यधुर्यं दधे ॥ ५८ ॥

विच्छिद्येति । वीरः शूरो रघूणां पतिः श्रीरामस्तत्कुम्भकर्णविमुक्तमद्रिशिखरम् । अर्धचन्द्रमुखतः । अर्धचन्द्राख्यवाणविशेषाग्रेणेत्यर्थः । विच्छिद्य विभिद्य । अत्र कुम्भकर्णे वालिदलनान्वालिविनाशकान्मारीचस्य मर्म छिन्दन्तीति तथोक्तान् । मारीचमारकानित्यर्थः । विदारितः खरो यैस्तांश्च बाणान्मुमोच प्रयुयुजे । अत्र वालिदलनस्य मारीचमर्मच्छेदकस्य खरविदारिणश्चैकैकत्वेऽपि बहुवचनप्रयोगस्तद्वर्ग्याणामनेकत्वादुपपद्यते । तथा विदारितखरानित्युत्तरार्धस्थितत्वेऽप्येकवाक्यत्वान्न वाक्यसंकीर्णदोषः । अथानन्तरं स रामस्तान्बाणानस्मिन्कुम्भकर्णेऽकिंचित्करानकार्यकरान् । मोघानिति यावत् । आलोक्य दृष्ट्वा । एतेनास्य वाल्याद्यपेक्षया महासामर्थ्यसंपन्नत्वं सूच्यते । वायव्यं वायुदेवताकं दिव्यास्त्रं दधे प्रयुक्तवान् । बाहुच्छेदार्थमिति भावः । पुनर्भूयोऽप्यरिवधूवैधव्ये शत्रुस्त्रीवैधव्ये धुर्यं धुरंधरम् । शत्रुनाशकमित्यर्थः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । ऐन्द्रमिन्द्रदेवताकमप्यस्त्रं दधे । तच्छिरश्छेदार्थमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

रामास्त्राद्दलितेषु राक्षसपतेरङ्गेषु तुङ्गो भुजः
प्रागेको निपपात मन्दर इव प्रत्यर्थिसेनाम्बुधौ ।
सिन्धौ निष्पतितः परोऽपि ददृशे सेतुर्द्वितीयो यथा
छिन्नं व्योम्नि शिरस्तुरीयमभवत्कूटं त्रिकूटस्य च ॥ ५९ ॥

रामास्त्रादिति । ततस्तदनन्तरम् । रामास्त्रात् । रामास्त्रैरित्यर्थः । राक्षसपतेः कुम्भकर्णस्याङ्गेषु बाह्वाद्यवयवेषु दलितेषु छिन्नेषु तुङ्ग उन्नत एको भुजो बाहुः प्राक्प्रथमं प्रत्यर्थिसेनाम्बुधौ शत्रुसैन्यसमुद्रे इत्युपमितसमासः । मन्दरो मन्दराचल इवेत्युपमा । पपात । सिन्धौ समुद्रे निष्पतितः प्रविनष्टः । परोऽपि भुजो द्वितीयः सेतुर्यथा सेतुरिव ददृशे इत्युत्प्रेक्षा । तच्छिन्नं विदारितं शिरः शीर्षं च व्योम्न्याकाशे त्रयः कूटा यस्य तस्य त्रिकूटस्यान्वर्थनाम्नो लङ्काधिष्ठानभूतस्य पर्वतस्य तुरीयं चतुर्थम् । 'चतुरश्छयतावाद्यक्षरलोपश्च' इति छप्रत्ययः । कूटं शिखरमभवदिति गम्योत्प्रेक्षेति तिसृणां संसृष्टिः । वृत्तं पूर्ववत् ॥

तदनु तदनुमोदभरितहरिबलकोलाहलाकर्णनविदितकुम्भकर्णवधपरिम्लानमुखेन दशमुखेन सहोदरमहोदरमहापार्श्वौ सहायौ विधाय समादिष्टाः कुमाराः नरान्तकदेवान्तकातिकायत्रिशिरसः शिरसादाय पितुर्निदेशं निवेशमिव पितृपतेः प्राविशन्नमी समीकभुवम् ॥

---

१. 'भिन्दन्शूलम्' इति पाठः २. 'वालिविपदः' इति पाठः. ३. 'शिखान्' इति पाठः. ४. 'उद्दलितेषु' इति पाठः. ५. 'त्रिशिरसः पितुर्निदेशान्' इति पाठः.

तदन्विति। तदनु तदनन्तरं तेन कुम्भकर्णवधेन योऽनुमोदस्तेन भरितानां पूर्णानां हरिबलानां वानरसैन्यानां कोलाहलस्य कलकलस्याकर्णनेन विदितो विज्ञातः कुम्भकर्णवधो येन तथोक्तः स चासौ परिम्लानमुखः शोभाहीनवदनश्चेति विशेषणसमासः। तेन दशमुखेन रावणेन सहोदरौ महोदरमहापार्श्वौ नाम राक्षससेनानायकौ सहायौ रक्षकौ विधाय कृत्वा समादिष्टा आज्ञप्ता नरान्तको देवान्तकोऽतिकायस्त्रिशिरा इत्युक्ताभिधानाश्चत्वारः कुमाराः पितू रावणस्य निदेशमाज्ञां शिरसादाय गृहीत्वा। अमी कुमाराः पितृपतेः प्रेतराजस्य। 'धर्मराजः पितृपतिः समवर्ती परेतराट्' इत्यमरः। निविश्यतेऽत्रेति निवेशं स्थानमिवेत्युत्प्रेक्षा। समीकभुवं रणभूमिं समाविशन्प्राविशन्॥

अजनि पुनः समीकमनयोरुभयोर्बलयो-
रवदलिते मुखेऽपि यदनुज्झितरोषभरम्।
अमरमृगीदृशामपि यदाशयपूर्तिकरं
समरसमुत्सुकेन मुनिना यददृष्टचरम्॥ ६०॥

अजनीति। पुनर्भूयोऽप्यनयोरुभयोर्बलयोर्वानरराक्षससैन्ययोः समीकं युद्धमजनि जातम्। जनेः कर्तरि लुङ्। 'दीपजन–' इत्यादिना च्लेश्चिणादेशः। कीदृशं समीकमित्यत आह—यत्समीकं मुखेऽवदलिते सति। अन्योन्यमुखभङ्गे जाते सत्यपीत्यर्थः। अनुज्झितोऽत्यक्तो रोषभरोऽमर्षातिरेको यस्मिंस्तत्तथोक्तम्। सैनिकानाममर्षातिशयेन पुनः प्रवर्धमानमित्यर्थः। अमरमृगीदृशां सुरसुन्दरीणामप्याशयपूर्तिकरं मनोरथपरिपूरकम्। महावीरोपसंहारकत्वेन प्रत्येकमेकैकवरलाभादिति भावः। तथा यत्समरसमुत्सुकेन समरोत्कण्ठितेन। कलहप्रियेणेति यावत्। मुनिना नारदेनादृष्टचरमदृष्टपूर्वम्। 'भूतपूर्वे चरट्'। इत्थंभूतस्य पूर्वं यदाकदाप्यजातत्वादिति भावः। तादृशं युद्धमजनीति संबन्धः॥

ममाथ शैलादथ वालिनन्दनो नरान्तकं संयति वानरान्तकम्।
हनूमता सोऽपि हतः सुरान्तकः पुरान्तकेनेव यथा पुरान्तकः॥६१॥

ममाथेति। अथानन्तरं वालिनन्दनोऽङ्गदः संयति युद्धे वानरान्तकं वानरनाशकं नरान्तकं शैलात्। शैलेनेत्यर्थः। ममाथ विदारयामास। तथा हनूमता स प्रसिद्धः सुरान्तको देवान्तकोऽपि पुरा पूर्वं पुरान्तकेन त्रिपुरजयिना शंभुना। इवशब्दो वाक्यालंकारे। 'इवेतीषदर्थोपमोत्प्रेक्षावाक्यालंकारेषु' इति गणव्याख्याने। अन्यथा यथेतीवार्थवाचिना शब्देन पौनरुक्त्यदोषो दुर्वारः स्यात्। अन्तको यथा मृत्युरिव। हतो मारितः उपमायमकयोः संसृष्टिः। वंशस्थवृत्तम्॥

अनन्तरमसमसमरशीलेन नीलेन निहते महोदरे मारुतिमथितशिरसि त्रिशिरसि विशसितेषु महापार्श्वादिषु वाहिनीपतिषु निर्भरविषादरोषपरवशो निशाचराकार इव तमोनिकायः समर-

१. 'च' इति पाठः. २. 'रुषा' इति पाठः. ३. 'निशाचरः साकारः' इति पाठः. ४. 'सरयम्' इति पाठः.

मतिकायः समागत्य वृत्रासुर इव सुत्राम्णा सुमित्रासुतेन सह वितेने विचित्रमायोधनम् ॥

**अनन्तरमिति** । अनन्तरं नरान्तकदेवान्तकवधानन्तरमसमसमरशीलेनासाधारणरणकर्माचरणतत्परेण नीलेन महोदरे निहते सति । तथा त्रिशिरसि मारुतिमथितशिरसि हनूमद्भिन्नमस्तके सति । तथा महापार्श्व आदिर्येषां तेषु वाहिनीपतिषु राक्षससेनानायकेषु विशसितेषु विनाशितेषु सत्सु । ऋषभेणेति शेषः । निर्भरविषादरोषपरवशः समुत्कटरोषशोकाक्रान्तान्तःकरणो निशाचराकारो राक्षसदेहधारी तमोनिकायोऽन्धकारपटल इव स्थित इवेत्युत्प्रेक्षा । अतिकायः समरमागत्य । सुत्राम्णा वासवेन सह 'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः । वृत्रासुर इवेत्युपमा। सुमित्रासुतेन लक्ष्मणेन सह विचित्रमाश्चर्यकरमायोधनं वितेने जन्यमकरोदित्यर्थः ॥

**स च सुचिरं नियुध्य तमवध्य इतीशवरा-**<br>
**दनिलगिरा विबुध्य पुनरस्त्रमधत्त विधेः ।**<br>
**दलितमनेन तद्दिवि समुत्पतितं जगता-**<br>
**मतनुत राहुभीतिमधिकामतिकायशिरः ॥ ६२ ॥**

**स इति** । स सौमित्रिश्च सुचिरमतिचिरकालं नियुध्य युद्धं कृत्वा तमतिकायमीशवराद्ब्रह्मवरादवध्यो वधितुमशक्य इत्येवमनिलगिरा वायुवचनेन विबुध्य ज्ञात्वा । पुनःशब्दो वाक्यालंकारे । विधेरस्त्रं ब्रह्मास्त्रमधत्त प्रायुङ्क्त । अथानेन ब्रह्मास्त्रेण दलितं विच्छिन्नं सत् दिव्यन्तरिक्षे समुत्पतितं समुद्गतं तत्प्रसिद्धमतिकायशिरो जगतां लोकानामधिकां बहुलां राहुभीतिं राहुरयमिति भ्रान्तिसमुत्पन्नां भीतिमतनुताकरोत् । अत्रातिकायशिरसि राहुभ्रमाद्भ्रान्तिमदलंकारः । 'कविसंमतसादृश्याद्विषये पिहितात्मनि । आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥' इति लक्षणात् ॥

**अनुनीय रावणिरथो विधुरं पितरं दधत्पृथुसमीकधुरम् ।**<br>
**स रथी समेत्य सधनुः शरधीश्चलितश्चमूभिरभिदाशरथी ॥६३॥**

**अनुनीयेति** । अथानन्तरं स प्रसिद्धो रावणिरिन्द्रजिद्विधुरं सहोदरकुमारवधश्रवणजनितशोकविह्वलं पितरं रावणमनुनीय 'न तात मोहं परिगन्तुमर्हसि' इत्यादिना समाधाय पृथुसमीकधुरं महारणभारं दधद्दधानः । युद्धसंनद्ध इत्यर्थः । 'नाभ्यस्ताच्छतुः' इति नुमभावः । रथी रथारूढः । सह धनुषा सधनुः कार्मुकधरश्च सन् शरधी तूणीरौ समेत्य । धृत्वेत्यर्थः । शरा इषवो धीयन्तेऽनयोरिति शरधी । 'कर्मण्यधिकरणे च' इति किप्प्रत्ययः । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । चमूभिः सेनाभिः सह । अत्र सहशब्दाप्रयोगेऽपि तदर्थगम्यतायाम् 'वृद्धो यूना' इति ज्ञापनात्तृतीया । दाशरथी अभि । रामलक्ष्मणयोराभिमुख्येनेत्यर्थः । 'अभिरभागे' इति कर्मप्रवचनीयत्वाद्द्वितीया । चलितः प्रवृत्तः । प्रमिताक्षरावृत्तम् ॥

---

१. 'इतीव वरात्' इति पाठः. २. 'शरधिः' ३. 'अभिदाशरथी' इति पाठः.

आगत्य समरमरातिजयमनोरथाय रथाभिरक्षां रक्षांसि परितः प्रकल्प्य प्रतर्प्य च हविषा प्रदक्षिणशिखं शिखावन्तं मन्त्राधिगतविविधशस्त्राणि दधानस्तिरोधानं गगनगत एव निशितमुखैः शिलीमुखैर्निर्माय निखिलमर्माहतिं निस्त्रिंशक्रमः क्रव्यादो व्याध इव हरीन्विधुरीचकार ॥

आगत्येति । समरं युद्धभुवमागत्य प्रविश्य । अरातिजयमनोरथाय । शत्रुजयमनोरथसिद्ध्यर्थमित्यर्थः । रथाभिरक्षाम् । निजरथगुप्तिमुद्दिश्येति शेषः । परितः समन्तात् रक्षांसि राक्षसवीरान्प्रकल्प्य नियोज्य । हविषाज्यादिना । प्रगतो दक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । प्रदक्षिणं शिखा ज्वाला यस्य तम् । 'घृणिज्वाले अपि शिखे' इत्यमरः । एतेनास्य जयप्रदत्वं सूच्यते । तदुक्तम्—'इत्थं प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररशनां वशगां करोति' इति । शिखावन्तमग्निं प्रतर्प्य संतर्प्य च । मन्त्राधिगतविविधशस्त्राणि मन्त्रसामर्थ्यसंप्राप्तनानाविधास्त्राणि दधानो धारयन् । तिरोधानेनान्तर्धानेन गगनगतोऽन्तरिक्षवर्ती सन्नेव निशितमुखैस्तीक्ष्णाग्रैः शिलीमुखैर्बाणैः । निखिलमर्माहतिमशेषचमूमर्मच्छेदं निर्माय कृत्वा । निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति निस्त्रिंशः खड्गविशेषः । 'तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः । क्रमः परिपाटी यस्य स तथोक्तः । खड्गवद्भिभेदकः सन्नित्यर्थः । क्रव्यादान्पक्षिणो व्याधो लुब्धक इवेत्युपमा । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' इत्यमरः । हरीन्वानरान्विधुरीचकार । मूर्च्छितानकरोदित्यर्थः ॥

सहलक्ष्मणं तमपि दाशरथिं परुषो निदाघ इव पद्मसरः ।
विकलाशयं विधुरसत्त्वमयं विरचय्य धाम च जगाम शनैः ॥६४॥

सहेति । अयं रावणिः सह लक्ष्मणेन सहलक्ष्मणम् । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति विकल्पात्सहशब्दस्य सत्वाभावः । तं दाशरथिं श्रीराममपि परुषस्तीक्ष्णो निदाघो ग्रीष्मकालः । 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति विश्वः । पद्मसरः कमलाकरं शरैर्विकलाशयं व्याकुलमानसम् । अन्यत्र कलुषिताधारप्रदेशं च । 'आशयः स्यादभिप्राये मानसाधारयोरपि' इति विश्वः । विधुरसत्त्वं विश्लिष्टशक्तिम्, अन्यत्र विह्वलजलजन्तुकं च । 'विधुरं प्रीत्यपेते स्यात्कष्टविश्लिष्टयोरपि' इति वैजयन्ती । विरचय्य कृत्वा । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । शनैर्मन्दं मन्दम् । कृतकृत्यत्वादिति भावः । धाम गृहं जगाम प्राप । श्लेषसंकीर्णेयमुपमा । प्रमिताक्षरावृत्तम् ॥

क्षतार्कभवतेजसि क्षपितरामचन्द्रद्युतौ
विमुच्य सति निर्गते विशिखवृष्टिमसिन्धने ।

---

१. 'अधिसमरम्' इति पाठः. २ 'रथाभिरक्षायै' इति पाठः. ३ 'प्रदक्षिणशिखावन्तम्' इति पाठः. ४. 'मन्त्राधिगतानि विचित्राण्यस्त्राणि' इति पाठः. ५. 'तिरोधानगतः' इति पाठः. ६. 'शरैः' इति पाठः.

अदीप्तनलमस्फुरत्कुमुदमस्तनीलोत्पलं
समुत्तरलजीवनं समभवत्तदा वाहिनी ॥ ६५ ॥

**क्षतेति** । क्षतार्कभवतेजसि निर्वापितसुग्रीवप्रतापे तिरस्कृतसूर्यजनितप्रकाशे च । क्षपिता संकुचिता राम एव चन्द्रस्तस्य द्युतिः शोभा येन तस्मिंस्तथोक्ते अस्मिन्घने महात्मनीन्द्रजित्येव घने मेघे । विशिखवृष्टिं शरसंपातं तामेव वृष्टिं विमुच्य त्यक्त्वा निर्गते सति । तदा तस्मिन्समये वाहिनी नदी सेना च । 'सेनानद्योश्च वाहिनी' इति वैजयन्ती । अदीप्तोऽप्रकाशो नलो नलाख्यः कपिनायकः, अन्यत्र नलाः पोटगलाख्यतृणविशेषा यस्मिन् । 'नलः पोटगले राज्ञि पितृगर्ते कपीश्वरे' इति विश्वः । अस्फुरन्नदीप्यमानः कुमुदः कपिः,अन्यत्रास्फुरन्त्यनुल्लसन्ति कुमुदानि कैरवाणि यस्मिन्। 'कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ' इति विश्वः । अस्तो नष्टप्रायो नीलो नीलाख्यकपिनायक एवोत्पलम् । यद्वा अस्तौ नीलोत्पलौ नीलोत्पलनामानौ कपिनायकौ, अन्यत्र विनष्टकृष्णेन्दीवराणि च यस्मिन् । 'नीलः कपीशेऽद्रिभेदे कृष्णे ना तद्वति त्रिषु' इति नानार्थरत्नमाला । समुत्तरलमतिचञ्चलं स्थितिविधुरं जीवनं जीवितम् । अन्यत्रोद्वेजितजलं यस्मिन्कर्मणि तद्यथा भवति तथेति सर्वत्र क्रियाविशेषणम् । समभवत् । उक्तरीत्या शकलिताभूदित्यर्थः । श्लेषसंकीर्णसावयवरूपकम् । पृथ्वीवृत्तम् ॥

अचलमथ सलीलमोषधीनां हरति हनूमति जाम्बवन्नियोगात् ।
विचलितमभवद्बलं विशल्यं विबुधमनोऽपि विधूतशोकशल्यम् ६६

**अचलमिति** । अथ सेनामूर्च्छानन्तरं हनूमति जाम्बवतः परावरज्ञस्य ऋक्षराजस्य नियोगान्निदेशवचनात् । ओषधीनामचलं संजीविन्याद्योषधिपर्वतं सलीलमनायासं यथा तथा आहरत्यानीतवति सति । बलं वानरसैन्यं विशल्यं शल्यरहितं सत् । विचलितमभवत् । पुनर्युद्धसमृद्धोत्साहमभूदित्यर्थः । तथा विबुधानां श्रीरामजयकाङ्क्षिणां सुराणां मनोऽपि । 'विबुधाः सुरपण्डिताः' इत्यमरः । विधूतं विहतं शोक एव शल्यं यस्य तथोक्तम् । वानरसैन्यप्रबोधेन विबुधाः संतुष्टान्तःकरणा बभूवुरित्यर्थः । अत्र सैन्यविबुधमनसोः केवलप्रकृतत्वात्तुल्ययोगिताभेदः । पुष्पिताग्रावृत्तम् ॥

पुनस्ते[1] सहजतेजोभरितेन दावानलेनेव वानरबलेन दह्यमानां दरीमिव पुरीमपहाय[2] पञ्चाननमिव पङ्क्त्याननिदेशतश्चलितमखिलभुवनप्रकम्पनमकम्पनमाहतप्लवङ्गसङ्घं[3] प्रजङ्घमङ्गदभुजप्रतापानलशलभावुभावपि[4] निशम्य निशाम्य[5] च द्विविदमैन्दावदारितौ महारथौ शोणिताक्षविरूपाक्षावपि[6] कोपाक्षान्तिभ्यां[7] पुरुषसंरम्भौ कुम्भनिकुम्भौ महावीरौ समुत्तम्भ्य बाहू[8] सुबाहुमारीचाविव राघवभुजाभ्यां सुग्रीवहनूमद्भ्यामद्भुतं युद्धमतनिषाताम् ॥

---

१. 'तेन पुनः' इति पाठः. २. 'विहाय' इति पाठः. ३. 'पञ्चाननमिव' इति पाठः. ४. 'अखिलरिपुप्रकम्पनः' इति पाठः. ५. 'प्रजङ्घं च' इति पाठः. ६. 'यूपाक्षौ' इति पाठः. ७. 'कोपाक्षान्तपरुष' इति पाठः. ८. 'बाहुम्' इति पाठः.

पुनरिति। पुनर्भूयोऽपि सहजतेजोभरितेन नैसर्गिकप्रभावपरिपूर्णेन। अन्यत्र स्वाभाविकार्चिःसंपन्नेन। 'तेजोऽनले प्रभावेऽह्नि ज्योतिष्यर्चिषि रेतसि' इति वैजयन्ती। दावानलेन वनवह्निनेव वानरवलेन दह्यमानां भस्मीक्रियमाणां दरीं गिरिगुहामिव पुरीं लङ्कामपहाय त्यक्त्वा पञ्चाननं सिंहमिवेत्यनेकैवेयमुपमा। पङ्क्त्याननिदेशतो रावणाज्ञावचनाचलितं युद्धाय प्रवृत्तमखिललोकानशेषभुवनानि प्रकम्पयति निपीडयति निजभुजवलेनेति तथोक्तमकम्पनमकम्पनाख्यं राक्षससेनानायकम्। तथाहतप्लवङ्गसङ्घं निहतवानरनिवहं प्रजङ्घं चेत्युभावपि राक्षसावङ्गदभुजप्रताप एवानलस्तस्मिञ्शलभौ पतङ्गौ निशम्य। अङ्गदबाहुपराक्रमहतावाकर्ण्येत्यर्थः। 'समौ पतङ्गशलभौ' इत्यमरः। तथा मैन्दद्विविदाभ्यां मैन्दद्विविदाख्यवानरपतिभ्यामवदारितौ विनिहतौ महारथौ। 'आत्मानं सारथिं चाश्वान्रक्षन्युध्येत यो नरः। स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः॥' इत्युक्तलक्षणौ शोणिताक्षविरूपाक्षौ शोणिताक्षविरूपाक्षनामानौ राक्षससेनानायकावपि निशाम्य दृष्ट्वा। कोपाक्षान्तिभ्याममर्षेर्ष्याभ्यां परुषोऽत्युद्धतः संरम्भो युद्धसंभ्रमो ययोस्तौ। 'अक्षान्तिरीर्ष्यासूया तु', 'संरम्भः संभ्रमे कोपे' इति चामरः। कुम्भनिकुम्भौ नाम कुम्भकर्णपुत्रौ महावीरौ (कर्तारौ) बाहू निजहस्तौ समुत्तम्भ्य साटोपमुद्धृत्य राघवभुजाभ्यां श्रीरामबाहुभ्यां सुबाहुमारीचाविव। विश्वामित्रयागसंरक्षणवेलायामिति भावः। राघवस्य भुजाभ्यां भुजप्रायाभ्यां सुग्रीवहनूमद्भ्यां महाद्भुतमाश्चर्यजनकं युद्धमतनिषातां कृतवन्तौ। कुम्भः सुग्रीवेण निकुम्भो हनूमतेति यथाक्रममन्वयाद्यथासंख्यालंकारः। स चोक्तोपमया संसृज्यते॥

भूमौ ततः प्लवगराजभुजेन विद्ध-
मालोक्य कुम्भमसहो विरहं तदीयम्।
शोकादगादनिलसूनुहतो निकुम्भ-
स्तन्नामयुक्तममरीस्तनकुम्भमेव॥ ६७॥

भूमाविति। ततस्तदनन्तरं प्लवगराजभुजेन सुग्रीवबाहुना विद्धं प्रहृतमतएव भूमौ पतितमिति शेषः। कुम्भमालोक्य दृष्ट्वा तदीयं विरहं वियोगं न सहत इत्यसहोऽसहिष्णुः। पचाद्यच्। 'न लोक–' इत्यादिना षष्ठीप्रतिषेधः। अनिलसूनुना हनूमता हतो निकुम्भः शोकाद्भ्रातृविरहजनितविषादाद्धेतोः। तन्नामयुक्तं कुम्भनामयुक्तममरीस्तनकुम्भममराङ्गनाकुचकुम्भमेवागात्। भ्रातृविरहासहतया तन्नामगन्धसंबन्धामरीकुचकुम्भं प्रापेत्यर्थः। अत्र रणाभिमुखमरणहेतुकस्यामरीकुचकुम्भसंगमस्य शोकहेतुत्वेनोत्प्रेक्षणादुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या। वसन्ततिलकावृत्तम्॥

ततः कुपितरावणाकारणं रणवाहनियुक्तं युक्तमखिलवाहिनीमिराहवाटोपमुखरं खरात्मजं मकराक्षमैक्ष्वाकशरोऽपि विपक्षमपि सपक्ष एव समक्षमनयज्जनयितुः॥

---

१. 'असहन्' इति पाठः. २. 'कुचकुम्भमेव' इति पाठः. ३. 'कौणपपतिनियुक्त' इति पाठः. ४. 'इव' इति पाठः.

**तत इति**। तदनु कुम्भनिकुम्भवधानन्तरम्। कुपितेन क्रुद्धेन रावणेनाकारणमाह्वानं यस्य तम्। रावणेनाहूतमित्यर्थः। 'हूतिराकारणाह्वानं' इत्यमरः। तथा रणवाहे समरक्रियानिर्वाहे विषये नियुक्तमाज्ञापितमत एवाखिलवाहिनीभिर्युक्तम्। चतुरङ्गसैन्यसमेतमित्यर्थः। आहवाटोपमुखरं रणाडम्बरारभटसमुद्घट्टसिंहनादं खरात्मजं खरतनयं मकराक्षमैक्ष्वाकस्येक्ष्वाकुवंशोद्भवस्य श्रीरामस्य शरो बाणो विपक्षं शत्रुपक्षमपि तं सपक्ष एव बन्धुः सन्नेवेति विरोधः। स च सगरुदेवेति परिहाराद्विरोधाभासः। जनयितुर्जनकस्य खरस्य समक्षं समीपमनयत्प्रापयामास। मकराक्षोऽपि निहत इत्यर्थः॥

**कृत्वा मूर्धनि शासनं पितुरथो गत्वा रणं रावणि-**
**र्हुत्वा तत्र महाभुजो हुतभुजं धृत्वा महास्त्राणि च।**
**स्थित्वा व्योमनि मायया शरचयं त्यक्त्वा च भित्त्वा चमूं**
**बुद्ध्वा राघवकोपमाप सहसा लङ्कामलं कातरः॥ ६८॥**

**कृत्वेति**। अथो मकराक्षवधानन्तरं महाभुजः। अपरिच्छिन्नभुजबलशालीत्यर्थः। रावणिरिन्द्रजित्पितू रावणस्य शासनमाज्ञां मूर्धनि शिरसि। 'विभाषा ङिश्योः' इति विकल्पादल्लोपाभावः। कृत्वा। धृत्वेत्यर्थः। रणं रणरङ्गं गत्वा। तत्र रणरङ्गे हुतभुजमग्निं हुत्वा। महास्त्राणि दिव्यास्त्राणि च धृत्वा। माययान्तर्धानशक्त्या व्योमन्यन्तरिक्षे। पूर्ववदल्लोपाभावः। स्थित्वा। शरचयं बाणपरम्परां च त्यक्त्वाभिवृष्य। चमूं वानरसेनां भित्त्वा। ततो राघवस्य कोपं क्रोपोदयं बुद्ध्वा ज्ञात्वा। अलमत्यन्तं कातरो भीतः सन् सहसा शीघ्रम्। 'स्वरादिपाठादव्ययम्' इति शाकटायनः। लङ्कामाप प्रविवेश। शार्दूलविक्रीडितं वृत्तम्॥

अथ निकुम्भिलां होतुकामः प्रत्यग्द्वारेण निर्गच्छन्निन्द्रजित्स्वगमनविघातुकं रामलक्ष्मणयोर्युद्धोद्वेगं दृष्ट्वा तन्निवारणार्थं मायां प्रकटितवानित्याह—

**ततः प्रतीचः प्रतिहारादयं प्रातिहारिको निर्गत्य निकृत्यासिना कांचिदाञ्जनेयस्य पुरतो मायामयीं मैथिलीमाकुलीकृतमानसे तस्मिन्नाकस्मिकमिदमतथ्यमपि तथ्यमेव विबुध्य चिराय नियुध्य निराशे निवृत्ते विद्वेषिपशुविशसनारम्भिनिकुम्भिलां समासाद्य सद्य एष प्रावर्तयत सत्रमतिविचित्रम्।**

**तत इति**। ततः पुरप्रवेशानन्तरम्। प्रतिह्रियते विमोह्यतेऽनेन परमानसमिति प्रतिहारः कैतवः स प्रयोजनमस्य प्रातिहारिकः। मायावीत्यर्थः। 'प्रयोजनम्' इति ठक्। अयमिन्द्रजित्प्रतीचः प्रतीहारात्प्रत्यग्द्वारात्। 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः।

---

१. 'स प्रातिहारिकः' इति पाठः. २. 'मनसि' इति पाठः. ३. 'बुद्ध्वा' इति पाठः. ४. 'नियुध्य चिराय' इति पाठः. ५. 'प्रतिनिवृत्ते' इति पाठः. ६. 'विद्विषि' इति पाठः. ७. 'विपक्षपशु' इति पाठः. ८. 'आसाद्य' इति पाठः. ९. 'प्रावर्तत' इति पाठः.

निर्गत्य। आञ्जनेयस्य हनूमतः पुरतः पुरस्तादसिना खड्गेन मायामयीं मिथ्यारूपां कांचिन्मैथिलीं सीतां निकृत्य छित्त्वा। अत आकुलीकृतमानसे व्याकुलितान्तःकरणे तस्मिन्नाञ्जनेये। इदं सीतावधकृत्यमाकस्मिकमकस्मादागतम्। इन्द्रजालमिवेत्यर्थः। अतथ्यमसत्यमपि तथ्यं सत्यं विबुध्य ज्ञात्वा। 'सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति' इत्यमरः। चिराय चिरकालम्। विभक्तिप्रतिरूपकमव्ययमेतत्। 'चिराय चिररात्राय' इत्यमरः। नियुध्य युद्धं कृत्वा। निराश आशारहिते निवृत्ते निर्गते सति विद्वेषिण एव पशवस्तेषां विशसने विदारण आरम्भ उद्योगोऽस्यास्तीति तथोक्तः। यद्वा विद्वेषीति च्छेदः। इन्द्रजित्पशुविशसनमारभते ताच्छील्येनेति तथोक्तः सन्। निकुम्भिलां निकुम्भिलाख्यहोमार्थगुप्तस्थलविशेषमासाद्य प्राप्य सद्यस्तदानीमेवातिविचित्रमत्यन्ताद्भुतं सत्रं परमारणयागं प्रावर्तयत प्रवर्तयामास। उपक्रान्तवानित्यर्थः॥

**तदनु हनूमतः प्रतिनिवृत्तात्¹ दुर्वृत्तान्तमिममाकर्ण्य विदीर्ण²मानसो मानसचर इव राजहंसो वज्रनिर्घोषाद्विषादाकुलो राजहंसः³ संसदि निपत्य सौमित्रिणा समाश्वास्यमानः सकरुणं निःश्वस्य विश्वस्य पतिरपि विधुरो⁴ व्यलापीत्॥**

तदन्विति। तदन्विन्द्रजितो निकुम्भिलाप्रवेशानन्तरं प्रतिनिवृत्तात्प्रत्यागताद्धनूमत इमं दुर्वृत्तान्तं मैथिलीवधरूपवार्ताम्। 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः। आकर्ण्य श्रुत्वा। विदीर्णमानसो विदलितहृदयः अतएव वज्रनिर्घोषात्स्फूर्जथोः। 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः। विदीर्णमानसः। तस्य तदुद्वेजकत्वादिति भावः। मानसचरो मानससरोवर्ती। 'मानसं सरसि स्वान्ते' इत्युभयत्रापि विश्वः। राजहंसः कलहंस इव विषादाकुलः। 'विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः' इत्युक्तलक्षणविषादपर्याकुलः सन्। राजहंसो नृपश्रेष्ठो रामः। 'राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः' इति विश्वः। संसदि वानरसमितौ। 'सभासमितिसंसदः' इत्यमरः। निपत्य भुवि पतित्वा सौमित्रिणा समाश्वास्यमानः। 'शुभे वर्त्मनि तिष्ठन्तं त्वामार्य विजितेन्द्रियम्। अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः॥' इत्यादिनीतिवचनैः समाधीयमानः करुणं दीनं निःश्वस्य विश्वस्य प्रपञ्चस्य पतिरपि। सकललोकनिग्रहानुग्रहसमर्थोऽपीत्यर्थः। स रामो विधुरो विश्लिष्टः सन्। व्यलापीद्विललाप। 'विधुरं प्रत्यपेते स्यात्कष्टविश्लिष्टयोरपि' इति वैजयन्ती॥

तत्प्रकारमेवाह—

जज्ञे तदत्रभवती जनकस्य यज्ञे
देव्याश्चिराय धरणेररणेः शिखेव⁵।
वंशे मनोरपि वधूरभवत्किमन्य-
द्रामस्तथापि⁶ विधिना रचितो विरामः॥ ६९॥

जज्ञ इति। तत्तथा। तेन प्रकारेणेत्यर्थः। अत्रभवती पूज्या सीता अत्रभवती

---

१. 'वृत्तमेतदाकर्ण्य' इति पाठः. २. 'विशीर्ण' इति पाठः. ३. 'राजहंसः' इति नास्ति क्वचित्. ४. 'विधुरम्' इति पाठः. ५. 'शिखीव' इति पाठः. ६. 'तथापि' इति पाठः.

व्याख्याता । जनकस्य राज्ञो यज्ञेऽरणेर्निर्मन्थनदारुविशेषात् । शिखा अग्निज्वालेवेत्युपमा । एतेन परमपतिव्रतात्वमयोनिजत्वं च सूच्यते । 'घृणिज्वाले अपि शिखे' इत्यमरः । धरणेर्देव्याः हलमुखाकृष्टाया भूदेव्याश्चिराय चिरकालेन जज्ञे प्रादुर्बभूव । तथा मनोर्वैवस्वतमनोर्वंशे कुले । सकललोकश्लाघ्य इति भावः । वधूः स्नुषा । दशरथमहाराजस्येत्यर्थः । यद्वा वधूर्जाया । आत्मन इति शेषः । अभवज्जाता । 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । अन्यत्किमुत्पत्तिगृहप्रविष्टगृहयोरत्यन्तश्लाघ्यत्वं वक्तव्यम् । किमपि नास्तीत्यर्थः । राम इत्यात्मनिर्देशोऽखण्डितमहत्त्वद्योतनार्थः । विधिना दैवेन । 'विधिर्विधाने दैवे च' इत्यमरः। विगता रामा सुन्दरी यस्य स विरामो विगतभार्यो रचितः कृतः । दैवयोगो न कस्यापि लङ्घनीय इति भावः । 'सुन्दरी रमणी रामा' इत्यमरः । वसन्ततिलकावृत्तम् ॥

यत्नो मुधा भवति यत्र समीरसूनो-
नालं नलोऽपि नवसेतुनिबन्धनाय ।
दूरे च पावकशरो दुरतिक्रमोऽयं
तत्केन शोकजलधिस्तव लङ्घनीयः ॥ ७० ॥

**यत्न इति** । यत्र शोकजलधौ समीरसूनोर्हनूमतो यत्न उल्लङ्घनोत्साहो मुधा व्यर्थो भवति । येन तरितुं शक्यो न भवेदिति भावः । तथा नलोऽपि प्रसिद्धसेतुनिर्मातापि नवसेतुनिबन्धनाय नूतनसेतुनिर्माणाय नालं न पर्याप्तः । सोऽपि तरणोपायकरणसमर्थो न भवतीत्यर्थः । 'नमःस्वस्ति—' इत्यादिना चतुर्थी । तथा पावकशरश्चाग्नेयास्त्रमपि दूरे । वर्तते इति शेषः । सोऽप्येनं शोषयितुं न शक्त इत्यर्थः । तत्तस्मात्कारणात् । दुरतिक्रमो दुस्तरोऽयं वर्तमानः तव शोकजलधिस्त्वन्निमित्तकोऽयं शोकसागरः । केनोपायेन लङ्घनीयः ! उक्तोपायैः प्रसिद्धार्णवस्तरितुं शक्यः अयं तु न केनाप्युपायेन तरितुं शक्य इत्यर्थः । अतएवोपमानात्प्रसिद्धार्णवादस्याधिक्यकथनाद्व्यतिरेकालंकारः । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति लक्षणात् । वृत्तं पूर्ववत् ॥

**इत्यादि परिदेवमानमेनं विदितासुरमायाविशेषो विभीषणः समागत्य 'देव, भवतोऽपि किमिदमस्थाने करुणमवस्थान्तरम् । निरन्तरायं मखनिवर्तनाय पुरंदरारिणा कृतं कृतकमेवैतदवधारय । धारय मनसि धैर्यम्' इत्यभिधाय तद्वधाय पुरोधाय लक्ष्मणं तत्क्षणादेव निकुम्भिलां बलैः सहोपरुरोध ॥**

**इतीति** । इति एवमादि परिदेवमानं विलपन्तम् । 'विलापः परिदेवनम्' इत्यमरः । एनं श्रीरामं विदितासुरमायाविशेषो विज्ञातराक्षसमोहनव्यापारविशेषो विभीषणः समागत्य संनिधिं प्रत्यागत्य । देव स्वामिन् श्रीराम, भवतोऽपि । मायानियन्तुः

१. 'शूरान्' इति पाठः. २. 'आशरमाया' इति पाठः. ३. 'दीनमवस्थानम्' इति पाठः. ४. 'कृत्रिममेतदित्यवधार्य' इति पाठः. ५. 'पुरोधाय' इति नास्ति क्वचित्. ६. 'तत्क्षणमेव पुरस्कृत्य निकुम्भिलामुपरुरोध' इति पाठः.

परमपुरुषस्यापीति भावः। अस्थानेऽशोचनीयस्थाने। सीतावधस्य मायिकत्वादिति भावः। करुणं दीनम्। करुणशब्दादच्। इदमेतदवस्थान्तरं दशाभेदः किं किमर्थम्। दुर्दशापन्नत्वेन वर्तितव्यमित्यर्थः। किंतु निरन्तरायं निर्विघ्नं यथा तथा मखनिर्वर्तनाय स्वविजयहेतुसत्रनिष्पादनार्थं पुरंदरारिणेन्द्रजिता कृतमाचरितमेतत्सीतावधरूपकृत्यं कृतकं कृत्रिमम्। असत्यमेवेति यावत्। अवधारय जानीहि। अतो मनसि धैर्यं निर्विकारत्वम्। 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु' इति रसिकाः। धारय स्वीकुरु। इत्येवमभिधायोक्त्वा तस्येन्द्रजितो वधाय संहारार्थं लक्ष्मणं पुरोधाय पुरस्कृत्य तत्क्षणादेव तस्मिन्क्षणे निकुम्भिलां निकुम्भिलाख्यस्थानं बलैर्वानरसैन्यैः सहोपरुरोध निरुद्धवान्॥

**हरिकुलारवतश्चलितस्ततो गिरिदरीकुहरादिव केसरी।**
**अपरिपूर्य रुषाहवमाहवं स विदधे बलशासनशासनः॥ ७१॥**

**हरीति**। तत उपरोधानन्तरं स प्रसिद्धो बलं नाम वानरं शास्तीति बलशासन इन्द्रस्तं शास्तीति बलशासनशासन इन्द्रजित्। उभयत्रापि कर्तरि ल्युट्। हरिकुलारवतः कपिसैन्यकोलाहलाद्धेतोर्गिरिदरीकुहरात्पर्वतगुहागोलकात्केसरी सिंह इव चलितो निर्गतः सन्। रुषा वानरसंमर्दकृतामर्षेण। आसमन्ताज्जुहोत्यस्मिन्नित्याहवो यागः। 'ऋदोरप्' इति जुहोतेरप्प्रत्यये गुणायादेशौ। तमपरिपूर्यासमाप्यैव। आहूयन्ते शत्रवोऽस्मिन्नित्याहवं युद्धम्। चकार। 'आङि युद्धे' इति ह्वयतेराङ्पूर्वादप्रत्ययः। संप्रसारणम्। 'आवहः संगरे यागे' इति विश्वः। विदधे चकार। द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्॥

**वातूल इव तूलानां वानराणां रणाजिरे।**
**विद्रावणस्ततो मायाविद्रावणसुतोऽभवत्॥ ७२॥**

**वातूल इति**। ततस्तदनन्तरं मायां परव्यामोहकव्यापारं वेत्तीति मायाविद्रावणसुत इन्द्रजित्। तूलानां वातूलो वातसमूह इवेत्युपमा। 'वाताच्च' इत्यूलप्रत्ययः। रणाजिरे रणाङ्गणे। 'अङ्गणं चत्वराजिरे' इत्यमरः। वानराणाम्। विद्रावयतीति विद्रावणो निरासकोऽभवत्। शरवर्षेण वानरान्कान्दिशीकांश्चकारेत्यर्थः॥

**अनुपदमनीकोन्मथनसंरम्भं संवर्तसमयदुर्दान्तं कृतान्तमिव समराङ्गणं समापतन्तं स्यन्दनगतं संक्रन्दनजितं गन्धवहनन्दनस्कन्धवर्ती सौमित्रिः प्रवर्तितनिशितशरधारः शतधारपाणिरिव जम्भमस्तम्भयत्॥**

१. 'अनीकिनीनाथनिधनसंरब्धतरं संवर्तप्रवृत्तमिव कृतान्तम्' इति पाठः. २. 'आपतन्तम्' इति पाठः. ३. 'तं संक्रन्दनजितम्' इति पाठः. ४. 'गन्धवाह' इति पाठः. ५. 'शिततरशरधाराभिः' इति पाठः.

**अनुपदमिति** । अनुपदमनन्तरम् । अनीकोन्मथने वानरसैन्यविदारणे संरम्भः कोपः संभ्रमो वा यस्य तम् ।'संरम्भः संभ्रमे कोपे' इति शब्दार्णवः । संवर्तसमयदुर्दान्तं प्रलयकालोद्भटम् । 'संवर्तः प्रलयः कल्पः' इत्यमरः । कृतान्तं यममिव स्थितमित्युपमा । 'कृतान्तो यमसिद्धान्त' इत्यमरः । स्यन्दनगतं रथारूढं संक्रन्दनजितमिन्द्रजितं गन्धवहनन्दनस्य हनूमतः स्कन्धवर्ती स्कन्धारूढः सौमित्रिर्लक्ष्मणः प्रवर्तिताः प्रयुक्ता निशितास्तीक्ष्णाः शरधाराः शरपरम्परा येन स तथोक्तः सन् । जम्भं जम्भाख्यमसुरं शतधारं पाणौ यस्य स शतधारपाणिः । इन्द्र इवेत्युपमा । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति निष्ठायाः परनिपातः । 'शतकोटिः स्वरुः शम्बः' इति वज्रपर्यायेष्वमरः । अस्तम्भयदुपरुरोध । 'स्तम्भु रोधने' इति धातोर्णिजन्ताल्लङ् ॥

> विकस्वरमदोत्कटं प्रचुरवीरवादोद्भटं
> पतत्त्रुटितकङ्कटं प्रतिहतास्त्रमस्त्रेण च ।
> जगत्त्रयभयावहं जयपराजयागोचरं
> वितेनतुरुभाविभाविव तदा रणं दारुणम् ॥ ७३ ॥

**विकस्वरेति** । विकस्वरो विकसनशीलः । प्रतिपदं प्रवर्धमान इति यावत् । 'विकासी तु विकस्वरः' इत्यमरः । 'स्थेशभासपिसकसो वरच्' इति वरच्प्रत्ययः । तेन मदेन दर्पेणोत्कटमुद्रिक्तं प्रचुरवीरवादैः 'छिन्द्धि भिन्द्धि' इत्यादिप्रभूतवीरालापैरुद्भटमुज्जृम्भितम् । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । पतन्तः पतमानाः त्रुटिताः छिन्नाः कङ्कटा उरश्छदा यस्मिंस्तत् । 'उरश्छदः कङ्कटकः' इत्यमरः । तथास्त्रेण । दिव्यास्त्रैरित्यर्थः । प्रतिहतानि प्रतिरुद्धान्यस्त्राणि यस्मिंस्तं तथोक्तं । च जगत्त्रयभयावहं त्रैलोक्यभयंकरम् । 'शुभावहम्' इति पाठे त्रिलोककण्टकस्येन्द्रजितो विनाशहेतुत्वाच्छुभकरम् । जयपराजययोरगोचरमविषयम् । तुल्यबलत्वादिति भावः । अतएव दारुणं परस्परभयंकरं रणं कलहम् । 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । तदा तस्मिन्समये सौमित्रीन्द्रजितौ इमौ उभौ मत्तगजाविव । वितेनतुश्चक्रतुः । उपमानालंकारः । पृथ्वीवृत्तम् ॥

> शतधारकठोरशिखैर्विशिखैः शतधा विरचय्य शरासगुणम् ।
> विदधे विबुधेशजितं समरे हतसारथिमप्यथ दाशरथिः ॥ ७४ ॥

**शतधारेति** । अथानन्तरं दाशरथिर्दशरथपुत्रो लक्ष्मणः । 'अत इञ्' समरे युद्धे शतधारकठोरशिखैः कठोरवज्रायुधतीक्ष्णाग्रैर्विशिखैर्बाणैः शरासगुणमिन्द्रजित्कार्मुकज्याम् । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इत्यमरः । शतधा शतप्रकारेण । शतशकलितमित्यर्थः । विरचय्य कृत्वा । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । विबुधेशजितमिन्द्रजितमपि हतसारथिं विदधे चकार । 'सूतः क्षत्ता च सारथिः' इत्यमरः । तोटकवृत्तम् । 'तोटकं सः' इति च्छन्दः । 'इह तोटकमम्बुधिसैः प्रमितम्' इति लक्षणमुक्तं वृत्तरत्नाकरे ॥

---

१. 'परस्पर' इति पाठः. २. 'तदारुणम्' इति पाठः.

यदुचितमहो मायाशीलस्य यद्भुजशालिनः
सदृशमथ वा युक्तं नक्तंचरेन्द्रसुतस्य यत्।
शतमखजितः शौर्यं यच्चानुरूपमथात्मन-
स्तदकृत रुषामन्दो मन्दोदरीतनयो रणे ॥ ७५ ॥

यदिति। अहो निकृत्तगुणो हतसारथिश्चेत्याश्चर्यम्। मायाशीलस्य परव्यामोहक-व्यापाराचरणतत्परस्य यत्कृत्यमुचितमनुगुणम्। तथा भुजशालिनो बाहुपराक्रमशा-लिनो यत्सदृशं समानम्। अथवेति पक्षान्तरे। नक्तंचरेन्द्रसुतस्य सकललोकजैत्ररा-वणसुतस्य यद्युक्तमर्हम्। अथवेति वाक्यारम्भे। शतमखजित इन्द्रजित आत्मनः स्वस्य यच्च। 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इत्यमरः। शौर्यं शूरत्वमनु-रूपं समर्थं तत्कृत्यं शौर्यं च रणे रुषा रोषेणामन्दः। महारोषाक्रान्त इत्यर्थः। मन्दो-दरीतनय इन्द्रजित्। अकृत कृतवान्। कृञो लुङि तङ्। 'तनादिभ्यस्तथासोः' इति सिचो लुक्। मायाशीलत्वादिगुणसंपन्नस्य स्वस्य यदुचितं तत्सर्वमपि रणपाण्डित्य-मकरोदित्यर्थः। हरिणीवृत्तम्—'रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात्। अत एवाद्यपादे द्वितीययतिस्थाने अपदस्थयत्याख्यमकृतकृतयोऽप्या-लंकारिका न ममृषुः। 'कुत्रचित्पदमध्येऽपि यतिमिच्छन्ति सूरयः। यदि पूर्वापरौ भागौ न स्यातामेकवर्णगौ ॥' इति तिलकवचनमपि समाधातुं शक्नुयात्। तथापि 'न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत्' इत्यादिमहाकविप्रयोगदर्शनाददोषः। निर-ङ्कुशाः खलु कवयः सर्वपथिका भवन्ति ॥

[1]एवं मन्दोदरीतनयस्य लक्ष्मणेन साकं युध्यमानस्य त्रिदिनानि व्यतीयुः ॥

एवमिति ॥ स्पष्टोऽर्थः ॥

अनुपदम[2]भिषेणनवति विभीषणे तेन[3]ाविनीतेन मुक्तां शक्तिमर्ध-चन्द्रेण दारयन्नपारयन्सोढुमदसीयमविनयममर्षाकुलः सौमित्रि-रमोघं [4]माघवनममुञ्चदस्त्रम् ॥

अनुपदमिति। अनुपदमनन्तरम्। विभीषणेऽभिषेणनवति सेनयाभिगमन-वति सति। 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः। 'सत्यापपाश-'इत्या-दिना सेनाशब्दाण्णिच्। 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति सकारस्य षत्वम्। भीषणेन भयंकरेणाविनीतेन दुर्विनीतेन तेनेन्द्रजिता मुक्तां प्रयुक्तां शक्तिमायुधवि-शेषमर्धचन्द्रेण बाणविशेषेण दारयन्विभिन्दन्। अमुष्य इन्द्रजित इदमदसीयम्। 'त्यदादीनि च' इति वृद्धसंज्ञायां वृद्धाच्छः। अविनयं दुर्विनयं सोढुमपारयन्नशक्नु-वन्। अमर्षाकुलः क्रोधाविष्टः सौमित्रिर्लक्ष्मणः। अमोघम्। शत्रुशिरश्छेदकमित्यर्थः। माघवनमैन्द्रम्। 'तस्येदम्' इत्यण्। अस्त्रममुञ्चत्प्रायुङ्क्त ॥

१. 'एवं—व्यतीयुः' इति वाक्यं क्वचिन्नास्ति. २. 'अभिषिषेण अभिषेणनवति' इति पाठः. ३. 'अविनीतेन' इति नास्ति क्वचित्. ४. 'माघवतास्त्रममुञ्चत्' इति पाठः.

पतति स्म तत्प्रथमस्त्रमुज्ज्वलं
सशिरस्त्रमिन्द्रजयिनः शिरस्ततः ।
अनु पुष्पवृष्टिरनघा दिवौकसा-
मथ बाष्पवृष्टिरमरारियोषिताम् ॥ ७६ ॥

पततीति । प्रथममादावुज्ज्वलं दीप्तं तत्प्रसिद्धमस्त्रमैन्द्रास्त्रं पतति स्म न्यपतत् । इन्द्रजितीति शेषः । 'लट् स्मे' इति भूतार्थे लट् । ततोऽस्त्रपातानन्तरं सशिरस्त्रं सशीर्षण्यमिन्द्रजयिनः शिरः पतति स्म । अनु पश्चात् शिरःपतनानन्तरम् । 'पश्चात्सादृश्ययोरनु' इत्यमरः । अनघा निर्दुष्टा । 'दुःखैनोव्यसनेष्वघम्' इत्यमरः । द्यौर्दिवमोकः स्थानं येषां ते दिवौकसो देवाः । आद्ये पृषोदरादित्वात्साधुः । द्वितीये 'त्रिदिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । तेषां पुष्पवृष्टिः । तदपवर्तितप्रसूनवर्षमित्यर्थः । पतति स्म । अथानन्तरम् । अमरारियोषितां रावणान्तःपुरस्त्रीणां बाष्पवृष्टिः नेत्राम्बुवर्षं पतति स्म । अत्र पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुत्वात्कारणमालाख्यालंकारः । 'पूर्वपूर्वं प्रति यथा हेतुः स्यादुत्तरोत्तरम् । अतः कारणमालाख्यमलंकरणमुच्यते ॥' इति लक्षणात् । मञ्जुभाषिणीवृत्तम् ॥

श्रुत्वा शक्रजितः सुतस्य निधनं शोकेन रक्षःपतेः
क्लान्तं निःश्वसदश्रुपूरभरितं क्रन्दच्च फूत्कारि च ।
कोपेनाथ विपाटलं कुटिलितभ्रूवल्लि वृत्तेक्षणं
जज्ञे दष्टघनोष्ठमट्टहसितोद्रिक्तं समस्तं मुखम् ॥ ७७ ॥

श्रुत्वेति । सुतस्य शक्रजित इन्द्रजितो निधनं मरणं श्रुत्वा रक्षःपतेः रावणस्य समस्तं मुखम् । दशापि मुखानीत्यर्थः । शोकेन क्लान्तं परिम्लानम् । निःश्वसद्दीर्घोष्णनिश्वासकृत् । अश्रुपूरभरितं बाष्पप्रवाहपरिपूर्णम् । क्रन्ददाक्रोशयुक्तं च । फूत्कारि च । फूदिति मुखमारुतानुकारी शब्दः । अथेति वाक्यारम्भे । कोपेन शत्रुकृतापकारेण 'मनःप्रज्वलनं कोपः' इत्युक्तलक्षणेन क्रोधेन विपाटलमत्यरुणं च । कुटिलिता वक्रीकृता भ्रूवल्ल्यो यस्य तत्तथोक्तम् । वृत्तानि विघूर्णनाद्वर्तुलाकाराणीक्षणानि यस्य तत् । दष्टा दन्तैर्निपीडिता घना लम्बमानाश्च ओष्ठा अधरोष्ठा यस्य तत्तथोक्तम् । अट्टहसितेन अतिशयितहासेनोद्रिक्तमुद्भटं च जज्ञे जातम् । अशेषाणि रावणमुखानि करुणरौद्ररसानुभावविजृम्भितान्यभूवन्नित्यर्थः । अत्र क्लान्तत्वादीनामनेकगुणानां समुचितत्वात्समुच्चयालंकारः । 'गुणक्रियायौगपद्यं समुच्चयः' इति सामान्यलक्षणम् । शार्दूलविक्रीडितं वृत्तम् ॥

अनन्तरमपक्रान्तासुषु विक्रान्तेषु पुरंदरारिमुखेषु नन्दनेषु निहतेषु कुम्भकर्णादिषु भ्रातृषु, विध्वस्तेषु प्रहस्तपूर्वेषु सचिवेषु, व्यापादितेषु विरूपाक्षप्रभृतिषु सेनापतिषु, विकीर्णे भवति निखिले बले,

१. 'अवनौ' इति पाठः. २. 'हसितोद्वृत्तम्' इति पाठः. ३. 'विक्रान्तेषु' इति नास्ति कचित्. ४. 'विनिहतेषु' इति पाठः. ५. 'व्यतीतेषु' इति पाठः. ६. 'कपिविमर्दनेन विशीर्णे' इति पाठः.

समन्ततः [1]करुणपरिपूरितपौरवधूजनपरिदेवनोत्तरङ्गायां लङ्कायामातङ्कातिशयरोषणो रावणस्तत्क्षण[2]मिक्ष्वाकुकुलनायकदयितां धरणीसुतां जिघांसु[3]रन्तिकगतमन्त्रिणा निवार्यमाणः [4]सारथिना विधिना च [5]चोदितरथो दाशरथिविजयविहितसंगरः [6]संगराङ्गणमवततार ॥

अनन्तरमिति। अनन्तरं शोकरौद्ररसावेशानन्तरम्। विक्रान्तेषु महाशूरेषु। 'शूरो वीरश्च विक्रान्तः' इत्यमरः। पुरंदरारिमुखेष्विन्द्रजित्प्रमुखेषु नन्दनेषु पुत्रेष्वपक्रान्तासुषु निर्गतप्राणेषु। मृतेषु सत्स्वित्यर्थः।'पुंसि भून्म्यसवः प्राणाः' इत्यमरः। कुम्भकर्ण आदिर्येषां तेषु। आदिशब्देन महोदरादयो गृह्यन्ते। भ्रातृषु सहोदरेषु निहतेषु नष्टेषु सत्सु। प्रहस्तपूर्वेषु प्रहस्तादिषु सचिवेषु मन्त्रिषु विध्वस्तेषु। मारितेषु सत्स्वित्यर्थः। विरूपाक्षप्रभृतिषु सेनापतिषु व्यापादितेषु विनाशितेषु सत्सु। निखिले वलवति बले सैन्ये च विकीर्णे भवति विक्षिप्ते विध्वस्ते सति। लङ्कायां समन्ततः सर्वत्र करुणपरिपूरितः शोकपरिपूर्णो यः पौरवधूजनः पट्टणस्त्रीजनस्तस्य परिदेवनैर्विलापैरुत्तरङ्गायामुद्रिक्तायाम्। तद्भूयिष्ठायां सत्यामित्यर्थः। आतङ्कातिशयेनापङ्कूयस्त्वेन रोषणो रोषवान्। 'क्रुधमण्डार्थेभ्यश्च' इति युच्। रावणस्तत्क्षणं तस्मिन्क्षण इक्ष्वाकुकुलनायकस्य श्रीरामस्य दयितां भार्यां धरणीसुतां सीतां जिघांसुर्हन्तुमिच्छुः। हन्तेः सन्नन्तादुप्रत्ययः। अन्तिकगतमन्त्रिणा समीपस्थसचिवेन निवार्यमाणः एतदन्याय्यमिति निषिध्यमानः। तथा सारथिना विधिना च चोदितः प्रेरितो रथो यस्य स तथोक्तः। दाशरथिविजये विहितसंगरः कृतप्रतिज्ञः सन्। संगराङ्गणं रणभुवमवततार प्रविवेश। 'अथ प्रतिज्ञाजिसंविदापत्सु संगरः' इत्युभयत्राप्यमरः॥

कोपादसौ [7]परिघतोमरकुन्तयष्टि-
चापाशुग[8]द्रुघणशक्तिकृपाणपाणिः।
एकोऽप्यनेकमुखवाहुतया सबन्धु-
र्लोको यथा समिति लोचनगोचरोऽभूत्॥ ७८॥

कोपादिति। कोपात्समराभिनिवेशाद्धेतोः परिघा अयोमयगदाः, तोमरा दण्डविशेषाः कुन्ताः प्रासाः, यष्टयो लगुडाः, चापाः कार्मुकाणि, आशुगा बाणाः, द्रुघणा मुद्गराः, शक्तय आयुधविशेषाः, कृपाणाः खड्गाश्च पाणिषु यस्य स तथोक्तोऽसौ रावणः। एकः सकलविनाशात्सहायशून्योऽप्यनेकमुखानि बाहवश्च यस्य स तथोक्तस्तस्य भावस्तत्ता तया हेतुना सबन्धुर्लोको यथा बन्धुजनसहित इवेत्युत्प्रेक्षा। 'लोकस्तु भुवने जने' इत्यमरः। 'इववद्वायथाशब्दौ' इति दण्डी। समिति युद्धे लोचनगोचरः प्रत्यक्षोऽभूदित्यर्थः। वानराणामिति शेषः। वसन्ततिलकावृत्तम्॥

१. 'करुणपरिहरित' इति पाठः. २. 'तत्क्षणमेव हर्यक्ष इव हरिणीं धरणीसुताम्' इति पाठः. ३. 'अन्तिकगतेन' इति पाठः. ४. 'सारथिना च' इति पाठः. ५. 'चोदितः' 'संचोदितरथः' इति पाठौ. ६. 'संगरभुवम्' इति पाठः. ७. 'परिघयष्टिकुठारकुन्त' इति पाठः. ८. 'द्रुहिण' इति पाठः.

अलक्षत स रक्षसामधिपतिः कृपाणं मुहुः
प्रसह्य विनिपातयन्प्लवगमण्डलीमौलिषु।
अयं तव तवायमित्यभिसमीकमेकैकशो
वरानिव विनिर्दिशन्नमरवारवामभ्रुवाम्॥ ७९॥

अलक्ष्यतेति। स रक्षसामधिपती रावणः प्लवगमण्डलीनां वानरसमूहानां मौलिषु शिरःसु प्रसह्य बलात्कृपाणं चन्द्रहासं मुहुः पुनः पुनर्विनिपातयन्प्रवर्तयन्। विदारणार्थमिति भावः। तवायमेषः, तथा तवायमित्यनेन प्रकारेण। अभिसमीकम्। युद्ध इत्यर्थः। विभक्त्यर्थेऽव्ययीभावः। अमरवारवामभ्रुवां सुरसुन्दरीणामेकैकशः प्रत्येकं वरान्प्रियतमान्विनिर्दिशन्निवालक्ष्यतेत्युत्प्रेक्षा। पृथ्वीवृत्तम्॥

तत्क्षणमक्षौहिणीविक्षोभकन्दलितरुषमतिपरुषैर्विशिखैः केतनं विदलितमर्धचन्द्रनिकृत्तधन्वानमस्त्रधाराविदारितसारथिमतिविस्मयनीयकरलाघवं राघवानुजममर्षवेगमुक्तया शक्त्या मुहूर्तमिव मूर्च्छासंमीलितमुपराग इव कलाधरमाततान यातुधानपतिः॥

तत्क्षणमिति। तत्क्षणं तस्मिन्क्षणे। अत्यन्तसंयोगे द्वितीया। अक्षौहिणीनामनेकाक्षौहिणीसंख्याकानां वानराणाम्। अक्षौहिणीसंख्या तु—'प्रयुतं नवसाहस्रं पञ्चाशत्त्रिशतं भटाः। पादातं षष्टिसाहस्रं षट्छती दशवाजिनः॥ एकविंशतिसाहस्रशतानामष्टसप्ततिः। द्विरदाः स्यन्दना यत्र साक्षौहिण्युच्यते बुधैः॥' इत्यक्षौहिणीसंख्यामाहुः। तथाच महाभारते—'एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते॥ पत्तिं तु त्रिगुणामेतां विदुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः। स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः॥ चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी। अनीकिनीं दशगुणामाहुरक्षौहिणीं बुधाः॥' इति। यथाहामरसिंहः—'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी दशानीकिन्यक्षौहिण्यथ संपदि॥' इति। विक्षोभेण विध्वंसनेन कन्दलितरुषं समुत्पन्नकोपम्। अतएवातिपरुषैरत्यन्तशितैर्विशिखैर्बाणैः। केतनं विदलितं विदलयन्तम्। कर्तरि क्तः। अर्धचन्द्रेण बाणविशेषेण निकृत्तं छिन्नं धनुर्येन तम्। 'धनुषश्च' इत्यनङादेशः। अस्त्रधारया शरपरम्परया। 'असिधारा' इति पाठे खड्गधारया। विदारितो विदलितः सारथिर्येन तम्। विस्मापयतीति विस्मयनीयम्। 'कृत्यल्युटो बहुलम्' इति कर्तर्यनीयर्प्रत्ययः। अतिविस्मयनीयमत्याश्चर्यकरं करलाघवं हस्तपाटवं यस्य तं राघवानुजं लक्ष्मणं यातुधानपती रावणोऽमर्षवेगेन क्रोधरयेण मुक्तया

१. 'प्रहस' इति पाठः. २. 'अधिसमीकम्' इति पाठः. ३. 'तदनन्तरम्' इति पाठः. ४. 'अक्षौहिणीक्षोभ' इति पाठः. ५. 'अतिपरुषविशिखदलितध्वजम्' इति पाठः. ६. 'अमर्षवेग' इति पाठः. ७. 'निमीलित' इति पाठः. ८. 'कमलाकरम्' इति पाठः.

प्रयुक्तया शक्त्या मयमायानिर्मितशक्त्यायुधेन कलाधरमिन्दुम् । उपरागो राहुग्रहग्रास इवेत्युपमा । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमरः । मुहूर्तमल्पकालमेव । 'मुहूर्तमल्पकाले स्याद्धटिकाद्वितयेऽपि च' इति वैजयन्ती । मूर्च्छया मोहेन संमीलितं विसंज्ञमेव । वस्तुतस्तु न तथा तस्य परमपुरुषांशत्वादिति भावः । आततान चकार । शक्तिप्रयोगेण लक्ष्मणममूर्च्छयदित्यर्थः ॥

आलोक्य दूनमनुजं हृदि शक्तिघाता-
च्छोकेन विद्धहृदयः सुतरां स रामः ।
कोपेन चापमथ कुण्डलयांचकार
लङ्कापतेरपि ललाटलिपिं विधाता ॥ ८० ॥

आलोक्येति । स रामो हृदि हृत्प्रदेशे शक्तिघाताच्छक्तिप्रहाराद्दूनं परितप्तम् । 'दूङ् परितापे' इति धातोर्निष्ठातकारस्य नकारः । अनुजं लक्ष्मणमालोक्य शोकेन विषादेन सुतरामत्यन्तं विद्धहृदयो विदलितान्तरङ्गः सन् । अथ शोकानन्तरं कोपेन क्रोधेन चापं कुण्डलयांचकार । आकर्णाकर्षणेन वलयीचकारेत्यर्थः । तथा विधाता विधिरपि लङ्कापते रावणस्य ललाटलिपिमायुर्निर्णायकफालपट्टाक्षरविन्यासं कुण्डलयांचकार । यथा लिखिताधिकाक्षरनिरसने कुण्डलनां कुर्वन्ति लेखकास्तद्वदित्यर्थः । श्रीरामसमरसंरम्भं दृष्ट्वा रावणस्य मृत्युः संनिहितोऽभूदित्यर्थः । अत्र चापललाटलिप्योः केवलप्रस्तुतत्वात्तुल्ययोगिताभेदः ॥

अवकीर्य दाशरथिरश्रुजलैरनुजं पुलस्त्यतनुजं च शरैः ।
युगपद्व्यधात्करुणवीररसौ युधि शोकहर्षशबलं च बलम् ॥ ८१ ॥

अवकीर्येति । व्याख्यातमेतत् [ ३७६ पृष्ठे ] ॥

वलयितचित्रचापवति वारितपङ्क्तिमुखे
विसृजति राघवे विशिखवर्षममर्षवति ।
अरिषु न कश्चिदप्यथ निवृत्य गतः समरा-
दमरविलासिनीषु न च काचिदलब्धवरा ॥ ८२ ॥

वलयितेति । अमर्षवति लक्ष्मणप्रहारात्क्रोधाविष्टे अतएव वलयितं कुण्डलीकृतं चित्रमाश्चर्यजनकं चापमस्यास्तीति तथोक्ते । आकर्णाकृष्टकार्मुक इत्यर्थः । यद्यपि 'न कर्मधारयान्मत्वर्थीयः' इति कर्मधारयान्मत्वर्थीयप्रत्ययप्रयोगं न सहन्ते व्याकरणपारीणास्तथापि 'लगुत्तरासङ्गवतीमधित्यकाम्' इत्यादिमहाकविप्रयोगदर्शनान्न दोष इति समाधेयम् । वारितपङ्क्तिमुखे संस्तम्भितरावणे राघवे श्रीरामे विशिखवर्षं शरवृष्टिं विसृजति प्रयुञ्जाने सति । अथानन्तरमरिषु शत्रुषु मध्ये कश्चिदपि राक्षसः समराद्युद्धान्निवृत्य न गतः । किंतु सर्वेऽपि मृता इत्यर्थः । तथामरविलासिनीषु सुरसुन्दरीषु । 'वौ कषलस–' इत्यादिना घिनुण्प्रत्ययः । काचिदेकापि विलासिनी अलब्धवराऽप्राप्तप्रियतमा नाभूत् । श्रीरामबाणनिहतानां सर्वेषामपि स्वर्लोकप्राप्तिसंभवात्सर्वा अपि स्वर्गस्त्रियः संप्राप्तवरा एव बभूवुरित्यर्थः ॥

---

१. 'दीनमनुजम्' इति पाठः. २. 'चापविनिवारित' इति पाठः.

**अयं च पुनरञ्जनासुतसमानीतमहीधरमहौषधिविधिलब्धजीवितानुजसमाश्लेषसुखलब्धमनोरथः समेधमानसमरकौतुकोपलम्भसंरम्भोदञ्चितपुलककञ्चुकिता कृतिर्दाशरथिरधिसंगरममराधिपसारथिनानीतमतिविशङ्कटं रथमपि कङ्कटकं शतक्रतोरनुग्रहान्मातलिना समाग्रहीत् ।**

**अयमिति** । किंचेति चार्थः । अयं दाशरथिः श्रीरामः पुनर्भूयोऽपि । पूर्वमेकवारमानीतत्वादिति भावः । वाक्यालंकारे वा । अञ्जनासुतेन हनूमता समानीतो जाम्बवन्निदेशात्प्रत्यानीतो यो महीधर ओषधिपर्वतस्तस्य महौषधीनां संजीवकरणीप्रभृत्योषधिविशेषाणां विधिना सुषेणप्रयुक्तचिकित्सया लब्धजीवितस्य पुनर्लब्धप्राणस्यानुजस्य लक्ष्मणस्य समाश्लेषेण गाढालिङ्गनेन यत्सुखं तेन लब्धमनोरथः संप्राप्तवाञ्छितः, अतएव समेधमानः प्रवर्धमानो यः समरकौतुकोपलम्भसंरम्भो रणकुतूहलप्राप्तिसंभ्रमस्तेनोदञ्चिता उत्पन्ना ये पुलका रोमाञ्चास्तैः कञ्चुकिता वर्मिता आकृतिर्यस्य स तथोक्तः सन् । 'आकृतिः कथिता रूपे सामान्यवपुषोरपि' इति विश्वः । अधिसंगरं संगरे । विभक्त्यर्थेऽव्ययीभावः । शतक्रतोरिन्द्रस्यानुग्रहात्प्रसादात् । निमित्ते पञ्चमी । अमराधिपसारथिना मातलिनानीतं प्रापितमतिविशङ्कटमत्यन्तविशालम् । 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' इत्यमरः । 'वेः शालच्छङ्कटचौ' इति शङ्कटच्प्रत्ययः । रथं स्यन्दनं कङ्कटकं कवचमपि समाग्रहीत्स्वीकृतवान् । उक्तं च रामायणे—'सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते । दत्तस्तव महासत्त्व श्रीमञ्छत्रुनिबर्हण ॥' इत्यादि ॥

**अन्योन्यस्य सदृक्षलक्ष्यमिलनादालक्ष्यशौण्डीर्ययोः**
**शस्त्राशस्त्रि समुन्मिषत्पुलकयोः सश्लाघयोः साहसे ।**
**जाते जीवितसंकटे विहरतोर्मूर्च्छासु विश्राम्यतो-**
**रश्रान्तं रघुवीरपङ्क्तिमुखयोरासीदसीमा रणः ॥ ८३ ॥**

**अन्योन्यस्येति** । अन्योन्यस्य परस्परस्य सदृक्षलक्ष्यमिलनात्सदृशलक्ष्यलाभात् । 'दृशेः क्सः' इति क्सादेशः । आलक्ष्यमस्फुटदृश्यं शौण्डिर्यं शौर्यातिरेको ययोस्तयोः शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तं शस्त्राशस्त्रि । 'इच् कर्मव्यतिहारे' इति बहुव्रीहेः समासान्त इच्प्रत्ययः । 'अन्येषामपि दृश्यते' इति दीर्घः । 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावत्वादव्ययत्वम् । तत्र समुन्मिषन्तः समुत्पद्यमानाः पुलका रोमाञ्चा ययोस्तयोः । साहसे साहसकृत्ये सति सश्लाघयोः अहो महदाश्चर्यं हस्तलाघवमित्यादिप्रशंसापरयोरित्यर्थः । जीवितसंकटे प्राणनिर्बन्धे जाते सति विहरतोर्विहरमाणयोः । 'विरहतोः' इति पाठे नियुञ्जतोः सतोः। ईषन्मात्रेऽप्युच्छ्वासे तूष्णीं न तिष्ठतोरित्यर्थः। मूर्च्छासु मोहदशासु विश्राम्यतोः विश्रान्तिं गच्छतोः । मूर्च्छावस्थातोऽन्यत्र क्षणमा-

१. 'अञ्जनीसुत' इति पाठः. २. 'महौषधिजीवितानुजाश्लेष' इति पाठः. ३. 'समेधमानमानसः' इति पाठः. ४. 'अतिविशङ्कटं कमपि रथं कङ्कटमप्यनुग्रहाय शतक्रतोरग्रहीत्' इति पाठः. ५. 'हसतोः', 'विरहतोः' इति पाठौ.

न्त्रमपि कालं न वृथा नयतोरित्यर्थः । रघुवीरपङ्क्तिमुखयोः श्रीरामरावणयोरश्रान्तमविच्छिन्नं यथा । असीमा निर्मर्यादो रण आसीत् । शार्दूलविक्रीडितं वृत्तम् ॥

**अथ तयोरविश्रान्तविमुक्तदिव्यास्त्रयोराखण्डलवृत्रनिभयोरालूनेषु मार्गणेष्वभङ्गुरपरस्परविवरमार्गणेषु, अविच्छिन्नेषु धनुर्गुणेष्वव्याहतसहजसाहसगुणाधीनेषु, धुरीणेषु, यानेषु निरपायसमराभियानेषु, निर्भिन्ने सांयुगीने च रथे निर्वैकल्यविजयमनोरथमजायत यशोधनमायोधनम् ॥**

**अथेति** । अथानन्तरम् । आखण्डलवृत्रनिभयोः सहस्राक्षवृत्रासुरयोरित्युपमा । 'आखण्डलः सहस्राक्षः' इत्यमरः । तयोरुभयो रामरावणयोरविश्रान्तविमुक्तदिव्यास्त्रयोरविच्छिन्नप्रयुक्तमहास्त्रयोः सतोरभङ्गुरं भङ्गरहितं यथा तथा परस्परविवराण्यन्योन्यमर्मस्थानानि मार्गयन्त्यन्वेषयन्तीति तथोक्तेषु । कर्तरि ल्युट् । अभङ्गुरेत्यत्र 'भञ्जभास—'इत्यादिना घुरच् । मार्गणेषु सायकेषु 'मार्गणौ सायकार्थिनौ' इत्यमरः । आलूनेषु विच्छिन्नेषु सत्सु । 'ल्वादिभ्यश्च' इति निष्ठानत्वम् । तथा धनुर्गुणेषु चापमौर्वीष्वविच्छिन्नेषु विदलितेषु सत्सु अव्याहतोऽप्रतिहतः सहजो नैसर्गिकश्च यः साहसगुणस्तदधीनेषु तदायत्तेषु सत्सु । 'अधीनो निघ्न आयत्तः'इत्यमरः । धुरीणेषु धुरंधरेषु । 'खः सर्वधुरात्' इत्यत्र योगविभागात्खप्रत्ययः । यानेषु श्रीरामरथाश्वेषु निरपायसमराभियानेषु सत्सु सांयुगीने संयुगे साधौ । युद्धसमर्थ इत्यर्थः । 'सांयुगीनो रणे साधुः' इत्यमरः । रथे रावणस्यन्दने निर्भिन्ने नितरां विदारिते सति । निर्वैकल्यं वैकल्यरहितं विजयो मनोरथो मनोभिलाषो यस्मिंस्तद्यथा तथा । यश एव धनं यथा तथा । आयोधनं युद्धमजायत जातम् । 'युद्धमायोधनं जन्यम्' इत्यमरः ॥

**तूणीमुखात्त्वरितमुद्धरणे गुणेन**
**संयोजनेऽप्यथ शरस्य विमोचने वा ।**
**यत्र व्यलोकि तदधीन इवातिवेगा-**
**ल्लोकेन राघवकरश्चिरमालुलोके ॥ ८४ ॥**

**तूणीमुखादिति** । तूणीमुखान्निषङ्गकुहरात्त्वरितं शीघ्रम् । 'जवोऽथ शीघ्रं त्वरितम्' इत्यमरः । शरस्य बाणस्योद्धरणे आकर्षणे गुणेन मौर्व्या संयोजने संधाने । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। अथानन्तरं विमोचने मोक्षे वा । यत्र यस्मिन्व्यापारे राघवकरो लोकेन द्रष्टृजनेन व्यलोकि दृष्टः । 'लोकृ दर्शने' लुङि चिण् । अतिवेगाद्वेगातिशयाद्धेतोस्तदधीनस्तद्व्यापारायत्त इवेति वेगातिशयोक्त्यनुप्राणितोत्प्रेक्षा । चिरं चिरकालमालुलोके । सविमर्शाश्चर्यानुसंधानं दृष्ट इत्यर्थः । कर्मणि लिट् । वसन्ततिलकावृत्तम् ॥

---

१. 'अश्रान्तमुक्त' इति पाठः. २. 'विजय' इति पाठः. ३. 'बाणगणेषु विच्छिन्नेषु' इति पाठः. ४. 'गुणनिकृत्तेषु' इति पाठः. ५. 'समराभिहतिनिर्भिन्ने' इति पाठः. ६. 'परस्परगर्वकल्प' इति पाठः. ७. 'भुजायतयशोधन' इति पाठः. ८. 'यत्रावलोकितशास्त्र' इति पाठः.

अर्धोदीरितवीरवादमहरद्रामो यदस्त्रैः क्षणा-
त्तेनैवाङ्कुरता मुखेन जगदे शेषं च लङ्कापतेः ।
साम्ये सत्यपि चारुशारमुभयोर्धानुष्कमायाविनो-
र्विच्छिन्नाननदर्शनात्समभवद्व्रीडा रणे रावणे ॥ ८५ ॥

**अर्धेति ।** रामोऽर्धोदीरितवीरवादमर्धोक्तवीरालापं यद्रावणमुखमस्त्रैरहराच्चिच्छेद । क्षणात्क्षणमात्रेणाङ्कुरता कन्दलिता तेनैव लङ्कापते रावणस्य मुखेन शेषं पूर्वोक्तवीरालापावशिष्टार्धं च जगदे उक्तम् । अतो धनुः प्रहरणं येषां ते धानुष्का धन्विनः । 'धन्वी धनुष्मान्धानुष्कः' इत्यमरः । 'प्रहरणम्' इति ठक् । 'इसुसुक्तान्तात्कः' इति कप्रत्ययः । तेषां मध्ये मायाविनोर्विचित्रशक्तिसंपन्नयोः । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । अथवा धानुष्कौ च तौ मायाविनौ चेति विशेषणसमासः । तयोरुभयो रामरावणयोश्चारवश्चतुराः शारा युद्धगतिविशेषाः अस्त्रप्रयोगा वा यस्मिन्कर्मणि तद्यथा भवति तथा । साम्ये सादृश्ये सत्यपि रणे युद्धे विच्छिन्नाननदर्शनाद्रामास्त्रविदलितमुखावलोकनाद्रावणे व्रीडा लज्जा समभवत् । जीवतैव मया सकललोकसमक्षं छिन्नानि शिरांसि पुनर्दृश्यन्ते । धिङ् मे जीवितमित्यात्मनिन्दापूर्वकं रावणो लज्जितवानित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

दशाननशरक्षतिक्षरदसृग्झरीबुद्बुदै-
स्तरङ्गितमहेन्द्रकङ्कटसहस्रचक्षुःपथाः ।
रणे रघुकुलोद्भवः क्षणममानि वैमानिकै-
र्यथा दशशतेक्षणो बलरुषा कषायेक्षणः ॥ ८६ ॥

**दशाननेति ।** दशाननशरै रावणप्रयुक्तबाणैर्यानि क्षतानि प्रहरणानि तेभ्यः क्षरन्त्या विगलन्त्या असृग्झर्या रक्तप्रवाहस्य बुद्बुदैरास्फोटैस्तरङ्गितः संजाततरङ्गः । समभिव्याप्त इति यावत् । तरङ्गित इत्यत्र तारकादित्वादितच् । तस्मिन्महेन्द्रकङ्कट इन्द्रदत्तकवचे सहस्रचक्षुःपथाः सहस्रसंख्याकनेत्रगोलका यस्य स तथोक्तः । 'ऋक्पूः—' इत्यादिना समासान्तः । रणे रघुकुलोद्भवः श्रीरामः । विमाने चरन्तीति वैमानिकैर्देवैः । 'चरति' इति ठक् । बले बलासुरे रुषा रोषेण कषायेक्षणः संरक्तलोचनः । दशशतेक्षणो यथा सहस्राक्ष इवेत्युत्प्रेक्षा । क्षणं क्षणमात्रम् । अनन्तरं तत्संबन्धाभावादिति भावः । अमान्यवबुद्धः । मन्यतेः कर्मणि लुङ् । इन्द्रकवचसंबन्धात्तत्र सहस्राक्षेण सदृक्षशोणितबुद्बुदसंबन्धाच्च तथात्वेनोत्प्रेक्षित इत्यर्थः । एतेन स्मरणं ध्वन्यते । पृथ्वीवृत्तम् ॥

**तदनु वारुणेन वैश्वानरं वैनतेयेन वातंधयं वायव्येन वारिदं प्राभाकरेण तामिस्रं माहेन्द्रेण दानवं माहेश्वरेण वैष्णवं च परस्पर-**

---

१. 'चातुरीभिरुभयो' इति पाठः. २. 'विच्छिन्नाननदर्शनेन समभूत्' इति पाठः. ३. 'रघुकुलोद्वहः' इति पाठः. ४. 'नैशाकरेण' इति पाठः. ५. 'वैष्णवीयेन माहेश्वरं च' इति पाठः.

मेवमस्त्रमस्त्रेण भिन्दानयोरनयोरनिशमाहवाग्रहादविदितान्यहानि सप्त व्यतीयुः ॥

तदन्विति। तदनु तदनन्तरं वारुणेन वरुणदेवताकास्त्रेण। 'सास्य देवता' इत्यण्। एवमुत्तरत्रापि। वैश्वानरमाग्नेयास्त्रम्। वैनतेयेन गारुत्मतेन। वातंधयं नागास्त्रम्। 'नाडीमुष्ट्योश्च' इत्यत्र चकारात्खशि मुमागमः। वायुर्देवतास्य वायव्यं तेन। 'वाय्वृतुपित्रुषसो यत्' इति यत्प्रत्ययः। वारिदं जलदास्त्रम्। प्राभाकरेण सूर्यास्त्रेण तामिस्रमन्धकारास्त्रम्। माहेन्द्रेणेन्द्रदेवताकास्त्रेण दानवं दानवास्त्रम्। माहेश्वरेण महेश्वरास्त्रेण वैष्णवं विष्णुदेवताकमित्येवमुक्तरीत्यास्त्रं वैश्वानरादिकमस्त्रेण वारुणादिना परस्परं भिन्दानयोर्विदारयतोः। भिद्यतेः शानच्। अनयोः श्रीराम-रावणयोरनिशमविरतमाहवाग्रहात् रणाभिनिवेशादविदितान्यज्ञातानि सप्ताहानि सप्त दिनानि व्यतीयुरतिचक्रमुः। 'इण् गतौ' इति धातोर्लिट् ॥

शस्त्राशस्त्रि समुत्सुकोऽपि दयितां संचिन्त्य पर्याकुला-[1]
मस्त्रेण ज्वलता विधेरपुनरुन्मेषेण तन्मस्तकान्।[2]
रामः कन्दलितान्मुहुर्मुहुरवच्छेदेऽपि लङ्कापते-[3]
रातङ्केन समं समस्तजगतां चिच्छेद सीतापतिः ॥ ८७ ॥

शस्त्राशस्त्रीति। शस्त्राशस्त्रि शस्त्रप्रहरणं युद्धम्। तत्र समुत्सुकोऽप्युत्कण्ठि-तोऽपि। 'सकौतुकोऽपि' इति पाठेऽप्ययमेवार्थः। शस्त्राशस्त्रि व्याख्यातम्। सीताप-तिर्मैथिलीप्राणनाथः। एतेन तद्विरहासहिष्णुत्वं सूच्यते। श्रीरामः पर्याकुलां विरह-विह्वलां दयितां प्रेयसीं सीतां संचिन्त्य। समरकेलितत्परतया विलम्बे क्रियमाणे तस्याः पुनः क्लेशो भविष्यतीति विचार्येत्यर्थः। ज्वलता दीप्यमानेन। न विद्यते पुनरुन्मेषः पुनःप्रयोगो यस्य तेन। एकवारप्रयोगेणैव रिपुनाशकेनेत्यर्थः। यद्वा न विद्यते पुनरुन्मेषो मस्तकानां पुनःप्रादुर्भावो यस्मात्तेन विधेरस्त्रेण ब्रह्मास्त्रेण करणेन मुहुर्मुहुः पुनः पुनः। अवच्छेदेऽपि पूर्वं विदलने सत्यपि। कन्दलितानङ्कुरितान्। लङ्कापते रावणस्य ते च ते मस्तकाश्च तान्। दश शिरांसीत्यर्थः। समस्तजगताम-शेषलोकानामातङ्केन समम्रुपद्रवेण साकं चिच्छेद विदारयामास। अत्र रावणशिरो-जगदातङ्कच्छेदयोः कार्यकारणभावेन भिन्नकालीनयोरपि सममित्येककालीनत्वोक्त्या कार्यकारणपौर्वापर्यविपर्ययनिबन्धनातिशयोक्तिमूला सहोक्तिरलंकारः। 'सहार्थेना-न्वयो यत्र भवेदतिशयोक्तितः। कल्पितौपम्यपर्यन्ता सा सहोक्तिरितीष्यते ॥' इति लक्षणात्। एतेन यदा रावणशिरश्छेदस्तदा जगदातङ्कच्छेदोऽपीत्यौपम्यकल्प-नया कारणगताशुभावहप्रतीतेश्चमत्कार इति रहस्यम्। शार्दूलविक्रीडितं वृत्तम् ॥

रक्षःपतौ पतति लब्धमनोरथाना-
मातन्वतां दिविषदामथ पुष्पवर्षम्।

---

१. 'चिन्ताकुलम्' इति पाठः. २. 'उन्मेषं निमेषेण सः' इति पाठः. ३. 'मूर्धः' इति पाठः.

२४-च०

श्लाघापदं समजनिष्ट परं न रामः
कामोपधेः कलितशूर्पणखाविकारः ॥ ८८ ॥

रक्ष इति। रक्षःपतौ रावणे पतति भुवि निपतिते सति लब्धमनोरथानां प्राप्तकामानामतएव पुष्पवर्षमातन्वतामपसर्जयताम्। दिवि सीदन्तीति दिविषदो देवाः। 'आदितेया दिविषदः' इत्यमरः। 'सत्सूद्विष—' इत्यादिना 'हृद्द्युभ्यामुपसंख्यानम्' इति सप्तम्या अलुक्। 'सुषामादिषु च' इति षत्वम्। 'अविहितलक्षणे मूर्धन्यः सुषामादिषु द्रष्टव्यः' इति वचनात्। तेषां रामः परं राम एव श्लाघापदं प्रशंसास्पदं न समजनिष्ट न जातः। 'दीपजन—' इत्यादिना कर्तरि लुङ्। किंतु कामोपधेः कामकैतवात्। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः। कलितो विरचितः शूर्पणखाधिकारः कर्णनासाच्छेदनरूपः। सोऽपि श्लाघापदं समजनिष्ट। 'कामो वने' इति पाठे वने दण्डकारण्ये कलितशूर्पणखाविकारः कामः श्लाघापदं समजनिष्ट। तस्य लोककण्टकरावणसंहारमूलत्वादिति भावः। वसन्ततिलकावृत्तम् ॥

**अनन्तरमालिङ्गितरणवसुंधरं शरतल्पमधिशयानमधिगतनिषङ्गोपधानं यातुधानपतिमधिगत्य निपत्य च भुवि सोदर्यस्नेहसुलभवैधुर्यः कदर्योऽहमिति विहितनिजदूषणो विभीषणश्चिरतरं विललाप ॥**

अनन्तरमिति। अनन्तरं रावणपतनानन्तरमालिङ्गितरणवसुंधरमाश्लिष्टरणभूमिम्। अवाङ्मुखतया रणभुवि निपतितमित्यर्थः। शरतल्पं बाणशय्यामधिशयानमधिष्ठितवन्तम्। 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम्। 'तल्पं शय्याट्टदारेषु' इत्यमरः। अधिगतनिषङ्गोपधानं प्राप्ततूणीरोपबर्हम्। एतेन मृत्वापि निजः प्रकृतिं न जहातीति सूच्यते। यातुधानपतिं रावणमधिगत्य प्राप्य भुवि च निपत्य पतित्वा। समानोदरेशयः सोदर्यो भ्राता। समानशब्दस्य प्रागेव सभावः। 'सोदराद्यः' इति यत्प्रत्ययः। तस्मिन्स्नेहेन प्रेम्णा सुलभं सुखलभ्यं वैधुर्यं विह्वलत्वं यस्य स तथोक्तः अहं। कुत्सितोऽर्यः कदर्यः आत्मप्राणत्राणार्थं भ्रातृघातितया क्षुद्रः। 'कदर्ये कृपणक्षुद्र—' इत्यमरः। 'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्। लोभाद्यः पितरं भ्रातॄन्स कदर्य इति स्मृतः ॥' इति च। 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः। इत्यनेन प्रकारेण विहितनिजदूषणो विरचितात्मनिन्दो विभीषणश्चिरतरं चिरं विललाप ॥

तत्प्रकारमेवाह—

अयि समसुखदुःखैरन्वितं बन्धुवर्गैः
सहजमपि भवन्तं मुञ्चतः साहसेन।

१. 'कामोऽपि चाकलित' इति पाठः. २. 'रण' इति नास्ति क्वचित्. ३. 'निपत्य च सोदर्यहार्यसौहार्दसुलभ' इति पाठः. ४. 'बन्धुवर्गैः' इति पाठः.

कुलविशसनहेतोः कूटधर्मानुवृत्ते-
र्दशमुख मम यावज्जीवमासीत्कलङ्कः ॥ ८९ ॥

अयीति । अयि दशमुख हे रावण । समानि तुल्यतयानुभोक्तव्यानि च तानि सुखदुःखानि च तैरन्वितम् । मद्विनाभावेन सुखदुःखानुभवतत्परमित्यर्थः । बन्धुवर्गं पुत्रमित्रकलत्रादिबन्धुसमूहम् । तथा सहजं सहोदरं भवन्तमपि साहसेनाविवेकेन मुञ्चतस्त्यजतः । तथा कुलविशसनहेतोर्वंशक्षयकरस्य कूटधर्मे सहजं भ्रातरं परित्यज्यान्यसमाश्रयणरूपकपटसमाचारेऽनुवृत्तिरनुसरणं यस्य । मम यावज्जीवं जीवितपर्यन्तम् । 'यावदवधारणे' इत्यव्ययीभावः । कलङ्कः स्वस्यावनार्थं भ्रातरं घातितवानित्येवंरूपोऽपवाद आसीत् । 'कलङ्कोऽङ्कापवादयोः' इत्यमरः । मालिनीवृत्तम् ॥

आर्यस्य रक्षितुमसूननुजः स एकः
प्राणानमुञ्चत परं युधि कुम्भकर्णः ।
त्वज्जीवहृत्स्वयमहं निजजीवहेतो-
रद्यापि हन्त सहते हतको विधिर्माम् ॥ ९० ॥

आर्यस्येति । आर्यस्य पूज्यस्य भवतोऽसून्प्राणान्रक्षितुं त्रातुमनुजः स प्रसिद्ध एकः कुम्भकर्णः परं कुम्भकर्ण एव प्राणान्युधि समित्यमुञ्चतात्यजत् । स एव धन्य इति भावः । अहं तु निजजीवहेतोः । आत्मप्राणत्राणार्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । स्वयं साक्षात्त्वज्जीवहृत्त्वत्प्राणापहारी । अतः । अद्येदानीमपि । हतकः पाप इत्युपालम्भोक्तिः । 'सादृश्ये कः' विधिर्दैवं मामेवंविधद्रोहिणं सहते क्षम्यति हन्त । ईदृगनुचितकारिणोऽपि मम मारणवैमुख्येन तूष्णीं तिष्ठति विधिरिति विषाद इत्यर्थः । वसन्ततिलकावृत्तम् ॥

इत्येवमस्मिन्विलपति विदितवृत्तान्ता शुद्धान्तात्करुणमारटन्ती-भिरन्तरितयूथपाभिः करिणीभिरिव तरुणीभिः सह समागत्य मध्येसमरमापतितमशनिहतमिव मन्दरं दशकंधरं नाथं निरीक्ष्य निहतोपघ्नेव लता निपतन्ती विलपन्ती नाथ नाथेत्यपरिमेयविषादा निषादाहतदयितविधुरीकृतकुररीवामन्दं चक्रन्द मन्दोदरी ॥

इतीति । इत्येवमनया रीत्यास्मिन्विभीषणे विलपति सति । विदितो विज्ञापितो वृत्तान्तो रावणसंहारवार्ता यस्याः सा तथोक्ता । अतएवान्तरितयूथपाभिर्विनष्टयूथनाथाभिः करिणीभिः कुञ्जरीभिरिवेत्युपमा । करुणशब्दात्क्षपणवत्चनादर्शआद्यच् । करुणं श्रोतॄणां शोकजनकमारटन्तीभिराक्रोशन्तीभिस्तरुणीभिः सह अन्तःपुरस्त्रीभिः साकम् । शुद्धान्तादवरोधात्समागत्य । 'शुद्धान्तश्चावरोधश्च' इत्यमरः । मध्येसमरं

१. 'मम' इति पाठः. २. 'शुद्धान्तात्सकरुणं' इति पाठः. ३. 'समम्' इति पाठः. ४. 'समापत्य' इति पाठः. ५. 'दशकंधरं समीक्ष्य' इति पाठः. ६. 'विषादाहता' इति पाठः.

समरस्य मध्ये। रणमध्यदेश इत्यर्थः। 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः। तत्सं-नियोगादेकारत्वं मध्यशब्दस्य। अशनिहतं वज्रविदारितं मन्दरं मन्दराख्यपर्वतमि-वेत्युपमा। अपतितं निपतितं नाथं प्राणेश्वरं दशकंधरं रावणं निरीक्ष्य निहतोपघ्ना वि-च्छिन्नोपाश्रयवृक्षा। 'स्यादुपघ्नोऽन्तिकाश्रये' इत्यमरः। लतेव निपतन्ती भुवि निपतिता निषादेनाहतो विद्धो दयितः प्रियो यस्याः सा। अतएव विधुरीकृता विह्वलीकृ-तेति विशेषणसमासः। अथवा निषादाहतदयितेन विधुरीकृता विश्लिष्टीकृता। 'विधुरं प्रत्यपेते स्यात्कष्टविश्लिष्टयोरपि' इति वैजयन्ती। अभूततद्भावे च्विः। 'अस्य च्वौ' इति दीर्घः। कुररीवोत्क्रोशखगाङ्गनेव। 'उत्क्रोशकुररौ समौ' इत्यमरः। अप-रिमेयविषादा निरवधिकशोका सती मन्दोदरी रावणाग्रमहिषी। नाथ नाथेति प्रिय प्रियेति। वीप्सायां द्विर्भावः। अमन्दमुच्चैश्चक्रन्द विचुक्रुशे। विललापेत्यर्थः॥

तत्प्रकारमेवाह—

या वीक्षिताजनि पुरा यमराजधानी
वीर त्वया सकलदिग्विजयोत्सवेषु।
तामद्य दुर्विधिबलेन समस्तलोक-
साधारणः पुनरुपैष्यसि हा किमेतत्॥ ९१॥

येति। हे वीर, पुरा पूर्वं त्वया सकलदिग्विजयोत्सवेषु समस्तदिग्विजययात्रा-महोत्सवेषु या यमराजधानी यमपुरी वीक्षिता दृष्टाजनि जाता तां यमराजधानी-मद्येदानीं दुर्विधिबलेन दुष्टदैववशेन समस्तलोकसाधारणः सकलजनसाधारणः सन् पुनर्भूयोऽप्येक उपैष्यसि प्राप्स्यसि। एतदवस्थान्तरं किम्। हेति विषादे। 'हा विषादशुगर्तिषु' इत्यमरः। वसन्ततिलकावृत्तम्॥

जनकः स्वयं दनुजवंशनायको
दयितो जगत्त्रितयजैत्रशासनः।
तनयः पुरंदरजयीति गर्विता
विधिनाहमेवमधुना विडम्बिता॥ ९२॥

जनक इति। जनको मम पिता मयः। स्वयं साक्षात् दनुजवंशनायको दान-वकुलश्रेष्ठः। तथा दयितः प्रियतमः। जेत्रेव जैत्रम्। जेतृशब्दात्तृन्नन्तात्प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः। जगत्त्रितयस्य त्रैलोक्यस्य जैत्रं जयशीलं शासनमाज्ञा यस्य स तथोक्तः। तथा तनयः पुरंदरं जयतीति पुरंदरजयीन्द्रजित् इत्येवंप्रकारेणाहं गर्विता संजा-तगर्वा। जातेति शेषः। अधुनेदानीं तु विधिना दैवेन। एवं परिदृश्यमानप्रकारेणाहं विडम्बितानुकृता। सर्वसंक्षयेणैकैव परिशेषितास्मीत्यर्थः। तथाच रामायणे—'पिता दानवराजो मे भर्ता मे राक्षसेश्वरः। पुत्रस्तु शक्रनिर्जेता इत्यहं गर्विता भृशम्॥' इति। मञ्जुभाषिणीवृत्तम्॥

---

१. 'निषिक्त' इति पाठः। २. 'किमेक' इति पाठः।

राजन्यधर्मविदुषोऽपि रघूद्वहस्य
हत्वा यथाग्रजमथानुजपट्टबन्धः।
आरभ्य वालिनमसंशयमाविरासी-
दिक्ष्वाकुवंशसहजः कथमेष धर्मः॥ ९३॥

राजन्येति। राज्ञोऽपत्यानि पुमांसो राजन्याः क्षत्रियाः। 'राजश्वशुराद्यत्' इति यत्प्रत्ययः। राज्ञोऽपत्ये जातिग्रहणं साधु। तेषां धर्मविदुषो धर्मज्ञस्यापि रघूद्वहस्य श्रीरामस्य यथा यद्वदग्रजं हत्वा। अथानन्तरमनुजपट्टबन्धोऽनुजस्य साम्राज्याभिषेको वालिनमारभ्य असंशयं निःसंदेहम्। अर्थाभावेऽव्ययीभावः। आविरासीत्प्रादुरभूत्। एषोऽयं धर्मः कथं कुतो वा। इक्ष्वाकुवंशस्य परमधर्मिष्ठस्येक्ष्वाकुकुलस्य सहजो नियतः। न सहज एवेत्यर्थः। अत इक्ष्वाकुकुलावतंसस्य श्रीरामस्यायं न धर्म इति भावः। वसन्ततिलकावृत्तम्॥

अहह निहता लङ्का वालानलेन हनूमतः
परमवनिजापातिव्रत्यानलेन भवानपि।
सुखमहमिहासीना शोकानलेऽपि यदीदृशे
प्रभवति न मां हन्तुं प्रायः स एष चितानलः॥ ९४॥

अहहेति। अहहेति खेदे। 'अहहेत्यद्भुते खेदे' इति विश्वः। तदेवाह—हनूमतो वालानलेन लङ्का परमत्यन्तं निहता दग्धा। अवनिजायाः सीतायाः पातिव्रत्यं पतिव्रताधर्म एवानलस्तेन भवानपि निहतः। अहं त्विहेदानीमीदृशेऽनिर्वाच्ये शोकानले सति यद्यपि सुखं निर्विचारमासीनावस्थिता। दाहकाले कथमासीनेत्यत आह-स एष सोऽयं चितानलश्चिताग्निः प्रायो भूम्ना मां हन्तुं नाशयितुं न प्रभवति समर्थो न भवति। कथमन्यथात्मानं न दहतीति भावः। हरिणी वृत्तम्॥

तदहमिदानीं सायंदिने भगवतः सवितुः प्रभेव प्रविश्य जातवेदसं चन्द्रिकेव चन्द्रमसं तडिदिव तडिद्वन्तं भवन्तमनुसरन्ती निर्वापयामि निरन्तरविरहदहनदह्यमानमात्मानम्॥

तदिति। तत्तस्मात्कारणादिदानीमहं सायंदिने सायंकाले। सायमित्यव्ययं दिनशब्देन सुप्सुपेति समस्यते। भगवतः पूज्यस्य सवितुरादित्यस्य प्रभा द्युतिरिव जातं वेदो हिरण्यं यस्मात्तं जातवेदसमग्निम्। 'जातवेदास्तनूनपात्' इत्यमरः। प्रविश्य। सवितृप्रभायाः सायमग्निप्रवेशे 'आदित्योऽस्तं यन्नग्निमनुप्रविशति' 'अग्निं वा आदित्यः सायं प्रविशति' इत्यादिश्रुतिरेव प्रमाणम्। चन्द्रमसं चन्द्रं चन्द्रिका कौमुदीव। तथा तडितोऽस्य सन्तीति तडिद्वान्मेघः। 'तसौ मत्वर्थे' इति भसंज्ञायां पदकार्यं न भवति। किंतु 'झयः' इति मतुपो मकारस्य वकारः। अपदत्वान्न जश्त्वम्।

१. 'वालिमनयं कथम्' इति पाठः. २. 'शोकानलेन' इति पाठः. ३. 'चिन्तानलः' इति पाठः. ४. 'सायंतनसमय इव सवितुः प्रभा भगवति प्रविश्य' इति पाठः. ५. 'जातवेदसि' इति पाठः.

तडिद्विद्युदिवेत्युपमा । भवन्तमनुसरन्त्यनुवर्तमाना चिताधिरोहणेनानुगच्छन्ती सती निरन्तरविरहदहनेनाविच्छिन्नवियोगाग्निना दह्यमानं ताप्यमानमात्मानं देहं निर्वापयामि सुखयामि । त्वया साकं प्रसिद्धाग्निप्रवेशमन्तरा तादृग्विरहशोकानलजनितसंतापस्य निर्वाणासंभवात् । 'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता ॥' इति स्मरणात्, पतिव्रताधर्मत्वाच्चेति भावः । एतेन प्रसिद्धानलापेक्षया विरहानलस्यात्यन्तसंतापकत्वं सूच्यते ॥

**इत्यादिकरुणपरिदेवनवतीं प्रजावतीं निवृत्य निर्वर्त्य च निजाज्ञया निशाचरपतेर्यथाविधि समेधं पितृमेधं सविधमेधमानविषादं विभीषणमशेषराजाधिपतिं विधातुमखिलतीर्थाहृतैरम्भोभिरम्भोधर इव दावदहनाकुलं वनस्पतिं रघुपतिरभ्यषिञ्चत् ॥**

**इतीति** । इत्यादि एवमादि करुणपरिदेवनवतीं श्रोतॄणां शोकजनकविलापवतीं प्रजावतीं भ्रातृजायां मन्दोदरीम् । 'प्रजावती भ्रातृजाया' इत्यमरः । निवृत्यारोहणाग्निप्रवेशान्निषिध्य निजाज्ञया । 'मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम् । क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥' इत्यादिरामायणोक्तरीत्या स्वनिदेशवचनेन निशाचरपते रावणस्य यथाविधि यथाशास्त्रम् । मेधा बुद्धिविशेषः । श्रद्धेति यावत् । तया सहितं यथा तथा पितृमेधं पितृयज्ञम् । 'प्रजापतिरश्वमेधमसृजत' इत्यादौ मेधशब्दस्य यागपरत्वेन व्याख्यानात् । निर्वर्त्य कृत्वा च सविधम् । समीप इत्यर्थः । एधमानविषादं प्रवर्धमानखेदं विभीषणमशेषराज्याधिपतिं लङ्कासकलसाम्राज्याधिपतिं विधातुं कर्तुं रघुपतिः श्रीरामोऽखिलतीर्थेभ्योऽशेषपुण्यतीर्थेभ्य आहृतैरानीतैरम्भोभिर्दावदहनाकुलं वनवह्निसंतापितं वनस्पतिं वृक्षम् । 'वनस्पतिर्वृक्षमात्रे विना पुष्पैः फलद्रुमे' इति विश्वः । अम्भोधरो मेघ इव । अभ्यषिञ्चदभिषिक्तवान् ॥

**अथ दशरथनन्दनाभिषेका-**
**दधिगतराज्यपदो विभीषणोऽयम् ।**
**अनुदिनमभिवृद्धमण्डलोऽभू-**
**दरुणकरामृतपूर्णो यथेन्दुः ॥ ९५ ॥**

**अथेति** । अथानन्तरं दशरथनन्दनाभिषेकाच्छ्रीरामविरचितमूर्धाभिषेकादधिगतं प्राप्तं राज्यपदं साम्राज्यस्थानं यस्य स तथोक्तः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । अयं विभीषणोऽनुदिनं दिने दिने । वीप्सायामव्ययीभावः । अरुणकराः सूर्यकिरणा एव अमृतं तेन पूरणमाप्यायनं यस्य स तथोक्तः । इन्दुर्यथा इन्दुरिव । अभिवृद्धं प्रवृद्धं मण्डलं राष्ट्रं बिम्बश्च यस्य स तथोक्तोऽभूत् । इन्दोररुणकरयुक्तत्वमुक्तं वराहमिहिरेण—'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् ।

---

१. 'निशिचरपतेर्यथाविधिनिजाज्ञया पितृमेधसमेतं सविधम्' इति पाठः. २. 'तीर्थोपात्तैरम्भोभिः' इति पाठः. ३. 'दावदहनाकुलं' इति पाठः. ४. 'पूरणादिवेन्दुः' इति पाठः.

क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥' इति। श्लेषसंकीर्णेयमुपमा। पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्॥

ततः[1]॥

तत इति। ततो विभीषणाभिषेकानन्तरम्॥

सीतामुदीक्ष्य निभृतेन विभीषणेन
नीतामुदारगुणरूपवतीं सतीनाम्।
देवस्य तत्क्षणमभूद्दशकण्ठकृष्टा-
मानन्दशोकरसबन्धुरमन्तरङ्गम्॥ ९६॥

सीतामिति। निभृतेन निश्चितेन। करणत्रितयपरिशुद्धेनेत्यर्थः। विभीषणेन नीतां समीपं प्रापितां सतीनां स्त्रीणां मध्य उदाराणि गम्भीराणि गुणरूपाणि गुणाः सौशील्यादयो रूपं सौंदर्यं चास्याः सन्तीति तथोक्तां निष्कलङ्कां दशकण्ठकृष्टां रावणापहृतां सीतामुदीक्ष्य दृष्ट्वा तत्क्षणम्। तस्मिन्क्षण इत्यर्थः। देवस्य स्वामिनः श्रीरामस्यान्तरङ्गमन्तःकरणमानन्दः सीतादर्शनजनितहर्षः शोक ईदृशीमिमां दृष्ट्वा दुराचारो रावणः कथं तूष्णीं स्थास्यतीति दुःखम्। अथवा एतावन्तं कालमत्यन्तपरिक्लिष्टेयमभूदिति विषादः। तावेव रसौ ताभ्यां बन्धुरं परिपूर्णमभूत्। वसन्ततिलकावृत्तम्॥

अनन्तरमरुन्धतीव पवित्रचारित्रनिधेरधिदेवता पतिदेवतेयमनादिपुंसोऽपि परस्य मर्त्यधर्मेण प्रत्यायनाय नायकस्य पुरः पुरंदरमुखान्बर्हिर्मुखान्पुरस्कृत्य भगवन्तमरविन्दासनमिन्दुकलेव पुनरुदेष्यन्ती तपनमिव दहनमनुजगाहे॥

अनन्तरमिति। अनन्तरं श्रीरामस्यानन्दशोकावेशानन्तरमियं सीता अरुन्धती वसिष्ठधर्मपत्नीवेत्युपमा। पवित्रचारित्रं परिशुद्धसमाचारएव निधिर्निक्षेपस्तस्याधिदेवताधिष्ठानदेवता। नित्यं निरतिशयनिर्मलाचारपरिपूरितेत्यर्थः। तथा पतिदेवता परमपतिव्रता। परस्य परमात्मनोऽनादिपुंसः पुराणपुरुषस्यापि नायकस्य पत्युः श्रीरामस्य पुरो मर्त्यधर्मेण। स्वयं मर्त्यत्वेनावतीर्णत्वादिति भावः। प्रत्यायनाय विश्वासोत्पादनार्थम्। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः। पुरंदरमुखानिन्द्रादीन्बर्हिर्हुताशो मुखं येषां तान्देवान्। 'बर्हिः कुशहुताशयोः' इति विश्वः। 'अग्निमुखा वै देवाः' इति श्रुतेः। तथा भगवन्तं पूज्यं षड्गुणैश्वर्यसंपन्नं वा। अरविन्दा-

१. 'ततः' इति नास्ति क्वचित्. २. 'नीताम्' इति पाठः. ३. 'सीताम्' इति पाठः. ४. 'शीलवतीम्' इति पाठः. ५. 'दशकंधरारेः' इति पाठः. ६. 'तदनन्तरम्' इति पाठः. ७. 'निधि' इति पाठः. ८. 'पुंसोऽपि मर्त्यधर्मणः' इति पाठः. ९. 'पुरः' इति नास्ति क्वचित्. १०. 'अवजगाहे' इति पाठः.

सनं ब्रह्माणं च पुरस्कृत्य पुरोधाय । तान्साक्षीकृत्येत्यर्थः । तेषां तदा संनिहितत्वादिति भावः । इन्दुकला चन्द्रकलेव पुनर्भूयोऽपि उदेष्यन्ती सती तपनं सूर्यमिव । दहनमभिमनुजगाहे प्रविवेश । इन्दुकलायाः कुह्वां तपनप्रवेश आगमसिद्धः ॥

प्राविक्षदर्चिषि परं निजशुद्धिहेतो-
र्देवी विशुद्धचरिता जनकस्य पुत्री ।
अंहश्चिरं हि यदपावनवस्तुसङ्गा-
त्त्यक्तं स्वयं तदमुना दमुना बभूव ॥ ९७ ॥

**प्राविक्षदिति** । विशुद्धचरिता परमपवित्रचरित्रा देवी पूज्या जनकस्य पुत्री जानकी निजशुद्धिहेतोः । आत्मविशुद्ध्यर्थमेवेत्यर्थः । 'षष्ठी हेतुप्रयोगे' इति षष्ठी । अर्चिषि ज्वलने प्राविक्षत्प्रविष्टवती । विशतेर्लुङ् । 'शल इगुपधादनिटः क्सः' इति क्सादेशः । दमुनाः ज्वलनस्तु । 'सप्तार्चिर्दमुनाः शुक्रः' इत्यमरः । चिरम् । चिरकालमारभ्येत्यर्थः । अपावनवस्तुसङ्गादपवित्रवस्तुसंपर्कात् । स्वस्य सर्वभक्षकत्वादिति भावः । यदंहो दुरितम् । संपादितमिति शेषः । 'अंहो दुरितदुष्कृतम्' इत्यमरः । तदित्यव्ययं तृतीयार्थे । तेनेत्यर्थः । अंहसा स्वयं त्यक्तो विमुक्तो बभूव । आत्मविशुद्ध्यर्थं प्रविष्टायां परमपतिव्रतायां जनकपुत्र्यां तत्संपर्कात्स्वयं सकलदुरितविमुक्तिद्वारा परिशुद्धोऽभूदिति महदेतदाश्चर्यमित्यर्थः । अत्र दमुनसो दुरितसंबन्धतद्विमुक्त्योरसंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेदः । एतेन ज्वलनापेक्षयाप्यत्यन्तपवित्रत्वमस्या व्यज्यते ॥

विशुद्धशीलामनलेन सङ्गाद्विदेहजां तत्र विलोक्य सीताम् ।
प्रभां पुनः प्रत्युषसीव पूषा प्रत्यग्रहीत्सोऽग्रसरो रघूणाम् ॥ ९८ ॥

**विशुद्धेति** । तत्र तस्मिन्समये रघूणामग्रसरो रघुनायकः स श्रीरामः अनलेन सङ्गादग्निसंपर्काद्धेतोः विशुद्धशीलां परमपावनसमाचाराम् । विशेषणमेतत्प्रभायामपि योज्यम् । विदेहजां जनकमहाराजपुत्रीम् । कुलीनामित्यर्थः । अयोनिजामिति च गम्यते । सीतां विलोक्यात्यादरेण दृष्ट्वा पूषा सूर्यः । प्रत्युषस्युषःकाले । 'उषःप्रत्युषसी अपि' इत्यमरः । प्रभां निजशोभामिव । पुनः प्रत्यग्रहीत्परिगृहीतवान् । उपमालंकारः । एतेनानयोरत्यन्ताविनाभावसंबन्धो व्यज्यते । वृत्तमुपजातिः ॥

अथ दाशरथिरधिगतनिजप्रशंसाविधिना विधिना पुरः प्रदर्श्यमानं विमानगतं महारथं दशरथं प्रणिपत्य प्रपद्य शिरसि तदनुशा-

१. 'पवित्र' इति पाठः. २. 'जनकेन्द्रपुत्री' इति पाठः. ३. 'अनलानुषङ्गात्' इति पाठः. ४. 'पर्यग्रहीत्साग्रसरः' इति पाठः. ५. 'उदारधीरधिगत' इति पाठः. ६. 'प्रदृश्यमानम्' इति पाठः. ७. 'विमानाधिगतमहारथम्' इति पाठः. ८. 'प्रतिपाल्य च', 'प्रतिपद्य' इति पाठौ.

स्वनं पाकशासनवरप्रत्युज्जीवितैः प्रमुदितैर्हरिभिरनुगम्यमानः प्रमोदमानमनाः सुग्रीवेण सह भाषमाणं विभीषणं सकरुणमालोकयन्ननुजेन सीतया च सममयोध्यामभिगन्तुकामः कामचरं विमानवरमारुरोह कमपि कौबेरम् ॥

अथेति । अथ सीतापरिग्रहानन्तरम् । दाशरथिः श्रीरामोऽधिगतः प्राप्तो निजप्रशंसाविधिरात्मस्तुतिविधानं येन स तथोक्तेन । 'भवान्नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः । एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥' इत्यादिनात्मानं स्तुवतेत्यर्थः । विधिना ब्रह्मणा पुरोऽग्रे प्रदर्श्यमानम् । एषोऽयं तव पिता दशरथस्त्वद्दर्शनार्थमागत इति हस्तनिर्देशेन लोचनगोचरीक्रियमाणमित्यर्थः । विमानगतं व्योमयानारूढम् । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । महारथं महात्मानं दशरथं प्रणिपत्य नमस्कृत्य तस्य दशरथस्यानुशासनम् । 'कृतं कर्म यशः श्लाघ्यं प्राप्तं ते शत्रुसूदन । भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥' इत्याज्ञावचनमित्यर्थः । शिरसि प्रपद्य प्राप्य । अभ्युपगम्येति यावत् । पाकशासनवरेणेन्द्रदत्तवरेण प्रत्युज्जीवितैरनुप्राणितैः । अतएव प्रमुदितैरनुगम्यमानः प्रमोदमानमनाः प्रहृष्यमाणान्तःकरणः । तथा सुग्रीवेण सह भाषमाणं सौहार्देन किमपि संलपन्तं विभीषणं सकरुणं सदयमालोकयन्पश्यन् । अनुजेन लक्ष्मणेन सीतया च सममयोध्यां निजराजधानीमभिगन्तुकामो जिगमिषुः सन् । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । कामचरं स्वैरचारिणं कमप्यनिर्वाच्यं कौबेरं कुबेरसंबन्धिनम् । 'तस्येदम्' इत्यण् । विमानवरं पुष्पकाख्यव्योमयानश्रेष्ठमारुरोहाधिष्ठितवान् ॥

> आरुह्य पुष्पकमयं विदितानि तानि
> लङ्कोपकण्ठदशकण्ठरणाङ्गणानि ।
> सिन्धुं गभीरमपि सेतुनिबन्धनं च
> संदर्शयन्मृगदृशः स जगाम रामः ॥ ९९ ॥

आरुह्येति । सोऽयं रामः पुष्पकमारुह्य तानि पूर्वोक्तचरितानि विदितानि प्रसिद्धानि लङ्कोपकण्ठे लङ्कापुरनिकटे यानि दशकण्ठरणाङ्गणानि रावणसमरभूमयस्तानि च । गभीरं गाम्भीर्यगुणयुक्तं सिन्धुमपि समुद्रं च सेतुनिबन्धनं च मृगीदृशः सीतायाः संदर्शयंस्तदेतदिति प्रदर्शयञ्जगाम । वसन्ततिलकावृत्तम् ॥

> उपरि यथा यथा मणिविमानमुदञ्चति न-
> भवनभुवे निवेद्य च हसन्ति परे हरयः ॥ १०० ॥
> स्तरुणि तथा तथा विपुलतामुपयाति नभः ।
> महिवलये तु पल्वलमवेक्ष्य महाम्बुनिधिं

१ 'प्रमुदितैः' इति नास्ति क्वचित्. २. 'संभाषमाणो' इति पाठः. ३. 'अवलोकयन्' इति पाठः. ४. 'च सीतया' इति पाठः. ५. 'रामः खेचरम्' इति पाठः. ६. 'किमपि' इति पाठः. ७ 'मृगदृशम्' इति पाठः.

उपरीति । हे तरुणि मैथिलि, नोऽस्माकं संबन्धि मणिविमानं रत्नखचितव्योमयानम् । यथा यथा येन येन प्रकारेण । वीप्सायां द्विर्भावः । उपर्यूर्ध्वमुदञ्चति गच्छति तथा तथा तेन तेन प्रकारेण । पूर्ववद्द्विर्भावः । नभोऽन्तरिक्षम् । विपुलतां विशालतामुपयाति । अनन्तत्वात्तथा प्रतीयत इत्यर्थः । महीवलये भूमण्डले तु । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति महीशब्दस्य ह्रस्वः । महाम्बुनिधिं महासमुद्रं पल्वलमल्पसरःप्रायमवेक्ष्य दृष्ट्वा । पल्वलमिवेत्युत्प्रेक्षा । अवपूर्वादीक्षतेः क्त्वो ल्यबादेशः । दूरस्थस्य महतोऽप्यल्पतया प्रतीतेर्लोकप्रसिद्धत्वादिति भावः । पवनभुवे हनूमते निवेद्य प्रदर्श्य च परे अन्ये वानरा हसन्ति स्म । कृत्स्नोऽप्यम्बुनिधिरेवं प्रतिभाति, तदेकदेशोल्लङ्घनेन तव का प्रतिष्ठेत्यभिप्रायेण परिहसन्तीत्यर्थः ॥

अथ तत्तत्स्थानानि प्रदर्शयिष्यन्सीतां संबोधयति—

**प्रिये विदेहराजनन्दिनि, विनतानन्दनमप्यतिशेते विमानवेगः ॥**

**प्रिये इति** । हे प्रिये, विदेहराजनन्दिनि जनकनन्दिनि सीते, विमानवेगो व्योमयानरथो विनतानन्दनं गरुत्मन्तमप्यतिशेते । ततोऽप्यतिवेगेन गच्छतीत्यर्थः। 'गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः' इत्यमरः ॥

तदेव प्रतिपादयति—

**तथाहि ॥**[1]

**तथाहीति** । प्रतिपादनप्रकारमेवाह—

**यद्यद्दूरे पुरः पश्यन्निच्छामि तव शंसितुम् ।**
**तत्तदन्वगपि द्रष्टुमपि वक्तुं न पार्यते ॥ १०१ ॥**[2]

**यद्यदिति** । पुरः पुरस्तात् । दूराद्यद्यद्वस्तु स्थानं वा पश्यन् तव शंसितुं कथयितुमिच्छामि तत्तद्वस्तु स्थानं वा अन्वक् पश्चाद्द्रष्टुमपि तथा वक्तुमपि न पार्यते न शक्यत इति वेगातिशयोक्तिः । तथापि वक्ष्यामि शृण्विति वाक्यशेषः ॥

**तरुणि धरणिसुते, पश्य ऋष्यमूकोऽयम् । बिम्बाधरे, पम्पासर इदम् । कम्बुकण्ठि, कबन्धनिधनभूरियम्[3] । करभोरु, खरादिकलहस्थानमिदम्[4] । मधुरालापिनि, मम पर्णशालेयम् । मत्तेभगामिनि, मायामृगमृगयावनमिदम् । कुटिलायतकबरि, गोदावरीयम् । कुम्भिकुम्भस्तनि, कुम्भसंभवायतनमिदम् । विधुमुखि, विराधविध्वंसनभूमिरियम्[5] । कञ्जलोचने[6], महामुनेरत्रेराश्रमपदमिदम् । विदेहराजपुत्रि, चित्रकूटोऽयमिति विविधाः कथाः कथयन्नेवायमञ्जसा भागी-**

---

१. 'तथाहि' इति नास्ति क्वचित्. २. 'द्रष्टुं तत्क्षणेनापवार्यते' इति पाठः. ३. 'निबन्धनभूः' इति पाठः. ४. 'स्थलम्' इति पाठः. ५. 'इन्दुमुखि विराधविध्वंसनवनमहीयम्' इति पाठः. ६. 'विपुलविलोचने' इति पाठः.

रथीपरिसरगतं भरद्वाजमुनेः प्रशान्तं पावनतपोवनमयासीत्। अभाषत च मैथिलीम्॥

तरुणीति। हे तरुणि सुन्दरि धरणिसुते भूपुत्रि सीते, अयं परिदृश्यमानो ऋष्यमूको ऋष्यमूकाख्यपर्वतस्त्वं पश्यावलोकय। हे बिम्बाधरे बिम्बोष्ठि, पम्पासर इदम्। यत्र मया रावणापहरणसमये यस्य तीरे त्वद्विरहवेदनया बहु विलपितमिति भावः। हे कम्बुकण्ठि शङ्खसदृशग्रीवे 'अङ्गगात्रकण्ठेभ्यश्च' इति ङीप्। एतेन महाभाग्यलक्षणसंपत्तिः सूच्यते। तदुक्तं सामुद्रिकशास्त्रे—'स्याद्रोमवर्जितमुरो मृदुलाङ्गनानां ग्रीवा च कुम्बुनिचिता च सुखानि दत्ते' इति। कम्बुनिचिता त्रिरेखाव्याप्तेत्यर्थः। इयमेषा कबन्धस्य कबन्धाख्यदानवस्य निधनभूर्विध्वंसनस्थानम्। येन सुग्रीवसख्यं तत्प्राप्तिसाधनमुपदिष्टमिति भावः। करभाविवोरू यस्यास्तस्याः संबुद्धिः हे करभोरु। 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः। अतएव ह्रस्वः। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। इदं खरादीनां कलहस्थानं युद्धभूमिः। एतदादि त्वया दृष्टचरमिति भावः। हे मधुरालापिनि मञ्जुभाषिणि, इयं मम पर्णशाला। अयमावयोरुटज इत्यर्थः। हे मत्तेभगामिनि मन्दयाने, इदं मायामृगस्य मायामृगरूपधारिणो मारीचस्य मृगयावनम्। तद्ध्वंसनकाननमित्यर्थः। कुटिलाकुञ्चिता नता। तथाभूताया एव मोहनत्वात्। आयता दीर्घा च कबरी केशपाशो यस्यास्तस्याः संबुद्धिः हे कुटिलायतकबरि। 'कबरी केशपाशः' इत्यमरः। 'जानपद—' इत्यादिना ङीप्। इयं गोदावरी। हे कुम्भिकुम्भस्तनि करिकुम्भपृथुलकुचे। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष्। इदं कुम्भसंभवायतनमगस्त्याश्रमः। 'अगस्त्यः कुम्भसंभवः' इत्यमरः। हे विधुमुखि चन्द्रानने। पूर्ववत् ङीष्। इयं विराधस्य विध्वंसनभूमिर्विनाशस्थानम्। हे कञ्जलोचने पद्मनयने, इदं महामुनेर्मुनिपुंगवस्यात्रेराश्रमपदं तपोवनस्थानम्। हे विदेहराजपुत्रि जनकनन्दिनि, अयं चित्रकूटपर्वतः। इत्यनेन प्रकारेण विविधा नानाप्रकाराः कथाः श्राव्यवाचः। 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्प्रत्ययः। कथयन्श्रावयन्नेवायं श्रीरामोऽञ्जसा द्रुतं भागीरथीपरिसरे गङ्गाप्रान्तभुवि। 'पर्यन्तभूः परिसरः'। भरद्वाजमुनेः संबन्धि। प्रशान्तं प्रसन्नम्। निर्वैरमित्यर्थः। पावनं पवित्रं चेति मिथो विशेषणविशेष्यभावविवक्षायाम् 'विशेषणं विशेष्येण बहुलम्' इति समासः। तपोवनमाश्रममयासीत्। प्राविशदित्यर्थः। यातेर्लुङ्। 'यमरमनमातां सक्च' इति सगागमः। 'अस्तिसिचोऽपृक्ते' इतीडागमः। मैथिलीं चाभाषतावोचत॥

उक्तप्रकारमेवाह—

प्रसुप्तबर्हिणश्वासपारणासुकृती हरिः।
कण्डूविनोदनोत्कण्ठी कण्ठीरवनखैर्मृगः॥ १०२॥

---

१. 'आयासीत्' इति पाठः. २. 'बर्हिनिश्वास' इति पाठः. ३. 'क्षुधितः फणी' इति पाठः.

**प्रसुप्तेति** । हरिर्भुजङ्गः । 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' इत्यमरः । प्रसुप्तस्य निद्रालोर्बर्हिणस्य मयूरस्य ये श्वासा निःश्वासमारुतास्तेषां पारणया भोजनेन सुकृती धन्यः । 'सुकृती पुण्यवान्धन्यः' 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्' इति चामरः । बर्हिणभुजङ्गयोः सहजवैरे सत्यपि महामुनिमहिम्ना प्रसन्नत्वादाश्रमस्य निर्भयसांनिध्यसंभवादिति भावः । तथा मृगो हरिणः कण्ठीरवनखैः सिंहनखैः कण्डूविनोदनोत्कण्ठी कण्डूत्यपनोदनोत्सुकः । पूर्ववद्भावः । सहजमपि वैरं संत्यज्य स्वैरं विहरन्ति मृगपन्नगादय इति मुनेर्महातपःसामर्थ्यं सूच्यते ॥

**तत्र भरद्वाजविहितविविधातिथ्यः तथैव पदवीं दवीयसीमतिलङ्घ्य पुनरयोध्यासविधमासीदन्नग्रत एव हनूमदावेदितोदन्तमरुन्धतीजानिपुरःसरमजस्रमानन्दबाष्पाकुलितालोकैरमात्यादिलोकैः परिगतमतिपावनतपोधनव्रतमाजानभक्तिभरितमागच्छन्तं भरतमवलोकयन्नतिवत्सलतया तद्विमानादवरोहणाय देवो दशकण्ठरिपुरुदकण्ठत ॥**

**तत्रेति** । तत्राश्रमे भरद्वाजेन विहितं कृतं विविधातिथ्यं नानाप्रकारातिथिसत्कारो यस्य स तथोक्तः । तथैव दवीयसीं दूरतराम् । 'स्थूलदूर–' इत्यादिना पूर्वगुणयणादिपरलोपौ । 'द्विवचनविभज्य–' इत्यादिना ईयसुन् अवादेशः । 'उगितश्च' इति ङीप् । पदवीं मार्गमतिलङ्घ्यातिक्रम्य पुनर्भूयः । वाक्यालंकारे वा । अयोध्यायाः सविधं समीपमासीदन्प्राप्नुवन् । अग्रतः पुरस्तादेव हनूमता आवेदितो निवेदित उदन्तः श्रीरामागमनवृत्तान्तो यस्य तम् । अतएव अरुन्धती जाया यस्य स अरुन्धतीजानिर्वसिष्ठः । 'जायाया निङ्' इति निङादेशः । पुरःसरोऽग्रेसरो यस्य तथोक्तस्तम् । शैषिकः कप्प्रत्ययः । तथा अजस्रं निरन्तरं आनन्दबाष्पैराकुलिता आलोका दर्शनानि येषां तैः । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः । अमात्यादिलोकैः सुमन्त्रादिमन्त्रिजनैः परिगतं परिवेष्टितमतिपावनमत्यन्तपरिशुद्धं तपोधनव्रतं जटावल्कलधारणकन्दमूलाशनाधःशयनब्रह्मचर्यादितपःस्वाचारो यस्य तम् । भक्तिः पूज्येष्वनुरागः । आजानभक्त्या स्वभावसिद्धभक्त्या भरितं परिपूर्णम् । निजभक्तितत्परमित्यर्थः । 'भक्तिर्निषेवणे रागे रचनायाम्' इति शब्दार्णवे । आगच्छन्तमायान्तं भरतमवलोकयन्नालोकयन् । अतिवत्सलत्वेन हेतुना । 'श्रीमान्स्निग्धस्तु वत्सलः' इत्यमरः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । ततस्तद्विमानात्पुष्पकादवरोहणाय देवः स्वामी दशकण्ठरिपू रावणान्तकः श्रीराम उदकण्ठतोत्कण्ठितवान् । ऐच्छदित्यर्थः ॥

---

१. 'विविधातिथेयः' इति पाठः. २. 'अतीत्य' इति पाठः. ३. 'उदन्तसमागच्छन्तम्' इति पाठः. ४. 'आनन्दाश्रुजलविलुलितालोकैरमात्यलोकैः' इति पाठः. ५ 'आगच्छन्तम्' इति नास्ति क्वचित्. ६. 'वत्सलमना विमानावरोहणाय दशकण्ठ' इति पाठः.

तदानीं सीतामामन्त्रितवाञ्श्रीराम इत्याह—

यानं मदाशयमवेत्य यथा यथैत-
त्तारापथादवतरत्यवनीकुमारि ।
आसेदुषीं सविधमद्य तथा तथा
भूरत्यादरेण भवतीमनुगच्छतीव ॥ १०३ ॥

यानमिति । हे अवनीकुमारि सीते, एतदस्मदधिष्ठितं यानं पुष्पकं कर्तृ मदाशयं ममावरोहणाभिप्रायमवेत्य ज्ञात्वा यथा यथा तारापथादन्तरिक्षात् । 'अत्यादरात्' इति वा पाठः । अत एवावतरत्यवरोहति । तथा तथा. भूस्त्वन्माता भूदेवी अद्येदानीं सविधं समीपमासेदुषीमत्यादरेणात्यन्तपुत्रिकाप्रेम्णा भवतीं पूज्यां त्वाम् । 'भातेर्ङ्वतुः' इति ङ्वतुप्रत्ययः । पूर्ववदनुगच्छत्यभ्युद्गच्छतीवेत्युत्प्रेक्षा । यथा दूरागतां पुत्रीं माता अत्यन्तादरेणाभ्युद्गच्छति तद्वदित्यर्थः । वसन्ततिलका वृत्तम् ॥

इत्थं वदन्निन्दुमुखीं सलीलं देवः प्लवंगाधिपदत्तहस्तः ।
विभीषणावेदितया पदव्या विमानतो मन्दमवारुरोह ॥ १०४ ॥

इत्थमिति । इत्थमनेन प्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । इन्दुमुखीं सीतां प्रति सलीलं सविलासं वदन् । देवः स्वामी श्रीरामः प्लवंगाधिपेन सुग्रीवेण दत्तहस्तो राजलक्षणत्वाद्वितीर्णो हस्तावलम्बो यस्य स तथोक्तः सन् । विभीषणावेदितया इत आगम्यतां देवेनेति निर्दिष्टया पदव्या मार्गेण । पथः करणत्वं व्याख्यातं प्राक् । विमानतो विमानात् । पञ्चम्यास्तसिः । मन्दं शनैरवारुरोहावरूढवान् ॥

प्रणीतमणिपादुकं प्रणतमग्रतः पादयो-
रुदस्य भरतं जवादुपनयन्भुजाभ्यन्तरम् ।
उदीक्ष्य च तपःकृशं वपुरमुष्य वात्सल्यतः
करेण स मुहुः स्पृशन्न विरराम रामश्चिरम् ॥ १०५ ॥

प्रणीतेति । प्रणीते श्रीरामचरणसंनिधानं प्रापिते मणिपादुके पूर्वं राज्यपरिपालनपुरस्कारार्थमानीते माणिक्यपादुके येन तं पादयोरग्रतः पुरस्तात्प्रणतं नमस्कृतं भरतं जवादादरातिशयप्रयुक्तत्वरयादुदस्योत्क्षिप्य । भुजाभ्यन्तरमुपनयन् । गाढमालिङ्गन्नित्यर्थः । तथा तपसा व्रतोपवासादिना कृशं क्षीणममुष्य भरतस्य वपुः शरीरमुदीक्ष्य दृष्ट्वा च वात्सल्यतः सोदरस्नेहात्करेण मुहुः पुनः पुनः स्पृशन्परिमार्जयन् स रामश्चिरं न विरराम न विरतोऽभूत् । तदुपलालनतात्पर्येणानल्पकालं प्रावर्ततेत्यर्थः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । पृथ्वीवृत्तम् ॥

पश्यन्ननन्द भरतः परिरभ्य दोर्भ्यां
सौमित्रिमार्यसमदुःखकृशीकृताङ्गम् ।

१ 'आसेदुषी' इति पाठः. २ 'अभिगच्छति' इति पाठः. ३ 'अवेक्ष्य' इति पाठः.
४ 'अतीव वात्सल्यतो नवमिव स्पृशन्' इति पाठः. ५ 'सुखं वनेऽपि' इति पाठः.

सोऽयं सुखोपनतराज्यपराङ्मुखाय
तस्मै पुनः सहजभक्तिदृढव्रताय ॥ १०६ ॥

पश्यन्निति। भरत आर्येण पूज्येन श्रीरामेण समं दुःखं दुःखानुभवो यस्य सः अतएव कृशीकृतमङ्गं शरीरं यस्येति बहुव्रीहिगर्भितो विशेषणसमासः। अथवा आर्यसमदुःखेन कृशीकृताङ्गं अन्तकष्टक्लेशाननुभूतवन्तं सौमित्रिं लक्ष्मणं पश्यन्दोर्भ्यां बाहुभ्यां परिरभ्यालिङ्ग्य ननन्द। आर्यसहवासेनायं धन्योऽभूदिति संतुतोष। तथा सोऽयं सौमित्रिश्च सुखेनोपनते स्वयं संप्राप्ते राज्ये पराङ्मुखाय। आदररहितायेत्यर्थः। कुतः। सहजभक्त्या दृढं गाढं व्रतं श्रीरामागमनपर्यन्तमयोध्यां न प्रवेक्ष्यामीत्यादिरूपनियमो यस्य तथोक्ताय तस्मै भरताय। पुनःशब्दो वाक्यालंकारे। ननन्द। तद्राज्यदानतत्परं भरतं दृष्ट्वा परं जहर्षेत्यर्थः। गुणानां परमादरास्पदत्वादिदमन्योन्याभिनन्दनं युक्तमिति भावः। वसन्ततिलकावृत्तम् ॥

अथ भरतोऽपि पुरतोऽभिवादितपुरुषं[2] पौरुषनिघ्नेन शत्रुघ्नेन समं[3] देवीं प्रणम्य जनकनन्दिनीमुन्मनीकृत्य सावरोधवधूकान्सुग्रीवदशग्रीवानुजादीन्यथोचिताभिरुपचर्याभिरभ्यर्हितवसिष्ठमामन्त्रितमन्त्रिलोकमनुग्रहालोकानुगृहीतपौरवर्गमग्रजन्मानं विमानगतमेव[6] सबहुमानमानन्दयन्ननयदपनीतरुजं निजाश्रमपदम् ॥

अथेति। अथानन्तरं भरतः पौरुषनिघ्नेन पुरुषकाराधीनेन। 'अधीनो निघ्न आयत्तः' इत्यमरः। शत्रुघ्नेन समं सह पुरतः प्रथममभिवादितो नमस्कृतः पुरुषः परमपुरुषः श्रीरामो यस्मिन्कर्मणि तद्यथा तथा देवीं जनकनन्दिनीं सीतां प्रणम्य। तथा यथोचिताभिर्यथार्हाभिरुपचर्याभिरुपचारैः। उपपूर्वाच्चरतेः क्यजन्तात् 'अप्रत्ययात्' इति स्त्रियामप्रत्यये टाप्। अवरोधवधूभिरन्तःपुरस्त्रीभिः सहितान्सावरोधवधूकान्। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। 'नद्यृतश्च' इति कप्। सुग्रीवदशग्रीवानुजौ सुग्रीवविभीषणौ आदी येषां तान्वानरानुन्मनीकृत्योत्सुकचित्तान्कृत्वा। 'अभूततद्भावे च्विः'। 'अस्य च्वौ' इति दीर्घः। 'अरुर्मनश्चक्षुः—' इत्यादिना सलोपः। अभ्यर्हितः पूजितः वसिष्ठो येन तम्। आमन्त्रितः संबोधितो मन्त्रिलोकः मन्त्रिजनो येन तम्। अनुग्रहालोकनेन करुणाकटाक्षवीक्षणेनानुगृहीतोऽनुग्रहविषयीकृतः पौरवर्गः पुरजननिवहो येन तमग्रजन्मानं ज्येष्ठभ्रातरं श्रीरामं विमानगतं विमानारूढमेव सबहुमानं सगौरवमानन्दयन्। अपनीता श्रीरामागमनादपगता रुजा उपतापो यस्य तं तथोक्तम्। 'स्त्री रुग्रुजा चोपतापः' इत्यमरः। निजं स्वकीयमाश्रमपदं नन्दिग्रामाख्यमावासस्थानमनयत्प्रापयामास ॥

---

१ 'अवाङ्मुखाय' इति पाठः. २ 'अभिवादितपूर्वजोपच्छलननिघ्नेन' इति पाठः. ३ 'समं सविनयं प्रणिपत्य जनकेन्द्रपुत्रीमुन्मनीकृत्य' इति पाठः. ४ 'सुग्रीवदशग्रीवानुजादीन्सावरोधवधूकान्' इति पाठः. ५ 'अभ्यर्च्याभ्यर्चितपुरोहितमामन्त्रितमन्त्रिलोकमालोकानुगृहीत' इति पाठः. ६ 'विमानगतमेव' इति पाठः. ७ 'अनयदपनीतश्रमपरिश्रमं निजाश्रमम्' इति पाठः.

तत्र च सौमित्रिसीतासखो दाशरथिरतिलोभनीयवात्सल्यां कौसल्यामतिशयितदुःखातिरेकां कैकेयीमतिक्रमस्नेहपरिष्वक्तां सौमित्रिमातरमपि क्रमादभिवादयन्निजावलोकनरसनिरताभिरेताभिर्वनिताभिः कलाभिः पूर्णिमाचन्द्र इव पयोनिधिर्वीचिकाभिरिव प्रतिक्षणं परिरभ्यमाणो निर्भरानन्दमविन्दत ॥

तत्रेति। तत्र भरताश्रमपदे सौमित्रिसीतासखो लक्ष्मणसीतासमेतः। 'राजाहःसखिभ्यष्टच्'। दाशरथिः श्रीरामः अत्यन्तं लोभयतीत्यतिलोभनीयम्। पुत्रदर्शनाभिलाषविशेषजनकमित्यर्थः। तद्वात्सल्यं स्नेहो यस्यास्तां कौसल्यां च अतिशयितो बहुलो दुःखातिरेको यस्यास्ताम्। सर्वानर्थमूलाहमस्मीति समुत्पन्नदुःखभराक्रान्तामित्यर्थः। कैकेयीं च अतिक्रमेण क्रममतिक्रान्तेन स्नेहेन परिष्वक्तां निर्मर्यादप्रेमपरिपूर्णां सौमित्रिमातरमपि सुमित्रां च क्रमाद्वृद्धानुक्रमादभिवादयन्नमस्कुर्वन्। निजावलोकने आत्मदर्शने यो रसोऽनुरागस्तस्मिन्निरताभिस्तत्पराभिरेताभिः पूर्वोक्ताभिर्वनिताभिरुत्तमस्त्रीभिः कलाभिरंशैः। 'कला शिल्पे कालभेदे चन्द्रांशे कलना कला' इति वैजयन्ती। पूर्णिमाचन्द्र इव। वीचिकाभिरूर्मिभिः पयोनिधिः समुद्र इवेत्युपमाद्वयम्। प्रतिक्षणं परिरभ्यमाण आदरातिशयात्क्षणे क्षण आश्लिष्यमाणो निर्भरानन्दममन्दानन्दमविन्दतालभत। परमानन्दभरितान्तःकरणोऽभूदित्यर्थः॥

अथाखिलजनेक्षणेक्षितरघूद्वहस्यादरा-
द्विधातुमभिषेचनं विचरितं गुरोराज्ञया।
अनीयत समन्ततो हरिगणेन तीर्थं पुनः
समाकुलितमन्थरं विजहता गतिं मन्थराम्॥ १०७॥

अथेति। अथानन्तरं गुरोर्वसिष्ठस्याज्ञया निदेशेनाखिलजनेक्षणैरशेषलोकलोचनैरीक्षितः सानन्दमवलोकितः स चासौ रघूद्वहश्च तस्य श्रीरामस्यादराद्विचरितं विशिष्टाचारयुक्तमभिषेचनं मूर्धाभिषेकं विधातुं कर्तुम्। मन्थरां मन्दां गतिं विजहता त्यजता। ससंभ्रमं प्रवृत्तेनेत्यर्थः। जहातेः शतृप्रत्ययः। हरिगणेन वानरसमूहेन समाकुलिता संक्षुभिता मन्थरा कैकयीदासी यस्मिंस्तद्यथा भवति तथा। तत्र तस्याः कैतवप्रयोगानवकाशादिति भावः। समन्ततः। सकलदिग्भ्य इत्यर्थः। तीर्थं पुण्यनदीसलिलं पुनर्भूयोऽपि। वाक्यालंकारे वा। आनीयतानीतम्। पृथ्वी वृत्तम्॥

---

१ 'अयशःशल्यजनितशोकातिरेकाम्' इति पाठः. २ 'अकृत्रिम' इति पाठः. ३ 'सुमित्रामपि' इति पाठः. ४ 'निजालोकरसनितान्तकन्दलितान्तरङ्गाभिरेताभिश्चन्द्र इव पयोधिर्वीचिकाभिः प्रतिक्षणं परिरभ्यमाणाभिः सलक्ष्मणः केवलमानन्दधुरमविन्दत' इति पाठः. ५ 'जगत्पतेरपि' इति पाठः. ६ 'विचलता' इति पाठः. ७ 'विशङ्कहृदि मन्थरां न भजता गतिम्' इति पाठः.

अलंकृतः कृतमभिषेकमादरा-
दमात्यसंहतिभिरवाप्य राघवः ।
पुरोन्मुखः पुनरथमानशे रथं
मनोरथं स च भरतो महारथः ॥ १०८ ॥

अलंकृत इति । अयं राघवो रघुवंशोद्भवः श्रीरामोऽमात्यसंहतिभिर्मन्त्रिवर्गैः । तत्र तेषां मुख्यत्वादिति भावः । आदरात्सत्कारात्कृतं विरचितमभिषेकमवाप्य । मूर्धाभिषिक्तः सन्नित्यर्थः । अथालंकृतो जटापटलविमोचनपूर्वकं विविधविचित्रमणिहारदिव्याम्बरादिभिर्विभूषितः पुनः पुरोन्मुखः । अयोध्यापुरप्रवेशाभिमुखः सन्नित्यर्थः । रथमानशे प्राप । पुष्पकं विहाय रथमारूढोऽभूदित्यर्थः । 'अश्नोतेश्च' इत्यभ्यासदीर्घनुडागमौ । तथा महारथो महात्मा स प्रसिद्धो भरतश्च । मनोरथं श्रीरामाभिषेकरूपनिजवाञ्छितार्थसिद्धिमानशे । श्रीरामाभिषेकेण परिपूर्णमनोरथोऽभूदित्यर्थः । रुचिरावृत्तम्—'चतुर्ग्रहैरिह रुचिरा जभौ सजौ गः' इति लक्षणात् ॥

तत्र च सेवाविचक्षणाभ्यां[1] शत्रुघ्नलक्ष्मणाभ्यामभितो विधूत[2]व्यजनः परिजनाचारनिरतभरतोदस्तविमल[3]मुक्तातपत्रो विचित्रोपहित[4]नैपथ्यचारुरारूढशताङ्गमातङ्गै[5]राशरप्लवगवाहिनी[6]पतिभिरनुगम्यमानः प्रवर्त्यमानश्वेता[7]क्षतकुसुमलाजोपचारपौरपुरन्ध्रीकदम्बसंरम्भचलितम[9]ञ्जीरमणिकाञ्चीवलयवा[10]चालितां वाद्यमानमाङ्गलिकतूर्य[11]घोषणां वैबोधिकविविधरवश्रवणसमयोच्चलितसामोदपौरसंबाधां सौधान्तरगवाक्षचलित[12]तरुणीजनेक्षणरेखानीलोत्पलदामतोरणाभिरामर[13]थ्यान्तरामयोध्यामाजगाम रामचन्द्रः ॥

तत्रेति । किं चेति चार्थः । तत्र तस्मिन्समये सेवाविचक्षणाभ्यामुपचाराचरणतत्पराभ्यां शत्रुघ्नलक्ष्मणाभ्याम् । ज्येष्ठकनिष्ठभावोऽत्र न विवक्षितः । लक्ष्मणापेक्षयापि शत्रुघ्नस्यादरातिशयद्योतनार्थं वा । तथा च महाकविप्रयोगः—'शत्रुघ्नलक्ष्मणमुखैरुपचर्यमाणः साम्राज्यभोगनिरतो भरतो बभूव' इति । अभितः । उभयपार्श्वयोरित्यर्थः । विधूते वीजिते व्यजने चामरे यस्य स तथोक्तः । परिजनाचारनिरतेन भृत्यजनोचिताचारतत्परेण भरतेनोदस्तमुत्क्षिप्तं विमलं स्वच्छं च मुक्तातपत्रं मौक्तिकच्छत्रं यस्य स तथोक्तः । विचित्रमाश्चर्यकरं विचित्रसंनिवेशं वा यथा

---

१ 'लक्ष्मणशत्रुघ्नाभ्याम्' इति पाठः. २ 'विधूयमानधवलवालव्यजनः' इति पाठः. ३ 'मणिविमल' इति पाठः. ४ 'उपजातमनुजवेषचारुभिः' इति पाठः. ५ मातङ्गैरलंकृतैः' इति पाठः. ६ 'वाहिनी' इति नास्ति क्वचित्. ७ 'शेषाक्षत' इति पाठः. ८ 'सौरभ' इति पाठः. ९ 'मञ्जुमञ्जीर' इति पाठः. १० 'वाचाटितदशदिगन्तराम्' इति पाठः. ११ 'भेरीमृदङ्गशङ्खादिकविविधारव' इति पाठः. १२ 'तरुणीकटाक्षलेखा' इति पाठः. १३ 'रथ्यां तथाविधाम्' इति पाठः.

तथोपहितेन विरचितेन नैपथ्येन दिव्यभूषणाम्बरप्रयुक्तावयवप्रसाधनेन चारुः सुन्दरः । तथा शताङ्गा रथाः, मातङ्गा गजाः, ते आरूढा अधिष्ठिता यैस्तैः । 'शताङ्गः स्यन्दनो रथः' इत्यमरः । आशरप्लवगवाहिनीपतिभिर्विभीषणसुग्रीवप्रमुखराक्षसवानरसेनानायकैरनुगम्यमानोऽनुस्रियमाणश्च सन् रामचन्द्रः श्वेताक्षतानां कुसुमानां लाजानां चोपचारो निक्षेपणरूपोपचारः प्रवर्त्यमानो मङ्गलाचारतया क्रियमाणो यैस्तानि तथोक्तानि यानि पौरपुरंध्रीकदम्बानि पट्टणस्त्रीनिवहास्तेषां संरम्भेण संभ्रमेण चलितैर्झणझणायमानैर्मञ्जीरमणिकाञ्चीवलयैर्नूपुरमाणिक्यरशनाकङ्कणैर्वाचालितां मुखरिताम् । 'तत्करोति—' इति ण्यन्तात्कर्मणि क्तः । वाद्यमानानि ताड्यमानानि माङ्गलिकतूर्याणि मङ्गलवाद्यानि तद्घोषणाम् । तथा वैबोधिकविविधरवाणां कर्तव्यार्थविबोधकजननानाविधशब्दानां च स्तुतिपाठकशब्दानां वा श्रवणसमये आकर्णनकाले उच्चलिताः प्रचलिताः सामोदाः सानन्दाश्च ये पौराः परजनास्तैः संबाधां संकीर्णाम् । 'माङ्गलिक' 'वैबोधिक' इत्यत्र 'प्रयोजनम्' इति ठक् । सौधान्तरगवाक्षैः प्रासादमध्यवातायनैश्चलिताः प्रसृता यास्तरुणीजनेक्षणरेखाः सुन्दरीजननेत्रपङ्क्तयस्ता एव नीलोत्पलदामतोरणानि तैरभिरामाणि रम्याणि रथ्यान्तराणि प्रतोल्यभ्यन्तरालानि यस्यास्तामयोध्यामाजगाम । प्रविवेशेत्यर्थः ॥

साकेतं समुपेयिवान्स विजयी[2] संसेवितो भ्रातृभिः
सुग्रीवप्रमुखानपि प्रियसखान्स्वे[1] स्वे पदे स्थापयन् ।
स्वैच्छन्दं[3] सुचिरं सुखान्यनुभवन्देव्या तथा[4] सीतया
रामः पालयति स्म कीर्तिविभवैरामोदिनीं मेदिनीम् ॥१०९॥

साकेतमिति । विजयी जयशीलः । 'जिदृक्षि—' इत्यादिनेनिप्रत्ययः । यद्वा प्रशस्तो रावणविजयोऽस्यास्तीति विजयी । प्रशंसायामिनिः । स प्रसिद्धो रामः साकेतमयोध्याम् । 'साकेतः स्यादयोध्यायाम्' इत्यमरः । समुपेयिवान्प्रविष्टः । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः । तथा भ्रातृभिरनुजैर्भरतादिभिः संसेवित उपचर्यमाणः । तथा सुग्रीवप्रमुखान्सुग्रीवादीन्प्रियसखान्प्रियसुहृदः । 'राजाहःसखिभ्यष्टच्' । स्वे स्वे पदे । किष्किन्धादिप्रतिनियतस्थानेष्वित्यर्थः । वीप्सायां द्विर्भावः । 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पात्स्मिन्नादेशाभावः । स्थापयन्प्रतिष्ठापयन् । तथा देव्या सीतया समं स्वच्छन्दं यथेच्छं सुखान्यैहिकभोगाननुभवन् । दानक्षात्त्रोद्भवा कीर्तिस्तस्या विभवैः सामर्थ्यैः समृद्धिभिरामोदिनीमानन्दवतीं मेदिनीं भुवं सुचिरमतिचिरकालं पालयति स्म परिपालितवान् । 'लट् स्मे' इति भूतार्थे लट् । शार्दूलविक्रीडितं वृत्तम्—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥

---

१ 'राज्यं स्वं' इति पाठः. २ 'विनयैरासेवितो' इति पाठः. ३ 'स्वच्छन्दं' इति पाठः. ४ 'तया' इति पाठः.

अथ कविः काव्यवर्णनाख्यानपूर्वकं काण्डसमाप्तिं श्लोकेनाह—

साहित्यादिकलावता शनगरग्रामावतंसायिता
श्रीगङ्गाधरधीरसिन्धुविधुना गङ्गाम्बिकासूनुना ।
प्राग्भोजोदितपञ्चकाण्डविहितानन्दे प्रबन्धे पुनः
काण्डो लक्ष्मणसूरिणा विरचितः षष्ठोऽपि जीयाच्चिरम् ॥११०॥

इति श्रीलक्ष्मणकविविरचिते चम्पूरामायणे युद्धकाण्डः समाप्तः ॥

साहित्येति । साहित्यं काव्यनाटकालंकारादिसमुदायरूपविद्या तदादि प्रमुखं यासां ताः कला विद्या अस्य सन्तीति साहित्यादिकलावता । सकलविद्यारहस्याभिज्ञेनेत्यर्थः । अत्र कर्मधारयस्याप्यनुद्वेगकरत्वात्सर्वेदधिकेशीत्यादिवन्निर्वोढव्यः । शनगरमिति ग्रामस्तस्यावतंसवदाचरितोऽवतंसायितो भूषणायमानः । उपमानार्थकाचारक्यजन्तात्कर्तरि क्तः। स चासौ श्रीगङ्गाधरधीरश्च श्रीयुक्तो गङ्गाधरनामा पण्डितः । 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः' इत्यमरः । स एव सिन्धुः समुद्रस्तस्य विधुना चन्द्रेण । पुत्रत्वादुल्लासकरत्वाच तद्रूपेणेत्यर्थः । अतएव श्लिष्टपरम्परितरूपकम् । 'विधुर्विष्णौ चन्द्रमसि' इत्यमरः । गङ्गाम्बिकासूनुना गङ्गाम्बिकागर्भसंभूतेन लक्ष्मणसूरिणा लक्ष्मणाख्यविदुषा । प्राक्पूर्वं भोजेन राज्ञोदितैर्विरचितैः पञ्चभिर्बालकाण्डादिसुन्दरकाण्डान्तैः काण्डैर्विहित आनन्दो विद्वत्प्रमोदो येन तस्मिन्नित्युत्तरपदसमासः । प्रबन्धे चम्पूरामायणाख्ये काव्ये पुनर्विरचितः प्रणीतः षष्ठः षण्णां पूरणः काण्डो युद्धकाण्डोऽपि चिरं जीयात् । सर्वोत्कर्षेण वर्ततामित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

पूर्वेषां विदुषां मतानि विविधान्यालोच्य तत्सारमप्याकृष्येयमखण्डपण्डितपरीतोषाय संदर्भिता ।
यद्यत्र प्रतिभाति दूषणमिदं विज्ञायतां भूषणं
तत्रापि प्रतिभाति चेन्ननु परामृश्यं ह्यवश्यं बुधैः ॥
लोके प्रतिभाति मध्यमजगत्तत्र त्रिलिङ्गाह्वयो
देशस्तत्र तथाद्रिमौलितनयातीरं परं तत्र च ।
ग्रामः काजलुरीति तत्र महितः श्रीरामचन्द्रः सुधीः
श्रीमानुद्वहतामसुष्य कविताकन्यां रघूणां पतिः ॥

---

१ अस्य श्लोकस्य स्थाने—
'कोलालाख्यमहाग्रहारमहिताकल्पेन संख्यावतां
मूर्धन्येन विशारदेन विधुना श्रीसोमनाथोदये ।
प्राग्भोजोदितपञ्चकाण्डमहितानन्दे प्रबन्धे पुनः
काण्डो निर्मित एकचूतपतिना षष्ठोऽपि जीयाच्चिरम् ॥'
इति पाठः क्वचित्

इति श्रीमत्परमयोगीन्द्रवृन्दमानसेन्दीवरसंदोहानन्दलाभाभिनन्दितरघुनन्दनचरणारविन्दमकरन्दास्वादनकन्दलितसारस्वतेनाखण्डिततपःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्यापश्चान्ववायसुधापारावारपारिजातस्य धन्वन्तर्यवतारान्तरस्यायुर्वेदप्रमुखनिखिलविद्यासारसर्वज्ञसार्वभौमस्य कोदण्डपण्डितवर्यस्य तनूजेन गङ्गाम्बिकागर्भरत्नाकरसुधाकरेण रामचन्द्रबुधेन्द्रेण विरचितायां चम्पूरामायणव्याख्यायां साहित्यमञ्जूषिकासमाख्यायां युद्धकाण्डः समाप्तः ॥

रामचन्द्रार्यरचिता रामचन्द्रपदार्पिता ।
व्याख्या श्रीयुद्धकाण्डस्य पूर्णा मञ्जूषिकाभिधा ॥

---

# चम्पूरामायणस्थश्लोकानां सूची।

# नवीन प्रकाशित दुर्लभ ग्रन्थ

१ काव्यप्रदीपः । म० म० श्री गोविन्द प्रणीतः । वैद्यनाथ कृत टीका । पं० दुर्गाप्रसाद तथा वासुदेव लक्ष्मण शास्त्री पणशीकर सम्पादित (१९८२) ५०-००

२ वेदान्तसूत्रवैदिकवृत्तिः । स्वामी हरिप्रसाद वैदिक मुनि विरचित । (१९८२) १५०-००

३ हरविजयम् । राजानक रत्नाकर विरचित । राजानक अलक कृत टीका सहित । पं० दुर्गाप्रसाद एवं काशिनाथ पाण्डुरङ्ग परब सम्पादित (१९८२) १००-००

४ चम्पूरामायण । राजाभोज कृत १-५ खण्ड तक लक्ष्मणसूरि कृत छठवाँ खण्ड । रामचन्द्रबुधेन्द्र कृत टीका । वासुदेव लक्ष्मण शास्त्री पणशीकर सम्पादित । (१९८२) ४०-००

५ न्यायबिन्दुः ( बौद्ध न्याय )। धर्मकीर्ति कृत । धर्मोत्तराचार्य कृत संस्कृत टीका । चन्द्रशेखर शास्त्री कृत हिन्दी टीका (१९८२) ३०-००

६ कामसूत्रम् ( कामशास्त्र )। वात्स्यायन मुनिकृत । यशोधर कृत 'जयमंगला' संस्कृत । देवदत्त शास्त्री कृत हिन्दी टीकादि (१९८२) १५०-००

७ नारदसंहिता ( ज्योतिष )। नारद महामुनि कृत । सान्वय, विमला हिन्दी व्याख्या व्याख्याकार-राम जन्म मिश्र (१९८२) ३५-००

८ नाट्यशास्त्रम् ( नाट्य )। भरतमुनि कृत । सं० बटुकनाथ शर्मा एवं बलदेव उपाध्याय संशोधित (१९८२) सम्पूर्ण १००-००

९ योगसूत्रम् ( योग ) पतञ्जलि कृत । भोजराज कृत 'राजमार्तण्ड'-भावागणेश कृत 'प्रदीपिका'-नागोजि भट्ट कृत 'वृत्ति'-रामानन्द यति कृत-'मणिप्रभा' अनन्त देव कृत 'चन्द्रिका' तथा सदाशिवेन्द्र सरस्वती कृत 'योग सुधाकर' षट् टीका (१९८२) ३५-००

१० शारदातिलकम् ( तंत्र )। लक्ष्मणदेशिकेन्द्र कृत । राघवभट्ट कृत 'पदार्थादर्श' टीका । मुकुन्द झा बख्शी कृत भूमिकादि मू० सं० १५०-००

११ मनुस्मृतिः ( धर्मशास्त्र )। कुल्लूक भट्ट कृत 'मन्वर्थमुक्तावली' टीका तथा हरगोविन्द शास्त्री कृत 'मणिप्रभा' हिन्दी टीका । गोपाल शास्त्री नेने कृत भूमिकादि सह (१९८२) १००-००

१२ वैयाकरणसिद्धान्तकौमुदी ( व्याकरण )। भट्टोजि दीक्षित कृत । बालकृष्ण पञ्चोली कृत रत्नप्रभा हिन्दी टीका । कारकान्त प्रथम भाग २५-००
समासादि तद्धितान्त द्वितीय भाग ३०-०० भ्वादि चुराद्यन्त तृतीय भाग २०-००
ण्यन्तादि कृदन्तान्त चतुर्थ भाग २५-०० १-४ भाग सम्पूर्ण १००-००

१३ नामलिङ्गानुशासनम् नाम अमरकोशः ( कोश )। अमरसिंह कृत । भानुजी दीक्षित ( रामाश्रम ) कृत 'रामाश्रमी' ( व्याख्यासुधा ) संस्कृत टीका तथा हरगोविन्दशास्त्री कृत 'मणिप्रभा' (प्रकाश) हि० टीकादि । २५०-००

---

प्राप्तिस्थान—चौखम्भा संस्कृत संस्थान, वाराणसी-२२१००१